तिलक-महाराष्ट्र-विद्यापीठ-शाखाभूत-

वैदिक - संशोधन - मण्डलेन

प्रकाशिता

शुक्ल-यजुर्वेदीया

# काण्व - संहिता

पदपाठयुता

आनन्दबोध-अनन्ताचार्य-विरचितभाष्यद्वय-समेता

तृतीयः खण्डः

[ २१ – ३० अध्यायाः ]

शेणई-कुलोत्पन्नेन डॉ. बे. रामचन्द्रशर्मणा
पाठभेदादिभिः संशोध्य संपादिता

शाके १९२१

VAIDIKA SAṀŚODHANA MAṆḌALA
PUNE 37

# KĀṆVA SAṀHITĀ

WITH THE PADAPĀṬHA
AND THE COMMENTARIES OF
ĀNANDABODHA & ANANTĀCĀRYA

Vol. III

(Chapters 21-30)

*Edited by :*

**Dr. B. R. Sharma**

**Published with the financial assistance received from the Rashtriya Sanskrit Sansthan, New Delhi.**

**1999**

# FOREWORD

I have great pleasure in placing before the Vedic scholars the third volume of the Kāṇva Saṁhitā alongwith the commentaries of Ānandabodha and Anantācārya, edited by Dr. B. R. Sharma. The Mandala published the first Volume (Adhyāya-s 1-10) of this work in 1988 and the second (Adhyāya-s 11-20) in the year 1992. These two volumes included the Bhāṣya-s of Ānandabodha and Sāyaṇācārya. Now are being published the third and the fourth volumes with the commentaries by Ānandabodha & Anantācārya.

The completion of this work was interrupted due to inadequate staff and the time that was required to revise the text in the usual critical method that the Mandala has been always observing meticulously. Finally, we could overcome these difficulties and are in a position to present the work for the service of the Vedic Scholars.

Dr. T. N. Dharmadhikari worked for Adhyāya-s 21-26 and Dr. Sunanda Abhyankar for Adhyāya-s 27-30 of this Volume. Both of them deserve our sincere thanks.

We are painfully aware of certain deficiencies for which we crave the indulgence of the scholars.

The printing upto the end of the 26th Adhyāya-s was done in the Mandala's own Press while that of Adhyāya-s 27-30 was done by Mac script. We thank them for the quality work they have done.

The Rashtriya Sanskrit Sansthan, New Delhi has accorded sanction to the grant towards the editing and publishing of this volume. We record our deep sense of gratitude to the Rashtriya Sanskrit Sansthan.

We are grateful to Dr. B. R. Sharma for the pains he took in preparing this Edition, at this old age and also for allowing us to publish the same.

Indifferent health did not allow him to write his scholarly Introduction to this volume which as per his communication he proposes to do at the time of printing of the Index-Volume.

We hope the scholars will appreciate the value of this publication.

**Śrāvaṇa Pūrṇimā**
Śake 1921
26 August 1999

**Nalini Dhadphale**
Secretary and
Director-In-Charge

# काण्वसंहिता - विषयानुक्रमणिका

# संक्षेप-विवरणम्

| | |
|---|---|
| अको - अमरकोषः | नि - निरुक्तम् |
| आपश्रौ - आपस्तम्बश्रौतसूत्रम् | पा - पाणिनीयाअष्टाध्यायी |
| आर्षेयब्रा - आर्षेयब्राह्मणम् | पावा - पाणिनीयाअष्टाध्यायी- वार्तिकम् |
| उ - उणादिसूत्राणि | फिसू - फिट्सूत्राणि |
| ऋप्रा - ऋग्वेदप्रातिशाख्यम् | बृउ - बृहदारण्यकोपनिषत् |
| ऋ/ऋसं - ऋग्वेदसंहिता | ब्रसू - ब्रह्मसूत्राणि |
| ऐआ - ऐतरेयारण्यकम् | भगी - भगवद्गीता |
| काअ - कात्यायनसर्वानुक्रमणी | भापु - भागवतपुराणम् |
| काशब्रा - काण्वीयशतपथब्राह्मणम् | मभा/महाभा - महाभारतम् |
| काश्रौ - कात्यायनश्रौतसूत्रम् | मासं - माध्यन्दिनसंहिता |
| कासं - काण्वसंहिता | मी - मीमांसासूत्राणि |
| किराता - किरातार्जुनीयम् | मुउ - मुंडकोपनिषत् |
| चव्यू - चरणव्यूहः | यास्मृ - याज्ञवल्क्यस्मृतिः |
| छाउ - छान्दोग्योपनिषत् | वाप्रा - वाजसनेयिप्रातिशाख्यम् |
| जै - जैमिनीयन्यायमाला | वाप्राभा - वाजसनेयिप्रातिशाख्य-भाष्यम् |
| तैउ - तैत्तिरीयोपनिषत् | विपु/विष्णुपु - विष्णुपुराणम् |
| तैब्रा - तैत्तिरीयबाह्मणम् | व्यामभा - व्याकरणमहाभाष्यम् |
| तैसं - तैत्तिरीयसंहिता | शब्रा - शतपथब्राह्मणम् |
| द्र - द्रष्टव्यम् | सर्वानु - सर्वानुक्रमणी |

॥ ॐ ॥

शुक्ल-यजुर्वेदीया

# काण्व-संहिता

श्रीमदानन्दबोधकृतमन्त्रभाष्यसंग्रहेण

तथैव

श्रीमदनन्ताचार्यकृतवेदभावार्थदीपिकया च

समन्विता

[ तृतीयो भागः ]

[ अथ एकविंशाध्याये प्रथमोऽनुवाकः ]

श्रीगणेशाय नमः

---

हरिः ॐ ॥

स्वाद्वीं त्वा स्वादुना तीव्रां तीव्रेणामृताममृतेन ।
मधुमतीं मधुमता सृजामि सꣳ सोमेन ।
सोमोऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व ॥१॥

---

स्वाद्वीम् । त्वा । स्वादुना । तीव्राम् । तीव्रेण । अमृताम् । अमृतेन ।
मधुमतीमिति मधुऽमतीम् । मधुमतेति मधुऽमता । सृजामि । सम् । सोमेन ।
सोमः । असि । अश्विभ्यामित्यश्विऽभ्याम् । पच्यस्व । सरस्वत्यै ।
इन्द्राय । सुत्राम्ण इति सुऽत्राम्णे । पच्यस्व ॥ (तः) ॥१॥

---

आ– अग्निप्रकरणं समाप्तम् । अथ सौत्रामणी त्रिभिरध्यायैः प्रक्रियते । अग्न्यङ्गत्वात् सौत्रामण्या अनन्तरमुपक्रमः । तत्र " प्रजापतिर्यज्ञमसृजत " इत्युपक्रम्य " सौत्रामणीम् " (शब्रा १२·८·२·१) इत्यादिना विस्तरेण प्रतिपाद्यते । " स एतं यज्ञक्रतुमपश्यत् सौत्रामणीम् " (शब्रा १२·८·२·१) इति श्रुतेः । सौत्रामण्याः प्रजापतिर्ऋषिः । अथापरमिदं भैषज्यार्थम् अश्विनौ च सरस्वती च सौत्रामणीं ददृशुरिति । अतोऽश्विनोः सरस्वत्याश्चार्षमिति ।

तत्र सुरा संधीयते – ' स्वाद्वीं त्वा ' इति । सुरादेवत्याऽनुष्टुप् । ' सोमोऽसि ' आदीनि चत्वारि सौराणि यजूंषि । ' स्वाद्वीं त्वा ' । स्वादु रुचिकरम् । तेन [v]स्वादुना मृष्टेन [v]स्वाद्वीं स्वादुरसोपेताम् । [v]तीव्रेण । तीव्रशब्दः पटुवचनः शीघ्रमदजनकः । तेन तीव्रेण पटुरसेन । [v]तीव्राम् । [v]अमृतेन अमृतरसेन । [v]अमृताम् । [v]मधुमतीं मधुररसोपेताम् । मधुमतीं सुरां [v]त्वा [v]सोमेन सोमरसेन [v]सं [v]सृजामि । यतस्त्वं [v]सोमः [v]असि, अतस्त्वां ब्रवीमि । सोमस्त्वम् [v]अश्विभ्याम् अश्विनोरर्थे [v]पच्यस्व । अत्र पाको विपरिणामः । तथा [v]सरस्वत्यै सरस्वत्यर्थे [v]पच्यस्व । [v]इन्द्राय [v]सुत्राम्णे [v]पच्यस्व ॥१॥

---

अ– वन्दे श्रीमदनन्तसंज्ञगिरिपं लक्ष्मीनिवासं हरिं
विघ्नध्वान्तदिवाकरं सुरगुरुं सर्वार्थसिद्धिप्रदम् ।
ब्रह्माशर्वसुरेन्द्रपूर्वकसुरा यस्य प्रसादात् सदा
सर्वारब्धसमाप्तिमीयुरमलं मद्वंशदेवं परम् ॥

नत्वा क्षीराब्धिजाजानिं तथा ब्रह्मादिकान् सुरान् ।
गणेशं विघ्नहर्तारं वन्दे हैमवतीसुतम् ॥

चतुर्दशसु विद्यासु निष्णाताः शुद्धचक्षुषः ।
अपरोक्षब्रह्मतत्त्वा जयन्ति गुरवे नमः ॥

---

1. V2 begins श्रीगणाधिपतये नमः । श्री विठ्ठलाय नमः । श्रीयाज्ञवल्क्याय नमः । ॐ स्वाद्वीं त्वा ।; S3 श्रीगणाधिपतये नमः ।; S3 before अग्नि ins. इति ।

2. V2 यथा for अथ

6. S3 पाठस्तु for स्वाद्वीं त्वेति; S3 स्वाद्वीं त्वा स्वादुना ... सुत्राम्णे पच्यस्वेति for स्वाद्वीं त्वेति ।

7. S3 मिष्टेन for मृष्टेन

12. S3 om. इन्द्रेण सुत्राम्णे पच्यस्व

13. M4 before वन्दे adds शुक्लयजुर्वेदभाष्यम् ॥ श्रीगणाधिपतये नमः ॥ श्रीसरस्वत्यै नमः ॥; S3 श्रीदेवदेवाय नमः ॥ श्रीगणेशाय नमः ॥ श्रीवेदव्यासाय नमः ॥; M4 °गिरीशं for गिरिपं

16. M4 सर्वारम्भ° for सर्वारब्ध°; M4 °वेदं for °देवं

श्रुतिसकलरहस्यं बिम्बितं यस्य चित्ते
मुकुर इव गुव्जं ( मुखाब्जं ? ) दोषमालिन्यशून्ये ।
स्वपदविमलभक्त्या यस्य तुष्टो रमेशो
जनकजनकयह्लं भट्टमेनं नतोऽस्मि ॥
वन्दे श्रीपितृचरणान् भट्टनागेश्वसंज्ञिकान् ।
यत्प्रसादादहं प्राज्ञः संजातो जडधीरपि ॥
वन्दे भागीरथीमम्बाम(ती)व गुणशालिनीम् ।
यत्कृपाप्लवमासाद्य विद्यापारं गतोऽस्म्यहम् ॥
समस्तकाण्वशाखिभ्यो मूर्धन्येषोऽञ्जलिर्मया ।
बध्यते मच्छ्रमं दृष्ट्वा कृपां कुर्वन्तु ते मयि ॥
व्याख्याता काण्वशाखीयसंहिता पूर्वविंशतिः ।
माधवाचार्यवर्येण स्पष्टीकृत्य न चोत्तरा ॥
अतस्तां व्याकरिष्येऽहमनन्ताचार्यनामकः ।
अनेकग्रन्थानालोक्य क्रियते दीपिका मया ॥
बहूनि सन्ति भाष्याणि प्रणीतानि हि सूरिभिः ।
कोऽप्यस्या महिमा वेद्योऽभिज्ञैर्जगति सर्वतः ॥
न पाण्डित्याभिमानेन न च वित्तस्य लिप्सया ।
दीपिका रच्यते किंतु लक्ष्मीकान्तस्य तुष्टये ॥
यत्किंचिन्मम चाञ्चल्यं क्षाम्यन्तु च विचक्षणाः ।
गुणग्राह्या सदा सन्तो बालस्य पितराविव ॥
काण्वशाखारहस्यं तु श्रीभागवतविष्णुपुराणयोः ।
–" अस्मिन्नप्यन्तरे ब्रह्मन् भगवान् लोकभावनः ॥
ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये ।
पराशरात् सत्यवत्यामंशांशकलया विभुः ॥
अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम् ।
ऋगथर्वयजुःसाम्नां राशीनुद्धृत्य सर्वशः (वर्गशः) ॥
चतस्रः संहिताश्चक्रे सूत्रैर्मणिगणा इव ।
तासां स चतुरः शिष्यानुपाहूय महामुनिः ॥

---

2. M4 गुरुज°, P2 गु [ ] ब्जं
10. M4 प्रथमं for मच्छ्रमं
11. M4 कण्व° for काण्व°
14. M4 trans. क्रियते after दीपिका
16. P2 °र्जयति; M4 (र्य) र्जे (ग) ति
26. M4 राशिम् for राशीन्
27. Bhāg P मन्त्रै° for सूत्रै° ।
28. Bhāg P महामतिः for महामुनिः ।

एकैकां संहितां ब्रह्मन्नेकैकस्मै ददौ विभुः ।
पैलाय संहितामाद्यां बह्वृचाख्यामुवाच ह ॥
वैशम्पायनसंज्ञाय निगदाख्यं यजुर्गणम् ।
साम्नां जैमिनये प्राह तथा छन्दोगसंहिताम् ॥
अथर्वाङ्गिरसीं नाम स्वशिष्याय सुमन्तवे ।
तैश्च शिष्यप्रशिष्यादिद्वारा शाखाः प्रवर्तिताः ॥
वैशम्पायनशिष्या वै चरकाध्वर्यवोऽभवन् ।
यत् चेरुर्ब्रह्महत्यांहःक्षपणं स्वगुरोर्व्रतम् ।।
याज्ञवल्क्यस्तु तच्छिष्य आहाहो भगवन् कियत् ।
चरितेनाल्पसाराणां चरिष्येऽहं सुदुष्करम् ॥
इत्युक्तो गुरुरप्याह कुपितो याह्यलं त्वया ।
विप्रावमन्त्रा शिष्येण मदधीतं त्यजाश्विति ॥
देवरातसुतः सोऽपि छर्दित्वा यजुषां गणम् ।
ततो गतोऽथ मुनयो ददृशुस्तान् यजुर्गणान् ॥
यजूंषि तित्तिराः भूत्वा तल्लोलुपतयाऽऽददुः ।
तैत्तिरीया इति यजुःशाखा आसन् सुपेशलाः ॥
याज्ञवल्क्यस्ततो ब्रह्मन् छन्दांस्यधिगवेषयन् ।
गुरोरविद्यमानानि सूपतस्थेऽर्कमीश्वरम् ॥
' ॐ नमो भगवते ' इत्यादिस्तोत्रेण ।
एवं स्तुतः स भगवान् वाजिरूपधरो रविः ।
यजूंष्ययातयामानि मुनयेऽदात् प्रसादितः ॥
यजुर्भिरकरोच्छाखा दश पञ्च च तैर्मुनिः ।
जगृहुर्वाजसन्यस्ताः काण्वमाध्यंदिनादयः॥ " ( द्र. भापु १२.६.४८–७४ )
अयातयामानि अगतसाराणि, वीर्यवन्तीत्यर्थः इति । इति द्वादशः स्कन्धः ॥
वैष्णवे तु तृतीयेंऽशे-

" पाराशर उवाच–

---

3. M4 °संज्ञायाः for °संज्ञाय
5. M4 सुमन्तवे for सुमन्तये
9. M4 °शिष्यम् for शिष्यः
10. BPP सुदुश्चरम् for सुदुष्करम् ।
12. M4 विप्रावमथ (?) for विप्रावमन्त्रा
15. Bhāg P भूत्वा तित्तिरयो ब्रह्मंस्त° for यजूंषि तित्तिराः भूत्वा तल्लो°
18. P1 सूपंतस्येर्कम् ; M4 सूपं तस्यार्कम् for सूपतस्येर्कम् ।
20. Bhāg P हरिः for रविः ।
22. Bhāg P विभुः for मुनिः ।

यजुर्वेदतरोः शाखा आसन्नेकोत्तरं शतम् ।
एकोनषष्टिशाखाश्च कठादय उदीरिताः ॥
सप्तविंशतिशाखाश्च ततः कृष्णाह्वयाः स्मृताः ।
वैशम्पायननामासौ व्यासशिष्यश्चकार सः ॥
शिष्येभ्यः प्रददौ ताश्च जगृहुस्तेऽप्यनुक्रमात् ।
भाविवृत्तान्तमाज्ञाय व्यासः सत्यवतीसुतः ॥
दश पञ्चाथ याः शाखाः सूर्यायोपदिदेश ह ।
वैशम्पायनशिष्यस्तु याज्ञवल्क्यः प्रकृष्टधीः ॥
ब्रह्मरातसुतो ब्रह्मन् गुरुवृत्तिरतोऽभवत् ।
गुरूणां यो महामेरौ समाजे नागमिष्यति ॥
तस्य वै सप्तरात्रात् तु ब्रह्महत्या भविष्यति ।
पूर्वमेवं मुनिगणैः समयोऽभूत् कृतो द्विज ॥
वैशम्पायन एकस्तु तं व्यतिक्रान्तवांस्तदा ।
स्वस्रीयं बालकं सोऽथ पदाऽत्यर्थमघातयत् ॥
शिष्यानाह च भो शिष्या ब्रह्महत्यापहं व्रतम् ।
चरध्वं मत्कृते सर्वे न विचार्यमिदं तथा ॥
अथाह याज्ञवल्क्यस्तं किमेभिर्भगवन् द्विजैः ।
क्लेशितैरल्पतेजोभिश्चरिष्येऽहमिदं व्रतम् ॥
ततः क्रुद्धो गुरुः प्राह याज्ञवल्क्यं महामतिः ।
मुच्यतां यत्त्वयाऽधीतं मत्तो विप्रावमानक ॥
निस्तेजसो वदस्येतान् यस्त्वं ब्राह्मणपुंगवान् ।
तेन शिष्येण नार्थोऽस्ति ममाज्ञाभङ्गकारिणा ॥
याज्ञवल्क्यस्ततः प्राह भक्त्यैतत् ते मयोदितम् ।
ममाप्यलं त्वयाधीतं जन्म यातमिदं वृथा ॥

पराशर उवाच–

इत्युक्त्वा रुधिराक्तानि सरूपाणि यजूंषि सः ।
छर्दयित्वा ददौ तस्मै प्रययौ स्वेच्छया मुनिः ॥
यजूंष्यथ विसृष्टानि याज्ञवल्क्येन वै द्विज ।
जगृहुस्तित्तिरीभूय तैत्तिरीयास्तु ते ततः ॥

---

3. M4 कृच्छ्रा° for कृष्णा°
7. M4 पञ्च यथा for पञ्चाथ याः
12. M4 वृतो for कृतो
17. M4 मघवान् for भगवन्
19. M4 शुद्धो for क्रुद्धो; M4 मतिम् for मतिः
24. M4 मयाप्यत्र त्वयाधीने for ममाप्यलं त्वयाधीतं
27. M4 प्रददौ for प्रययौ

ब्रह्महत्याव्रतं चीर्णं गुरुणाऽऽदेशितैस्तु यः ।
चरकाध्वर्यवस्ते तु चरणादभवन्मुनेः ॥
याज्ञवल्क्योऽथ मैत्रेय प्राणायामपरायणः ।
तुष्टाव प्रयतः सूर्यं यजूंष्यभिलषंस्ततः ॥

याज्ञवल्क्य उवाच–

नमः सवित्रे द्वाराय विमुक्तेस्तिग्मतेजसे ।
ऋग्यजुःसामभूताय त्रयीधाम्ने च ते नमः ।
नमोऽग्नीषोमभूताय जगतः कारणात्मने ।
भास्कराय परं तेजः सौषुम्णमुरु बिभ्रते ॥
कलाकाष्ठानिमेषादिकालज्ञानात्मने नमः ।
ध्येयाय विष्णुरूपाय परमाक्षररूपिणे ॥
नमस्ते रुद्ररूपाय सुरज्येष्ठाय ते नमः ।
नमस्ते सर्वरूपाय रोगहर्त्रे नमोऽस्तु ते ॥
सत्कर्मयोग्यो न जनो नैवापः शौचकारणम् ।
यस्मिन्ननुदिने तस्मै देवदेवाय भास्वते ॥
हिरण्मयं रथं यस्य केतवोऽमृतवाजिनः ।
वहन्ति भुवनाल्लोकचक्षुषं त्वां नमाम्यहम् ॥

पराशर उवाच–

इत्येवमादिभिस्तेन स्तूयमानः स्तवैः रविः ।
वाजिरूपधरः प्राह व्रियतामिति वाञ्छितम् ॥
याज्ञवल्क्यस्ततः प्राह प्रणिपत्य दिवाकरम् ।
यजूंषि तानि मे देहि यानि सन्ति न मे गुरौ ॥
एवमुक्तो ददौ तस्मै यजूंषि भगवान् रविः ।
अयातयामच्छन्दांसि यानि वेत्ति न तद्गुरुः ॥
याज्ञवल्क्यस्ततो ब्रह्मन् स्वशिष्येभ्य उवाच ह ।
यजूंषि यैरधीतानि तानि विप्रैर्द्विजोत्तम ॥
वाजिनस्ते समाख्याताः सूर्यस्त्वश्वोऽभवद्यतः ।
शाखाभेदास्तु तेषां वै दश पञ्च च वाजिनाम् ॥
कण्वाद्यास्तु महाभाग याज्ञवल्क्यप्रकीर्तिताः ।
तासां मध्ये काण्वशाखा विशिष्टा प्रथमा यतः ॥
अतः प्रथमशाखेति यजुषामुत्तमा मता ॥" ( विष्णुपु ३·५ )

इति तृतीयेंऽशे पञ्चमोध्यायः ॥

---

18. M4 before परा° adds श्री°
24. M4 अयात्र for अयात°

सुरासंधानम् ]

अत्रेदं विचार्यते। किं काण्वादिपठ्यमानो वेदो मुख्यो यजुर्वेदः उत साधारणः। उभयथा वचनदर्शनात् संदेहः। तथा हि तैत्तिरीयब्राह्मणे– "भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास। तꣳ ह जीर्णिꣳ स्थविरं शयानम्। इन्द्र उपव्रज्योवाच। भरद्वाज यत्ते चतुर्थमायुर्दद्याम्। किमेनेन कुर्या इति। ब्रह्मचर्यमेवैनेन चरेयमिति होवाच। तं ह त्रीन् गिरिरूपानविज्ञातानिव दर्शयांचकार। तेषाꣳ हैकैकस्मान्मुष्टिनाऽऽददे। स होवाच। भरद्वाजेत्यामन्त्र्य। वेदा वा एते। अनन्ता वै वेदाः। एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः" ( तैब्रा ३·१०·११ ) इत्यादिना सर्वासां शाखानां वेदशब्दाभिधानादनन्तशब्दानुपपत्त्या वेदशब्दस्य शाखापरत्वात्।

" अवतीर्णो महायोगी सत्यवत्यां पराशरात्।
उत्सन्नान् भगवान् वेदानुज्जहार हरिः स्वयम्॥
चतुर्धा व्यभजत् तांश्च चतुर्विंशतिधा पुनः।
शतधा चैकधा चैव तथैव च सहस्रधा॥
अथर्वाणं द्वादशधा भित्त्वा शाखा अचीकरत्"

इति विभक्तानां भागानां शाखाशब्दश्रवणाच्चेति संदेहबीजम्। तत्र पूर्वः पक्षः। द्वापरादौ वेदव्यासेन स्वशिष्येभ्यश्चतुर्भ्यो य उपदिष्टास्त एव मुख्या वेदाः। तैर्व्यासशिष्यैर्विभज्य स्वशिष्येभ्यो दत्ताः शाखा अमुख्या वेदाः इति। तथा च वेदव्यासेन कठापस्तम्बादीनामेवोपदेशात् त एव मुख्याः वेदाः। कण्वादयस्तु तदन्तरोपदेशादमुख्या इति। एवं प्राप्तेऽभिधीयते–

" मन्त्रब्राह्मणयोर्वेदस्त्रिगुणं यत्र पठ्यते।
यजुर्वेदः स विज्ञेयो ह्यन्ये शाखान्तराः स्मृताः"॥ ( चव्यू २·२१ )

इति कात्यायनप्रणीतपरिशिष्टप्रमाणेन शुक्लयजुर्वेदशब्देन अयातयामत्वेन च काण्वादयो मुख्याः इतरे त्वमुख्या इति। परिशिष्टप्रमाणमितरत्रापि समानमिति चेत्। वचनार्थासंभवात्। तथा हि – 'मन्त्रब्राह्मणयोर्वेदः' इति नामधेयमुक्त्वा यजुर्वेदे विशेष उच्यते। त्रिगुणं यत्र पठ्यते स यजुर्वेदः। यत्र तथात्वं नास्ति ते शाखान्तरा इति। तत्र पृच्छामः। त्रिगुणमिति पदं क्रियाविशेषणं वा, अथवा मन्त्रब्राह्मणयोरिति समस्तस्यापि पदस्य बुद्धया विभक्तस्य ब्राह्मणपदस्य नपुंसकलिङ्गस्य विशेषणं वा? अन्यद्वा? तत्र प्रथमपक्षे मन्त्रब्राह्मणयोर्वेदः, स यत्र यस्यां शाखायां त्रिगुणं यथा स्यात् तथा पठ्यते स मुख्यो यजुर्वेदः इत्यर्थः संभवति। तत्र किं त्रैगुण्यम्? किं विध्यर्थवादमन्त्ररूपेण, आहोस्वित् संहितापदक्रमरूपेण वा? नाद्यः। शाखामात्रस्य विध्यर्थवादमन्त्ररूपत्वेन व्यावर्त्याभावात्। द्वितीयस्तु काण्वादीनामेव संभवति। तेषां मन्त्रब्राह्मणात्मकस्य वेदस्य संहितादित्रिगुणपाठस्य सद्भावात्। ननु शतपथब्राह्मणस्य त्रिगुणपाठा-

---

2. M4 ऋषिभिर् for ह त्रिभिर् M4 भारद्वाज for भरद्वाज°
3. M4 °वृज्य for °व्रज्य; M4 भरद्वाजाय ते for भरद्वाज यत्ते
16. M4 च for तु; M4 विधीयते for अभिधीयते
19. P1 °यजुष्ट्वेनायातमत्वे [ – ] च for यजुर्वेदशब्देन अयातयामत्वेन च; M om. च
21. M4 तत्र for second यत्र
22. M4 om. नास्ति
23. M4 om. पदस्य
24. M4 om. यत्र

भावान्न संभवति त्रिगुणपाठः काण्वादीनाम् । संभवति चापस्तम्बादीनां तादृशपाठ इति चेन्न । आपस्तम्बादीनामपि ब्राह्मणभागस्य तथात्वाभावात् । अथ यदि तेषां संहितायां ब्राह्मणभागस्यापि सत्त्वात् त्रैगुण्यं संभवति । तथा हि तैत्तिरीयप्रथमाष्टके – "संपश्यामि प्रजा अहमिडप्रजसो मानवीः"। ( तैसं १·५·६ ) इत्युपक्रम्य "संपश्यामि प्रजा अहमित्याह यावन्त एव ग्राम्याः पशवस्तानेवाव रुन्द्धेऽम्भः स्थाम्भो वो भक्षीयेत्याहाम्भो ह्येता महः स्थ महो वो भक्षीयेत्याह महो ह्येताः सह स्थ सहो वो भक्षीयेत्याह सहो ह्येता ऊर्जः स्थोर्जं वो भक्षीय" ( तैसं १·५·८ ) इत्यादौ । हन्त तर्हि काण्वाह्वायामपि संहितायां "वसन्ताय कपिञ्जलानालभते ग्रीष्माय कलविङ्कान्" ( कासं २६·४·५ ) इत्यादेः, "ब्रह्मणे ब्राह्मणꣳ क्षत्राय राजन्यम्" ( शब्रा १३·६·२·१० ) इत्यादेश्च ब्राह्मणभागस्य सत्त्वमस्त्वेहि । अथोभयेषामपि लक्षणसत्त्वात् मुख्यवेदत्वम् । अन्येषां शाखान्तरत्वमस्त्विति चेत् न । काण्वादीनां संहितान्तःपाति ब्राह्मणमस्तीत्यत्र महर्षिणा कात्यायनेनानुक्रमणिकाध्याये "अश्वस्तूपरो ब्राह्मणोध्यायः" ( काअ २४ ); "ब्रह्मणे ब्राह्मणम्" ( काअ ३० ) "देवा यज्ञं ब्राह्मणोध्यायः" ( काअ १९ ) इत्युक्तत्वाद्भवति ब्राह्मणभागः । आपस्तम्बादीनामनुक्रमणिकाभावात् वचनान्तराभावाच्च संहितान्तःपातिव्याख्यानरूपभागस्य ब्राह्मणत्वे प्रमाणाभावात् । अन्यथा ब्राह्मणान्तर्गतस्य "यदापिपेष मातरं । पुत्रः प्रमुदितो धयन् । एतत्तदग्ने अनृणो भवाम्यहतौ पितरौ मया" ( शब्रा १२·७·३·२१ ) इत्यादेर्मध्यमादिकाण्डगतस्य संहितात्वापत्त्या त्रिगुणपाठ(ा)पत्तेः । किं च व्याख्यानमात्रत्वेन ब्राह्मणत्वे "केश्यग्निं केशी विषं केशी बिभर्ति रोदसी । केशी विश्वं स्वर्दृशे केशीदं ज्योतिरुच्यते" ( ऋ १०·१३६·१ ) इत्याद्यृग्वेदसंहिताभागस्य; "कः स्विदेकाकी चरति क उ स्विज्जायते पुनः । किंस्विद्धिमस्य भेषजं किं स्विदावपनं महत्" ( कासं २५·१० ) इति पृष्टे –

"सूर्य एकाकी चरति चन्द्रमा जायते पुनः ।
अग्निर्हिमस्य भेषजं भूमिरावपनं महत् ॥"

( कासं २५·११ ) इत्याद्यनुवाकद्वयस्य;

"यत् पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमस्यासीत् किं बाहू किमूरू पादावुच्येते"॥ ( कासं ३५·१० )

इति प्रश्ने–

"ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥" ( कासं ३५·११ )

इत्यादेश्च काण्वादिसंहिताभागस्य ब्राह्मणत्वापत्त्या त्रिगुणपाठत्वं स्यात् । अपि च । मीमांसायां द्वितीयाध्याये– "तच्चोदकेषु मन्त्राख्या" इत्यधिकरणे, वेदो द्वेधा भिद्यते, मन्त्रो ब्राह्मणम् ( मीसू २·१·३२ ) इति । तत्र मन्त्रस्य लक्षणान्तरासंभवेन, 'मन्त्रानधीते, मन्त्रानध्यापयामः' इति यत्र वैदिकानां संहिताभागे मन्त्रत्वप्रसिद्धिः, स द्रव्यदेवताप्रकाशनसमर्थः संहिताभागो मन्त्रः, इत्युक्त्वा "शेषे ब्राह्मणशब्दः" ( मीसू २·१·३३ ) इत्यवशिष्टभागस्य ब्राह्मणत्वमिति

1. M4 °पाठस्य सद्भावात् for °पाठः
2. M4 इति for first अपि

जैमिन्युक्तेश्च। ननु संहितामात्रस्य कर्मसमवेतद्रव्यदेवताप्रकाशकत्वाभावादनारभ्याधीतभागस्य कर्मणि विनियोगाभावाच्च कथं संहितामात्रस्य मन्त्रत्वमिति चेत्। न। दत्तोत्तरत्वात्। न हि वयं विनियुक्तशब्दविशेषो मन्त्र इति ब्रूमः। किं तर्हि ? " मन्त्रब्राह्मणयोर्वेद° " ( आपश्रौ २४·१·३१ ) इति प्रमाणेन यस्य भागस्य संहितात्मकस्य वैदिकानां मन्त्रत्वप्रसिद्धिः स एव मन्त्रः। शेषं ब्राह्मणम् इति। " देवांश्च याभिर्यजते ददाति च " (मी ३·१·१ तैब्रा २·४·६·९) इत्यादेः विधायकस्य कर्मसंभवे द्रव्यदेवताप्रकाशकत्वाभावेऽपि विनियुक्तमन्त्रसमभिव्याहारात् मन्त्रत्वानपायात्। मण्डलब्राह्मणतुलापुरुषसूर्योपस्थानादौ विनियुक्तत्वेऽपि ब्राह्मणत्वानपायाच्च। "एकदेशमुपाध्यायः" (यास्मृ १·४) इत्यत्र विज्ञानेश्वरेण संहिताभागस्यैव मन्त्रत्वोक्तेश्च। तस्मात् मन्त्रः संहितेति पर्यायः। तदेतद्यावद्वचनं वाचनिकं भवतीति न्यायेन वाजसनेयिनां काण्वादिपठ्यमानानामेव यजुषामिदं लक्षणं, नान्येषामिति गम्यते । न द्वितीयः। त्रिगुणशब्दस्य संनिहितवेदशब्देनान्वये संभवति समस्तं ब्राह्मणपदं विभज्य तेनान्वयकथने व्यवहितान्वयत्वदोषात्। कल्पनागौरवाच्च। अस्तु वा तथात्वम्। तत्र पक्षे ब्राह्मणस्य त्रिगुणत्वं किं संहितापेक्षया ग्रन्थतो वा ? किं वा आदौ मन्त्रप्रतीकतो गृहीत्वा व्याख्यानं कृत्वा पश्चात् मन्त्रप्रतीकस्य तस्यैवोपसंहार इति रूपेण वा ? यथा– " आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम् इत्याह। ब्राह्मण एव ब्रह्मवर्चसं दधाति। तस्मात् पुरा ब्राह्मणो ब्रह्मवर्चस्यजायत " ( शब्रा १३·१·९·१ ) इत्यादौ तथा दर्शनादिति। अत्रापि प्रथमपक्षः काण्वादीनामेव संभवति। नापस्तम्बादीनाम्। शतपथब्राह्मणस्य संहितापेक्षया ग्रन्थबहुत्वेन त्रैगुण्यसंभवात्। आपस्तम्बादीनां तु संहिताया ब्राह्मणस्य च ग्रन्थतः समत्वात्। द्वितीयेऽपि, किं मन्त्रमात्रव्याख्यानत्वेन त्रिगुणपाठः, किं वा कतिपयमन्त्रव्याख्यानत्वेन ? अत्रापि प्रथमपक्षः काण्वादीनामेव संभवति। तेषां शतपथब्राह्मणे मन्त्रमात्रव्याख्यानात्। इतरेषां ब्राह्मणस्य ग्रन्थतो मन्त्रसमानत्वेन मन्त्रमात्रव्याख्यानासंभवात्।

न द्वितीयः । शाखान्तरेष्वपि ब्राह्मणे मन्त्रैकदेशव्याख्यानसत्त्वेनातिव्याप्तेः । मन्त्रैकदेशव्याख्यानं तु कठमैत्रायणीयादिशाखासु प्रसिद्धमेव । अन्योद्वेति तृतीयेऽपि न । तस्यानिर्वचनीयत्वेन विकल्पासहत्वात् । किं च– " शुक्लानीमानि यजूंषि वाजसनेयेन याज्ञवल्क्येन आख्यायन्ते " ( बृउ ६·५·३ ) इति बृहदारण्यकश्रुतेरिमानि काण्वादीनि शुक्लानि शुद्धानि शुक्लसंज्ञानि वा यजूंषि वाजसनेरपत्येन याज्ञवल्क्येन ऋषिणा आख्यायन्ते विभज्य स्वशिष्येभ्य उपदिश्यन्त इति विद्यारण्यश्रीपादैर्व्याख्याततत्वात् । आध्वर्यवं क्वचिदित्यन्यवस्थया, " बुद्धिमालिन्यहेतुत्वात् तद्यजुः कृष्णमितीर्यते । व्यवस्थितप्रकरणं यत् तद्यजुः शुक्लमीर्यते " इति ब्राह्मणवचनेन च शुक्लयजुष्ट्वविधानेनापि काण्वादीनामेव मुख्यत्वात्। अपि च–

" अयातयामानि तु भानुगुप्तान्यन्यानि जातान्यतिनीरसानि ।
यजूंषि तेषामथ याज्ञवल्क्यो ह्ययातयामानि रवेरवाप ॥ "

---

4. M4 वेदांश्च for देवांश्च
21. M4 अन्यत्वे for अन्योद्वेति
25. M4 व्याख्यातत्वेन; P2 व्याख्याततत्वम् for व्याख्याततत्वात्
26. M4 om. यत्

इति भविष्यदर्थवचनेन, "यजूंष्ययातयामानि" इति भागवतादिवचनेन च काण्वादीनां वीर्यवत्त्वाभिधानाच्च मुख्ययजुर्वेदत्वमिति सिद्धम् ॥

पञ्चदशशाखास्वपि काण्वी मुख्या।

"यजुर्वेदमहाकल्पतरोरेकशतं स्मृताः ।
शाखाः पञ्चदश श्रेष्ठास्तत्रापि प्रथमा परम्" इति ॥

किं दैवतमिति । ऋचामग्निर्दैवतम् । तदेव ज्योतिः । गायत्रं छन्दः । पृथिवीस्थानम् ।

"अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातमम् ॥"
इत्येवमादिं कृत्वा ऋग्वेदमधीयते ।
यजुषां वायुर्दैवतम् । तदेव ज्योतिस्त्रैष्टुभं छन्दोऽन्तरिक्षं स्थानम् ।
"इषे त्वोर्जे त्वा वायवः स्थ देवो वः सविता
प्रार्पयतु श्रेष्ठतमाय कर्मणे ॥" ( कासं १·१·१·१ ) इति ।

अथर्ववेदस्य एव वेदत्वोक्तेश्चेति सर्वं साधु । एवं सति यच्छाखोक्तं कर्म समाप्तं तत्र तच्छाखोक्तमाशीर्ग्रहणमादौ भवति ।

"स्वस्तिवाचनमन्त्रेष्टं सर्वेषामृद्धिकर्मणाम् ।
आदावन्ते प्रकर्तव्यमिति गृह्यविदां मतम् ॥"

इत्याश्वलायनोक्तेः । ततः ऋग्वेदस्य । ततः काण्वादेः । तत आपस्तम्बादेः । ततः सामगादेरिति क्रमो भवति । मुख्यक्रमानुग्रहात् । तथाध्ययनविधेः । कात्यायनेन चतुर्वेदोपाकरणमुपक्रम्य "अध्यायादीन् प्रब्रूयात्" इति स्वशाखामादावुपाकृत्य "वेदान्तराध्ययने सति ऋषिमुखानि बह्वृचानां पर्वाणि छन्दोगानां सूक्तान्याथर्वणाम्" इत्यादिविशेषज्ञापनाच्च । वेदेष्वपि यजुर्वेदः प्रधानभूतः । अन्योऽङ्गभूतः । "सर्वा गतिर्याजुषी हैव शश्वत् । तस्य यजुरेव शिरः । ऋग्दक्षिणः पक्षः । सामोत्तरः पक्षः । ऋग्भ्यो जातं वैश्यं वर्णमाहुः । यजुर्वेदं क्षत्रियस्याहुः योनिम् सामवेदो ब्राह्मणानां प्रसूतिः । तथा असृक्षि वाश्मम् ?" इत्युपक्रम्य यजुर्वेदसामवेदऋग्वेदोत्पत्तिक्रमस्योक्तत्वात् आपस्तम्बशाखायाम् ( द्र. तैब्रा ३·१२·९ ) । प्राधान्यमपि आधानाग्निहोत्रदर्शपूर्णमासचातुर्मास्यज्योतिष्टोमादिप्रधानकर्मोत्पादकत्वेन यजुर्वेदस्य भवति । तेन च प्रधानकर्मणि विहिते तदुपकारकत्वेन हौत्रप्रयोगौद्गात्रप्रयोगपूरकत्वेनान्ययोः प्रवेशोऽस्ति । न तु तमन्तरेण । सति राज्ञि सचिवादीनामिवेत्युपरम्यते ।

वेदाध्ययनमावश्यकं द्विजातेः ।

"यज्ञानां तपसां चैव शुभानां चैव कर्मणाम् ।
वेद एव द्विजातीनां निःश्रेयस्करः परः" ॥ ( यास्मृ १·४० )

---

1. M4 om. च

6. M4 P2 देवतम् for दैवतम्

10. M4 P2 देवतम् for दैवतम्

18. P2 कारणम् for °करणम्

23. M2 अपास्तं न for आपस्तम्ब°

इति याज्ञवल्क्योक्तेः । " यं यं क्रतुमधीते तेन तेन हैवास्येष्टं भवति " ( द्र. शब्रा ११·५·७·३ ) इति शतपथे फलश्रवणमपि । संपूर्णशाखाध्ययनफलमपि तत्रैव– " यावन्तः ह वा इमां पृथिवीं वित्तेन पूर्णां ददल्लोकं जयति " (शब्रा ११·५·६·३) । ततो भूयांसमक्षय्यं लोकं स्वाध्यायमधीयानो जयतीत्यर्थः । प्रति वेदं " त्रिस्तावन्तं जयति भूयांसं चाक्षय्यं य एवं विद्वानहरहः स्वाध्यायमधीते । तस्मात् स्वाध्यायोऽध्येतव्यः " ( शब्रा ११·५·६·३ ) इत्यादि । वित्तेन पूर्णां पृथिवीमिमां त्रिवारं ददत् यावन्तं लोकं जयति ततो भूयांसम् अक्षय्यं लोकं स्वाध्यायमधीयानो जयतीत्यर्थः ।

प्रतिवेदाध्ययनस्य फलमाह याज्ञवल्क्यः –

" मधुना पयसा चैव स देवांस्तर्पयेद्द्विजः ।
पितॄन् मधुघृताभ्यां च ऋचोऽधीते च योऽन्वहम् ॥
यजूंषि शक्तितोऽधीते योऽन्वहं स घृतामृतैः ।
प्रीणाति देवानाज्येन मधुना च पितॄंस्तथा ॥
स तु सोमघृतैर्देवांस्तर्पयेद्योऽन्वहं पठेत् ।
सामानि तृप्तिं कुर्याच्च पितॄणां मधुसर्पिषा ॥
मेदसा तर्पयेद्देवानथर्वाङ्गिरसः पठन् ।
पितॄंश्च मधुसर्पिर्भ्यामन्वहं शक्तितो द्विजः ॥
वाकोवाक्यं पुराणं च नाराशंसीश्च गाथिकाः ।
इतिहासांस्तथा विद्याः शक्त्याऽधीते च योऽन्वहम् ॥
मांसक्षीरौदनमधुतर्पणं स दिवौकसाम् ।
करोति तृप्तिं कुर्याच्च पितॄणां मधुसर्पिषा ॥
ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः ।
यं यं क्रतुमधीयीत तस्य तस्याप्नुयात् फलम् ॥
त्रिर्वित्तपूर्णपृथिवीदानस्य फलमश्नुते ।
तपसश्च परस्येह नित्यं स्वाध्यायवान् द्विजः " ॥ (यास्मृ १·४१·४८) इत्यादि ।

वेदानादरेण अन्यग्रन्थाध्ययने निन्दाऽपि–

" अनधीत्य द्विजो वेदं योऽन्यत्र कुरुते श्रमम् ।
स दोग्ध्रीं धेनुमुत्सृज्य ग्रामक्रोडीं दुधुक्षति ॥
यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् ।
स वै दुर्ब्राह्मणो नाम सर्वकर्मबहिष्कृतः ॥

---

3. M4 जयन्ति for first जयति; P2 om. ततो ... प्रतिवेदं [ L 4 ]
4. M4 तावन्ति for तावन्तं
8. M4 सर्वदेवान् for स देवान्
10. M4 शक्रतो° for शक्तितो°
19. M4 °सर्पिषाम् for °सर्पिषा
25. M4 वेदान् for वेदं

नित्यं नैमित्तिकं काम्यं यच्चान्यत् कर्म वैदिकम् ।
अनधीतस्य विप्रस्य सर्वं भवति निष्फलम् ॥
अनभ्यासाच्च वेदानामाचारस्य च लङ्घनात् ।
आलस्यादन्नदोषाच्च मृत्युर्विप्रं जिघांसति ॥ " इति स्कान्दे ।

वसिष्ठः–

" पारंपर्यागतो येषां वेदः सपरिबृंहणः ।
तच्छाखं कर्म कुर्वीत तच्छाखाध्ययनं तथा ॥
यः स्वशाखां परित्यज्य पारक्यमधिगच्छति ।
स शूद्रवद्बहिः कार्यः सर्वकर्मसु साधुभिः ॥
अधीत्य शाखामात्मीयां परशाखां ततः पठेत् ।
तच्छाखीयैस्तु संस्कारैः संस्कृतो ब्राह्मणो भवेत् ॥
प्रणवं प्राक् प्रयुञ्जीत व्याहृतींस्तदनन्तरम् ।
सावित्रीं च त्रिरभ्यस्य ततो वेदं समारभेत् ॥

तदपि साङ्गमध्येतव्यम् ।

साङ्गश्च वेदोऽध्येतव्यो ब्राह्मणेन महात्मना ॥
निरङ्गवेदाध्ययनान्न तत् फलमवाप्स्यते ।
छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।
ज्योतिषामयनं चक्षुः निरुक्तं श्रोत्रमुच्यते ।
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ॥
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥

प्रातिशाख्यमप्यवगन्तव्यम् । व्याकरणानुक्तविशेषरूपत्वात् ।

" जपादौ नाधिकारोऽस्ति प्रातिशाख्यमजानताम् ।
प्रातिशाख्यमतो ज्ञेयं सम्यक् पाठस्य सिद्धये ॥ " ( वाप्राभा १·१ )

इति कात्यायनोक्तेः* ।

वेदार्थोऽवश्यं ज्ञातव्यः इत्युक्तं मन्वादिभिः–

" ज्ञातव्यः सर्ववेदार्थो वेदानां कर्मसिद्धये ।
पाठमात्रमधीती च पङ्के गौरिव सीदति ॥ "

---

8. M4 °तिष्ठति for °गच्छति

16. P2 अवाप्यते for अवाप्स्यते

24. * [वाजसनेयि- प्रातिशाख्ये प्रथमेऽध्याये प्रथमसूत्रे भाष्यप्रस्तावनायाम् उव्वटस्य इयमुक्तिः । ' कात्यायनोक्तेः ' इति अनन्तदेवेन कृतं भाष्यं तु चिन्त्यम् । ]

व्यासेनापि–

"वेदस्याध्ययनं सर्वं धर्मशास्त्रस्य चैव हि।
अजानतोऽर्थं तद्व्यर्थं तुषाणां कण्डनं यथा ॥
अधीत्य विधिवद्वेदं वेदार्थं न विचारयेत् ।
स सान्वयः शूद्रसमः पात्रतां न प्रपद्यते ॥
यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम् ।
तावुभौ पुण्यकर्माणौ पङ्क्तिपावनपावनौ ॥ " इति ॥

ऋग्वेदेऽपि–

" उत त्वः पश्यन् न ददर्श वाच –
मुत त्वः शृण्वन् न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं वि सस्रे
जायेव पत्य उशती सुवासाः ॥ " ( ऋसं १०·७१·४ ) इति ।

अस्यार्थः – उत त्वः अप्येकोऽधिकारी वाचं वेदवाणीं पश्यन् पठन्नपि न ददर्श न पश्यति । अर्थज्ञानाभावेन फलाभावात् । एवं शृण्वन्नपि न शृणोति । उतो अपि त्वस्मै कस्मैचिदियं वेदगीस्तन्वं स्वरूपं विसस्रे विविच्य दर्शयति । अर्थज्ञात्र इत्यर्थः । तत्र दृष्टान्तः – उशती कामयमाना सुवासा ऋतुस्नाता जाया पत्ये इव यथा स्वशरीरार्पणेन फलदात्री तथेयमित्यर्थः ॥ निरुक्तेऽपि यास्कः – " स्थाणुरयं भारहरः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् । योऽर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा " ( नि १·१८) इत्यादि । तथा छन्दऋषिदेवतादिकं प्रतिमन्त्रमवगन्तव्यम् । तत्र ऋषिर्नाम मन्त्रद्रष्टोच्यते ।

" युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ॥" ( महाभा १२·२०३·१७ )
" ऋषिणा येन यो भाग उपलब्धो महार्णवे ।
स तस्य ऋषिराख्यातो ज्ञातव्यः कर्मकर्तृभिः " ॥ इति मोक्षधर्मोक्तिः ।

ऋष्यादिज्ञानाभावे प्रत्यवायमाह व्यासः –

" अविदित्वा ऋषिं छन्दो दैवतं योगमेव च ।
योऽध्यापयेज्जपेद्वापि पापीयान् स तु जायते ॥ " इति

अन्यत्रापि–

" ऋषिच्छन्दोदैवतानि ब्राह्मणार्थं स्वराद्यपि ।
अविदित्वा प्रयुञ्जानो मन्त्रकण्टक उच्यते ॥ " इति

तद्वेदेन विधिश्च मनुनोक्तः –

" स्वरवर्णाक्षरं मात्रा विनियोगोऽर्थ एव च ।
मन्त्रं जिज्ञासमानेन वेदितव्यो पदे पदे ॥ " इति

छन्दोगा अप्यामनन्ति–

" यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गत वा पद्यते । तस्मादेतानि मन्त्रे मन्त्रे विद्यात् " ( आर्षेय ब्रा १·१·६ ) इति ॥

कात्यायनाचार्योऽप्याह– " छन्दांसि गायत्र्यादीन्येतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजते याजयति तस्य ब्रह्म निर्वीर्यं यातयामं संभवत्यथान्तराश्वगर्तं वाऽऽपद्यते स्थाणुं वर्च्छति प्रमीयते वा पापीयान् भवति । अथ विज्ञायैतानि योऽधीते तस्य वीर्यवदथ योऽर्थवित् तस्य वीर्यवत्तरं भवति । जपित्वा हुत्वेष्ट्वा तत्फलेन युज्यते " ( सर्वानु. सू. १ ) ॥ पुरुषस्य पापसंबन्धं वारयितुं छादकत्वाच्छन्द इत्युच्यते । तथा चैतरेयारण्यके समाम्नायते– " छादयन्ति ह वा एनं छन्दांसि पापकर्मणः " (ऐ आ २.७.६) इति । दीव्यतीति देवता मन्त्रद्योत्या । ' या तेनोच्यते सा तस्य देवता ' इति स्मरणात् । सा च मन्त्रलिङ्गगम्या येषु मन्त्रेषु अग्नीन्द्रादयश्चेतनाः प्रतिपाद्यन्ते तेषु ता देवताः । येषु मन्त्रेषु मुसलोलूखलशम्यापलाशशाखाबर्हिर्जुह्वादयोऽचेतनाः प्रतिपाद्यन्ते तेष्वपि मुसलादिशब्दाभिधेयास्तत्तद्द्रव्याभिमानिन्यश्चेतना देवता अवगन्तव्याः । यद्यपि जैमिनिना नोक्तास्तथापि चतुर्लक्षण्यां भगवता बादरायणेन " मृदब्रवीदापोऽब्रुवन्नोषधयः संवदन्ते शृणोत ग्रावाणः " इत्यादिषु अचेतनद्रव्येषु चेतनव्यापारमुपपादयितुम् " अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् " ( ब्रसू २·१·५ ) इति सूत्रितत्वात् योग्यत्वाच्च विनियोगो नामानेनेदं कुर्यादित्यादिरूपः श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यात्मा संबन्धविशेषः । ब्राह्मणं विध्यर्थवादनामधेयरूपम् । विधिः – " अग्निहोत्रं जुहुयात् " इत्यादिः । अर्थवादोऽपि स्तुतिनिन्दापरकृतिपुराकल्परूपश्चतुर्विधः । नामधेयम् " उद्भिदा यजेत, बलभिदा यजेत " इत्यादि । एतेषां स्वरूपलक्षणादिकथनं मीमांसायामस्तीति नात्रोक्तम् । ग्रन्थगौरवभयात् । स्वर उदात्तादिः । अतश्च प्रतिमन्त्रमृष्यादि प्रदर्श्यते । क्वचित् क्वचिद्व्याकरणनिरुक्तनिघण्ट्वादिकमपि कथ्यते । यद्यप्ययं वेदः " पौतिमाष्यो गौपवनात् । गौपवनः पौतिमाष्यात् " ( बृ उ २·६·१ ) इत्यादिश्रुतेः । गोपवनादिपरंपरया प्राप्त आदित्यशिष्येण याज्ञवल्क्येन बहुभ्यः शिष्येभ्यः उपदिष्टस्तथाऽपि महता तपसा तुष्टस्येश्वरस्यानुग्रहात् काण्वसंबन्धितयैव लोके प्रख्यायते । ' स्वयंभू ब्रह्मा ' इत्यादिश्रुतेः परब्रह्मचतुर्मुखादिबहुसंबन्धित्वे विद्यमानेऽपि ' भारतं कुलं पौरवं कुलं पाण्डवं कुलम् ' इतिवत् तमेतं काण्ववेदमधीयते विदन्तीति व्युत्पत्त्या काण्वशिष्यप्रशिष्यपरंपरायां वर्तमाना अपि काण्वा इत्युच्यन्ते । एवं माध्यंदिनादिष्वपि द्रष्टव्यम् । ते च चरणव्यूहादिग्रन्थेऽभिहिताः– " जाबाला गौधेयाः काण्वा माध्यंदिनाः श्यामाः श्यामायनीयाः गालवाः पिङ्गला वत्साः आवटिकाः परमावटिकाः पाराशर्या वैणेया बौधेया गालवाश्च " ( चव्यू २ ) इति । यद्यप्यत्र जाबालस्यादित्वमुक्तं तथापि विष्णुपुराणादौ काण्वस्यैवादित्वोक्तेः स एवाद्यः पञ्चदशस्विति ज्ञेयमिति दिक् ॥

अत्र विंशत्यध्यायप्रमेयं संक्षिप्योच्यते । एकविंशद्द्वाविंशत्त्रयोविंशास्त्रयोऽध्यायाः सौत्रामण्यां विनियुक्ताः । चतुर्विंशपञ्चविंशषड्विंशसप्तविंशाश्चत्वारोऽश्वमेधे विनियुक्ताः । अष्टाविंशमारभ्य

---

7. M4 इष्ट्वा हुत्वा वा for हुत्वेष्ट्वा; M4 om. पुरुषस्य ... कर्मण इति

19. M4 निखण्ट्वादिकम् for निघण्ट्वादिकम्

26. M4 after गालवाः adds पिङ्गलाः

त्रयस्त्रिंशान्ताः षट् तत्र तत्र विप्रकीर्णाः लिङ्गविनियोज्या अनारभ्याधीता मन्त्राः । चतुस्त्रिंशपञ्चत्रिंशौ पुरुषमेधे विनियुक्तौ । षड्त्रिंशः शान्त्यध्यायः सर्वशेषः । सप्तत्रिंशाष्टत्रिंशैकोनचत्वारिंशाः प्रवर्ग्ये विनियुक्ताः । चत्वारिंशो ब्रह्मविद्येति ॥

तत्र तावत् ‘ स्वाद्वीं त्वा ’ इत्यध्यायो व्याख्यायते । ऋद्धिकामस्याग्निचितो मुखेतरच्छिद्र सोमवामिनो मुखेन सोमवामिनो राज्यच्युतनृपस्य पशुकामस्य च सौत्रामण्यीययागो विहितः । “ प्रजापतिर्यज्ञमसृजत ” ( शब्रा १२·८·२·१ ) इत्यादिना तथोक्तेः । अथात्र परिभाषोच्यते– अन्तःपात्यस्थाने गोचर्मण्येतानि द्रव्याणि स्थापयेत् । सोमसुराविक्रयिणः क्लीबाद्वा क्रीत्वा सीसेन शष्पं क्रीणीयात् । ऊर्णाभिः स्तोक्मान् । सूत्रेण लाजान् । यथासंभवद्रव्येण नग्नहुम् ’ ( द्र. काश्रौ १९.१.१८-१९ ) इति । विरूढा व्रीहयः शष्पाणि । विरूढावयवाः स्तोक्माः भ्राष्टा व्रीहयो लाजाः । सर्जत्वक्त्रिफलाशुण्ठीपुनर्नवाचतुर्जातकपिप्पलीगजपिप्पलीवंशावका-बृहच्छत्राचित्रकैन्द्रवारुण्यश्वगन्धाधान्यकयवानीजीरकद्वयहरिद्राद्वयवीरूढयवव्रीहय एकीकृताः सन्तो नग्नहुः ” इत्युच्यते । एतत् सर्वं “ विश्वरूपं स्वाद्रम् ” इति ब्राह्मणेऽभिहितम् । तथा च शष्पतोक्मलाजानग्नहुं दक्षिणद्वारेण अग्निगृहं नीत्वा संचूर्ण्य दर्शपौर्णमासधर्मेण व्रीहिश्यामाकयोश्च बहुजलैः पक्त्वा शृतालम्भनानन्तरं तयोश्चर्वोर्निस्रावमुष्णं पृथक् पात्रयोरादाय शष्पादिचतुर्णां चूर्णैः संसृज्य स्थापयेत् । तद्द्वयं चूर्णाचामरूपं ‘ मासरम् ’ इत्युच्यते । कात्यायन एवमाह– ‘ ओदनौ चूर्णमासरैः संसृज्य स्वाद्वीं त्वाऽंशुना त इति त्रिरात्रं निदधाति ’’ ( काश्रौ १९·१·२१,२२ ) इति । एवमाचामयोश्चूर्णसंसर्गेण मासरत्वनिष्पादनानन्तरमोदनौ व्रीहिश्यामाकचरुरूपौ चतुर्भिश्चूर्णैः संसृज्य ‘ स्वाद्वीं त्वा ’ इति मन्त्रेण, तथा ‘ अंशुना ते ’ इति द्वाविंशाध्यायगतया ऋचा चैकस्मिन् पात्रे चूर्णसंसृष्टावोदनौ मासराभ्यां संसृज्य त्रिरात्रं शालानैरृत्यकोणे गर्तं कृत्वा तत्र स्थापयेदित्यर्थः । अयमभिप्रायः- चरुद्वयमुद्वास्य पृथगाचामं गृहीत्वा शष्पतोक्मलाजाचूर्णानां पृथक् त्रेधा कृतानां तृतीयांशं द्वेधा कृत्वाऽऽचामयोः क्षिपेत् । ततो नग्नहुचूर्णं द्वेधा कृत्वा एकमप्यर्धं द्वेधा विभज्याचामयोः क्षिपेत् । एवं चूर्णसंसृष्टाचामयोः मासरसंज्ञा । ततः शष्पतोक्मलाजाचूर्णानां द्वितीयतृतीयांशं द्वेधा कृत्वा एकैकं भागं ओदनयोः क्षिपेत् । नग्नहुचूर्णं द्वितीयार्धं द्वेधा कृत्वौदनयोः क्षिपेत् । ततः ओदनावेकस्मिन् पात्रे कृत्वा तत्राचामौ क्षिपेत् । ततः “ स्वाद्वीं त्वा ”, “ अंशुना ते ” ( कासं २२·१२ ) इति मन्त्राभ्यां चूर्णमासरैः सह ओदनयोरालोडनेन सम्यक् संसर्गः कार्यः । ततस्त्रिरात्रं तन्निधानम् । शष्पतोक्मलाजाचूर्णतृतीयांशानां प्रतिदिनं सुरायां निवापार्थं रक्षणं कार्यमिति । पाठस्तु– ‘ स्वाद्वीं त्वा स्वादुना तीव्रां तीव्रेणामृताममृतेन । मधुमतीं मधुमता सृजामि सं सोमेन ’ इति । सुरासोमदेवत्याऽनुष्टुप् । सुरारूपः सोमो देवतेत्यर्थः । सौत्रामणीमन्त्राणां प्रजापत्यश्विसरस्वत्य ऋषयः । ततश्चत्वारि यजूंषि सुरादेवत्यानि । तथा पाठस्तु– ‘ सोमोऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व ’ इति । अथ मन्त्रार्थः – हे सुरे ᵛत्वा त्वां ᵛसोमेन ᵛसंसृजामि

6. M4 यथा for अथ

11. M4 °विरूढं° for °विरूढ°

12. M4 °रूप° for °रूपं

14. M4 श्रुत° for शृत°

17. M4 चूर्णं संसरेण for °चूर्णसंसर्गेण

24. M4 om. कार्यः

संयोजयामि । " छन्दसि परेऽपि " ( पा १·४·८१ ) इति समित्युपसर्गस्य क्रियापदपूर्वः प्रयोगः । लोके सदृशयोः संसर्गः श्रेयान् दृष्ट इति चतुर्भिर्विशेषणैः पृथक् पृथक् विशिनष्टि ' स्वाद्वीम् ' इत्यादिभिः । कीदृशीं त्वाम् ? $^{v}$स्वाद्वीं, स्वादुरसोपेतामिष्टामित्यर्थः । " वोतो गुणवचनात् " ( पा ४·१·४४ ) इति ङीष् । $^{v}$तीव्राम् । तीव्रशब्दः कटुवचनः । कट्वीम् । शीघ्रं मदजनकामित्यर्थः । $^{v}$अमृताम् अमृततुल्याम् । " परशब्दः परत्र च प्रयुज्यमानो विनापि वतिं वत्यर्थं गमयति । सिंहो देवदत्त इतिवत् " इति महाभाष्योक्तेः । अमृतसाधनत्वात् वा अमृताम् । $^{v}$मधुमतीं मधुर-रसोपेताम् । सुराया अनेकरसत्वेऽपि मधुररसस्य नित्यत्वं द्योतयितुं मतुप्-प्रयोगः । " उगितश्च " (पा ४·१·६) इति ङीप् । कीदृशेन सोमेन ? $^{v}$स्वादुना मृष्टेन । $^{v}$तीव्रेण कटुरसेन । $^{v}$अमृतेन सुधातुल्येन । $^{v}$मधुमता मधुरस्वादतया । हे सुरे, त्वं $^{v}$सोमः $^{v}$असि । सोमसंसर्गात् । अतस्त्वां ब्रवीमि । $^{v}$अश्विभ्याम् अर्थे $^{v}$पच्यस्व । डुपचष् पाके इति धातुः । अत्र पाको विपरिणामः । तथा $^{v}$सरस्वत्यै सरस्वत्यर्थं $^{v}$पच्यस्व । तथा $^{v}$इन्द्राय $^{v}$पच्यस्व । कीदृशायेत्याकाङ्क्षायामाह– $^{v}$सुत्राम्णे इति । सुष्ठु त्रायते रक्षतीति सुत्रामा, तस्मै । त्रायतेः " आतो मनिन्° " ( पा ३·२·७४ ) इत्यादिना मनिन्प्रत्ययः । अमुमेवार्थं कण्वब्राह्मणमाह– " स्वाद्वीं त्वा स्वादुनेति सुरां संदधाति । स्वदयत्येवैनां तीव्रां तीव्रेणेतीन्द्रियमेवास्मिन् दधात्यमृताममृतेनेत्यायुरेवास्मिन् दधाति । मधुमतीं मधुमतेति रसमेवाभ्यां दधाति । सृजामि सं सोमेनेति सोमरूपमेवैनां करोति । सोमोऽस्यश्विभ्यां पच्यस्व । सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वेत्येता वा एतं देवता अग्रे यज्ञं समभरंस्ताभिरेवैनꣳ संभरति । अथो एता एवैतद्देवता भागधेयेन समर्धयति " ( शब्रा १२·७·३·५-६ ) इति । अस्यामिति वक्तव्ये अस्मिन्निति लिङ्गव्यत्ययश्छान्दसः । " व्यत्ययो बहुलम् " ( पा ३·१·८५ ) इति ।

" सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेन " ॥ ( पाम ३·१·८५ )
इति स्मरणात् ॥

यद्यप्ययं विनियोगानुसारेणार्थ उक्तस्तथाप्यध्यात्मादिपरत्वेनाप्यर्थो योज्यः । कामधेनुरूपायाः श्रुतेरनेकार्थत्वसंभवात् परमेश्वरपरत्वमवश्यं वाच्यम्– " सर्वे वेदा यत्पदमामनन्ति ", " वेदैश्च सर्वैरहमेव वेद्यः " ( कउ २-१५ ), " तत्तु समन्वयात् " इत्यादिश्रुतिस्मृतिसूत्रेभ्यः । ततश्च गणेशसूर्यविष्णुशक्तिरुद्रपरत्वेनाप्यर्थो योज्यते । तत्रादौ गणेशे । मन्त्रद्रष्टा प्रजापतिरत्र कर्ता । श्रुतिः कर्मीभूता । हे वेदवाणि, त्वा त्वां स्वादुना भक्तानामभीष्टसाधकत्वेनातिप्रियत्वात् स्वादुशब्दलक्षितगणेशेन संसृजामि । श्रुतिलिङ्गादिप्रमाणेन तत्परां योजयामीत्यर्थः । परोक्षोक्तिस्तु– " तं वा एतमिन्धꣳ सन्तमिन्द्र इत्याचक्षते परोक्षेणैव । परोक्षप्रिया इव हि देवाः " ( बृउ ४·२·२ ) इत्यादौ प्रसिद्धैव । कीदृशीं त्वाम् ? $^{v}$स्वाद्वीम् । वाच्यवाचकयोरभेदोपचारेण स्वादुप्रतिपादकत्वात् स्वाद्वीम् । " गणानां त्वा गणपतिं हवामहे " ( ऋसं २·२३·१ ) इत्यादिरूपम् । कीदृशेन $^{v}$स्वादुना । क्षिप्रप्रसादनत्वात् फलदाने

21. M4 योगः पदनु for °योगानु;° M4 अध्यास° for अध्यात्म°

24. M4 कमुदभूत् for कर्मीभूता

25. M4 साधुना for स्वादुना; M4 साधु सुष्ठु वाच्येन for स्वादुशब्दलक्षितं

27. M4 आचक्षसे for आचक्षते; M4 इत्यादौ for इत्यादि

तीव्रेण । कीदृशीं त्वाम् ? तीव्रप्रतिपादकत्वात् तीव्राम् । पुनः कीदृशेन ? जरामरणरहितत्वात् अमृतेन । कीदृशीं त्वाम् ? तादृशप्रतिपादकत्वादनादिनित्यत्वाच्च अमृताम् । पुनः कीदृशेन ? भक्तानामभीप्सितसुखनिधित्वात् मधुमता । कीदृशीं त्वाम् ? तत्प्रतिपादकत्वाज्जन्तृणां सुखसाधनत्वाद्वा मधुमतीम् । पुनः कीदृशेन ? सोमेन । सोमो विद्यते यस्येति सोमवांस्तेन भालचन्द्रेण । अर्श आदित्वादच् प्रत्ययो वत्यर्थकः ।

अथ सूर्ये । हे वेदवाणि, 'असौ योऽवसर्पति' इत्यादिरूपां त्वां तीक्ष्णकिरणत्वाच्छीघ्रव्याधिनाशकत्वाद्वा तीव्रेण तीव्रशब्दवाच्येन सूर्येण संसृजामि । 'स्वादुना स्वाद्वीम्' इत्यादिद्वयोर्विशेषणानि पूर्ववद्योज्यानि । सोमेन । "सोमाट् ट्यण्" ( पा ४.२.३० ) इति प्राप्तस्य छान्दसत्वेन लोपात् सौम्येन । उग्रत्वेऽपि भक्तान् प्रति सौम्येन ॥

अथ विष्णौ । हे वेदवाणि, "अमृतस्यैष सेतुः" ( मुंउ २.२.५ ) । "ब्रह्मामृतोऽमृतम् ।" "अजरोऽमरोऽभयोऽमृतोब्रह्माभयं" ( बृउ ४.४.२५ ) इत्यादिश्रुतेः, "अमृतेन" अमृतसाधनत्वादमृतरूपत्वाद्वा अमृतशब्दवाच्येन श्रीविष्णुना त्वां "विष्णोर्नु कं वीर्याणि" ( कासं ५.२३.६ ) इत्यादिरूपां 'संसृजामि', श्रुतिलिङ्गादिप्रमाणेन तत्परां योजयामि । कीदृशेनामृतेन ? स्वसुखाधारकत्वात् भक्तप्रेमास्पदकत्वात् सुखसेव्यत्वाद्वा । स्वादुना । दुष्टशिष्टनिग्रहानुग्रहयोः तीव्रत्वात् तीव्रेण । "सत्यं ज्ञानमनन्तं ब्रह्म । आनन्दो ब्रह्मेति व्यजानात् । अथैष एव परम आनन्दः । आनन्दं ब्रह्मणो विद्वान्" ( तैउ २ ) इत्यादि श्रुतेः । सुखस्वरूपत्वात् मधुमता । सोमेन । सत्त्वगुणालम्बनात् सौम्येन । 'स्वाद्वीम्' इत्यादि कर्मविशेषणानि पूर्ववद्योज्यानि ॥

अथ शक्तौ । हे वेदवाणि, त्वाम् । "इहस्व देवि पृथिवि" ( कासं १२.७.४ ) इत्यादिरूपां त्वाम् । 'मधुमता' । नीचोच्चादिसर्वभक्तजनसुखाश्रयत्वात् सुखस्वरूपत्वात् वा मधुमच्छब्दवाच्येन शक्तिस्वरूपेण 'संसृजामि' । विशेषणानि पूर्ववद्योज्यानि ।

अथ रुद्रे । हे वेदवाणि, त्वाम् । "नमस्ते रुद्र मन्यवे" ( कासं १७.१.१ ) इत्यादिरूपां त्वाम् । सोमेन । उमासहितत्वाद्वा सोमरूपत्वाद्वा सोमशब्दवाच्येन शंकरेण संसृजामि । श्रुत्यादिप्रमाणैस्तत्प्रतिपादकां योजयामीत्यर्थः । कीदृशेन सोमेन ? भक्तप्रेमास्पदत्वात् सुखसेव्यत्वात् सुखरूपत्वाद्वा स्वादुना । अन्धकदक्षाद्यभक्तानां घोररूपत्वेन विनाशकत्वात् तीव्रेण । द्वे वा तनुवौ शिवस्य । "घोरा चैवाघोरा च" इति श्रुतेः । जरामरणरहितत्वात् अमृतरूपत्वात् अमृतसाधनाद्वा अमृतेन । 'स्वाद्वीम्' इत्यादिकर्मविशेषणानि पूर्ववद्व्याख्येयानि । किं च । हे वेदवाणि, त्वं सोमः असि सौम्यासि । त्वन्निष्ठानामिति शेषः । सोमशब्दस्य नित्यपुंस्त्वाद् "वेदाः प्रमाणम्" इत्यादिवत् प्रयोगः । हे वेदवाणि, त्वम् अश्विभ्यां देवभिषग्भ्यां पच्यस्व फलपाकवती भव । एवं सरस्वत्यादिभ्यः पच्यस्व । न केवलं गणेशादीनामेवास्तावकाः । किं तर्हि ? देवतान्तराणामपीति तात्पर्यार्थः । इत्यलं प्रपञ्चेन ॥

---

24. P2 °रूपत्वात् for °स्वरूपत्वात्
28. P2 M4 प्रयोगाः for प्रयोगः
29. M4 एव तावका for एवास्तावकः

अथ स्वरचिन्ता क्रियते । तत्र ' स्वाद्वीम् ' इति ङीष्-प्रत्ययस्य " आद्युदात्तश्च " ( पा ३·१·३ ) सूत्रेणोदात्तत्वे सति " अनुदात्तं पदमेकवर्जम् " ( पा ६·१·१५५ ) इति पूर्वस्याक्षरस्यानुदात्तत्वम् । 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति यदङ्गं व्यञ्जनं तत्स्वरेण स्वरवद्भवति । न पृथक्-स्वरवत् । " अनुदात्तौ सुप्पितौ " ( पा ३·१·४ ) इति द्वितीयैकवचनमनुदात्तं स्यात् । तस्य " अमि पूर्वः " ( पा ६·१.१०७ ) इति यत् पूर्वरूपं तदुदात्तम् । " एकादेश उदात्तेनोदात्तः " ( पा ८·२·५ ) इति सूत्रेणोदात्तेनैकादेशत्वादमोऽप्युदात्तत्वम् । " त्वामौ द्वितीयायाः " ( पा ८·१·२३ ) इति व्याकरणसूत्रेण, " त्वा च " ( वाप्रा २·६ ) इति कात्यायनप्रातिशाख्येन च त्वाशब्दोऽनुदात्तः । ' स्वादुना ' इत्यत्र ' फिषः ' । फिडिति प्रातिपदिकसंज्ञा । " फिषोऽन्त उदात्तः " ( फिसू १ ) भवतीति स्वादुशब्दस्यान्तोदात्तत्वे सिद्धे " अनुदात्तौ सुप्पितौ " (पा ३·१·४) इति तृतीयैकवचनस्य अनुदात्तत्वे कृते " उदात्तादनुदात्तस्य स्वरितः " ( पा ८·४·६६ ) इति तस्य स्वरितत्वे रूपसिद्धिः । ' तीव्राम् ' इत्यस्याबन्तत्वात् स्वाद्वीमितिवत् स्वरः । ' तीव्रेण इत्यत्र ' स्वादुना इतिवत् " नञो जरमरमित्रमृताः " ( पा ६·२·११६ ) इति सूत्रेणामृतशब्दस्य अन्तस्वरितत्वे अमस्त्वेनैकादेशत्वात् तत्स्वरत्वम् । " अनुदात्तं पदमेकवर्जम् ", ( पा ६.१.१५४ ) इति यत्र उदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा शिष्टमनुदात्तं भवतीति सूत्रात् शिष्टमनुदात्तम् । एवम् ' अमृतेन ' इत्यत्रापि । तृतीयैकवचनस्य " स्वरितात् संहितायामनुदात्तानाम् " (पा १·२·३८) इति प्रचयत्वम् । मृतशब्दस्य " हसि मृग्° ( उ ३·८६ ) इत्यौणादिकतन्(?)-प्रत्ययान्तत्वात् आद्युदात्तत्वम् । ' मधुमतीम् ' इत्यत्र मन्यतेः " फलिपाटि° " (उसू १-१८) इत्युप्रत्ययान्तत्वेन मधुशब्दस्य आद्युदात्तत्वेनाकारस्योदात्तत्वे सिद्धे " अनुदात्तं पदमेकवर्जम् " ( पा ६.१.१५४ ) इत्युकारस्यानुदात्तत्वे कृते " उदात्तादनुदात्तस्य स्वरितः " ( पा ८.४.६६ ) इति तस्य स्वरितत्वे जाते ततः परयोर्मतुप्ङीपोः पित्त्वेन " अनुदात्तौ सुप्पितौ " । अनुदात्तत्वे कृते सति " स्वरितात् संहितायामनुदात्तानाम् " ( पा १.२.३९ ) इति प्रचयत्वम् । ' मधुमता ' इत्यत्राप्येवमेव । ' सृजामि ' इति क्रियापदस्य " तिङ्ङतिङः " ( पा ८.१.२८ ), अतिङन्तात् परं तिङन्तं निहन्यते सर्वानुदात्तं भवतीति सर्वानुदात्ते प्राप्ते अनुष्टुप्छन्दस्काया ऋचस्तृतीयपादस्यादौ विद्यमानत्वेन पादादित्वादाख्यातस्वरत्वेनान्तोदात्तत्वम् । मिपः प्रत्ययस्य पित्त्वात् अनुदात्तत्वे कृते " उदात्तादनुदात्तस्य स्वरितः " ( पा ८·४·६६ ) इति पदपाठे स्वरितत्वम् । समित्युपसर्गस्य ' उपसर्गाश्चाभिवर्जम् " ( फिसू ८१ ) इत्युदात्तत्वम् । ' सोमेन ' इत्यत्र प्रातिपदिकस्य अन्नन्तत्वात् आद्युदात्तत्वे सिद्धे अन्तरस्य अनुदात्तस्य स्वरितत्वे कृते तृतीयाया अनुदात्तत्वं कृत्वा पूर्ववदेकश्रुतिलक्षणप्रचितत्वं कार्यम् । तथा ' सोमः ' इत्यत्रापि । ' आते ' इत्यस्य " तिङ्ङतिङः " ( पा ८·१·२८ ) इति निघातत्वम् । ' अश्विभ्याम् ' इत्यत्र प्रातिपदिकस्य फिट्त्वात् " फिष्° " ( फिसू १ ) इति सूत्रेण अन्तोदात्तत्वे भ्यामित्यस्य सुपः स्वरः पूर्ववत् कर्तव्यः । पच्यस्वेत्यस्य असोतिवत् । सरस्वतीशब्दस्य पित्त्वात् आद्युदात्तत्वे सिद्धे उत्तरस्यानुदात्तस्य स्वरितत्वे च कृते तदुत्तरस्य प्रचितत्वं कार्यम् । ' इन्द्राय ' इत्यत्र फिट्स्वरे शेषं पूर्ववत् । ' सुत्राम्णे ' इत्यत्र " समासस्य " ( पा ६.१.२२३ ), समासस्य अन्त उदात्तो भवतीत्यन्तोदात्तत्वे प्राप्ते तदपवादेन मानेन् प्रत्ययस्य नित्त्वात् " ञ्नित्यादिर्नित्यम् " ( पा ६·१·१९३ ) इत्यन्तस्वरितत्वम् । त्रायतेर्धातुत्वात् " धातोः "

---

17. M4 उकारत्वे for उदात्तत्वे
23. P2 रत्वेनान्तो, M4 °नान्तो°
24. P2 M4 °पाठः for °पाठे
30. P1 कृते for सिद्धे; P2 पूर्ववत् for अनुदात्तस्य; M4 om. च.
31. M4 om. समासस्य

( पा ६.१.१६२ ) इत्युदात्तत्वं तत्पूर्वस्वरस्य "अनुदात्तं पदमेकवर्जम्" इति अनुदात्तत्वमित्यादि-व्याकरणशास्त्रानुसारेण स्वरप्रक्रिया ज्ञातव्या । इतःपरं स्वरविचारस्यावैयाकरणैर्दुर्बोध्यत्वात् मन्त्रमात्रपाठस्य च स्पष्टत्वाच्च ग्रन्थभूयस्त्वभयेनोपरम्यते ॥

वेदावतार आद्याया ऋचोऽर्थो हि प्रपञ्चितः ।
विज्ञाय वेदगाम्भीर्यमथ संक्षिप्य वर्ण्यते ॥

इति प्रथमकण्डिका ॥१॥

---

परीतो षिञ्चता सुतं सोमो य उत्तमं हविः ।
दधन्वा यो नर्यो अप्स्वन्तरा सुषाव सोममद्रिभिः ॥२॥

---

परि । इतः । सिञ्चत । सुतम् । सोमः । यः । उत्तममित्युत्ऽतमम् । हविः ।
दधन्वान् । यः । नर्यः । अप्स्वित्यप्ऽसु । अन्तः । आ । सुषाव ।
सुसावेति सुसाव । सोमम् । अद्रिभिरित्यद्रिऽभिः ॥ द्रयां ॥२॥

---

आ – पयसाऽपाकृतेनाश्विनेन परिषिञ्चति– 'परीतः' इति । भरद्वाजः सौमी बृहती । [v]यः [v]सोमः प्रसिद्धः सः [v]उत्तमं [v]हविः भवति । [v]दधन्वान् देवान् पोषयन् । एवं [v]यः प्रसिद्धः सः [v]नर्यः नराणां कर्माधिकारिणां मनुष्याणां हितकारी तं [v]सोमम् [v]अन्तः मध्ये [v]अप्सु [v]आसुषाव । [v]अद्रिभिः सोमाभिषवपाषाणैः आसुषाव सोमं सुनोति । एवं यः सोमोऽभिषूयते तं तं सोमम् [v]इतः अनन्तरम् । [v]अप्सु । व्यत्ययः । अद्भिः । [v]सिञ्चत परिसिञ्च ॥२॥

---

अ– अथ द्वितीया । कात्यायनः– "एकस्याः पयसाऽपाकृतेनाश्विनेन परिषिञ्चति परीतो षिञ्चता ' इति । शष्पचूर्णानि चावपति । सारस्वतेन द्वयोः प्रातः । तोक्मचूर्णानि चैन्द्रेणोत्तमे तिसृणाम्" ( काश्रौ १९.१.२३-२७ ) अस्यार्थः – सायं होमान्तेऽश्विभ्यामपाकरोमीति करेणैकां गां स्पृष्ट्वा तां दुग्ध्वा तत्पयसा अध्वर्युः सुरां सिञ्चति– 'परीतो षिञ्चता' इति मन्त्रेण । अथ रक्षितं शष्पचूर्णतृतीयांशं सुराभाण्डे क्षिपेत् । द्वितीयेऽह्नि निशि 'सरस्वत्या अपाकरोमि' इति द्वे गावौ स्पृष्ट्वा दोहितेन तयोर्दुग्धेन

---

2. M4 वैयाकरणैः for अवैयाकरणैः
5. M4 वर्णितः for वर्ण्यते
6. कुण्डिका for कण्डिका
12. S3 पाठस्तु for परीतः इति; S3 after बृहती adds परीतो षिञ्चता .... अद्रिभिरिति ।

तेनैव मन्त्रेण सुरां सिञ्चति । तोक्मचूर्णतृतीयांशं निवपति च । ततस्तृतीयेऽह्नि रात्रौ ‘ इन्द्राय सुत्राम्णेऽपाकरोमि ’ इति तिस्रो गाः स्पृष्ट्वा ता दुग्ध्वा एकीकृततत्पयसा सुरां सिञ्चति । तेनैव मन्त्रेण तत्र चूर्णतृतीयांशं निवपति चेति । ‘ परीतो षिञ्चता ’ इत्यादिभिरिति । भरद्वाजदृष्टा सोमदेवत्या बृहती । हे ऋत्विजः, ˅इतः गोः सकाशात् गृहीतेन दुग्धेनेति शेषः । ˅सुतम् अभिषुतं सोमं परिस्रुद्रूपं ˅परिषिञ्चत यूयम् । अत्र ‘ इतः सिञ्चत ’ इति प्राप्ते “ ओकारमितः सिञ्चतौ सोपधः ” ( वाप्रा ३.४६ ) इति प्रातिशाख्येन सविसर्गतकारस्थाकारस्य ओकारः । ‘ सिञ्चता सुतम् ’ इत्यत्र “ अन्येषामपि दृश्यते ” ( पा ६ ३ १३७ ) इति संहितायां दीर्घः । तं कम् ? ˅उत्तमं ˅हविः ˅सोमः । हविरन्तरेभ्यः श्रेष्ठम् । ˅यः च ˅नर्यः नरेभ्यो हितः सन् ˅दधन्वान् यजमानं देवान् वा धारितवान् । ‘ धन्व शब्दे ’ इति धातोः क्वसुप्रत्यये द्विर्वचनादौ सति रूपसिद्धिः । तथा ˅अप्सु जलेषु ˅अन्तः मध्ये स्थितेषु यं ˅सोमम् ˅अद्रिभिः ग्रावभिरध्वर्युः ˅सुषाव अभिषुतवान् तं सोमं सुरारूपमापन्नं पयसा सिञ्चतेति पूर्वेणान्वयः । ‘ दधन्वान् ’ इति नकारस्य “ दधन्वान् यकारे लोपम् ” (वाप्रा ३.१.३६) इति प्रातिशाख्येन संहितायां नकारलोपः । उक्तोऽयमर्थः कण्वब्राह्मणे आम्नायते– “ प्रजापतिर्यज्ञमसृजत । तमाहरत् तेनायजत । तेनेष्ट्वा रिरिचान इवामन्यत । स एतं यज्ञक्रतुमपश्यत् सौत्रामणीं तेनायजत । ततो वै स पुनराप्यायत ” ( शब्रा १२·८·२·१ ) इत्युपक्रम्य गोदोहनाद्युक्त्वाऽभिहितम् । “ एकस्यै दुग्धेन प्रथमां रात्रिं परिषिञ्चति । द्वयोर्दुग्धेन द्वितीयाम् तिसृणां दुग्धेन तृतीयां यथारूपमेवैनं यथादेवतं सवनैः समर्धयति । परीतो षिञ्चता सुतमिति परिषिञ्चति सुत्यायै । सोमो य उत्तमं हविरित्युत्तमं वा एतद्धविर्यत्सोम उत्तममेवैनं हविः करोति । दधन्वा यो नर्यो अप्स्वन्तरेति अद्भिश्च ह्येषोऽन्तरेण च सूयते । सुषाव सोममद्रिभिः इत्यद्रिभिर्वै सोमः सूयते अद्रिभिरेवैनं सुनोति सोमसुत्यायै ” (शब्रा १२.८.२.११-१२) इति । अत्रापि परमात्मपरत्वमवगन्तव्यम् । सोमहविरादिशब्दास्तृप्तिसाधनत्वात् “ अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते ” ( तैउ २·२ ) इत्यादि श्रुतेश्च तत्परत्वेन योज्याः । इत्यलं पल्लवितेन ॥२॥

---

वायोः पूतः पवित्रेण प्राङ्क्सोमो अतिद्रुतः ।
इन्द्रस्य युज्यः सखा ।
वायोः पूतः पवित्रेण प्रत्यङ्सोमो अतिद्रुतः ।
इन्द्रस्य युज्यः सखा ॥३॥

---

वायोः । पूतः । पवित्रेण । प्राङ् । सोमः । अतिद्रुत इत्यतिऽद्रुतः ।
प्रत्यङ् । सोमः । अतिद्रुत इत्यतिऽद्रुतः ।
इन्द्रस्य । युज्यः । सखा ॥ छिं ॥३॥

---

9. ˚स्थितं for ˚स्थितेषु
14. M4 एकस्यैव for एकस्यै …

सुरासंधानम् ]

आ– ' वायोः पूतः ' इत्यादिभिस्तिसृभिर्गायत्रीभिः परिस्रुतं पुनाति– ' वायोः पूतः ' इति । आभूतेरार्षम् । वायोः उदरान्तरवर्तिना पवित्रेण पावनहेतुना पूतः सन् प्राङ् प्रागञ्चनः प्राङ्मुखः । सोमः अतिद्रुतः अभिगतः सन् इन्द्रस्य युज्यः इन्द्रेण सह संयोगार्हः । सखा च सहैव ख्यायत इति । एवं वीर्यवान् सोमो भवति ॥

' वायोः पूतः ' इति । वायोः हृदयान्तरवर्तिना पवित्रेण पूतः सोमः प्रत्यङ् प्रत्यङ्मुखः अधोमुखः सोमः अतिद्रुतः अभिगतः सन् इन्द्रस्य युज्यः योगार्हः सखा एवं वीर्यवान् सोमो भवति ॥३॥

---

अ– अथ तृतीया । कात्यायनः – " सते पुनाति गोऽश्ववालवालेन पुनाति ते परिस्रुतमिति। वायोः पूत इति सोमातिपूतस्य । प्राङिति तद्वामिनः " ( काश्रौ १९.२.७-९ ) इति । ' वायोः पूतः ' इति कण्डिकाया द्वे ऋचौ । ' पुनाति ते ' ( कासं २१.४ ) इति कण्डिकानन्तरं तासां विनियोगो व्युत्क्रमेणोक्तो यद्यपि कात्यायनेन, तथापि " वायोः पूतः पवित्रेण प्राङ् सोमो अतिद्रुतः इति सोमवामिनः पुनाति । वायोः पूतः पवित्रेण प्रत्यङ् सोमोऽतिद्रुतः इति सोमातिपूतस्य पुनाति । पुनाति ते परिस्रुतम् इति समृद्धिकामस्य पुनाति " ( काशब्रा १२.७.३.११ ) इति ब्राह्मणे क्रमस्य निरूपितत्वात् तथैव मन्त्रपाठक्रमाच्च यथाक्रमं व्याख्यायते । सूत्रार्थस्तु–पूतां सुरामादाय गोऽश्वकेशनिर्मितेन वालेन पवित्रेण सते पलाशपात्रे पुनाति ' पुनाति ते ' इति मन्त्रेण । सतं वारणमिति केचित् । मुखेतरच्छिद्रसोमवामिनो यजमानस्य यागे ' वायोः पूतः पवित्रेण प्रत्यङ्' इति सते सुरां पुनाति । मुखेन सोमवामिनस्तु ' वायोः पूतः पवित्रेण प्राङ् ' इति मन्त्रेण सते सुरां पुनातीति ॥

तत्र प्रथमा– ' वायोः पूतः ' इति । ऋकृत्रयमाभूतिदृष्टं सोमदेवत्यं गायत्रम् । प्राञ्चत्यूर्ध्वं गच्छतीति प्राङ्मुखतः । अतिद्रुतः निर्गतः सोमः वायोः पवित्रेण हृदयान्तर्वर्तिना पूतः शुद्धः । कीदृशः ? इन्द्रस्य देवस्य युज्यः सखा योगार्होऽगर्ह्यः सखा सहायः ॥

अथ द्वितीया– प्रत्यगञ्चति अधोगच्छतीति प्रत्यङ् अधोमुख इति यावत् । अतिद्रुतः गुदद्वारागतः । शेषं पूर्ववत् ॥३॥

---

**पुनाति ते परिस्रुतꣳ सोमꣳ सूर्यस्य दुहिता ।**
**वारेण शश्वता तना ॥४॥**

---

2. S3 after इति adds वायोः पूतः .... सखेति ।

5. S3 वायोः पूतः ... प्रत्यङ् ... द्रुतः । सखेति for वायोः पूत इति ।

10. M4 कुण्डिकाया: for कण्डिकाया:; कुण्डिका: for कण्डिका

16. M4 क्वचित् for केचित्

20. P2 M4 पूज्यः for युज्यः

पुनाति । ते । परिस्रुतमितिपरिऽस्रुतम् । सोमम् । सूर्यस्य । दुहिता ।
वारेण । शश्वता । तना ॥ यौ ॥४॥

आ– ' पुनाति ते परिस्रुतम् ' इति । समृद्धिकामस्य यजमानस्य ᵛते तव । अध्वर्युराचष्टे । ते तव संबन्धिनम् । स्रु गतौ । ᵛपरिस्रुतम् अभिषवकाले परिस्रुतं ᵛसोमम् उद्गतं तं सोमम् । ᵛसूर्यस्य ᵛदुहिता सर्वप्रेरकस्य सूर्यस्य दुहिता । दुहिता नाम श्रद्धा । " श्रद्धा वै सूर्यस्य दुहिता " ( शब्रा १२·७·३·११ ) इति श्रुतेः । अतः श्रद्धा ᵛसोमं ᵛपुनाति । केनेति ? ' वारेण शश्वता तना ' । ᵛवारेण वालेन गोऽश्ववालेन । ᵛशश्वता शाश्वतिकेन । ᵛतना इति धननाम । धनोत्पत्तिनिमित्तभूतेन शाश्वतिकेन वालेन सूर्यस्य दुहिता श्रद्धा सोमं पुनातीति संबन्धः ॥४॥

अ– अथ चतुर्थी– ' पुनाति ते ' इति । अत्राध्वर्युर्यजमानं प्रत्याचष्टे– हे यजमान, ᵛसूर्यस्य ᵛदुहिता पुत्री श्रद्धानाम्नी । ᵛते तव । अनुदात्तत्वात् षष्ठ्यन्तम् । ᵛपरिस्रुतम् परिस्रवतीति परिस्रुत् । तां सुरां ᵛसोमं च ᵛपुनाति शोधयति । " श्रद्धा वै सूर्यस्य दुहिता " (शब्रा १२·७·३·११) इति श्रुतिः । यद्वा– लुप्तोपमेयम् । ते तव परिस्रुतं सोममिव पुनाति । सोमवत् पवित्रां करोति । यद्वा– सोमं सोमरूपमापन्नां परिस्रुतं सूर्यस्य दुहिता पुनाति । केन ? ᵛवारेण । रलयोरैक्याद् वालेन । गोअश्ववाल-वालेन । कीदृशेन ᵛशश्वता शाश्वतिकेन । प्रवाहतो नादिनेत्यर्थः । पुनः कीदृशेन ? ᵛतना । तनेति धननामसु पाठात् ( निघण्टु २·१०·१९ ) धनरूपेण । तत्साधनत्वात् । तनेनेति वक्तव्ये " सुपां सुलुक् " इति सूत्रेण पूर्वसवर्णदीर्घत्वम् । न त्विनादेशः ॥४॥

ब्रह्म क्षत्रं पवते तेज इन्द्रियꣳ सुरया सोमः सुत आसुतो मदाय ।
शुक्रेण देव देवताः पिपृग्धि रसेनान्नं यजमानाय धेहि ।
कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय ।
इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमउक्तिं न जग्मुः ।
उपयामगृहीतोऽस्याश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्णे ।
एष ते योनिस्तेजसे त्वा वीर्याय त्वा बलाय त्वा ॥५॥

3. S3 पुनाति ... तनेति for पुनाति ... स्रुतमिति
11. M4 °स्तम् for °स्रुतम्

सुरासंधानम् ]

ब्रह्म । क्षत्रम् । पवते । तेजः । इन्द्रियम् । सुरया । सोमः । सुतः ।
आसुत इत्याऽसुतः । मदाय ।
शुक्रेण । देव । देवताः । पिपृग्धि । रसेन । अन्नम् । यजमानाय । धेहि ।
तेजसे । वीर्याय । बलाय । त्वा ॥ (ङिः) ॥५॥

---

आ– अजाविलोमपवित्रेण पयः पुनाति– ' ब्रह्म क्षत्रम् ' इति । सुरादेवत्या त्रिष्टुप् । ' ब्रह्म क्षत्रं पवते ' । पवतिरत्र जननार्थः । " ब्रह्मण एव तत् क्षत्रं जनयति " ( शब्रा १२.७.३.१२ ) इति श्रुतेः । [v]ब्रह्म ब्राह्मणजातिः । [v]क्षत्रम् । क्षतात् त्रायत इति क्षत्रम् । जनयति क्षत्रं च । [v]तेजः [v]पवते जनयति । अप्रधृष्यं तत्तेजः । तेजश्च इन्द्रियं वीर्यं जनयति । ' सुरया सोमः ' । [v]सुरया हि [v]सोमः [v]सुतः अभिषुतः, सुरया [v]आसुतः च तीव्रीकृतश्च सोमः [v]मदाय भवति मदजनको भवति । अतः कारणात् [v]शुक्रेण शोचिष्मता दीप्तिमता रूपेण मन्त्रजनितेन । हे [v]देव, [v]देवताः [v]पिपृग्धि देवताः प्रीणीहि । [v]रसेन [v]अन्नं [v]यजमानाय [v]धेहि । व्यत्ययः । रसं रसपदं तं रसेन युक्तमन्नं यजमानाय धेहि यजमाने स्थापय ।

पयोग्रहान् गृह्णाति– ' कुविदङ्ग ' इति । अयं मन्त्रो व्याख्यातः । ' एष ते ' इति । [v]एषः [v]ते तव [v]योनिः स्थानम् । [v]तेजसे [v]त्वा सोमं त्वां सादयामि । [v]वीर्याय सोमं त्वां सादयामि । [v]बलाय सोमं त्वां सादयामि ॥५॥

---

अ– अथ पञ्चमी– कात्यायनः – " उत्तरस्यां पयो वैतसाजाविलोमपवित्रेण ब्रह्म क्षत्रमिति ' ( काश्रौ १९·२·१० ) इति । अजमेषलोमकृतपवित्रेण वेतसपात्रे उत्तरवेदौ पयः पुनाति ' ब्रह्म क्षत्रम् ' इति मन्त्रेणेत्यर्थः ।

' ब्रह्म क्षत्रं पवते ' इति । सुरासोमदेवत्या त्रिष्टुप् । आद्यः पादो द्वादशवर्णः । द्वितीयस्त्रयोदशवर्णः । अन्त्यावेकादशवर्णौ । तस्मादधिका । हे [v]देव सोम, [v]शुक्रेण शुक्लेन शुद्धेनेत्यर्थः । वीर्येण त्वं [v]देवता अग्न्याद्याः । [v]पिपृग्धि प्रीणीहि । अथ च [v]रसेन घृतादिना सहितमन्नं [v]यजमानाय [v]धेहि देहि

---

6. S3 ब्रह्मक्षत्र ... धेहीति for ब्रह्म क्षत्रमिति ... त्रिष्टुप् ।

14. S3 कुविदङ्गु ... सुत्राम्ण इति for कुविदङ्गेति; V2 व्याख्यातम् for अयं मन्त्रो व्याख्यात ।; S3 एष ते ... बलाय त्वेति for एष त इति; V2 om. एष त इति ।

धारय वा । ततः सोमः भवान् सुतः अभिषुतः सन् ब्रह्म ब्राह्मणजातिं क्षत्रं क्षत्रियजातिं तेजः कान्तिम् इन्द्रियम् इन्द्रियसामर्थ्यं च पवते जनयति । अत्र पवतिर्जननार्थः । यज्ञादेव सर्वोत्पत्तेः सोम उपचर्यते । किं च– आसुतः सुरया तीव्रीकृतो भवान् मदाय च भवति । ईदृशसामर्थ्ययुक्तस्त्वं देवान् यजमानं च अभीष्टसमर्पणेन प्रीणीहीति तात्पर्यार्थः । एष एवार्थो ब्राह्मणेऽभिहितः– " ब्रह्म क्षत्रं पवत इति पयः पुनाति । ब्रह्मण एवैतत् क्षत्रं जनयति । ब्रह्मणो हि क्षत्रं जायते तेज इन्द्रियम् इति । तेज एवास्मिन्निन्द्रियं वीर्यं दधाति । सुरया सोमः इति । सुरया हि सोमः सुतः आसुत इत्यासुताद्धि सूयते मदायेति मदाय वाव सोमो मदाय सुरोभावेव सोममदञ्च सुरामदं चावरुन्द्धे । शुक्रेण देव देवताः पिपृग्धीति शुक्रेण देव देवताः प्राणीहीत्येवैतदाह " रसेनान्नं यजमानाय धेहीति रससैवान्नं यजमानाय दधाति " ( शब्रा १२·७·३·१२ ) इति ।

" पयोग्रहान् गृह्णाति कुविदङ्गेति प्रत्यृचंुपयामयोनिरिति " ( काश्रौ १९·२·१२-१३ ) इति कात्यायनः । एवं पूर्वोक्तरीत्या सुरापयसोः पावनं कृत्वा कुविदङ्गेति मन्त्रेणैव त्रीन् पयोग्रहान् गृह्णातीति मन्त्रपाठे ' उपयामगृहीतोऽसि ', ' एष ते योनिः ' इति द्वे यजुषी सकृत्पठिते त्रिषु ग्रहेषु पृथग्भवतः इति सूत्रार्थः ॥

' कुविदङ्ग यवमन्तः ' इति । पयोदेवत्या त्रिष्टुप् । द्वे यजुषी । हे पयोग्रह, यथा केचिज्जनाः यवमन्तः यववन्तः बहुयवक्षेत्रसंपन्नाः सन्तः । कुविद् इति बहुनाम । बहुलं यवं चित् सर्वमपि यवमयं सस्यम् अनुपूर्वं यथा तथा अनुपूर्वेण वियूय पृथक्कृत्य दान्ति लुनन्ति । ' दाप् लवने ' इति हि धातुः । तथा ये यजमानाः बर्हिषः बर्हिष्मतो यज्ञस्य नमउक्तिं नमस्कारवचनं हविर्लक्षणं वचनं वा आदाय न जग्मुः त्वां न प्राप्ताः । एषां यजमानानां संबन्धीनि भोजनानि भोग्यानि धनादि वसूनि इहेह अत्रैव लोके कृणुहि हिंसय नाशयेत्यर्थः । कृ हिंसायामिति धातुः । यद्वा– इहेह अस्मिन्नेव सौत्रामणीकर्तरि यजमाने कृणुहि कुरु । विकरणव्यत्ययः । प्रयच्छ । डुकृञ् करणे इति धातुः । यतोऽश्विसरस्वतीन्द्रार्थे त्वम् उपयामेन पात्रेण गृहीतोऽसि पुरातनैः । अतोऽहमपि ' अश्विभ्याम् ' अर्थे त्वां गृह्णामि साधयामि ।

' एष ते योनिस्तेजसे त्वा ' । एषः ते तव योनिः स्थानम् । ' योनिः कारणमुच्यते ' इत्यभिधानात् स्थानस्य कारकत्वेन कारणत्वात् योनित्वम् । " योनिर्द्वयोः " ( अको २·७६ ) इति योनिशब्द उभयलिङ्गः । तेजसे तेजार्थं त्वा सादयामि । द्वितीयपयोग्रहे ' कुवित् ' इत्यृचं पठित्वा ' उपयामगृहीतोऽसि सरस्वत्यै त्वा ' इति पठेत् । सरस्वत्यर्थं त्वां सादयामि । ' एष ते योनिः वीर्याय त्वा ', वीर्यार्थं त्वां सादयामि । तृतीये तु कुविदित्यन्ते ' उपयामगृहीतोऽसीन्द्राय त्वा सुत्राम्णे ' इति । सुष्ठु त्रायत इति सुत्रामा । तस्मै इन्द्राय त्वा गृह्णामि सादयामि । ' एष ते योनिः बलाय त्वा ' बलार्थं त्वां सादयामि । सर्वत्र तादर्थ्ये चतुर्थी । ब्राह्मणे एषोऽर्थ उक्तः– " कुविदङ्ग यवमन्तो यवं चिदिति पयोग्रहान् गृह्णाति । सोमांशवो यवाः । सोमः पयः सोमेनैवैनं सोमं करोत्येकया गृह्णात्येकयैव यजमाने श्रियं दधाति " ( शब्रा १२·७·३·१३ ) इत्यादिना ॥ ५ ॥

---

12. M4 पतिते for पठिते; M4 पतति for भवतः

18. M4 भोग्यादि° for भोग्यानि ।

21. M4 इन्द्रार्थं for °इन्द्रार्थे

27. M4 after सादयामि adds ते

नाना॒ हि वां॑ दे॒वहि॑त॒ꣳ सद॑स्कृ॒तं मा सꣳसृ॑क्षाथां पर॒मे व्यो॑मन् ।
सुरा॒ त्वमसि॑ शु॒ष्मिणी॒ सोम॑ ए॒ष मा मा॑ हिꣳसीः॒ स्वां योनि॑मावि॒शन्ती॑ ॥६॥

नाना॑ । हि । वा॒म् । दे॒वहि॑त॒मिति॑ दे॒वऽहि॑तम् । सद॑ः । कृ॒तम् । मा ।
सम् । सृ॒क्षा॒था॒म् । प॒र॒मे । व्यो॑म॒न्निति॒ विऽओ॑मन् ।
सुरा॑ । त्वम् । असि॑ । शु॒ष्मिणी॑ । सोम॑ः । ए॒षः । मा ।
मा॒ । हि॒ꣳसीः । स्वाम् । योनि॑म् । आ॒वि॒शन्तीत्या॑ऽवि॒शन्ती॑ ॥ ढैपी॒ः ॥ ६ ॥

आ– सुराग्रहान् गृह्णाति । ' नाना हि ' इति । सुरासोमदेवत्या जगती । हिशब्दो यस्मादर्थे । यस्मात् ᵛनाना पृथक् ᵛवां युवयोः ᵛदेवहितं देवानां हितं पथ्यं देवैर्वा हितं धारितं स्थापितम् । ᵛसदः निवासस्थानं ᵛकृतं जातम् । द्वे हि वेदी भवतः सुरापयसोर्नानाभूते । अतो ब्रवीमि ᵛमा ᵛसꣳ सृक्षाथां मा संसर्गं कुरुतम् । ' परमे व्योमन् ' । ᵛपरमे उत्कृष्टतमे ᵛव्योमन् व्योमनि स्थाने आहवनीयाद्ध्ये दक्षिणाग्नौ हि सुरा हूयते । किं च । ᵛसुरा ᵛत्वम् ᵛअसि ᵛशुष्मिणी बलवती । सुरा क्रूरा त्वमासि । ᵛसोम ᵛएषः सोमश्चैषः । प्रख्यातगुणः शान्तः । अतो ब्रवीमि– ' स्वां योनिमाविशन्ती ' । ᵛस्वां ᵛयोनिं ᵛस्वकीयां योनिं स्थानम् असाधारणं स्थानम् ᵛआविशन्ती सुरा सोमं ᵛमा ᵛमा ᵛहिꣳसीः । माशब्दस्त्वेकोऽनुदात्तस्त्वनर्थकः । यद्वा– मा यजमानं मा हिꣳसीरिति ॥६॥

अ– अथ षष्ठी । कात्यायनः – " स्थालीभिः सौरान्नाना हि वामिति व्यत्यासम् " ( काश्रौ १९.२.२१ ) इति । पूर्वं त्रयाणां ( ग्रहाणां ) ग्रहणमाश्वत्थौदुम्बरन्यग्रोधपात्रैरुक्तम् । अत्र ' नाना हि ' इति मन्त्रेण मृण्मयस्थालीभिस्त्रीन् सुराग्रहान् गृह्णाति । व्यत्यासमित्यस्य अयमर्थः – आदावाश्विनं पयोग्रहं गृहीत्वाऽऽसाद्याश्विनसुराग्रहस्य ग्रहणासादने कर्तव्ये । ततः सारस्वतौ पयोग्रहसुराग्रहौ । तत ऐन्द्रौ पयःसुराग्रहौ । क्रमेण वा । उपयामयोनी अत्रापि पृथक् । तत्र प्रथमे ' नाना हि ' इति पठित्वा ' उपयामगृहीतोऽस्याश्विनं तेजः ' इति मन्त्रेण ग्रहणम् । ' एष ते योनिर्मोदाय त्वा ' इति सादनम् । द्वितीये तु ' नाना हि ' इत्यन्ते ' उपयामगृहीतोऽसि सारस्वतं वीर्यम् ' इति ग्रहणम् । ' एष ते योनिः आनन्दाय त्वा ' इति सादनम् । तृतीये तु ' नाना हि ' इत्यन्ते ' उपयामगृहीतोऽस्यैन्द्रं बलम् ' इति ग्रहणम् । ' एष ते योनिः महसे त्वा ' इति सादनमिति

7. S4 om. नानाहीति । and after जगती । adds नाना हि ... अविशन्तोति ।
19. M4 om. ग्रहस्य

सूत्रार्थः । 'नाना हि' सुरासोमदेवत्या जगती । हे सुरासोमौ, हि यस्मात् कारणात् वां युवयोः नाना पृथक् पृथक् सदः स्थानं कृतम् । सुरापयसोर्द्वे वेदी भवतः । "ते द्वे वेदी भवतो द्वौ वाव लोकौ" ( शब्रा १२·७·३-७ ) इति ब्राह्मणात् । कीदृशं सदः ? देवहितं देवप्रियं देवैः स्थापितं वा । अतः कारणात् उत्कृष्टत्वेन परमे व्योमन् व्योम्नि । "सुपां सुलुक्°" ( पा ७.१.३६ ) इति सप्तम्या लुक् । "ङियोश्छन्दसि" इति वा । व्योमवद्विशाले हवनस्थाने युवां मा संसृक्षाथाम् । उदात्तत्वेन मा-शब्दोऽत्र निषेधवचनः । संसर्गं मा कुरुतम् । आहवनीये पयो हूयते । दक्षिणाग्नौ सुरा हूयते । अतोऽहमेवं ब्रवीमीत्यर्थः । एवं द्वौ प्रत्युक्त्वा सुरामाह । हे सुरे, त्वं सुरा अपि सती शुष्मिणी असि । अत्र 'असि' इत्यस्य "तिङ्°" ( पा. ८·१-२२ ) इति निघातं बाधित्वा, "असि शिवा" ( वाप्रा २·४० ) इत्यादि प्रातिशाख्येनाद्युदात्तत्वम् । 'शुष्मम्' इति बलनाम । शुष्मं बलमस्या अस्तीति शुष्मिणी । बलवतीत्यर्थः । अतस्त्वां पीत्वा मत्तो भवति । एषः तु सोमः शान्तः । अतः स्वां योनिं स्थानम् आविशन्ती सती सोमं मा हिंसीः । "योनिर्द्वयोः" ( अको २.७६ ) इति योनिशब्दस्य स्त्रीत्वात् स्वामिति तद्विशेषणम् । अनुदात्तो माशब्दः पादपूरणः । यद्वा- सोमं मां यजमानं च मा हिंसीः इति । एष एवार्थो ब्राह्मणेऽपि- "नाना हि वां देवहितं सदस्कृतमिति सुराग्रहान् गृह्णाति... । द्वे हि वेदी भवतो मा मां संसृक्षाथां परमे व्योमन्निति पाप्मनैवैनं व्यावर्तयति सुरा त्वमसि शुष्मिणीति सुरामेव सुरां करोति सोम एष इति सोममेव सोमं करोति मा मा हिंसीः स्वां योनिमाविशन्तीति यथायोन्यैवैनां व्यावर्तयत्यात्मनोऽहिंसायै" ( शब्रा १२·७·३·१४ ) इत्यादिना ॥६॥

उपयामगृहीतोऽस्याश्विनं तेजः सारस्वतं वीर्यमैन्द्रं बलम् ।
एष ते योनिर्मोदाय त्वाऽऽनन्दाय त्वा महसे त्वा ॥७॥

आश्विनम् । तेजः । सारस्वतम् । वीर्यम् । ऐन्द्रम् । बलम् ।
मोदाय । आनन्दायेत्याऽनन्दाय । महसे । त्वा ॥ ( कं )॥७॥

आ-'उपयामगृहीतोऽसि' इति । लिङ्गोक्तदेवत्यानि यजूंषि । उपयमयतीत्युपयामो ग्रहः । तेन गृह्यत इति उपयामगृहीतः सोमः असि । अश्विनोः संबन्धि आश्विनं तेजः । साक्षात् त्वमसि इति सर्वत्र शेषः । सरस्वत्याः संबन्धि सारस्वतं वीर्यं त्वमसि । इन्द्रस्य संबन्धि ऐन्द्रम् बलम् त्वमसि । एषः ते योनिः त्वदीयं स्थानम् मोदाय हर्षाय त्वा त्वामासादयामि । आनन्दाय त्वामासादयामि । महसे महत्त्वाय प्रकाशाय त्वामासादयामि ॥७॥

14. हि for °अपि

22. S3 उपयाम ... महसे त्वेति for उपयामगृहीतोऽसीति ।

24. V2 before सरस्वत्याः adds सारस्वतम्

सुरासंधानम् ]

अ– अथ सप्तमी। विनियोग उक्त एव। 'उपयामगृहीतोऽस्याश्विनम्' इति लिङ्गोक्तदेवत्यानि सर्वाणि यजूंषि। vआश्विनम् अश्विनसंबन्धि vतेजः साक्षात् त्वमेव। vसारस्वतं सरस्वतीसंबन्धि vवीर्यं सामर्थ्यं च त्वम्। vऐन्द्रम् इन्द्रसंबन्धि vबलं च हे सोम, त्वमेव। अन्यद्व्याख्यातम्। अतस्त्वां सादयामि। vएषः तव vयोनिः स्थानम्। vमोदाय प्रमोदाय vत्वा त्वां सादयामि। vआनन्दाय हर्षाय सादयामि। vमहसे महत्त्वाय च त्वां सादयामि। अत्र महःशब्दो "महो नंपुसकम्" ( वाप्रा २·३२ ) इति प्रातिशाख्येन आद्युदात्तः। *मोदहर्षसुखयोः स्वाभाविकास्वाभाविकत्वेन भेदः ॥७॥

---

तेजोऽसि तेजो मयि धेहि वीर्यमसि वीर्यं मयि धेहि
बलमसि बलं मयि धेह्योजोऽस्योजो मयि धेहि।
मन्युरसि मन्युं मयि धेहि सहोऽसि सहो मयि धेहि ॥८॥

---

१ तेजः। असि। तेजः। मयि। धेहि। वीर्यम्।
बलम्। ओजः।
मन्युः। मन्युम्। सहः। असि। सहः। मयि। धेहि ॥ ( श्रु ) ॥८॥

---

आ– पयोग्रहान् गृह्णाति। 'तेजोऽसि' इत्यादीनि पयोदेवत्यानि। 'ओजोऽसि' इत्यादीनि सुरादेवत्यानि यजूंषि। यतस्त्वं vतेजः vअसि अतः vतेजः vमयि vधेहि। यतः vवीर्यम् vअसि अतः vवीर्यं vमयि vधेहि। यतस्त्वं vबलम् vअसि अतः vबलं vमयि vधेहि। यतस्त्वम् vओजः vअसि अतस्त्वं vओजः vमयि vधेहि। यतः vमन्युः क्रोधः vअसि अतः vमन्युं vमयि vधेहि। यतस्त्वं vसहः vअसि अतः vसहः vमयि धेहि। बलौजःसहांसि कायेन्द्रियप्राणबलानि ॥ ८ ॥

---

अ– अथाष्टमी। कात्यायनः – "गोधूमकुवलचूर्णानि चावपति तेजोऽसीति" ( काश्रौ १९.२.१६ ) इति। आश्विनग्रहे ग्रहणानन्तरं सादनात् प्राक् द्वे दर्भतृणे प्रागग्रे पात्रोपरि कृत्वा गोधूमकुवलयोश्चूर्णानि सहैव वपति। कुवलं स्थूलबदरीफलमित्यर्थः। 'तेजोऽसि तेजः' इति त्रीणि यजूंषि पयोदेवत्यानि। आद्यं बृहतीछन्दस्कम्। हे पयः, त्वं vतेजः vअसि। तद्धेतुत्वात्। अतः vमयि vतेजः vधेहि स्थापय।

---

6. *[ मोदानन्दयोः इति वा भाष्यम्। ]

13. S3 तेजोऽसि ... सहो मयि धेहीति for तेजोऽसीत्यादीनि ... यजूंषि [L 14]

कात्यायनः – "उपवाकबदरचूर्णानि च वीर्यमसीति" ( काश्रौ १९.२.१८ ) इति । उपवाका इन्द्रयवाः । बदरं सूक्ष्मबदरीफलम् । तयोश्चूर्णं सारस्वते पयोग्रहे निर्वपतीत्यर्थः । 'वीर्यमसि' इति यजुः । पङ्क्तिः । हे ग्रह, त्वं वीर्यम् असि । अतः मयि वीर्यं शरीरादिसामर्थ्यं धेहि ।

कात्यायनः– "यवकर्कन्धुचूर्णानि च बलमसीति" ( काश्रौ १९.२.२० ) इति । कर्कन्धुरतिस्थूलं बदरीफलम् । तच्चूर्णं पयोग्रहे निक्षिपेत् इत्यर्थः । 'बलमसि' इति यजुः । पङ्क्तिः । हे ग्रह, त्वं बलम् असि । अतः मयि बलं धेहि ।

कात्यायनः – "सुराग्रहान् श्रीणात्योजोऽसीति वृकव्याघ्रसिंहलोमभिः प्रतिमन्त्रं मिश्रैरेके यथासंख्यम्" ( काश्रौ १८.२.२३-२४ ) इति । वृकादीनां केशैः, यद्वा–मिश्रैः केशैः 'ओजोऽसि' इति प्रतिमन्त्रं सुराग्रहान् मिश्रयेत् । यथा– 'ओजोऽसि' इत्याश्विनं, 'मन्युरसि' इति सारस्वतं, 'सहोऽसि' इत्यैन्द्रम् । एके वृकादिकेशैर्यथासंख्यं ग्रहं मिश्रयन्ति, यथा 'वृककेशैराश्विनं, वैयाघ्रैः सारस्वतं, सैंहैरैन्द्रम् इति सूत्रार्थः ।

'ओजोऽसि' इति त्रीणि यजूंषि सुरादेवत्यानि । हे सुरे, त्वम् ओजः असि । अतः मयि ओजः कान्तिं धेहि । त्वं मन्युः मानसो ज्वरः कोपः असि । अतः मयि शत्रुविषये कोपं धेहि । 'सहोऽसि' । सहः बलं मयि धेहि । एषोऽर्थो ब्राह्मणेऽभिहितः– "सोमो वै पयोग्रहा अन्नं सुराग्रहाः" ( शब्रा १२.७.३.१७ ) इत्यादि चतुर्भिः खण्डैः । परमात्मपरत्वेऽपि योज्यते । हे देव, त्वं तेजोरूपत्वात् तत्साधनत्वाद्वा तेजोऽसि । अतः तेजः मयि धेहि इत्यादि ज्ञेयम् । मन्युः शत्रून् दुष्टान् वा प्रति कोपरूपोऽसि । यद्वा– ज्ञानरूपत्वान्मन्युः । मन ज्ञान इति धातोः ॥८॥

---

या व्याघ्रं विषूचिकोभौ वृकं च रक्षति ।
श्येनं पतत्रिणꣳ सिꣳहꣳ सेमं पात्वꣳहसः ॥९॥

---

या । व्याघ्रम् । विषूचिका । उभौ । वृकम् । च । रक्षति ।
श्येनम् । पतत्रिणम् । सिꣳहम् । सा । इमम् । पातु । अꣳहसः ॥श्रं॥९॥

---

आ– अध्वर्युश्च प्रतिप्रस्थाता च श्येनपत्राभ्यां यजमानं पावयतः – 'या व्याघ्रम्' इति । हैमवर्चिरार्षम् । अनुष्टुप् । विषूचिकास्तुतिः । या विषूचिका व्याधिविशेषः व्याघ्रं शार्दूलं वृकं

---

5. M4 om. हे ग्रह ... असि [ L 6 ]
7. M4 om. यद्वा मिश्रैः केशैः [ L 8 ]
10. M4 तैराघ्रैः for वैयाघ्रैः
14. M4 देहि for धेहि
16. M4 P2 परमात्मा for परमात्म°
23. S3 या व्यात्र° ... अꣳ हस इति for या व्याघ्रमिति;
V2 S3 °वाचिरा° for °वर्चिरा°

vच ईहामृगम् vउभौ अपि vरक्षति, vश्येनं vपतत्रिणं, vशशादनं नाम पक्षिणम्। vसिंहं च मृगेन्द्रम्। या विषूचिका रक्षति, vसा विषूचिका vइमं यजमानम् vअंहसः पापात् व्याधीनां कारणात् हेतुभूतात् समस्तपापात् vपातु रक्षतु ॥१॥

---

अ– अथ नवमी। कात्यायनः– "दीक्षावत्पावयतोऽन्तःपात्ये श्येनपत्राभ्यां या व्याघ्रमिति" ( काश्रौ १९.२.२७ ) इति। अध्वर्युश्च प्रतिप्रस्थाता च सहैवान्तःपात्येऽवस्थितं प्राङ्मुखं यजमानं श्येनपिच्छाभ्यां पावयतः। दीक्षावदित्येकेन नाभेरूर्ध्वं प्रदक्षिणम्। द्वितीयेन सकृदवाङ्। यद्वा– उभयेन नाभेरूर्ध्वमधश्च द्विरिति सूत्रार्थः।

'या व्याघ्रम्'। हैमवर्चिदृष्टा विषूचिकादेवत्या अनुष्टुप्। व्याध्यधिष्ठात्री देवतेत्यर्थः। विषु सर्वेष्वञ्चति गच्छतीति विषूची। सैव विषूचिका। अञ्चु गतिपूजनयोः इति। अतः "उगितश्च" ( पा ४.१.६ ) इति ङीपि कृते, "अचः" ( पा ६.४.१३८ ) इत्यल्लोपे, पूर्वपददीर्घे रूपसिद्धिः। ततः स्वार्थे कप्रत्ययः। "केऽणः" (पा ७.४.१३) इति ङीपो ह्रस्वः। vया vविषूचिका vव्याघ्रं vवृकं चैतौ vउभौ vरक्षति, तथा vश्येनं vपतत्रिणं पक्षिणं vसिंहं चोभौ रक्षति। अजीर्णान्नविकाराभावात् व्याघ्रादिचतुष्टयं न स्पृशतीत्यर्थः। ईदृशी vसा विषूचिका vइमं यजमानम् vअंहसः व्याधिहेतुभूतपापात् vपातु रक्षतु। एष एवार्थो ब्राह्मणे– "या व्याघ्रम्...। अध्वर्युश्च प्रतिप्रस्थाता च जघनेन वेदिं प्राञ्चमावृत्तं यजमानं श्येनपत्राभ्यामूर्ध्वं चावाञ्चं च पावयतः प्राणोदानयोस्तद्रूपं प्राणोदानावेवावरुन्द्धे। ऊर्ध्वश्च ह्ययमवाङ् च प्राण आत्मानमनु संचरति" ( शब्रा १२.७.३.१२ ) इति ॥९॥

---

यदापिपेष मातरं पुत्रः प्रमुदितो धयन्।
एतत्तदग्ने अनृणो भवाम्यहतौ पितरौ मया ॥१०॥

---

यत्। आपिपेषेत्याऽपिपेष। मातरम्। पुत्रः। प्रमुदित इति प्रऽमुदितः। धयन्।
एतत्। तत्। अग्ने। अनृणः। भवामि। अहतौ। पितरौ। मया ॥ ज्युं ॥१०॥

---

आ– अग्निं प्रेक्षयति– 'यदापिपेष' इति। आग्नेयी बृहती। हे श्रीभगवन्नग्ने, vयत् यदा vमातरं vपुत्रः vप्रमुदितः vधयन् स्तनं पिबन्, प्रमुदितः अतिहृष्टः पुत्रः अहं मातरं vयत् vआपिपेष अपिष्टवान्। आपेषणं घर्षणम्। हस्ताभ्यां पद्भ्यां घट्टनं च कृतवानस्मि। यदिति सर्वनाम्ना आपेषणोचितः सर्वकालस्तूपात्तः। 'एतत्तदग्ने अनृणो भवामि'। ततः आपेषणं तत्कृतं पापं च श्रीभगवन् vअग्ने, vएतत् त्वत्पुरतोऽर्पितम्। अतः इत उत्तरं तु अहं त्वत्प्रसादात् vअनृणः vभवामि ऋणत्रयनिर्मुक्तोऽहं भवामि। कृतकृत्यो ब्रवीमि।

---

9. M4 सर्वे for सर्वेषु
21. S3 यदापिपेष ... मयेति for यदापिपेषेति।

अहतौ पितरौ मातापितरौ मया, अहतौ अनुपहिंसितौ स्याताम् मातापितॄणां संतर्पणे अभीष्टप्रदाने चाहमसमर्थः । अतो मय्यनुग्रहात् त्वमेव तेषामिष्टदानेन तांस्तर्पयेत्यभिप्रायः ॥१०॥

---

अ– अथ दशमी कात्यायनः – "अग्निं प्रेक्षयति यदा पिपेषेति" (काश्रौ १९.२.२८) इति । 'अग्निं प्रेक्षस्व' इति प्रैषेण अध्वर्युर्यजमानमग्निं दर्शयति । स औत्तरवैदिकमग्निमीक्षत इत्यर्थः । 'यदापिपेष'। अग्निदेवत्या । बृहती । पुत्रः अहं प्रमुदितः प्रहृष्टः धयन् स्तनपानं कुर्वन् सन् यत् मातरं जननीम् आपिपेष पद्भ्यां पीडितवान् । पिष पिष्टौ इति धातोः लिङुत्तमपुरुषैकवचनम् । हे श्रीभगवन् अग्ने, तत् एतत् अपराधज्ञानादहम् अनृणः भवामि त्वदनुग्रहेण । यद्वा– एतत्तदपराधजातं त्वत्पुरतो निवेद्यानृणो भवामि । ऋणत्रयान्मुक्तोऽस्मि । अत एवं ब्रवीमि – मया पितरौ अहतौ न हतौ न पीडितौ । यः पुत्रः पित्रोः प्रत्युपकर्तुमशक्तः स एव पितृमातृहन्तेति भावः । पितरावित्यत्र "पिता मात्रा" ( पा १.२.७० ) इत्येकशेषः । अङ्गं स्थावरं शरीरं नयति चेष्टयतीति व्युत्पत्त्या अग्निशब्देन परमात्मानं संबोध्यैवं प्रार्थनेन तत्परत्वमप्यवगन्तव्यम् । "योऽग्नौ तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद यस्याग्निः शरीरं योऽग्निमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः" (बृउ ३.७.५ ) इति श्रुतेः ॥१०॥

---

संपृचं स्थ सं मा भद्रेण पृङ्क्त ।
विपृचं स्थ वि मा पापेन पृङ्क्त ॥११॥
संपृचं स्थ ॥ स ॥ ११ ॥

---

आ– पयोग्रहान् संपृशति– 'संपृच स्थ' इति पयोग्रहदेवत्यं यजुः । 'विपृच स्थ' इति सुराग्रहदेवत्यं यजुः । पृची संपर्के । या क्रिया व्यपदिश्यते । ये यूयं संपृचः स्थ सम्यक् पृक्ताः स्थ भवथ । अतस्तान् युष्मान् ब्रवीमि । सं मा भद्रेण कल्याणेन मां पृङ्क्त संसृजत ।

सुराग्रहान् संमृशति– 'विपृच स्थ' इति । ये यूयं विपृचः स्थ वियोगकारिणः स्थ भवथ तान् युष्मान् ब्रवीमि । वि मा पापेन पृङ्क्त पापेन मां यजमानं विपृङ्क्त वियोजयत वियोगं कुरुत ॥११॥

---

अ– अथैकादशी । कात्यायनः – "पयोग्रहस्पर्शनं संपृच स्थेति" ( काश्रौ १९.२.२९ ) इति । यजमानः सहैव पयोग्रहाणां स्पर्शं करोतीत्यर्थः । 'संपृच स्थ'। पयोग्रहदेवत्यं यजुस्त्रिष्टुप् । हे पयोग्रहाः, यूयं संपृचः स्थ, संपृचन्ति संयोजका भवन्तीति संपृचः । पृची संपर्के इति धातुः । स्वयमेव

---

18. S3 संपृच स्थ ... पापेन पृङ्क्तेति for संपृच स्थेति ।

सौत्रामण्याः सोमसाम्यम् ]

संयोजका भवत। अतः [v]मा मां [v]भद्रेण कल्याणेन [v]संपृङ्क्त संसृजत । संयोजकानां भवतां प्रसादादहमपि कल्याणयुक्तो भवेयमित्यर्थः। संपूर्वात् पृचेः क्विपि संपृच इति रूपम्। पृचे रौधादिकाल्लोटि संपृङ्क्तेति।

कात्यायनः– "विपृच स्थ इति सौराणाम्" ( काश्रौ. १९.३.१ ) इति। यजमानः सुराग्रहान् स्पृशतीत्यर्थः। हे सुराग्रहाः, यूयं [v]विपृचः [v]स्थ, विपृचन्तीति विपृचो वियोजका भवत। अतः [v]मा मां [v]पापेन कल्मषेण [v]विपृङ्क्त निष्पापं कुरुतेत्यर्थः। एषोऽर्थो ब्राह्मणे– "संपृच स्थ सं मा भद्रेण पृङ्क्तेति पयोग्रहान् संस्पृशति श्रियैवैनं यशसा समर्धयति विपृच स्थ वि मा पापेन पृङ्क्तेति सुराग्रहान् पाप्मनैवैनं व्यावर्तयति" ( शब्रा १२.७.३.२२ ) इति। अयं मन्त्रो गणेशादिपरत्वेनाप्युन्नेयो यथायथम् ॥११॥

इति श्रीमदनन्ताचार्यविरचित-भावार्थदीपिकायामेकविंशाध्यायस्य प्रथमोऽनुवाकः ॥१॥

[ अथ द्वितीयोऽनुवाकः । ]

देवा यज्ञमतन्वत भेषजं भिषजाश्विना ।
वाचा सरस्वती भिषगिन्द्रायेन्द्रियाणि दधतः ॥१॥

देवाः । यज्ञम् । अतन्वत । भेषजम् । भिषजा । अश्विना ।
वाचा । सरस्वती । भिषक् । इन्द्राय । इन्द्रियाणि । दधतः ॥ षिं ॥१॥

आ– 'देवा यज्ञम्' इति विंशत्यनुष्टुभः सोमसंपद्देवत्याः सौत्रामण्या दर्शनार्थाः। निदानवतां मन्त्राणां पूर्वं निदानं वक्तव्यम् अर्थस्य सुखबोधनार्थम्। इन्द्रस्य किलानुपह्व(? हू )तस्य शापात् सोमपानाद्विस्रस्तस्य पुनरैन्द्रपदप्राप्त्यर्थं भैषज्यस्य कर्तारः सौत्रामण्याख्यं यज्ञं देवा अकुर्वन्त इति ॥

[v]देवाः [v]यज्ञं सौत्रामण्याख्यम् [v]अतन्वत विस्तारितवन्तः, कृतवन्त इत्यर्थः । 'भेषजं भिषजाश्विना'। [v]भिषजा भिषजौ औषधस्य कर्तारौ अश्विनौ [v]भेषजम् इष्टफलसाधकं यज्ञं कृत्वा [v]इन्द्राय इन्द्रार्थम् [v]इन्द्रियाणि वीर्याणि अश्विनौ [v]दधतः स्थापयतः । 'वाचा सरस्वती भिषक्'। [v]सरस्वती [v]वाचा त्रयीलक्षणया वाचा सरस्वती [v]भिषक् भैषज्यस्य कर्त्री भूत्वा इन्द्राय इन्द्रियाणि दधाति । तथा च– "तेऽश्विनावब्रुवन्। युवं वै ब्राह्मणौ भिषजौ स्थो युवमिमं भिषज्यतमिति तावब्रूतामस्तु नौ भाग इति। .... ते सरस्वतीमब्रुवन् त्वं वै भैषज्यमसि" ( शब्रा १२·७·१·११ ) इत्यादिश्रुतेः ॥१२॥

7. M4 समर्थयति for समर्द्धयति
16. S3 देव यज्ञम् ... दधतः इति for देवा यज्ञमिति,
24. V2 ब्रह्माणौ for ब्राह्मणौ

अ– 'देवा यज्ञम्' इत्यादिकण्डिका विंशतिर्ब्राह्मणरूपा। अतः कात्यायनेन न विनियुक्ता। 'देवा यज्ञम्'। ब्राह्मणानुवाको विंशतिरनुष्टुभः सौत्रामण्याः सोमसाम्यप्रतिपादकः। अत्रेतिहासः– अनुपहूतसोमपानाद्भ्रष्टस्येन्द्रस्य वीर्यं नमुचिरसुरोऽपिबत्। तदा देवैरिन्द्रस्य भैषज्यं कृतम्। तत्राश्विनौ सरस्वती च भिषजः। सौत्रामणी त्वौषधम्। तथा च ब्राह्मणम्– "विश्वरूपं वै त्वाष्ट्रमिन्द्रोऽहꣳस्तं त्वष्टा हतपुत्रोऽभ्यचरत्। सोऽभिचरणीयमपेन्द्रꣳ सोममाहरत् तस्येन्द्रो यज्ञवेशसं कृत्वा प्रासहा सोममपिबत्" इत्युपक्रम्य "अथ ह वै तर्हि नमुचिनैवासुरेण सह चचार स ऐक्षत नमुचिरपुनर्वा अयमभूद्धन्तास्येन्द्रियं वीर्यं सोमपीथमन्नाद्यꣳ हराणीति तस्यैतयैव सुरयेन्द्रिꣳ वीर्यꣳ सोमपीथमन्नाद्यमहरत् स ह न्यर्णः शिश्ये तं देवा उपसंजग्मिरे। श्रेष्ठो वै नोऽयमभूत् तमिमं पाप्मा-विदद्धन्तेमं भिषज्यामेति। तेऽश्विनावब्रुवन्...ब्रह्माणौ भिषजौ स्थो युवमिमं भिषज्यतमिति तावब्रूतामस्तु नौ भाग इति। तेऽब्रुवन् य एषोऽजः स वां भाग इति। तथेति। तस्मादाश्विनो धूम्रो भवति। ते सरस्वतीम-ब्रुवस्त्वं वै भैषज्यमसि त्वमिमं भिषज्येति। साऽब्रवीदस्तु मे भाग इति। तेऽब्रुवन् य एषोऽविः स ते भाग इति। तथेति। तस्मात् सारस्वतो मेषो भवति। अथाब्रुवन्नेतावद्वा अस्मिन्नेतर्हि यावदयमृषभोऽ-स्यैवायमस्त्विति। तथेति। तस्मादैन्द्र ऋषभो भवति। तावश्विनौ च सरस्वती च इन्द्रियं वीर्यं नमुचेराहृत्य तदस्मिन् पुनरदधुस्तं पाप्मनोऽत्रायन्त सुत्रातं बतैनं पाप्मनोऽत्रास्महीति तद्वाव सौत्रामण्यभवत् तत् सौत्रामण्यै सौत्रामणीत्वम्। त्रायते मृत्योरात्मानमप पाप्मानꣳ हते य एवमेतत् सौत्रामण्यै सौत्रामणीत्वं वेद" इति। ( शब्रा १२·७·१·१–१४ ) न्यर्णः अतिशयेन नितरां शिश्ये। यस्मात् सुष्ठु त्रातमेनमिन्द्रं पाप्मनः सकाशाद्वयमत्रास्महीत्यब्रुवन् तस्मात् सौत्रामण्यै सौत्रामण्याः सौत्रामणीत्वमित्यर्थः॥

अथ मन्त्रार्थः। 'देवाः 'यज्ञं सौत्रामण्याख्यं 'भेषजं भैषज्यम्। तद्धितलोपश्छान्दसः। इन्द्रस्यौषधरूपम् 'अतन्वत विस्तारितवन्तः। तदा 'अश्विना अश्विनौ। "सुपां सुलुक्°" ( पा ७·१·३९ ) इत्याकारादेशः। 'भिषजा भिषजौ वैद्यौ आस्तामित्यर्थः। 'सरस्वती च 'वाचा त्रयीलक्षणया 'भिषक् आसीत्। कीदृशाः सरस्वत्यश्विनः ? 'इन्द्राय 'इन्द्रियाणि वीर्याणि 'दधतः इन्द्राय सामर्थ्यं धारयन्तः पोषयन्तश्चेत्यर्थः ॥१॥

---

दीक्षायै रूपꣳ शष्पाणि प्रायणीयस्य तोक्मानि ।
क्रयस्य रूपꣳ सोमस्य लाजाः सोमाꣳशवो मधु ॥२॥

---

दीक्षायै । रूपम् । शष्पाणि । प्रायणीयस्य । प्रायनीयस्येति प्रऽअयनीयस्य । तोक्मानि । क्रयस्य । रूपम् । सोमस्य । लाजाः । सोमाꣳशव इति सोमऽअꣳशवः । मधु ॥ छं॥२॥

---

3. M2 °हृतं for °हूत°

22. M4 P2 ° अश्विनाः for °अश्विनः

आ— ‘ दीक्षायै रूपम् ’ इति । ‘ दीक्षायै रूपं शष्पाणि ’ । नवप्ररूढा व्रीहयः vशष्पाणि vदीक्षायै दीक्षायाः इष्टेः vरूपम् । ‘ प्रायणीयस्य तोक्मानि ’ । नवप्ररूढा यवाः vतोक्मानि vप्रायणीयस्य रूपम् । ‘ क्रयस्य रूपं सोमस्य लाजाः ’ । सोमसंबन्धिनः vक्रयस्य vलाजाः vरूपम् । vसोमांशवः vमधु । सोमांशवः सूक्ष्मावयवाः । अमृतं मध्विति ॥१३॥

---

अ– ‘ दीक्षायै रूपम् ’ । इदानीं सौत्रामण्याः सोमसंपत्तिं निरूपयति । vशष्पाणि नवप्ररूढव्रीहिरूपाणि पूर्वोक्तानि vदीक्षायै । षष्ठ्यर्थे चतुर्थी । दीक्षायाः दीक्षणीयेष्टेः vरूपम् । शष्पाणि दीक्षणीयात्वेन ध्येयानीत्यर्थः । एवमग्रेऽपि ज्ञेयम् । vतोक्मानि नवप्ररूढा यवाः vप्रायणीयस्य प्रायणीयेष्टेः रूपं ध्येयम् । vलाजाः भ्रष्टव्रीहयः vसोमस्य vक्रयस्य रूपम् । सोमक्रयोऽस्ति सोमे । अत्र लाजाः सोमक्रयस्य रूपेण ध्येयाः । सोमक्रयोऽस्येति समासे प्राप्ते तदभावः, सोमक्रयपदयोर्व्यत्ययः, रूपपदेन व्यवधानं च छान्दसाः । vमधु सोमांशवः सोमखण्डाः । यद्वा– मधु मधुरस्वादा लाजाः एव सोमांशवः ॥२॥

---

आतिथ्यरूपं मासरं महावीरस्य नग्नहुः ।
रूपमुपसदामेतत् तिस्रो रात्रीः सुराऽऽसुता ॥३॥

---

आतिथ्यरूपमित्यातिथ्यऽरूपम् । मासरम् । महावीरस्येति महाऽवीरस्य । नग्नहुः ॥
रूपम् । उपसदामित्युपऽसदाम् । एतत् । तिस्रः । रात्रीः । सुरा । आसुतेत्याऽसुता ॥ टां ॥३॥

---

आ– ‘ आतिथ्यरूपम् मासरम् ’ इति । व्रीहिश्यामाकौदनाचामचूर्णसंसर्गः vमासरं भवति । तत् vआतिथ्यरूपम् । vमहावीरस्य vनग्नहुः, सौरिकाणां प्रसिद्धः नग्नहुः vमहावीरस्य रूपम् । ‘ रूपमुपसदामेतत् तिस्रो रात्रीः सुराऽऽसुता ’ । vतिस्रः vरात्रीः vसुरा अभिषुता सुरा vउपसदाम् vएतत् vरूपम् ॥१४॥

---

1. S3 दीक्षायै ... मध्वित । for दीक्षायै रूपम् इति ।
7. M4 °त्वोपधेयानि for °त्वेन ध्येयानि ।
9. M4 °भेदेन for °पदेन ।
15. S3 आतिथ्यरूपं ... सुतेति for आतिथ्यरूपं मासरम् इति ।

अ- ' आतिथ्यरूपम् ' । किं च- मासरं पूर्वोक्तम् आतिथ्यरूपम् । आतिथ्येष्टेः स्वरूपम् । तथा नग्नहुः पूर्वोक्तेः महावीरस्य रूपम् इत्यनुषज्यते । एवमग्रेऽपि याः तिस्रः रात्रीः । "कालाध्वनोरत्यन्तसंयोगे द्वितीया" (पा २.३.५) इति द्वितीया विभक्तिः । तिसृषु रात्रिषु सुरा आसुता अभिषुता । एतत् सुरारूपम् उपसदाम् उपसत्संज्ञानामिष्टीनां रूपं ध्येयम् । अत्र अध्याहृतयच्छब्दयोगात् आसुतेत्यत्र समासो ज्ञेयः । अन्यथा पदद्वयं स्यात् ॥३॥

---

सोम॑स्य रू॒पं क्री॒तस्य॑ परि॒स्रुत् परि॑ षिच्यते ।
अ॒श्विभ्यां॑ दु॒ग्धं भे॑षजमिन्द्रा॑यै॒न्द्रꣳ सर॑स्वत्या ॥४॥

---

सोम॑स्य । रू॒पम् । क्री॒तस्य॑ । प॒रि॒स्रुदिति॑ प॒रि॒ऽस्रुत् । परि॑ । सि॒च्य॒ते ।
अ॒श्विभ्या॒मित्य॒श्विऽभ्या॑म् । दु॒ग्धम् । भे॒ष॒जम् । इन्द्रा॑य । ऐ॒न्द्रम् । सर॑स्वत्या ॥ रिं ॥४॥

---

आ- ' सोमस्य रूपम् ' इति । क्रीतस्य सोमस्य यत् परिस्रुत् परिस्रवणं यत् परिषिच्यते तत् क्रीतस्य सोमस्य रूपम् ।

अश्विभ्यां दुग्धं पयः भेषजम् इन्द्रस्य रूपम् । ऐन्द्रं सरस्वत्या दुग्धं पयः अर्थात् सरस्वत्या रूपम् ॥१५॥

---

अ- सोमस्य रूपम् यत् अश्विभ्यां सरस्वत्या च ऐन्द्रम् इन्द्रदेवत्यं भेषजम् इन्द्रार्थे औषधं दुग्धं पयः । अश्विभ्याम् अपाकरोमि इति दुग्धेनैकगोः पयसा, सरस्वत्या अपाकरोमीति दुग्धेन गोद्वयपयसा, इन्द्राय अपाकरोमि इति दुग्धेन गोत्रयपयसा, दिनत्रये परिस्रुत् परिस्रवणं सुरात्मकं परिषिच्यते तत् क्रीतस्य सोमस्य रूपं ध्येयम् । "एकस्याः पयसा अपाकृतेनाश्विनेन परिषिञ्चति । सारस्वतेन द्वयोः प्रातः ऐन्द्रेणोत्तमे तिसृणाम्" (काश्रौ १९.१.२३-२५-२७) इति कात्यायनेन निर्दिष्टत्वात् अश्विभ्यां सरस्वत्या च दुग्धमिति निर्दिष्टम् ॥४॥

---

आ॒स॒न्दी रू॒पꣳ रा॑जास॒न्द्यै वेद्यै॑ कु॒म्भी सु॑रा॒धानी॑ ।
अन्त॑र उत्तरवे॒द्या रू॒पं का॑रोत॒रो भि॒षक् ॥५॥

---

10. S3 सोमस्य ... सरस्वत्येति for सोमस्य रूपमिति ।
14. M4 यतः for यत्
16. M2 °त्रयेन for °त्रये

सौत्रामण्याः सोमसाम्यम् ]

आसन्दीत्याऽसन्दी । रूपम् । राजासन्द्या इति राजऽआसन्द्यै ।
वेद्यै । कुम्भी । सुराधानीति सुराऽधानी ।
अन्तरः । उत्तरवेद्या इत्युत्तरऽवेद्याः । रूपम् । कारोतरः । भिषक् ॥ दां ॥५॥

---

आ– ' आसन्दी रूपम् ' [ इति ] । vराजासन्द्यै राजासन्द्याः vआसन्दी vरूपम् । आसन्दी राष्ट्रम् । " राष्ट्रं वा आसन्दी " ( शब्रा १२.८.३.६ ) इति श्रुतेः । आसन्दीति सूक्ष्ममञ्चः । ' वेद्यै कुम्भी सुराधानी ' । सुराधानवती vकुम्भी vवेद्यै सोमिक्या वेदेः रूपम् । ' अन्तर उत्तरवेद्याः ' । vअन्तरः मध्यं vउत्तरवेद्याः vरूपम् । vकारोतरः, गोचर्ममयः सुराधारको वराहमुखः कारोतरः सुरापावकः vभिषक् इन्द्रस्य रूपमिति शेषः ॥१६॥

---

अ– ' आसन्दी रूपम् ' । राज्ञः सोमस्य vआसन्दी राजासन्दी । तस्यै vराजासन्द्यै । चतुर्थी षष्ठ्यर्थे । आसन्दी यजमानाभिषेकाय कल्पिता मञ्चिका । राजासन्द्याः vरूपं ध्येयम् । सुरा धीयते स्थाप्यते यस्यां सा vसुराधानी vकुम्भी vवेद्यै वेद्याः सौमिक्या वेदेः रूपम् । vअन्तरः वेदिद्वयमध्यभागः vउत्तरवेद्याः vरूपम् । vकारोतरः सुरापावनचालनीरूपः इन्द्रस्य च vभिषक् ध्येयः ॥५॥

---

वेद्या वेदिः समाप्यते बर्हिषा बर्हिरिन्द्रियम् ।
यूपेन यूप आप्यते प्रणीतो अग्निरग्निना ॥६॥

---

वेद्या । वेदिः । सम् । आप्यते । बर्हिषा । बर्हिः । इन्द्रियम् ।
यूपेन । यूपः । आप्यते । प्रणीतः । प्रनीत इति प्रऽनीतः ।
अग्निः । अग्निना ॥ क्रुं ॥ ॥६॥

---

आ– ' वेद्याः वेदिः ' इति । अनया vवेद्या vवेदिः सौमिकी वेदिः vसमाप्यते । vबर्हिषा vइन्द्रियम् । इन्द्रे भवमिन्द्रियम् । vबर्हिः समाप्यते । vयूपेन अनेन मुख्यः vयूपः समाप्यते । ' प्रणीतोऽग्निरग्निना ' । अनेन vअग्निः मुख्यः vप्रणीतः ॥१७॥

---

4. S3 आसन्दी ... भिषगिति for आसन्दी रूपमिति ।

18. S3 वेद्या वेदिः ... अग्निनेति for वेद्या वेदिरिति

अ– 'वेद्या वेदिः'। $^{v}$वेद्या अत्र वर्तमानया $^{v}$वेदिः सौमिकी $^{v}$समाप्यते सम्यक् प्राप्यते। तद्रूपा ध्येयेत्यर्थः। अत्रत्येन $^{v}$बर्हिषा $^{v}$बर्हिः सौमिकं समाप्यते। $^{v}$इन्द्रियं वीर्यम् इन्द्रियेणाध्याहृतेन समाप्यते। अत्रत्येन $^{v}$यूपेन सौमिकः $^{v}$यूपः $^{v}$आप्यते। अत्रत्येन $^{v}$अग्निना $^{v}$प्रणीतः $^{v}$अग्निः सौमिक आप्यते ॥ ६ ॥

हविर्धानं यदश्विनाऽऽग्नीध्रं यत् सरस्वती ।
इन्द्रायैन्द्रꣳ सदस्कृतं पत्नीशालं गार्हपत्यः ॥७॥

हविर्धानमिति हविःऽधानम् । यत् । अश्विना । आग्नीध्रम् । यत् । सरस्वती ।
इन्द्राय । ऐन्द्रम् । सदः । कृतम् । पत्नीशालमिति पत्नीऽशालम् ।
गार्हपत्य इति गार्हऽपत्यः ॥ ( डि ) ॥७॥

आ– 'हविर्धानं यदश्विना' इति । $^{v}$यत् $^{v}$अश्विना अश्विनौ देवता, तेन $^{v}$हविर्धानं समाप्यते । $^{v}$यत् $^{v}$सरस्वती देवता तेन $^{v}$आग्नीध्रं समाप्यते । 'इन्द्रायैन्द्रम्' । $^{v}$इन्द्राय $^{v}$ऐन्द्रं यत् हविः । ऐन्द्रमिन्द्रदेवत्यम् । तेन इन्द्राय $^{v}$सदः [ $^{v}$कृतं ] हविः समाप्यते । 'पत्नीशालं गार्हपत्यः' । $^{v}$गार्हपत्यः $^{v}$पत्नीशालं समाप्नोति ॥१८॥

अ– 'हविर्धानं यत्' [ इति ] । अत्र सौत्रामण्यां $^{v}$यत् $^{v}$अश्विना अश्विनौ देवते वर्तेते, तेन अश्विनसत्त्वेन $^{v}$हविर्धानं सौमिकम् आप्यते । अनुषङ्गः । तथा $^{v}$यत् अत्र $^{v}$सरस्वती अस्ति तेन सरस्वती-सद्भावेन $^{v}$आग्नीध्रं सौमिकम् आप्यते । सोमे $^{v}$ऐन्द्रम् इन्द्रदेवत्यं यत् $^{v}$सदः $^{v}$कृतं तदैन्द्रं सदः । पत्न्या शाला इति $^{v}$पत्नीशालम् । "विभाषा सेनासुराच्छायाशालानिशानाम्" ( पा २.४.१५ ) इति क्लीबत्वात् ह्रस्वत्वम् । $^{v}$गार्हपत्यः चेति त्रयम् । अत्रेन्द्राय यद्धविः क्रियते तेनाप्यते । सौत्रामण्यामिन्द्रार्थं यद्धविरस्ति तत् सौमिकसदःपत्नीशालागार्हपत्यरूपेण ध्येयमिति यावत् ॥ ७ ॥

1. M4 om. वेद्या वेदिः

10. S3 हविर्धानं गार्हपत्य for हविर्धानं यदश्विना

11. V2 S3 येन कृतमिन्द्रियैन्द्रं इन्द्राय ऐन्द्रं यत् हविः ऐन्द्रमिन्द्रदेवत्यं तेनेन्द्राय सह ऐन्द्रमिन्द्रदेवत्यं सत् सदः सहविः समाप्यते । यत् येन कृतमिन्द्राय समाप्यते for इन्द्रायैन्द्रं ... समाप्यते । [ L 12 ]

15. M4 after आप्यते adds अत्रत्येनाग्निना प्रणीतोऽग्निः सौमिक आप्यते ।

18. M4 यत्र यत्र for त्रयम् । अत्र

प्रैषेभिः प्रैषानाप्नोत्याप्रीभिराप्रीर्यज्ञस्य ।
प्रयाजेभिरनुयाजान् वषट्कारेभिराहुतीः ॥८॥

---

प्रैषेभिरिति प्रऽएषेभिः । प्रैषानिति प्रऽएषान् । आप्नोति ।
आप्रीभिरित्याऽप्रीभिः । आप्रीरित्याऽप्रीः । यज्ञस्य ।
प्रयाजेभिरिति प्रऽयाजेभिः । अनुयाजानित्यनुऽयाजान् ।
वषट्कारेभिरिति वषट्ऽकारेभिः । आहुतीरित्याऽहुतीः ॥ ( द्रूकं ) ॥८॥

---

आ– ' प्रैषेभिः प्रेषानाप्नोति ' । [v]प्रैषेभिः प्रैषैः एतैः [v]प्रैषान् [v]आप्नोति ।

" विधिरेव प्रवक्तॄणां व्यायः समकनीयसाम् ।
प्रवृत्त्यपेक्षायां भेदं प्रेषादिव्यपदेशभाक् ॥ "

[v]आप्रीभिः एताभिः [v]यज्ञस्य [v]आप्रीः प्राप्नोति । [v]प्रयाजेभिः एतैः प्रयाजैः प्रयाजान् आप्नोति । अनुयाजैः [v]अनुयाजान् आप्नोति । [v]वषट्कारेभिः वषट्कारैरेतैः वषट्कारानाप्नोति । आहुतिभिरेताभिः [v]आहुतीः आप्नोति । एवं प्रयाजादिष्वध्याहारानुषङ्गौ ॥१९॥

---

अ– ' प्रैषेभिः प्रैषान् ' । अत्रत्यैः [v]प्रैषेभिः प्रैषैः । " बहुलं छन्दसि " ( पा ७·१·१० ) इति भिस ऐस्त्वाभावः । सौमिकान् [v]प्रैषान् [v]आप्नोति सौत्रामणी । [v]आप्रीभिः प्रयाजयाज्याभिः [v]यज्ञस्य सोमयागस्य [v]आप्रीः आप्नोति । ' प्रयाजेभिः ' इत्यादिवाक्यचतुष्टयस्य प्रयाजानित्याद्युत्तरपदलोपश्छान्दसः । तथा च [v]प्रयाजेभिः प्रयाजैः प्रयाजानाप्नोति । अनुयाजैः [v]अनुयाजान् आप्नोति । [v]वषट्कारेभिः वषट्कारैर्वषट्कारानाप्नोति । आहुतिभिः [v]आहुतीः आप्नोति । प्रैषादीनामुभयत्र सद्भावात् ॥ ८ ॥

---

पशुभिः पशूनाप्नोति पुरोळाशैर्हविर्भिरिष्ट्या ।
छन्दोभिः सामिधेनीर्याज्याभिर्वषट्कारान् ॥९॥

---

7. S3 प्रैषेभिः आहुतीः for प्रैषेभिः प्रैषानाप्नोति ।

10. V2 आप्रीभिः for आप्रीः

पशुभिरिति पशुऽभिः । पशून् । आप्नोति । पुरोळाशैः । हवींᳪषि । आ ।
छन्दोभिरिति छन्दःऽभिः । सामिधेनीरिति सामिऽइधेनीः ।
याज्याभिः । वषट्कारानिति वषट्ऽकारान् ॥ ( त्रलं ) ॥९॥

---

आ– ‘ पशुभिः ’ इति । पशुभिः एतैः पशून् आप्नोति । पुरोडाशैः एतैः पुरोडाशानाप्नोति । हविर्भिरेतैः हवींषि आप्नोति । छन्दोभिः एतैश्छन्दांस्याप्नोति । सामिधेनीभिरग्निसमिन्धनार्थाभिः सामिधेनीः आप्नोति । याज्याभिः एताभिर्याज्याः आप्नोति । वषट्कारैः वषट्कारान् आप्नोति ॥२०॥

---

अ– ‘पशुभिः पशून्’ । पशुभिः अत्रस्थैः पशून सौमिकान् आप्नोति । ‘पुरोळाशैः’ इत्यादावप्युत्तरपदलोपः । पुरोळाशैः पुरोळाशानाप्नोति । हविर्भिः हवींषि आ सम्यगाप्नोति । छन्दोभिः छन्दांसि आप्नोति । सामिधेनीभिः सामिधेनीः आप्नोति । याज्याभिः याज्या आप्नोति । वषट्कारैः वषट्कारान् आप्नोति । पश्चादेरुभयत्र सत्त्वात् ॥ ९ ॥

---

धानाः करम्भः सक्तवः परीवापः पयो दधि ।
सोमस्य रूपᳪ हविष आमिक्षा वाजिनं मधु ॥१०॥

---

धानाः । करम्भः । सक्तवः । परीवापः । परिवाप इति परिऽवापः । पयः । दधि ।
सोमस्य । रूपम् । हविषः । आमिक्षा । वाजिनम् । मधु ॥ खीं १० ॥

---

आ– ‘ धानाः करम्भः ’ । दधिमिश्राः सक्तवः करम्भः । यवविकाराः धानाः आप्नोति । ‘ सक्तवः परीवापः ’ । गोधूमविशेषः सक्तवः । अत्र व्यत्ययः । सक्तवः परिवापमाप्नुवन्ति । ‘ पयः दधि ’ । पयः दधि आप्नोति । यद्वा– दध्नः पयो रूपम् । सोमस्य रूपं हविषः । हविः । अत्र व्यत्ययः । हविषश्च आमिक्षा रूपम । वाजिनम् । व्यत्ययः । वाजिनस्य मधु रूपम् ॥१०॥

---

4. S3 पशुभिः वषट्कारानिति for पशुभिरिति ।

16. S3 affer धानाः adds करम्भः

सौत्रामण्याः सोमसाम्यम् ]

अ– 'धानाः करम्भः'। धानाः भ्रष्टयवाः । "धाना भ्रष्टयवेऽङ्कुरे" इति विश्वः । करम्भः उदमन्थः । सक्तवः प्रसिद्धाः । परीवापः हविष्पङ्क्तिः । "उपसर्गस्य घञ्यमनुष्ये बहुलम्" ( पा ६·३·१२२ ) इति दीर्घः । "परीवापो जलस्थाने पर्युप्तिपरिवारयोः" इति विश्वः । पयः दधि च प्रसिद्धे । एतत्सर्वं सोमस्य रूपम् । आमिक्षा पयस्या । मधु मधुरम् । वाजिनं च सौमिकस्य हविषः रूपम् । उष्णे दुग्धे दधिक्षेपे घनभाग आमिक्षा । शिष्टं वाजिनम् ॥१०॥

धानानां॑ रू॒पं कु॑व॒लं प॑री॒वाप॑स्य गो॒धूमाः॑ ।
सक्तू॑नां रू॒पं बद॑रमु॒प॒वाकाः॑ कर॒म्भस्य॑ ॥११॥

धाना॑नाम् । रू॒पम् । कु॒व॒लम् । प॒री॒वाप॑स्य । प॒रि॒वाप॒स्येति॑ प॒रि॒ऽवाप॑स्य । गो॒धूमाः॑ ।
सक्तू॑नाम् । रू॒पम् । बद॑रम् । उ॒प॒वाका॒ इत्यु॑प॒ऽवाकाः॑ । क॒र॒म्भस्य॑ ॥ छं ॥११॥

आ– अधस्तनमन्त्रोक्तानां सोम-हविषां सोमस्य च [ संपत्तिं ] सौत्रामणी द्रव्येष्वाह– 'धानानाम्' इति । धानानां कुवलं बदरविशेषः रूपम् । परीवापस्य गोधूमाः रूपम् । सक्तूनां बदरं रूपम् । करम्भस्य उपवाकाः यवाः रूपम् ॥११॥

अ– 'धानानां रूपम्' । नन्वधस्तनमन्त्रे धानादीनां सोमरूपत्वमुक्तम् । तेऽत्र कुत्र सन्तीति, धानादिसोमहविषां सोमस्य च संपत्तिं सौत्रामणीद्रव्येणाह– 'धानानां रूपं कुवलम्'। कोमलबदरीफलं धानानां पूर्वोक्तानां रूपं ध्येयम् । "कुवलं बदरीफले मुक्ताफलोत्पलयोश्च" ( द्र. रामाश्रमी अको २·४·३६ ) इति कोशः । गोधूमाः परिवापस्य रूपम् । बदरं बदरीफलं सक्तूनां रूपम् । 'बादरम्' इति वक्तव्ये "पुष्पे फले चाणो लुक्" ( पा ४·३·१६३ ) इत्यणो लोपे बदरमिति साधु । उपवाकाः यवाः करम्भस्य रूपम् ॥११॥

पय॑सो रू॒पं यद्यवा॑ द॒ध्नो रू॒पं क॒र्कन्धू॑नि ।
सोम॑स्य रू॒पं वा॒जिनं॑ सौ॒म्यस्य॑ रू॒पमा॒मिक्षा॑ ॥१२॥

पय॑सः । रू॒पम् । यत् । यवाः॑ । द॒ध्नः । रू॒पम् । क॒र्कन्धू॑नि ।
सोम॑स्य । रू॒पम् । वा॒जिन॑म् । सौ॒म्यस्य॑ । रू॒पम् । आ॒मिक्षा॑ ॥ सीं ॥१२॥

11. S3 धानानाम् करम्भस्येति for धानानामिति

आ– ' पयसः ' इति । vयत् ये vयवाः ते vपयसः vरूपम् । vदध्नः vकर्कन्धूनि vरूपम् । vसोमस्य vवाजिनं vरूपम् । vसौम्यस्य सोमहविषः vआमिक्षा vरूपम् ॥१२॥

---

अ– ' पयसो रूपम् ' । vयत् ये । लिङ्गवचनव्यत्ययोऽत्र । vयवाः ते vपयसः vरूपम् । vकर्कन्धूनि स्थूलबदराणि vदध्नः vरूपम् । vवाजिनं vसोमस्य vरूपम् । vआमिक्षा पयस्या vसौम्यस्य च vरूपम् ॥१२॥

---

आ श्रावयेति स्तोत्रियाः प्रत्याश्रावो अनुरूपः ।
यजेति धाय्यारूपं प्रगाथा येयजामहाः ॥१३॥

---

आ । श्रावय । इति । स्तोत्रियाः । प्रत्याश्राव इति प्रतिऽआश्रावः । अनुरूप इत्यनुऽरूपः । यज । इति । धाय्यारूपमिति धाय्याऽरूपम् । प्रगाथा इति प्रऽगाथाः । येयजामहा इति येऽयजामहाः ॥ मं ॥१३॥

---

आ– इदानीं मन्त्रसंपत्तिः क्रियते– ' आ श्रावयेति ' । इतिशब्दो विवक्षितार्थप्रकाशनार्थः । vस्तोत्रियाः । सामाश्रयाः मन्त्रविशेषाः स्तोत्रियाः । vप्रत्याश्रावः vअनुरूपः । ' अस्तु श्रौषट् ' इति अनुरूपः प्रत्याश्रावः । vयज vइति vधाय्यारूपम् । शंस्यदेवतासंबन्धिकाला यज्ञाः । निष्केवल्यस्तोत्रिया[नु]रूपयोरनन्तरं धाय्या शस्यते । vप्रगाथाः । अत्र चतुर्थपादाववर्त्येति द्व्यृचे तृचः क्रियते चेत् स तृचः प्रगाथः । vयेयजामहाः इति प्रगाथः ॥१४॥

---

अ– शस्त्रसंपत्तिमाह– vआ श्रावयेति ' । vआश्रावय vइति शब्दः ' ओश्रावय ' इत्यस्योपलक्षकः । ता वा एताः पञ्च व्याहृतयः – ' ओ श्रावय अस्तु श्रौषट् यज येयजामहे वौषट् ' इति । ब्राह्मणे तथा प्रयोगात् vस्तोत्रियाः ज्ञेयाः । स्तोत्रे सामनि प्रथमस्तृच स्तोत्रिया उच्यन्ते । vप्रत्याश्रावः ' अस्तु श्रौषट् ' इति शब्दः । vअनुरूपः उत्तरस्तृचः । vयज vइति शब्दः vधाय्यारूपम् । निष्केवल्ये स्तोत्रियानुरूपयोरनन्तरं धाय्या शस्यते । सा यजेतिशब्दो ज्ञेयः । vयेयजामहा एतच्छन्दाः vप्रगाथाः प्रगाथरूपाः ॥१३॥

---

7. S3 पयसः आमिक्षेति for पयस इति ।

11. S3 आ श्रावय ये यजामह इति for आ श्रावयेति

14. V5 S3 अत्र for अनन्तरं

15. V2 S3 त्यृचि for तृचः

**सौत्रामण्याः सोमसाम्यम्**

**अर्धऋचैरुक्थानां॒ रूपं पदैरांप्नोति निविर्दः ।**
**प्रणवैः शस्त्राणां॒ रूपं पयसा सोमं आप्यते ॥१४॥**

अर्धऋचैरित्यर्धऽऋचैः । उक्थानाम् । रूपम् । पदैः । आप्नोति । निविद् इति निऽविर्दः ।
प्रणवैः । प्रनवैरिति प्रऽनवैः । शस्त्राणाम् । रूपम् ।
पयसा । सोमः । आप्यते ॥ ड्रीं ॥१४॥

आ– ' अर्धऋचैरुक्थानाम् ' । $^{v}$अर्धऋचैः । व्यत्ययः । अर्धर्चैः $^{v}$उक्थानाम् $^{v}$रूपम् $^{v}$आप्नोति । $^{v}$पदैः । देवतास्वरूपनिवेदकः पदविशेषः निविद् । $^{v}$निविदः संहितामन्त्ररूपमाप्यते । [ $^{v}$प्रणवैः ओंकारैः $^{v}$शस्त्राणां रूपम् ] । $^{v}$पयसा $^{v}$सोमः $^{v}$आप्यते ॥१५॥

अ– ' अर्धऋचैः ' । ऋचामर्धानीत्यर्धऋचस्तैः । " अर्धचाः पुंसि च " ( पा २·४·३१ ) इति पुंस्त्वम् । " ऋत्यकः " ( पा ६·१·१२८ ) इति, " कण्ठ्य ऋकारे ह्रस्वम् " ( वाप्रा ४·५० ) इति प्रातिशाख्येन च ऋकारस्य संध्यभावः । अत्रार्थः $^{v}$अर्धऋचैः $^{v}$उक्थानां शस्त्रविशेषाणां $^{v}$रूपम् आप्यते । $^{v}$पदैः $^{v}$निविदः न्यूङ्खान् $^{v}$आप्नोति । $^{v}$प्रणवैः ओंकारैः $^{v}$शस्त्राणां $^{v}$रूपम् आप्यते । $^{v}$पयसा दुग्धेन $^{v}$सोमः $^{v}$आप्यते । अर्धर्चादयः उक्थादित्वेन ध्येयाः ॥१४॥

**अश्विभ्यां प्रातःसवनमिन्द्रेणैन्द्रं माध्यंदिनम् ।**
**वैश्वदेवं॒ सरस्वत्या तृतीयमाप्तं॒ सवनम् ॥१५॥**

अश्विभ्यामित्यश्विऽभ्याम् । प्रातःसवनमिति प्रातःऽसवनम् । इन्द्रेण । ऐन्द्रम् । माध्यन्दिनम् ।
वैश्वदेवमिति वैश्वऽदेवम् । सरस्वत्या । तृतीयम् । आप्तम् । सवनम् ॥ टं ॥१५॥

आ– ' अश्विभ्यां प्रातःसवनम् ' इति । $^{v}$आप्तं प्राप्तम् । $^{v}$इन्द्रेण $^{v}$ ऐन्द्रम् इन्द्रदेवत्यं माध्यन्दिनसवनं प्राप्तम् । $^{v}$सरस्वत्या $^{v}$वैश्वदेवं $^{v}$तृतीयं $^{v}$सवनं प्राप्तम् ॥१६॥

7. V2 मन्त्रस्य for मन्त्र°
9. P2 M4 अर्धर्चादयः for अर्धर्चाः
18. S3 अश्विभ्यां ... सवनमिति for अश्विभ्यां प्रातःसवनमिति; V2 om. आप्तम् प्राप्तम् ।

अ- देवताभिः सवनसंपत्तिमाह- अश्विभ्यां प्रातःसवनम् । अश्विभ्यां देवाभ्यां प्रातःसवनम् आसम् । इन्द्रेण देवेन्द्रेण ऐन्द्रम् इन्द्रदेवत्यं साध्यंदिनं सवनमासम् । सरस्वत्या देवतया वैश्वदेवं विश्वेदेवदेवत्यं तृतीयं सवनम् आसम् ॥१५॥

---

वायव्यैर्वायव्यान्याप्नोति सतेन द्रोणकलशम् ।
कुम्भीभ्यामम्भृणौ सुते स्थालीभिः स्थालीराप्नोति ॥१६॥

---

वायव्यैः । वायव्यानि । आप्नोति । सतेन । द्रोणकलशमिति द्रोणऽकलशम् ।
कुम्भीभ्याम् । अम्भृणौ । सुते । स्थालीभिः । स्थालीः । आप्नोति ॥ गां ॥१६॥

---

आ– 'वायव्यैर्वायव्यानि' इति । सर्वेषां सोमपात्राणां वायव्यानीति संज्ञा । वायव्यैः पात्रैः वायव्यानि पात्राणि आप्नोति । शतेन । शतच्छिद्रं पात्रं शतं, तेन सोमधारापात्रेण । द्रोणकलशं पात्रम् । पात्रविशेषो द्रोणकलशः । तं द्रोणकलशं तेन शतेन प्राप्नोति । कुम्भीभ्यां सुराविधात्रीभ्याम् अम्भृणौ पूतभृदाधवनीयौ सुते सोमपात्रे आप्नोति । स्थालीभिः एताभिः स्थालीः आप्नोति ॥२७॥

---

अ- 'वायव्यैर्वायव्यानि'। वायव्यैः वायुदेवत्यैः पात्रैः वायव्यानि सोमपात्राणि आप्नोति। "वाय्वृतुपित्रुषसो यत्" (पा ४.२.३१) इति यत्प्रत्ययान्तत्वेन, "तित्स्वरितम्" इत्यन्तस्वरितो वायव्यशब्दः । वैतसं पात्रं सतमित्युच्यते । सतेन द्रोणकलशम् आप्नोति । कुम्भीभ्यां सुराधात्रीभ्यां शतातृण्णाभ्याम् अम्भृणौ पूतभृदाधवनीयौ । सुते अभिषुते सोमे यौ स्तः तावाप्नोति । स्थालीभिः कृत्वा स्थालीः आप्नोति ॥१६॥

---

यजुर्भिराप्यन्ते ग्रहा ग्रहैः स्तोमाश्च विष्टुतीः ।
छन्दोभिरुक्थाशस्त्राणि साम्नाऽवभृथ आप्यते ॥१७॥

---

3. M4 विश्वेदेवत्यं for विश्वेदेवदेवत्यं
8. S3 पाठस्तु वायव्यैर, ... स्थालीराप्नोतीति। for वायव्यैर्वायव्यानीति; V2 om. इति ।
9. V2 S3 wrongly write शतेन for सतेन and explains it as शतच्छिद्रं पात्रम्, which again is not correct.
13. M4 वसु° for वायु°
14. M4 अन्तःस्व° for अन्तस्व°

सौत्रामण्याः सोमसाम्यम् ]

यजुर्भिरिति यजुःऽभिः । आप्यन्ते । ग्रहाः ।
ग्रहैः । स्तोमाः । च । विष्टुतीः । विस्तुतीरिति विऽस्तुतीः ।
छन्दोभिरिति छन्दःऽभिः । उक्थाशस्त्राणि । उक्थशस्त्राणीत्युक्थऽशस्त्राणि ।
साम्ना । अवभृथ इत्यवऽभृथः । आप्यते ॥ मुं ॥१७॥

आ– ' यजुर्भिराप्यन्ते ' इति । [v]यजुर्भिः एतैर्विशिष्टानि यजूंषि [v]आप्यन्ते । एतैः [v]ग्रहैः [v]च [v]ग्रहाः सौत्रामण्या आप्यन्ते । स्तोमैः स्तुतिभिः [v]स्तोमाः आप्यन्ते । विष्टुतिभिः [v]विष्टुतीः गणनार्थस्थिता दाधायका (?) विष्टुतीः विशिष्टा स्तुतीराप्नोति । [v]छन्दोभिः एतैश्छन्दांस्याप्यन्ते । उक्थाशस्त्रैरेतैः शंसनैः [v]उक्थाशस्त्राणि प्राप्यन्ते । [v]साम्ना एतेन सामाप्यते । अवभृथेनैतेनावभृथसाम्ना [v]अवभृथः [v]आप्यते ॥१७॥

अ– ' यजुर्भिराप्यन्ते '। [v]यजुर्भिः अत्रत्यैः यजूंषि सौमिकानि [v]आप्यन्ते। [v]ग्रहैः [v]ग्रहाः आप्यन्ते। स्तोमैः [v]स्तोमाः आप्यन्ते। विष्टुतिभिः [v]विष्टुतीः विविधस्तुतय आप्यन्ते। यजूंषीति त्रयम् अध्याहार्यं परिणेतव्यं वा । [v]छन्दोभिः छन्दांसि। [v]उक्थशस्त्रैः उक्थाशस्त्राणि चाप्यन्ते। " उक्थाच शसेः " ( वाप्रा ३·१२३ ) इति प्रातिशाख्येन दीर्घः। [v]साम्ना सामाप्यते। अवभृथेन् [v]अवभृथः [v]आप्यते। अत्राप्याध्याहारादि ॥१७॥

इळाभिर्भक्षानाप्नोति सूक्तवाकेनाशिषः ।
शंयुना पत्नीसंयाजान्त्समिष्टयजुषा सꣳस्थाम् ॥१८॥

इळाभिः । भक्षान् । आप्नोति । सूक्तवाकेनेति सूक्तऽवाकेन । आशिष इत्याऽशिषः ।
शंयुनेति शम्ऽयुना । पत्नीसंयाजानिति पत्नीऽसंयाजान् ।
समिष्टयजुषेति समिष्टऽयजुषा । सꣳस्थामिति सम्ऽस्थाम् ॥ खौं ॥ ॥१८॥

आ– ' इळाभिः ' इति । इष्टशिष्टभक्षद्रव्याणि इळाः। ताभिः [v]भक्षान् सौमिकान् [v]आप्नोति । [v]सूक्तवाकेन । सूक्तं वक्तीति सूक्तवाक् । तेन सूक्तवाकमाप्नोति । आशीर्भिः [v]आशिषः आप्नोति । [v]शंयुना । इष्टानिष्टप्राप्तिपरिहारप्रकाशकः शंयुः । तेनानेन शंयुमाप्नोति ।

12. P2 M4 आप्यायन्तो for आप्यन्ते
20. S3 पाठस्तु इळाभिर् ... सꣳस्थामिति for इळाभिरिति; V2 om. इति ।

पत्नीसंयाजैरेतैः [v]पत्नीसंयाजान् आप्नोति । [v]समिष्टयजुषा होमविशेषेण । " देवा गातुविदः " ( काण्वसं २·५·४ ) इत्यादिमन्त्रैः क्रियमाणो होमविशेषः समिष्टयजुः । तेनानेन समिष्टयजुराप्नोति । सꣳस्थया अनया [v]संस्थां समाप्तिम् आप्नोति ॥१९॥

---

अ– ' इळाभिर्भक्षान् ' । [v]इळाभिः इडाभिरिडाः आप्नोति । " डढौ ळळ्हावेकेषाम् ' ( वाप्रा ४·१४६ ) इति काण्वमते डस्य ळत्वम् । भक्षैः [v]भक्षान् आप्नोति । [v]सूक्तवाकेन सूक्तवाकम् आप्नोति । आशीर्भिः [v]आशिषः आप्नोति । [v]शंयुना होमविशेषेण शंयुमाप्नोति । पत्नीसंयाजैः [v]पत्नीसंयाजान् आप्नोति । [v]समिष्टयजुषा समिष्टयजुराप्नोति । संस्थया [v]संस्थाम् आप्नोति ॥१८॥

---

व्रतेन॑ दी॒क्षामा॑प्नोति दी॒क्षया॑ऽऽप्नोति॒ दक्षि॑णाम् ।
दक्षि॑णा श्र॒द्धामा॑प्नोति श्र॒द्धया॑ स॒त्यमा॑प्यते ॥१९॥

---

व्र॒तेन॑ । दी॒क्षाम् । आ॒प्नोति॒ । दी॒क्षया॑ । आ॒प्नोति॒ । दक्षि॑णाम् ।
दक्षि॑णा । श्र॒द्धाम् । आ॒प्नोति॒ । श्र॒द्धया॑ । स॒त्यम् । आ॒प्य॒ते ॥ इं ॥१९॥

---

आ– ' व्रतेन दीक्षामाप्नोति ' इति । अनेन नियमेन होमलक्षणेन [v]व्रतेन [v]दीक्षाम् [v]आप्नोति । दीक्ष मौण्डचेज्योपनयननियमव्रतादेशेषु । [v]दीक्षया [v]दक्षिणाम् [v]आप्नोति । दक्षयतीति दक्षिणा । [v]दक्षिणा । व्यत्ययः । दक्षिणया [v]श्रद्धाम् [v]आप्नोति । [v]श्रद्धया तात्पर्यबुद्धया [v]सत्यम् [v]आप्यते । " सत्यं ज्ञानमनन्तम् आनन्दं ब्रह्म " इति यत् प्रसिद्धं तदन्तःकरणशुद्धिद्वारेण सम्यक् ज्ञानप्रापकत्वात् एवं प्राप्यत इत्यर्थः ॥३०॥

---

अ– ' व्रतेन दीक्षाम् ' । " हुतोच्छिष्टभक्षश्चतूरात्रमग्निहोत्रं जुहोति " (काश्रौ १९.१.१३-१५) इति । [v]व्रतेन नियमेन [v]दीक्षाम् [v]आप्नोति । [v]दीक्षया [v]दक्षिणाम् [v]आप्नोति । [v]दक्षिणा । विभक्तिलोपः । दक्षिणया [v]श्रद्धाम् [v]आ[v]नोति । श्रदिति सत्यनाम । श्रत् सत्यं धीयते यस्यां सा श्रद्धा । आस्तिकबुद्धिरिति यावत् । " श्रद्धायां ह्येव दक्षिणा प्रतिष्ठिता " ( शब्रा १४·६·९·२२ ) इति ब्राह्मणात् । [v]श्रद्धया [v]सत्यं ब्रह्म [v]आप्यते । " सत्यं ज्ञानमनन्तं ब्रह्म इति " श्रुतेः । श्रद्धां विना ज्ञानाभावादिति भावः ॥१९॥

---

2. V2 °विशेषः for °विशेषेण

12. S3 पाठस्तु व्रतेन ... सत्यमाप्यत इति for व्रतेन दीक्षामाप्नोतीति, V2 om. इति

13. M4 om. दीक्षया दक्षिणामाप्नोति ।

एतावद्रूपं यज्ञस्य यद्देवैर्ब्रह्मणा कृतम् ।
तदेतत् सर्वमाप्नोति यज्ञे सौत्रामणी सुते ॥२०॥(२)॥

---

एतावत् । रूपम् । यज्ञस्य । यत् । देवैः । ब्रह्मणा । कृतम् ।
तत् । एतत् । सर्वम् । आप्नोति । यज्ञे । सौत्रामणी । सुते ॥ श्रुं ॥२०॥(२)॥

---

आ– ' एतावद्रूपम् ' इति । एतावता परिमाणेन परिमितं सोमाख्यस्य vयज्ञस्य vरूपं vयत् vदेवैः vब्रह्मणा च vकृतं कल्पितम् । vतत् vएतत् vसर्वम् vयज्ञे vसौत्रामणी । व्यत्ययः । सोमे vसुते अभिषुते सौत्रामण्याख्ये यज्ञे सुते यजमानः सर्वफलम् vआप्नोति इति ॥

अस्मिन्ननुवाके सुराग्रहपक्षोक्तविशेषैरेव सौमिकान् सर्वान् विशेषान् आप्नोतीति सर्वाभिप्रायः ॥२१॥

---

अ– ' एतावद्रूपम् ' । उक्तमुपसंहरति– vयज्ञस्य सोमयागस्य vएतावत् एतत्परिमाणं vरूपं स्वरूपं vदेवैः vब्रह्मणा प्रजापतिना परब्रह्मणा च vयद् रूपं vकृतं निर्मितम् । vएतत् सोमयागीयं vसर्वं vसौत्रामणी । सप्तम्येकवचनस्य पूर्वसवर्णदीर्घात् सौत्रामण्यां vयज्ञे vसुते सुरासोमे अभिषुते सति vआप्नोति प्राप्नोति ॥२०॥

इति काण्वशाखासंहिताभाष्ये भावार्थदीपिकायां द्वितीयोऽनुवाकः ॥२॥

[ इति द्वितीयोऽनुवाकः । ]

---

[ अथ तृतीयोऽनुवाकः । ]

सुरावन्तं बर्हिषदꣳ सुवीरं यज्ञꣳ हिन्वन्ति महिषा नमोभिः ।
दधानाः सोमं दिवि देवतासु मदेमेन्द्रं यजमानाः स्वर्काः ॥१॥

---

सुरावन्तमिति सुराऽवन्तम् । बर्हिषदम् । बर्हिसदमिति बर्हिऽसदम् ।
सुवीरमिति सुऽवीरम् । यज्ञम् । हिन्वन्ति । महिषाः । नमोभिरिति नमःऽभिः ।
दधानाः । सोमम् । दिवि । देवतासु ।
मदेम । इन्द्रम् । यजमानाः । स्वर्का इति सुऽअर्काः ॥ प्रें ॥१॥

---

5.　S3 पाठस्तु– एतावद्रूपं ... सुत इति for एतावद्रूपमिति; V2 om. इति

आ– पयोग्रहान् जुहोति– ‘ सुरावन्तम् ’ इति । चतुर्ऋचं त्रैष्टुभम् । अश्विसरस्वतीन्द्रदेवत्यम् । सुराइत्रिरश्नातीति सुरावान् । तं vसुरावन्तं vयज्ञम् । बर्हिषि सीदतीति बर्हिषत् । तं vबर्हिषदम् । vसुवीरं शोभनवीरवन्तं सुपशुयजमानवन्तं सौत्रामण्याख्यं यज्ञं vहिन्वन्ति vमहिषाः vनमोभिः नमस्कारैरन्नैर्वा । हिनोतिरत्र समृद्ध्यर्थः । महिषाः ऋत्विजः हिन्वन्ति । vदधानाः धारयन्तः समर्धयन्ति । vदिवि द्युलोके vदेवतासु मध्ये vइन्द्रं परमैश्वर्ययुक्तम् इन्द्रं vस्वर्काः शोभनार्काः शोभनान्नसंपन्नाः देवतायोग्यान्नसंपन्नाः vयजमानाः वयं च vमदेम । मदी हर्षे । मदं कुर्मः । तथा च –

“ सुरावान् वा एष बर्हिषत् यज्ञो यत् सौत्रामणी बर्हिषैवैनं यज्ञेन समर्धयति । यज्ञं[1] हिन्वन्ति महिषा नमोभिरित्यृत्विजो वै महिषा यज्ञो नम ऋत्विग्भिरेव यज्ञं समर्धयति यज्ञेन यजमानं दधानाः सोममिति सोमपीथमेवास्मिन् दधति दिवि देवतास्विति दिव्येवैनं देवतासु दधति मदेमेन्द्रमिति मदाय वाव सोमो मदाय सुरोभावेव सोममदं च सुरामदं चावरुन्द्धे । यजमानाः स्वर्का इत्यर्को वै देवानामन्नमन्नं यज्ञो यज्ञेनैवैनमन्नाद्येन समर्धयति ” (शब्रा १२·८·१·२) इति श्रुतेः । ॥ ३२॥

---

अ– कात्यायनः– “ सुरावन्तमिति जुहोति ” ( काश्रौ १९·३·११ ) इति । अध्वर्युस्त्रीनपि पयोग्रहान् सहैव जुहोतीत्यर्थः । एवं पूर्वानुवाकेन सौत्रामणीयागस्य द्रव्यदेवतादिना सोमयागसाम्यमापाद्य प्रकृतमुच्यते ॥

‘ सुरावन्तं बर्हिषदम् ’ । चतस्रस्त्रिष्टुभोऽश्विसरस्वतीन्द्रदेवत्याः । vमहिषाः महनीया महान्तः ऋत्विजः vयज्ञं सौत्रामणीयज्ञं vहिन्वन्ति वर्धयन्ति प्रापयन्ति वा । कीदृशं यज्ञम् ? vबर्हिषदं बर्हिषि सीदन्ति तिष्ठन्ति देवा यत्र स बर्हिषत्, तम् । तथा vसुरावन्तं, सुरा विद्यते यत्र स सुरावान्, तम् । vसुवीरं, शोभना वीरा यत्र तं शोभनार्त्विजम् । कीदृशाः vमहिषाः ? vनमोभिः । नमः इत्यन्ननाम । नमस्कारैरन्नैर्वा सह vदिवि स्वर्गे वर्तमानासु vदेवतासु तन्निमित्तं vसोमं vदधानाः । पुनः कीदृशाः ? तत्र यज्ञे vइन्द्रं vयजमानाः यजन्तः सन्तो वयं vमदेम दक्षिणादिना हृष्येमेति वदन्तः । पुनः कीदृशाः ? vस्वर्काः शोभनोऽर्कोऽर्चनमन्त्रा वा येषां ते स्वर्काः । “ तस्यार्चत आपोऽजायन्तार्चते वै मे कमभूदिति तदेवार्क्यस्यार्कत्वम् ” (शब्रा १०·६·५·१) इति श्रुतेः । यद्वा– स्वर्काः शोभनान्नाः । “ अर्को वै देवानामन्नमन्नं यज्ञो यज्ञेनैवैनमन्नाद्येन समर्धयति ” ( शब्रा १२·८·१·२ ) इति श्रुतेः । “ अर्को देवो भवति यदेनमर्चन्ति अर्को मन्त्रो भवति यदनेनार्चन्ति । अर्कमन्नं भवति इत्यर्चति भूतानि । अर्को वृक्षो भवति स वृतः कटुकिम्ना ” ( नि ५·४ ) इति यास्कोक्तेश्च । महिषशब्दो यद्यपि महन्नामसु पठितस्तथापि अत्र ऋत्विग्वाचकः । “ महिषा नमोभिरित्यृत्विजो वै महिषाः ” ( शब्रा १२.८.१.२ ) इति श्रुतेः । एषोऽर्थो ब्राह्मणे– “ स जुहोति सुरावन्तं बर्हिषदं सुवीरमिति । सुरावान् वा एष बर्हिषद्यज्ञो यत् सौत्रामणी बर्हिषैवैनं यज्ञेन समर्धयति । यज्ञं हिन्वन्ति महिषा नमोभिरित्यृत्विजो वै महिषा यज्ञो

---

1. S3 पाठस्तु सुरावन्तं ... स्वर्का इति for सुरावन्तामिति ।

पयोग्रहाः ]

नम ऋत्विग्भिरेव यज्ञꣳ समर्धयति यज्ञेन यजमानं दधानाः सोममिति सोमपीथमेवास्मिन् दधति दिवि देवतास्विति । दिव्येवैनं देवतासु दधति मदेमेन्द्रमिति मदाय वाव सोमो मदाय सुरोभावेव सोममदं च सुरामदं चावरुन्द्धे यजमानाः स्वर्का इत्यर्को वै देवानामन्नमन्नं यज्ञो यज्ञेनैवैनमन्नाद्येन समर्धयति । हुत्वा भक्षयन्ति समृद्धमेवास्य तद्वर्धयन्ति " ( शब्रा १२.८.१.२ ) इति ॥

परमेश्वरपरत्वे तु महिषा महान्तः, यज्ञं विष्णुम् । " यज्ञो वै विष्णुः " इति श्रुतेः । हिन्वन्ति । सुरावन्तं शोभनलक्ष्मीवन्तम् । " रायो हलि " ( पा ७·२·८५ ) इत्याकारः । " अन्यत्रापि दृश्यते " इति बर्हिषि यज्ञे सीदतीति तथा । सुष्ठु वीरा ब्रह्मादयो यस्य तम् । अन्यत् समानम् ॥१॥

यस्ते॒ रस॒ः संभृ॑त॒ ओष॑धीषु॒ सोम॑स्य॒ शुष्म॒ः सुर॑या सु॒तस्य॑ ।
तेन॑ जिन्व॒ यज॑मान॒ं मदे॑न॒ सर॑स्वतीम॒श्विना॒ इन्द्र॑म॒ग्निम् ॥२॥

यः । ते॒ । रस॑ः । संभृ॑त॒ इति॒ सम्ऽभृ॑तः । ओष॑धीषु । सोम॑स्य । शुष्म॑ः । सुर॑या । सु॒तस्य॑ ।
तेन॑ । जि॒न्व॒ । यज॑मानम् । मदे॑न । सर॑स्वतीम् । अ॒श्विनौ॑ । इन्द्र॑म् । अ॒ग्निम् ॥ ध्रै ॥२॥

आ– सुराग्रहान् जुहोति– ' यस्ते रसः ' इति । हे सुरे, ˇते तव ˇयः ˇरसः ˇसंभृतः ˇओषधीषु वर्तमानः एकीकृतः संभृतः । ˇसोमस्य च यः ˇशुष्मः यद्बलम् । ˇसुरया ˇसुतस्य अभिषुतस्यसोमस्य यः शुष्मः सुरया सह स्थितः, ˇतेन उभयेन रसेन । ˇमदेन । मदे हेतुभूतेन सुरोत्थ्येन केवलेन च रसेन ˇयजमानं ˇजिन्व । जिन्वतिः प्रीतिकर्मा । प्रीणीहि । यजमानं प्रीणीहि इति ऋत्विगाह । इतः पूर्वं ˇसरस्वतीं जिन्व । ˇअश्विना अश्विनौ जिन्व । ˇइन्द्रम् ˇअग्निं च जिन्व । एताभ्यो देवताभ्यो हविर्दत्त्वा यजमानः शेषं भक्षयतीत्यर्थः ॥२३॥

अ– कात्यायनः– " पालाशैः सौरान्, न मृण्मयमाहुतिमानशे इति श्रुतेर्यस्त इति " ( काश्रौ १९·३·१२) इति । अस्यार्थः – प्रतिप्रस्थाता पालाशोलूखलैः सुराग्रहान् दक्षिणाग्नौ जुहोति । मृण्मयपात्रमाहुतिं न व्याप्नोतीति । ' यस्ते ' । हे सुरे, 'ओषधीषु वर्तमानः 'यः 'ते तव 'रसः 'संभृतः एकीकृतः । " अपां च वा एष ओषधीनां च रसो यत् सुरा " ( शब्रा १२.८·१.४ ) इति श्रुतेः । 'सुरया सह 'सुतस्य सोमस्य यः 'शुष्मः यद्बलम् । मदयतीति मदः । 'तेन 'मदेन मदजनकेन तेन सुरारसेन सोमशुष्मेण च 'यजमानं 'सरस्वतीम् 'अश्विनौ 'इन्द्रम् 'अग्निं च 'जिन्व प्रीणीहि । जिन्वतिः प्रीणनार्थः । एषोऽर्थो ब्राह्मणे– " स जुहोति यस्ते रसः संभृत ओषधीष्वित्यपां च वा एष ओषधीनां च रसो यत् सुराऽपां चैनमेतदोषधीनां च रसेन समर्धयति सोमस्य शुष्मः सुरया सुतस्येति य एव सोमे शुष्मो यः सुरायां तमेवावरुन्द्धे । तेन जिन्व यजमानं मदेनेति तेन प्रीणीहि यजमानं मदेनेत्येवैतदाह सरस्वतीमश्विनाविन्द्रमग्निमिति देवताभिरेव यज्ञं समर्धयति " ( शब्रा १२.८.१.४) इति । श्रीपरत्वेनापि योज्यम् । हे सुरे लक्ष्मि, ते तव ओषधीषु शाल्यादिषु वर्तमानो रसः सारः संभृतः पुष्टोऽस्त्वित्यादि । सुगमम् ॥२॥

**यमश्विना नमुचेरासुरादधि सरस्वत्यसुनोदिन्द्रियाय।**
**इमं तꣳ शुक्रं मधुमन्तमिन्दुꣳ सोमꣳ राजानमिह भक्षयामि ॥३॥**

यम् । अश्विना । नमुचेः । आसुरात् । अधि । सरस्वती । असुनोत् । इन्द्रियाय ।
इमम् । तम् । शुक्रम् । मधुमन्तमिति मधुऽमन्तम् । इन्दुम् ।
सोमम् । राजानम् । इह । भक्षयामि ॥ कैं ॥३॥

आ– पयोग्रहान् भक्षयन्ति– ‘ यमश्विना ’ इति द्वाभ्यां त्रिष्टुब्भ्याम् ऋत्विग्यजमानाः । “ इन्द्रस्येन्द्रियं मनस्यासं सोमस्य भक्षं सुरया सुरो नमुचिरहरत् सोऽश्विनौ च सरस्वतीम् ” ( ? ? ) इत्याद्याख्यानगर्भोऽयं मन्त्रः । ‘ यमश्विना नमुचेरासुरादधि सरस्वती ’। [V]आसुरात् असुरपुत्रात् सोमं बलादपहृत्य स्थितात् [V]नमुचेः [V]अधि सकाशात् नमुचिवधोपाय-प्रदानेन नमुचिं घातयित्वा पुनः सोममाहृत्य [V]सरस्वती [V]इन्द्रियाय सोममभ्यषुणोत् इति संबन्धः। इन्द्रियाय वीर्याय सोममभ्यषुणोत् । [V]अश्विना अश्विनौ च असुनुताम् इन्द्रस्य भैषज्याय वा । [V]इमं [V]तं [V]शुक्रं शुद्धम् असंसृष्टलोहितं [V]मधुमन्तं रसवन्तम् [V]इन्दुं क्लेदनादिगुणयुक्तं [V]सोमं [V]राजानं रञ्जनादिगुणहेतुभूतं सोमम् [V]इह सौत्रामण्याख्ये यज्ञे [V]भक्षयामि ॥२४॥

**अ– कात्यायनः–** “ अध्वर्युः प्रतिप्रस्थाताऽग्नीद् यमश्विनेत्याश्विनं भक्षयन्ति द्विर्द्विरावर्तꣳ होतृब्रह्ममैत्रावरुणाः सारस्वतमाश्विनवत् ... ऐन्द्रं यजमानः ” ( काश्रौ १९.३.१३–१६ ) इति । अध्वर्य्वादित्रयमावृत्याश्विनं पयोग्रहं क्रमेण द्विर्द्विर्भक्षयन्ति । सकृन्मन्त्रमुक्त्वा होत्रादयः सारस्वतं पयोग्रहमदन्ति यजमान ऐन्द्रं पयोग्रहम् अत्तीति सूत्रार्थः ॥

‘ यमश्विना ’ [ इति ] । नमुचिनेन्द्रस्य वीर्यं पीतम् । तस्मिन् हते रुधिरमिश्रः सोमो जातस्तं देवाः पपुस्तदर्थाभिधायिन्येषा ऋक् । असुरस्यापत्यमासुरः । तस्मात् [V]आसुरात् [V]नमुचेः [V]अधि सकाशात् [V]यं सोमम् [V]अश्विना आहरतामिति शेषः । “ अश्विनौ ह्येतं नमुचेरध्याहरताम् ” ( शब्रा १२.८.१३ ) इति श्रुतेः । तथा [V]सरस्वती च यं सोममध्यानीतम् [V]असुनोत् अभ्यषुणोत् । किमर्थम् ? [V]इन्द्रियाय इन्द्रसामर्थ्याय भैषज्याय वा । [V]तम् अश्व्यानीतं सरस्वतीसुतम् [V]इमं सोमं [V]राजानम् इह यज्ञे अहं [V]भक्षयामि । सोमरसस्य राजत्वं चन्द्रसंबन्धेन राजमानत्वात् ज्ञेयम् । कीदृशं सोमम् ? [V]शुक्रं शुक्लं शुद्धम् । लोहितासंसृष्टत्वात् । अत एव [V]मधुमन्तं मधुररसवन्तम् [V]इन्दुम् । इदि परमैश्वर्ये । परमैश्वर्यप्रदम्।

6. V3 पाठस्तु – यमश्विना ... भक्षयामीति । for यमश्विना इति ।

पयोग्रहाः ]

एषोऽर्थो ब्राह्मणे- " स भक्षयति यमश्विना नमुचेरासुरादधीत्यश्विनौ ह्येतं नमुचेरध्याहरताम् । सरस्वत्यसुनोदिन्द्रियायेति । सरस्वती ह्येतमसुनोदिन्द्रियायेमं तं शुक्रं मधुमन्तमिन्दुमिति । शुक्रो वा एष मधुमानिन्दुर्यत् सोमः । सोमं राजानमिह भक्षयामीति सोम एवास्य राजा भक्षितो भवति " ( शब्रा १२·८·१·३ ) इति ॥३॥

---

यदत्र॑ रि॒प्तꣳ र॒सिनः॑ सु॒तस्य॒ यदिन्द्रो॒ अपि॑ब॒च्छचीभिः॑ ।

अ॒हं तद॑स्य॒ मन॑सा शि॒वेन॒ सोम॒ꣳ राजा॑न॒मि॒ह भ॑क्षयामि ॥४॥

---

यत् । अत्र॑ । रि॒प्तम् । र॒सिनः॑ । सु॒तस्य॑ । यत् । इन्द्रः॑ । अपि॑बत् । शची॑भिः ।

अ॒हम् । तत् । अ॒स्य॒ । मन॑सा । शि॒वेन॑ । सोम॑म् । राजा॑नम् । इ॒ह । भ॒क्ष॒या॒मि॒ ॥ सों ॥४॥

---

आ - यजमानो भक्षयति– ' यदत्र रिप्तम् ' इति । vयत् यः vअत्र अस्यां सुरायां vरिप्तं लिप्तं vरसिनः रसवत् vसुतस्य अभिषुतस्य सोमस्य; vयत् यं रसम् vइन्द्रः vशचीभिः । शचीति कर्मनाम । कर्मभिः vअपिबत् । इन्द्रदेवत्यो हि सोमः । ' अहं तदस्य मनसा शिवेन सोमं राजानमिह भक्षयामि ' । vअस्य स्वस्य vमनसा vशिवेन शान्तेन मनसा vतत् तं सुतयोः सुरासोमयोः रसं, तत्रापि पक्वं सोमं vराजानम् vइह vभक्षयामि । " अशिव इव वा एष भक्षो यत् सुरा ब्राह्मणस्य शिवमेवैनमेतत् कृत्वाऽऽत्मन् धत्ते " (शब्रा १२·८·१·५) इति श्रुतेः ॥३५॥

---

अ- कात्यायनः - " यदत्रेति सौरान् भक्षयन्ति यथा भक्षितं प्राचीनावीतिनो दक्षिणतः " ( काश्रौ १९·३·१७ ) इति । अध्वर्य्वादयः पूर्ववदाश्विनादिसुराग्रहं ' यदत्र ' इति मन्त्रेण विहारदक्षिणे स्थित्वा प्राचीनावीतिनो भक्षयन्तीत्यर्थः ॥

' यदत्र ' [ इति ] । रसोऽस्त्यस्मिन्निति रसी । तस्य vरसिनः रसवतः । " अत इनिठनौ " ( पा ५·२·११५ ) इति अस्त्यर्थे इन्प्रत्ययः । vसुतस्य अभिषुतस्य सोमस्य vयत् । " सामान्ये नपुंसकम् " इति नपुंसकम् । यो भागः vअत्र सुरायां vरिप्तं लिप्तम् । रलयोः सावर्ण्यात् । सोमसंबन्धि यत् सुरायां लग्नमित्यर्थः । vयत् च सुरालग्नं सोमांशं vशचीभिः कर्मभिः । शचीति कर्मनाम ।

---

9. V3 पाठस्तु – यदत्र ... भक्षयामीति for यदत्र रिप्तामिति ।
12. V3 om. शिवेन शान्तेन मनसा; V3 सुतासुतयोः for सुतयोः
13. V3 न सोमः for भक्षो यत् [ L 14 ]
21. M4 लिप्तम् for लग्नम्

शुद्धं कृत्वा ᵛइन्द्रः ᵛअपिबत् । इन्द्रदेवत्यत्वात् सोमस्य । ‘सोमं राजानम्’ इति द्वितीया षष्ठ्यर्थे । ‘अस्य’ इति पदविशेषणत्वात् । ᵛअस्य सोमस्य राज्ञः ᵛतत् तं सुरानिर्गतं सोमांशं ᵛशिवेन शुद्धेन ᵛमनसा ᵛइह यज्ञे ᵛअहं ᵛभक्षयामि, सुरायाः सकाशात् शुद्धं कृत्वा भक्षयामीत्यर्थः। भक्षणमत्र आघ्राणमेव । “यद् घ्राणभक्षोऽभिहितः सुरायाः” इति भागवतोक्तेः । एष एवार्थो ब्राह्मणे– “स भक्षयति यदत्र रिप्तᳪ रसिनः सुतस्येति सुतासुतयोरेव रसमवरुन्द्धे यदिन्द्रो अपिबच्छचीभिरितीन्द्रो ह्येतदपिबच्छचीभिरहं तदस्य मनसा शिवेनेत्यशिव इव वा एष भक्षो यत् सुरा ब्राह्मणस्य शिवमेवैनमेतत कृत्वाऽऽत्मन् धत्ते सोमᳪ राजानमिह भक्षयामीति सोम एवास्य राजा भक्षितो भवति” ( शब्रा १२.८.१.५ ) इति ।

इदम् ऋग्द्वयमीश्वरपरमपि । ‘यमश्विना’ । अहं सरस्वतीति व्यवहितान्वयात् सा वेदवाक् वदति । किं न मुञ्चति दौष्ट्यमिति नमुचिस्तस्मादत एवासुरादसुरस्य समुदायादध्याहृत्यापहृत्याश्विनौ ᵛइन्द्रियाय स्वरूपप्राप्तये यं सोमं शंकरं सौम्यत्वात् श्रीविष्णुं च असुनोदसुन्वाताम् । अभिषवो नाम विविच्य ज्ञानम् । दध्यङ्ङृषेः सकाशात् तयोरुपदेशात् । ‘इमं तम्’ इत्यादि पूर्ववत् । भक्षणं भक्त्या तच्चरणकमलास्वादनम् ।

यदत्र शंकरे विष्णौ वा सुतस्य अश्विभ्यां विविच्य ज्ञातस्य यत् रिप्तं, लिप्तो यो भक्तिरसस्तं भक्षयामीति हेतो(?)र्भो बहिर्मुखा भवन्तोऽपि भक्षयन्त्वित्युपदेशः ॥४॥

---

**पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा नमः । प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः ॥५॥**

---

पितृभ्य इति पितृऽभ्यः । स्वधायिभ्य इति स्वधायिऽभ्यः । स्वधा । नमः । पितामहेभ्यः ।

प्रपितामहेभ्य इति प्रऽपितामहेभ्यः । स्वधायिभ्य इति स्वधायिऽभ्यः । स्वधा । नमः ॥ श्रौ ॥५॥

---

आ– अतस्तत्र विध्यनुष्ठानप्रदर्शनार्थमाह– दक्षिणस्यैवाग्नेरङ्गारान्निर्वर्त्य बहिःपरिधि तदेताभिर्व्याहृतिभिर्जुहुयात् ‘पितृभ्यः स्वधायिभ्यः’ इति । सप्त पित्र्याणि यजूंषि । स्वान् स्वकीयान् दधाति धारयति पोषयतीति वा स्वधा । स्वधां प्रति गमनशीलाः ᵛस्वधायिनः । तेभ्यः ᵛस्वधायिभ्यः ᵛपितृभ्यः ᵛस्वधा ᵛनमः अन्नम् अस्तु । पूजार्थत्वात् बहुवचनम् । ᵛपितामहेभ्यः ᵛस्वधायिभ्यः । पितामहेभ्यः ᵛस्वधा ᵛनमः अन्नमस्तु । ᵛस्वधायिभ्यः ᵛप्रपितामहेभ्यः ᵛस्वधा ᵛनमः अन्नमस्तु । स्वधाशब्दोच्चारणपूर्वकं यद्धविर्दीयते तत् पितृभ्यो भवति । नान्यत् ॥३६॥

---

10. M4 भवति for वदति
22. S3 पाठस्तु – पितृभ्यः ... स्वधा नमः ॥ इति for पितृभ्यः स्वधादिभ्य इति ।
24. V2 प्रजा॰ for पूजा॰

पयोग्रहाः ]

अ– कात्यायनः – " अङ्गारेषु वा बहिष्परिधि दक्षिणतो जुहोत्याश्विनमुत्तरे मध्यमे सारस्वतमैन्द्रं दक्षिणे पितृभ्य इति प्रतिमन्त्रम् " ( काश्रौ १९.३.२० ) [ इति ]। सुराग्रहाणां भक्षणं, घ्राणम्, अन्येन मूल्येन पानमिति पक्षत्रयमुक्तम्। इदानीं चतुर्थमाह– यद्वा आहवनीस्याङ्गारेषु परिधेर्बहिर्दक्षिणदिक्स्थानेषु होमशेषान् सुराग्रहान् ' पितृभ्यः ' इति प्रतिमन्त्रं जुहोति । यथा उत्तरेऽङ्गारे आश्विनं मध्यमे सारस्वतं दक्षिण ऐन्द्रं सुराग्रहं जुहोतीति सूत्रार्थः। अपसव्येनेदं कर्म । पित्र्यत्वात् ॥ ' पितृभ्यः स्वधायिभ्यः '। सप्त यजूंषि पितृदेवत्यानि। [v]पितृभ्यः जनकेभ्यः [v]स्वधा [v]नमः । स्वधासंज्ञमन्नमस्तु । " स्वधाकारं पितरः " ( शब्रा १४·८·९·१ ) इति श्रुतेः । " स्वधो वै पितॄणामन्नम् " ( शब्रा १३.८.१.४ ) इति च । यद्वा– पितृभ्यः स्वधा अन्नमस्तु। नमो नमस्कारश्चास्तु । कीदृशेभ्यः ? [v]स्वधायिभ्यः। स्वधामन्नं यन्ति गच्छन्ति इति तथा तेभ्यः। इण् गताविति धातोः " सुप्यजातौ णिनिस्ताच्छील्ये " ( पा ३.२.७८ ) इति णिनिप्रत्यये रूपसिद्धिः। पितृभ्य इति बहुवचनं पितृव्याद्यपेक्षं, पूजार्थं वा। एवं ' पितामहेभ्यः ' इत्यादिमन्त्रौ व्याख्येयौ ॥

एषोऽर्थो ब्राह्मणे– " दक्षिणस्यैवाग्नेस्त्रीनङ्गारान् निर्वर्त्य बहिष्परिधि तदेताभिर्व्याहृतिभिर्जुहुयात् पितृभ्यः स्वधायिभ्यः स्वधा नम इति पितॄनेव पितृलोके स्वधायां दधाति पितामहेभ्यः " ( शब्रा १२.८.१.६ ) इत्यादिना ॥५॥

---

अक्ष॑न् पि॒तरो॒ऽमी॑मदन्त पि॒तरो॒ऽती॑तृपन्त पि॒तरः॑ ।
पित॑रः॒ शुन्ध॑ध्वम् ।।६॥

---

अक्ष॑न् । पि॒तर॑ः । अमी॑मदन्त । अती॑तृपन्त । पि॒तर॑ः ।
पित॑रः । शुन्ध॑ध्वम् ॥ स्ये ॥६॥

---

आ– एताभिः पितृदेवत्याभिः व्याहृतिभिस्त्रिष्वङ्गारेषु जुहूं पश्चात् प्रक्षालनेनोपसिञ्चति । ' अक्षन् ' इति । लुङ् । अदेर्घस्लादेशे घसेरुपधालोपादौ च कृते अडागमे च कृते अक्षन्निति भवति । [v]अक्षन् अदितवन्तः भवन्तः भुक्तवन्तः हे [v]पितरः, [v]अमीमदन्त । मद तृप्तौ । तृप्ता अभवन् । [v]अतीतृपन्त । तृप प्रीणने । [v]पितरः तर्पिताः । अथ जपति– ' पितरः शुन्धध्वम् ' इति । हे [v]पितरः, [v]शुन्धध्वं पाणिप्रक्षालनं कुरुध्वम् ॥२७॥

---

अ– कात्यायनः – " अक्षन् पितर इति प्रक्षालनेनोपसिञ्चति " (काश्रौ १९·३·१८ ) [ इति ]। सौरग्रहहोमपात्रक्षालनजलेन यथा स्वमङ्गारान् सिञ्चति प्रतिमन्त्रमिति सूत्रार्थः। ' अक्षन् पितरः '। [v]पितरः पूर्वोक्ताः [v]अक्षन् भक्षितवन्तः। घस्लृ अदने इति धातोः लुङि रूपम्। वाक्यादित्वादाद्युदात्तः। [v]पितरः

---

9. M4 यथा for तथा
20. S3 पाठस्तु अक्षन् ... शुन्धध्वमिति for अक्षन्निति ।

अमीमदन्त । मद तृप्तौ । तृप्तवन्तः । पितरः अतीतृपन्त । तृप प्रीणने । तर्पिता अस्माभिः । यद्वा– पितरोऽस्मानतीतृपन्त । "तृप्तास्तर्पयन्ति । सर्वैः कामैः सर्वैर्भोगैः" ( शब्रा ११·५·७·६ ) इति श्रुतेः ॥

एषोऽर्थो ब्राह्मणे – "अप आनीय निनयत्यक्षन् पितर इत्यन्नाद्यमेवैषु दधाति । ... त्रिभिः पवित्रैः पावयन्ति । त्रयो वा इमे लोका एभिरेवैनं लोकैः पुनन्ति । पावमानीभिः पावयन्ति । पवित्रं वै पावमान्यः । पवित्रेणैवैनं पुनन्ति" ( शब्रा १२·८·१·८-१० ) इत्यादौ ।

कात्यायनः – "पितरः शुन्धध्वमिति जपति" ( काश्रौ १९·३·२२ ) इति । हे पितरः, यूयं शुन्धध्वं पाणिप्रक्षालनेन शुद्धा भवत । वाक्यादित्वात् पितर इत्याद्युदात्तम् ॥६॥

---

**पुनन्तु मा पितरः सोम्यासः पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः ।**
**पवित्रेण शतायुषा ॥७॥**

---

पुनन्तु । मा । पितरः । सोम्यासः । पुनन्तु । मा । पितामहाः ।
पुनन्तु । प्रपितामहा इति प्रऽपितामहाः ।
पवित्रेण । शतायुषेति शतऽआयुषा ॥ झां ॥७॥

---

आ– पावमानीभिः पावयन्ति । 'पुनन्तु मा पितरः' इति नवर्चं पावमानम् । तत्राद्ये द्वे पितृदेवत्ये अनुष्टुभौ प्रजापतिः । 'पुनन्तु मा पितरः सोम्यासः' । सोमार्हाः, सोमसंपादिनो वा सोम्याः, ते एव सोम्यासः । पितरः मा यजमानं मां पुनन्तु मां शोधयन्तु । पितामहाः पितुः पितरः मा मां पुनन्तु । मां पुनन्तु प्रपितामहाः । केन पुनन्तु ? पवित्रेण पवमानभूतेन शतायुषा । येन पवित्रेण पूतः शतायुर्भवति तत् पवित्रं शतायुः । तेन शतायुषा पवित्रेण मां पुनन्तु । पावनं स्वपापापनोदनं शुद्धिः फलग्रहणयोग्यता । शुद्धिमापादयन्तु ॥२८॥

---

अ- कात्यायनः – "कुम्भीमासज्य कुम्भवच्छतवितृण्णां वालपवित्रहिरण्यान्यन्तर्धाय नवर्चं वाचयति पुनन्तु मेति" ( काश्रौ १९.३.२३ ) [ इति ] । दक्षिणाग्न्याहवनीयपार्श्वयोः स्तम्भद्वारोपरि दक्षिणाग्रं वंशं निधाय तत्रस्थे शिक्ये शतच्छिद्रां कुम्भीं निधाय कुम्भीतले वालादीनि निधाय तत्र तत्र सुराशेषं सिक्त्वा अग्नेरुपरि स्रवन्त्यां सुरायां नवर्चं यजमानं वाचयति । वालं गोऽश्ववालकृतं सुरागलनम् । पवित्रमजाऽविलोमकृतं पयोगलनम् । हिरण्यं शतमानमितम् । प्रत्यृचं वाचनमिति सूत्रार्थः ॥

---

13. S3 पुनन्तु ... शतायुषेति for पुनन्तु मा पितर इति ।
15. S3 सौम्यासः for सोम्यासः

पयोग्रहाः ]

' पुनन्तु मा ' । आद्ये द्वे पितृदेवत्ये अनुष्टुभौ । पितरः मां पुनन्तु शोधयन्तु । केन ? पवित्रेण गोऽश्ववालकृतेन । कीदृशेन पवित्रेण ? शतायुषा । शतं शतवर्षमितम् आयुर्यस्मात् तच्छतायुस्तेन । येन पूतः शतायुः स्यादित्यर्थः ॥ एवं पितामहाः मां पुनन्तु । प्रपितामहाः च मां पुनन्तु । कीदृशाः पित्रादयः ? सोम्यासः । सोम्याः सोमसंपादकाः । " आज्जसेरसुक् " ( पा ७·१·५० ) इति असुगागमे रूपसिद्धिः ॥७॥

पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः ।
पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै ॥८॥

पुनन्तु । मा । पितामहाः । पुनन्तु । प्रपितामहा इति प्रऽपितामहाः ।
पवित्रेण । शतायुषेति शतऽआयुषा । विश्वम् । आयुः । वि । अश्नवै ॥ जां ॥८॥

आ– ' पुनन्तु मा ' इति । पुनन्तु मा मां पितामहाः, प्रपितामहाः च मां पुनन्तु । शतायुषा पवित्रेण पितरः पुनन्तु, पितामहाश्च पुनन्तु, प्रपितामहाश्च पुनन्तु । ' विश्वम् आयुः ' । विश्वं सर्वं स्वम् आयुः व्यश्नवै । अशूङ् व्याप्तौ । अहं व्यश्नवै व्याप्नुयाम् ॥३९॥

अ– ' पुनन्तु मा ' । पूर्ववद् व्याख्या । आदरार्थं पुनर्वचनम् । पितामहादेर्व्यवधानात् सन्निधानान्न पितुः । यद्वा– अत्रापि ' पितरः पुनन्तु ' इति अनुषञ्जनीयम् । एवं पित्रादिभिः पूतोऽहं विश्वं पूर्णं शतवर्षात्मकम् आयुः व्यश्नवै प्राप्नुयाम् । अशूङ् व्याप्ताविति धातोः लोडुत्तमपुरुषैकवचनम् ॥८॥

अग्न आयूꣳषि पवस आ सुवोर्जमिषं च नः ।
आरे बाधस्व दुच्छुनाम् ॥९॥

अग्न आयूꣳषि ॥ आ ॥९॥

आ– ' अग्न आयूꣳषि ' । आग्नेयी गायत्री, वैखानसः । हे श्रीभगवन् अग्ने, नः अस्मान् प्रति आयूꣳषि आयुःसाधकानि कर्माणि पवसे । अन्तर्गर्भितणिजर्थोऽयम् ।

10. S3 पाठस्तु – पुनन्तु ... अश्नवै इति for पुनन्तु मा इति।
19. S3 पाठस्तु अग्न ... दुच्छुनामिति for अग्न आयूꣳषि।

पावयसे गमयसि । किं च– ‘ आ सुवोर्जमिषं च नः ’ । इषं व्रीह्यादिकम् ऊर्जं दधिक्षीराद्युपसेचनम् अस्मासु आ सुव अभ्यनुजानीहि । आरे दूरे एवास्थितं सन्तं दुच्छुनाम् । दुच्छुः दौर्गत्यम् । बाधस्व । अनेन च दुर्जनप्रभृतयो लक्ष्यन्ते । तान् बाधस्वेत्यर्थः ॥३॥

---

अ– ‘ अग्न आयूंषि ’ । प्रजापतिर्द्रष्टा । अग्निदेवत्या गायत्री । हे अग्ने, त्वम् आयूंषि पवसे स्वत एवायुःप्रापकाणि कर्माणि पावयसे कारयसि । अन्तर्भूतण्यन्तोऽयम् । अत एव नः अस्मदर्थम् ऊर्जं देवान्नं दध्यादि इषं व्रीह्यादि मनुष्यान्नं च आसुव आज्ञापय देहि । सुवतेराङ्पूर्वस्य दानार्थत्वात् । उभयान्नसद्भावे जीवनस्य सार्थकत्वादिति भावः । यद्वा– इषं देहि । तद्भक्षणे रोगादिपरिहारेण ऊर्जं बलं देहि । “ ऊर्ज बलप्राणनयोः ” इति धातोः । एवमिष्टं संप्रार्थ्य अनिष्टनिवृत्तिं याचमान आह– आरे दूरे । “ आराद्दूरसमीपयोः ” ( अको ३.३.२४२ ) इत्यभिधानात् । निकटेऽपि स्थितानां दुच्छुनाम् । दुष्टाः श्वान इवेति दुच्छुनः तेषाम् । अहितकारित्वात् तत्साम्यम् । कर्मणि षष्ठी । पृषोदरादित्वात् साधु । दुष्टान् शुनः सारमेयप्रायान् बाधस्व नाशय । सति दुर्जने जीवनाशक्तेः । ईश्वरपरत्वं स्पष्टम् ॥९॥

---

पुनन्तु मा देवजनाः पुनन्तु मनसा धियः ।
पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥१०॥

---

पुनन्तु । मा । देवजना इति देवऽजनाः । पुनन्तु । मनसा । धियः ।
पुनन्तु । विश्वा । भूतानि । जातवेद इति जातऽवेदः । पुनीहि । मा ॥ जिं ॥ ॥१०॥

---

आ– ‘ पुनन्तु मा देवजनाः ’ इति । लिङ्गोक्तदेवत्याऽनुष्टुप् । देवजनाः देवानुगाः ( मा ) मां पुनन्तु । ‘ मनसा धियः ’ । मनसा विवेकसंपन्नेन मनसा संजाताः धियः देवताविषयज्ञानानि कर्माणि वा मां पुनन्तु । विश्वा विश्वानि भुवनानि मा मां पुनन्तु । हे श्रीजातवेदः, मां पुनीहि ॥११॥

---

2. V2 जानातु for °जानीहि
7. M4 उभयार्थ° for उभयान्न°
8. V2 °निवृत्तियाचनम् for निवृत्तिं याचमानः [ L 9 ]
9. M4 आरात् for आरे, M4 उक्तत्वात् for अभिधानात्
10. M4 °कारत्वात् for °कारित्वात्

पयोग्रहाः ]

अ– ' पुनन्तु मा '। अनुष्टुप्, देवजनधीविश्वभूतजातवेददेवत्या। देवानां जनाः देवजनाः। देवानुगामिनो जनाः मा मां पुनन्तु । मनसा सह धियः बुद्धयः कर्माणि वा मां पुनन्तु। विश्वा विश्वानि। " *शेश्छन्दसि बहुलम् " ( पा ६.१.७० ) इति निलोपः। सर्वाणि भूतानि मां पुनन्तु। हे जातवेदः । वेद इति धननाम । जातं वेदो धनं भक्तानां यस्मात् स तथा । तत्संबोधनम्। जातवेदोऽग्ने, त्वमपि (मा) मां पुनीहि । अत्र पादादित्वात् क्रियापदानां न निघातः । अन्त्यस्य तु आमन्त्रितपरत्वादिति ज्ञेयम् ॥१०॥

पुवित्रे॑ण पुनीहि मा शुक्रेण॑ देव॒ दीद्य॑त् ।
अग्ने॒ क्रत्वा॒ क्रतूँ॒रनु॑ ॥११॥

पुवित्रे॑ण । पु॒नी॒हि॒ । मा॒ । शु॒क्रेण॑ । दे॒व॒ । दीद्य॑त् ।
अग्ने॑ । क्रत्वा॑ । क्रतू॑न् । अनु॑ ॥ यूं ॥११॥

आ– ' पवित्रेण ' इति । आग्नेयी गायत्री। हे देव, दीद्यत् दीप्यमान श्रीभगवन् अग्ने, शुक्रेण शुद्धेन पावित्रेण मां पुनीहि । क्रतून् संकल्पान् अनु जातेन क्रत्वा क्रतुना कर्मणा च हे अग्ने, मां पुनीहि ॥१२॥

अ– ' पवित्रेण पुनीहि '। अग्निदेवत्या गायत्री। हे अग्ने, देव शुक्रेण शुद्धेन पवित्रेण त्वं मा मां पुनीहि। किं भूतस्त्वम् ? दीद्यत् । अतिशयेन दीव्यतीति दीद्यत्। देदीप्यमानः । दीव्यतेर्यङ्लुगन्तं रूपम्। किं च– हे अग्ने, क्रतून् अनु । रेफागमोऽत्र छान्दसः। अस्माकं यज्ञान् संकल्पान् वा अनु लक्षीकृत्य क्रत्वा क्रतुना कर्मणा। तृतीयायाः नादेशाभावः। त्वं पुनीहि। यद्वा– अनु पश्चात् कृत्वा अङ्गोपाङ्गकर्मणा क्रतून् यज्ञांश्च पुनीहि सम्यक् कारयेत्यर्थः ॥११॥

यत् ते॑ पुवित्र॑मुर्चिष्य॑ग्ने वित॑तमन्त॒रा ।
ब्रह्म॒ तेन॑ पुनातु मा ॥१२॥

यत् । ते॒ । पु॒वित्र॑म् । अ॒र्चिषि॑ । अग्ने॑ । वित॑त॒मिति॒ विऽत॑तम् । अ॒न्त॒रा ।
ब्रह्म॑ । तेन॑ । पु॒ना॒तु॒ । मा॒ ॥ यां ॥१२॥

3. * [ पाणिनिमादृत्य शुद्धतामापादितोऽयं पाठः / लिखितपुस्तकेषु ' निशब्दो ' इत्यस्ति । ];
M4 नलोपः for निलोपः

11. S3 पाठस्तु पवित्रेण ... क्रतुंरनु इति for पवित्रेण इति ।

12. V2 इन्धनेन for शुद्धेन

आ– ' यत् ते पवित्रम् ' इति । आग्नेयी ब्राह्मी । गायत्री । तृतीयपादो ब्रह्मदेवत्यः । हे भगवन्, vअग्ने vयत् vते vपवित्रम् vअर्चिषि vविततम् । अर्चिषि परमे तेजसि । vअन्तरा मध्ये विततं ते तव यत् पवित्रं पावनहेतुरूपं विततम् अतिविस्तृतं रूपं पवित्रं तिष्ठति, तेन पवित्रेण मां पुनीहि । ' ब्रह्म तेन पुनातु ' । आत्मानन्दलक्षणं vब्रह्म, परं वा, यत् vतेन ब्रह्मणा मां vपुनातु । यद्वा – विततं यत् पवित्रं, तेन पवित्रेण अग्न्यनुजातेन ब्रह्मणा मां पुनातु ॥३३॥

अ– ' यत् ते ' । आग्नेयी गायत्री । तृतीयः पादः ब्रह्मदेवत्यः । हे अग्ने, vते तव vअर्चिषि ज्वालायाम् vअन्तरा मध्ये vयत् vब्रह्म त्रयीरूपं परब्रह्मरूपं वा । " द्वे ब्रह्मणी वेदितव्ये परा चैवापरा च " इति श्रुतेः । vयत् vपवित्रं vविततं विस्तृतं वर्तते vतेन पवित्रेण vमा मां भवान् vपुनातु । यद्वा– हे अग्ने, ते अर्चिषि अन्तरा विततं प्रसारितं, ततमिति यावत् । पवित्रं विष्णुचक्रं यदस्ति ।

" पवित्रं चरणं चक्रं लोकद्वारमपावृतम् ।
चक्रस्य नामधेयानि विष्णोर्हि परमात्मनः ।। " इत्यभिधानात् ।

तेन चक्रेण ब्रह्म हरिः मां vपुनातु । इति तप्तमुद्राधारणपरा ।

" पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।
अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तस्तत् समाशत ॥ " (ऋ ९.८३.१) ॥

इति समानार्थकबह्वृचश्रुतेः ॥१२॥

**पवमानः सो अद्य नः पवित्रेण विचर्षणिः ।**
**यः पोता स पुनातु मा ।।१३।।**

पवमानः । सः । अद्य । नः । पवित्रेण । विचर्षणिरिति विऽचर्षणिः ।
यः । पोता । सः । पुनातु ॥ मा ॥ क्रौँ ॥१३॥

आ– ' पवमानः सः ' इति । सोमदेवत्या गायत्री । तृतीयः पादो वायव्यः । vपवमानः पूयमानः vसः सोमः vअद्य अस्मिन्नहनि vनः अस्मान् vपवित्रेण पावनेन vविचर्षणिः द्रष्टा, कृताकृतं प्रत्यवेक्षकः मां पुनातु । vयः स्वभावतः vपोता पावनकर्ता वायुः vसः मां vपुनातु ॥३४॥

1. S3 पाठस्तु – यत्ते ... पुनातु मेति for यत्ते पवित्रमिति; S3 ब्रह्मी for ब्राह्मी
2. S3 परम° for परमे
8. M4 क्षात्रिय° for त्रयी°
21. S3 पवमानः ... पुनातु मेति ॥ for पवमान इति ।
22. V2 पूर्यमाणः for पूयमानः

पञ्चैयः ऋचः ]

अ– 'पवमानः सः'। सोमदेवत्या गायत्री । तृतीयः पादो वायुदेवत्यः । ˇसः प्रसिद्धः ˇपवमानः। पवतेऽसौ पवमानः शोधकः सोमः। ˇअद्य अस्मिन्नहनि ˇपवित्रेण ˇनः अस्मान् ˇपुनातु । कीदृशः सः ? ˇविचर्षणिः । विविधं चष्टे इति विचर्षणिः । कृताकृतद्रष्टा । सोमशब्दोऽत्र तदभिमानिचन्द्रपरः। चेतनव्यापारत्वाद्दर्शनस्य।

" आदित्यचन्द्रावनिलानलौ च, द्यौर्भूमिरापो हृदयं यमश्च।

अहश्च रात्रिश्च उभे च सन्ध्ये, धर्मश्च जानाति नरस्य वृत्तम् " ( मभा आदिपर्व ६८.२९ )

इति स्मृतेः। यद्वा- विशिष्टाश्चर्षणयो मनुष्या ऋत्विजो यस्य रसस्य तथा । किं च ˇयः ˇपोता। पुनाति पवते वा पोताऽस्ति, ˇसः वायुः ˇमा ˇपुनातु ॥१३॥

---

उभाभ्यां देव सवितः पवित्रेण सवेन च ।

मां पुनीहि विश्वतः ॥१४॥

---

उभाभ्याम् । देव । सवितरिति सवितः । पवित्रेण । सवेन । च ।

माम् । पुनीहि । विश्वतः॥ खौ ॥१४॥

---

आ– ' उभाभ्यां देव ' इति । सवितृदेवत्या गायत्री । हे ˇदेव ˇसवितः । ' पवित्रेण सवेन च ' । अनेन ˇपवित्रेण ˇसवेन अनेन यज्ञेन ˇच इति ˇउभाभ्याम् पवित्रसवाभ्यां ˇमां ˇपुनीहि ˇविश्वतः सर्वतो मां पावय ॥४५॥

---

अ– ' उभाभ्यां देव ' । सवितृदेवत्या गायत्री । हे ˇदेव क्रीडादिगुणयुक्त ˇसवितः सर्वप्रेरक, ˇउभाभ्यां वस्तुभ्यां कृत्वा ˇविश्वतः सर्वतः ˇमां ˇपुनीहि । उभाभ्यां काभ्याम् ? ˇपवित्रेण अजाविलोम-निर्मितेन, ˇसवेन अभ्यनुज्ञया ˇच। त्वदाज्ञया यज्ञसिद्धिरिति भावः ॥१४॥

---

4. M4 °मान° for °मानि°

13. S3 पाठस्तु उभाभ्यां°...विश्वत इति for उभाभ्यां ... देवे रति; V2 before सवितः adds हे

14. V2 यानेन for यज्ञेन

16. M4 after गुण° ins. °गण°

17. P2 M4 after सर्वतः ins. अंहसः

वैश्वदेवी पुनती देव्याऽगाद्यस्यामिमा बह्व्यस्तन्वो वीतपृष्ठाः ।
तया मदन्तः सधमादेषु वयꣳ स्याम पतयो रयीणाम् ॥१५॥

वैश्वदेवीति वैश्वऽदेवी । पुनती । देवी । आ । अगात् । ।
यस्याम् । इमाः । बह्व्यः । तन्वः । वीतपृष्ठा इति वीतऽपृष्ठाः ।
तया । मदन्तः । सधमादेष्विति सधऽमादेषु । वयम् । स्याम । पतयः । रयीणाम् ॥ ट्रौं ॥१५॥

आ– ' वैश्वदेवी ' इति । वैश्वदेवी त्रिष्टुप् । [v]वैश्वदेवी विश्वेदेवदेवत्या सुराकुम्भी [v]पुनती पावनं कुर्वाणा [v]देवी देवता [v]आ [v]अगात् आगता । [v]यस्यां, देव्यः [v]इमाः [v]बह्व्यः [v]तन्वः [v]बहूनि शरीराणि [v]वीतपृष्ठाः कामप्राप्ततन्वः सन्ति । यद्वा– यस्याम् इमाः तन्वः विस्तृताः वीतपृष्ठाः विगतापरभागाः निरन्तरधाराः बह्व्यः सन्ति । [v]तया सुराकुम्भ्या देव्या [v]मदन्तः मोदमानाः [v]सधमादेषु सहहर्षस्थानेषु [v]वयं [v]रयीणां धनानां [v]पतयः [v]स्याम भवेम ॥४६॥

अ–' वैश्वदेवी पुनती ' . विश्वेदेवदेवत्या त्रिष्टुप् । इयं प्रवह्लिकाऽज्ञाताभिधेया । ततः कांचिद्देवता- मुद्दिश्य व्याख्यायते । ततश्च दक्षिणाग्नेरुपरि शतातृण्णा कुम्भी क्षरति । तां सौत्रामणीं वा वाचं वा उखां वा वदामः । [v]देवी द्योतमाना सुराकुम्भी [v]आ अगात् [v]आगता । कीदृशी ? [v]वैश्वदेवी विश्वेभ्यो देवेभ्यो हिता, विश्वेभ्यो देवेभ्यो आगता वा । [v]पुनती पावनं कुर्वती । [v]यस्यां कुम्भ्याम् [v]इमाः प्रत्यक्षतो दृश्यमानाः [v]बह्व्यः [v]तन्वः शरीरप्रायाः शतधारा वर्तन्ते । कीदृश्यस्तन्वः ? [v]वीतपृष्ठाः । वीतं कामितं पृष्ठं स्वरूपं यासां ताः । सुराधारा हि सुरैः काम्यन्ते । [v]तया कुम्भ्या [v]सधमादेषु यज्ञस्थानेषु । " सध माद- स्थयोश्छन्दसि " ( पा ६.३.९६ ) इति सहशब्दस्य सध इत्यादेशः । देवाः सह येषु माद्यन्तीति व्युत्पत्त्या सधमादो यज्ञः । तत्र [v]मदन्तः मोदमानाः सन्तः [v]वयं [v]रयीणां धनानां [v]पतयः [v]स्याम भवेम ॥ १५ ॥

ये समानाः समनसः पितरो यमराज्ये ।
तेषाँल्लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् ॥१६॥

ये । समानाः । समनस इति सऽमनसः । पितरः । यमराज्य इति यमऽराज्ये ।
तेषाम् । लोकः । स्वधा । नमः । यज्ञः । देवेषु । कल्पताम् ॥ त्रि ॥१६॥

6. S3 पाठस्तु वैश्वदेवी ... रयीणामिति for वैश्वदेवीति
9. V2 °परा° for °पर°

आ– यजमानो जुहोति– ‘ ये समानाः ’ इति । द्वे अनुष्टुभौ । आद्या पितृदेवत्या । द्वितीया यजमानाशीः । vये vपितरः vसमानाः जात्यादिभिः समानाः vसमनसः vयमराज्ये यमलोके । एवंगुणाः पितरो ये vतेषां पितॄणां vलोकः आयतनम् । vस्वधा vनमः । स्वधाशब्दोपलक्षितमन्नमस्तु । नमः नमस्कारोपलक्षिता स्तुतिश्च भवतु । ‘ यज्ञः देवेषु ’ । vदेवेषु एवंविधः vयज्ञः vकल्पताम् समर्थीक्रियताम् ॥४७॥

---

अ– कात्यायनः – “ ये समाना इति यजमानो जुहोति ” ( काश्रौ १९·३·२७ ) इति । सकृत् गृहीतमाज्यं दक्षिणाग्नौ प्राचीनावीती दक्षिणामुखो यजमानो जुह्वा जुहोतीत्यर्थः ॥

‘ ये समानाः ’ । द्वे अनुष्टुभौ । आद्या पितृदेवत्या । vयमराज्ये, यमस्य राज्यं यस्मिंस्तत्र, यमलोक इत्यर्थः vये vपितरः वर्तन्ते । “ धर्मराजः पितृपतिः ” ( अको १.१.६१ ) इत्यभिधानात् । कीदृशास्ते ? vसमानाः जातिरूपादिभिः तुल्याः । vसमनसः समानमेककार्यविषयं मनो येषां ते तथा । “ समानस्य छन्दसि° ” ( पा ६·३·८४ ) इति समानशब्दस्य सादेशः । vतेषां पितॄणां vलोकः । विभक्तिव्यत्ययाल्लोके । vस्वधा vनमः । स्वधाशब्दोपलक्षितं नमोऽन्नमस्तु । यद्वा– अन्नं नमस्कारश्चास्तु । vयज्ञः तेषु vदेवेषु vकल्पताम् । देवांस्तर्पयितुं समर्थो भवत्वित्यर्थः । अयमर्थो ब्राह्मणे आम्नातः – “ स जुहोति ये समानाः ... इति पितॄनेव यमे परिददात्यथो पितृलोकमेव जयति । सर्वे यज्ञोपवीतानि कृत्वोत्तरमग्निमुपसमायन्त्ययं वै लोक उत्तरोऽग्निरस्मिन्नेव लोके प्रतितिष्ठन्ति .. ” ( शब्रा १२·८·१·१९ ) इत्यादौ ॥१६॥

---

ये स॒मा॒नाः सम॑नसो जी॒वा जी॒वेषु॑ माम॒काः ।
तेषा॒ꣳ श्रीर्मयि॑ कल्पताम॒स्मिँल्लो॒के श॒तꣳ समाः॑ ॥१७॥

---

जी॒वाः । जी॒वेषु॑ । मा॒म॒काः ।
तेषा॑म् । श्रीः । मयि॑ । क॒ल्प॒ता॒म् । अ॒स्मिन् । लो॒के । श॒तम् । समाः॑ ॥ त्वा॒ ॥१७॥

---

आ– उत्तरेऽग्नावाहुतिं जुहोति– ‘ ये समानाः समनसः ’ इति । ‘ जीवा जीवेषु मामकाः ’ । vजीवेषु जीवत्सु मध्ये vये vजीवाः जीवनवन्तः vमामकाः vतेषां संबन्धिनी या

---

1. S3 पाठस्तु – ये – कल्पतामिति for ये समाना इति
4. V2 °लक्षिता for °उपलक्षिता
8–9. P2 om. ये समानाः ... यमलोक इत्यर्थः ।
15. M4 अभि° for उप°
21. S3 पाठस्तु – ये ... शतꣳ समा इति for ये समानाः समनस इति

Vश्रीः सा श्रीः Vमयि Vकल्पताम् क्लृप्ता भवतु । तान् परित्यज्य मामकान् आश्रयत्वित्यर्थः । कुत्र ? कियन्तं कालमिति । Vअस्मिन् Vलोके Vशतम् Vसमाः शतसंवत्सरं मयि श्रीः कल्पताम् ॥४८॥

---

अ– कात्यायनः– " उत्तरे च यज्ञोपवीत्युत्तरया " ( काश्रौ १९·३·२८ ) [ इति ] । उत्तरे उत्तरवेदिस्थाहवनीये कृतसव्यो यजमान उत्तरया अग्निमय्या ऋचा जुहोतीत्यर्थः । ब्राह्मणमुक्तमेव ॥

' ये समानाः ' । यजमानाशीः श्रीदेवत्या । जीवन्तीति Vजीवाः प्राणिनः । तेषु Vजीवेषु मध्ये ये Vसमानाः Vसमनसः Vमामकाः मदीयाः जीवाः सपिण्डाः सन्ति । मम इमे मामकाः । " तवकममकावेकवचने " ( पा ४·३·३ ) इत्यस्मच्छब्दस्य ममकादेशोऽण्प्रत्ययश्च । Vअस्मिन् Vलोके भूलोके Vशतं Vसमाः शतवर्षपर्यन्तम् । " हायनो स्त्रीऽशरत्समाः " ( अको १·४·२० ) इत्यभिधानात् । ' शतं समाः ' इति । " शतं वर्षाणि जीव्यासम् " ( शब्रा १.९.३.१९ ) इति श्रुतेश्च । Vतेषां मामकानां जीवानां Vश्रीः Vमयि Vकल्पताम् ॥ [तां] त्यक्त्वा मयि क्लृप्ता भवतु । मामाश्रयतामित्यर्थः । गोत्रिणो हि पापात्मानः सहजशत्रवोऽत एव प्रार्थ्यते ॥१७॥

---

द्वे सृती अश्रृणवं पितॄणामहं देवानामुत मर्त्यानाम् ।
ताभ्यामिदं विश्वमेजत् समेति यदन्तरा पितरं मातरं च ॥१८॥

---

द्वे इति द्वे । सृती इति सृती । अश्रृणवम् । पितॄणाम् । अहम् ।
देवानाम् । उत । मर्त्यानाम् ।
ताभ्याम् । इदम् । विश्वम् । एजत् । सम् । एति ।
यत् । अन्तरा । पितरम् । मातरम् । च ॥ रौं ॥१८॥

---

आ– पयः समन्वारब्धेषु जुहोति– ' द्वे सृती ' इति । देवयानपितृयाणदेवत्या त्रिष्टुप् । Vद्वे Vसृती मार्गौ । Vअहं Vअश्रृणवं श्रुतवानस्मि । ' पितॄणामहं देवानामुत मर्त्यानाम् ' । Vपितॄणाम् एका सृतिः, Vदेवानाम् Vउत अपि च । Vमर्त्यानां मरणधर्मयुक्तानां मृत्वा परं लोकं गच्छतां द्वे सृती इति । मन्त्रवाक्ये ' अहमशृणवम् ' । पितृयाणमार्गगामिनां

---

11. M4 om. गोत्रिणो ... प्रार्थ्यंते [ L 12 ]
19. S3 °आरब्धौ for °आरब्धेषु; S3 द्वे . मातरं चेति for द्वे सृती इति ।
21. V2 S3 एक° for एका
22. V2 S3 मुक्त्वा for मृत्वा

पैत्र्यः ऋचः ]

पितॄणां, देवयानमार्गगामिनां देवानां मार्गौ । ˇताभ्यां सृतिभ्याम् ˇइदं ˇविश्वं जगत् ˇएजत् चलत् ˇसमेति । उदग्गच्छत्यागच्छति च । ‘ यत् अन्तरा पितरं मातरं च ’ । द्यौः पिता पृथिवी माता । द्यावापृथिव्यौ ˇअन्तरा मध्ये जगदेजत् समेति ॥४९॥

---

अ– कात्यायनः – “ अन्वारब्धेषु पयो जुहोति द्वे सृती इति ” ( काश्रौ १९.३.२९ ) इति । ऋत्विग्यजमानेषु कृत्वान्वारब्धेषु सत्सु अध्वर्युः पयो जुहोतीत्यर्थः । ‘ द्वे सृती ’ देवयानपितृयाणदेवत्या त्रिष्टुप् । ˇमर्त्यानां मरणधर्मिणां प्राणिनां ˇद्वे ˇसृती द्वौ मार्गौ । “ पद्धतिः सरणिः सृतिः ” ( अको २.११.५ ) इत्यभिधानात् । ˇअहम् ˇअशृणवम् श्रुतवानस्मि श्रुतितः । “ स एष देवयानो वा पन्थाः ” ( शब्रा १.९.३.२ ) इति श्रुतेः । के सृती इत्यत आह । ˇदेवानां मार्ग एकः । ˇउत अपि च ˇपितॄणां मार्ग इति । ‘ पितरं मातरं च ’ । द्यौः पिता पृथिवी माता । “ असौ वै पितेयं माता ” ( शब्रा १२.८.१.२१ ) इति श्रुतेः । ˇपितरं ˇमातरं ˇच ˇअन्तरा भूलोकद्युलोकयोर्मध्ये ˇयत् ˇएजत् कम्पमानम् । ‘ एजृ कम्पने ’ इति धातोः । चेष्टमानम् । ˇविश्वं सर्वम् ˇइदं प्राणिजातं ˇताभ्यां सृतिभ्यां देवयानपितृयाणाभ्यां ˇसमेति [ सं ] गच्छते । ताभ्यां सृतिभ्यामिदं सुहुतमस्त्विति शेषः । एष एवार्थो ब्राह्मणे – “ स जुहोति द्वे सृती अशृणवं पितॄणामहम् इति । द्वे वाव सृती इत्याहुर्देवानां चैव पितॄणां चेति । ताभ्यामिदं विश्वमेजत् समेतीति ताभ्याꣳ हीदꣳ सर्वमेजत् समेति यदन्तरा पितरं मातरं च इत्यसौ वै पितेयं माताऽऽभ्यामेव पितॄन् देवलोकमपि नयति ” ( शब्रा १२.८.१.२१ ) इति ॥१८॥

---

इदꣳ हविः प्रजननं मे अस्तु दशवीरꣳ सर्वगणꣳ स्वस्तये ।
आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि ।
अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धत्त ॥१९॥(३)

---

इदम् । हविः । प्रजननमिति प्रऽजननम् । मे । अस्तु ।
दशवीरमिति दशऽवीरम् । सर्वगणमिति सर्वऽगणम् । स्वस्तये ।
आत्मसनीत्यात्मऽसनि । प्रजासनीति प्रजाऽसनि ।
पशुसनीति पशुऽसनि । लोकसनीति लोकऽसनि । अभयसनीत्यभयऽसनि ।
अग्निः । प्रजामिति प्रऽजाम् । बहुलाम् । मे । करोतु ।
अन्नम् । पयः । रेतः । अस्मासु । धत्त ॥ धीः ॥१९॥

---

4. M4 om. कात्यायनः अन्वा° ... °तीत्यर्थः [ L 5 ]

6. M4 °धर्मवतां for °धर्मिणां

6. M4 om. प्राणिनां ... नयति इति [ L 15 ]

आ– शेषं यजमानो भक्षयति । ‘ इदं॒ हविः ’ इति । त्र्यवसाना अष्टिः । यजमानाशीः । Vइदं पयोलक्षणं Vहविः Vप्रजननम् उत्पादकं Vमे मम Vअस्तु । Vदशवीरम् । “ प्राणा वै दशवीराः ” ( शब्रा १२.८.१.२२ ) इति श्रुतेः । तद्वद्धविः । Vसर्वगणं च । “ अङ्गानि वै सर्वगणाः अङ्गान्येवात्मन् धत्ते ” ( शब्रा १२.८.१.२२ ) इति । अङ्गवद्धविः सर्वगणम् । एवंविधं हविः मे मम Vस्वस्तये अविनाशाय । पुनरपि हविर्विशेष्यते । Vआत्मसनि । यद्धविः आत्मानं सनोति संतनुत इत्यात्मसनि । यद्धविः प्रजां सनोतीति Vप्रजासनि । पशून् सनोतीति Vपशुसनि । लोकं सनोतीति Vलोकसनि । अभयं सनोतीति Vअभयसनि । इदं हविरिति संबन्धः । [ Vअग्निः ] Vमे मम Vबहुलां बहुतम सन्निवृत्तिद्वारा Vप्रजां मे Vकरोतु । Vअन्नं शाल्यन्नादिकं, Vपयः क्षीरादिकं, Vरेतः वीर्यं प्रजोत्पत्तिकारणम् Vअस्मासु Vधत्त, हे ऋत्विजः स्थापयत ॥५०॥

---

अ– कात्यायनः – “ शेषं यजमानो भक्षयतीदं॒ हविरिति ” ( काश्रौ १९.३.२० ) इति । उखास्थं शेषं पयो यजमानोऽश्नातीत्यर्थः ॥

‘ इदं॒ हविः ’ । यजमानाशीर्दैवत्या त्र्यवसानाष्टिः । एको व्यूहः । Vइदं पयोरूपं Vहविः Vमे मम Vस्वस्तये अविनाशाय Vअस्तु । कीदृशं हविः ? Vप्रजननम्, प्रजनयतीति प्रजनन, प्रजोत्पादकम् । Vदशवीरं दश वीराः प्राणा यस्मात् तृप्यन्तीति दशवीरम् । यस्मिन् पीते दशानां प्राणापानव्यानोदानसमान-नागकूर्मकृकरदेवदत्तधनंजयसंज्ञानां प्राणानां स्वास्थ्यं भवतीत्यर्थः । तथा Vसर्वगणं, सर्वे गणा अङ्गानि यस्मिंस्तत् । तथा यत्र पीतेऽङ्गानि च स्वस्थानि स्युः । Vआत्मसनि आत्मानं सनोति सनति, ददाति संभजते वेति । तथा ‘ षणु दाने ’ तनादिः, ‘ षण संभक्तौ ’ भ्वादिः । एवमग्रेऽपि । प्रजां सनोतीति Vप्रजासनि । पशून् सनोतीति Vपशुसनि । लोकमैहिकं सनोतीति Vलोकसनि । अभयं स्वर्गं सनोतीति Vअभयसनि ॥

एवं हविः प्रार्थ्य अग्निं प्रार्थयते । Vअग्निः Vमे मम Vप्रजां Vबहुलां प्रवृद्धाम् उत्पत्तिज्ञानै-श्वर्यादिभिः संपन्नां Vकरोतु ॥

अग्निमुक्त्वा ऋत्विजः प्रार्थयते । हे ऋत्विजः, Vअस्मासु Vअन्नं व्रीह्यादि, Vपयः दुग्धं, Vरेतः वीर्यवत्तां च यूयं Vधत्त स्थापयत ॥

एषोऽर्थो ब्राह्मण आम्नायते– “ स भक्षयतीदं॒ हविः प्रजननं मे अस्त्विति । प्रजननं॒ हि यदि पयो यदि सोमो दशवीरमिति प्राणा वै दशवीराः प्राणानेवात्मन् धत्ते सर्वगणमित्यङ्गानि वै सर्वे गणाः । अङ्गान्येवात्मन् धत्ते स्वस्तय आत्मसनीति आत्मानमेव सनोति प्रजासनीति प्रजामेव सनोति पशुसनीति पशूनेव सनोति लोकसनीति लोकाय वै यजते तमेव यजत्यभयसनीति ।

---

1. S2 पाठस्तु – इदम् ... धत्तेति for इदं॒ हविरिति ।

6. V2 after आत्मानं adds स जातवेदाः

16. M4 तत्र for यत्र

पैत्र्यः ऋचः ]

स्वर्गो वै लोकोऽभयः स्वर्ग एव लोकेऽन्ततः प्रतितिष्ठत्यग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धत्तेति तद्य एवैनमेतद्याजयन्ति तानेतदाहैतन्मयि सर्वं धत्तेति " ( शब्रा १२.८.१.२२ ) ॥

ईश्वरपरत्वे तु तन्निवेदितोपहारादिविषयमेतत् । " अल्पं निवेदितं मह्यं भूयर्थायोपकल्पताम् " इत्यादिस्मृतेः ॥१९॥

इत्येकविंशाध्याये भावार्थदीपिकायां तृतीयोऽनुवाकः ॥३॥

---

[ अथ चतुर्थोऽनुवाकः । ]

उदी॑रता॒मव॑र॒ उत्परा॑स॒ उन्म॑ध्य॒माः पि॒तरः॑ सो॒म्यासः॑ ।
असुं॒ य ई॒युर॑वृ॒का ऋ॑त॒ज्ञास्ते नो॑ऽवन्तु पि॒तरो॒ हवे॑षु ॥१॥

---

उत् । ई॒र॒ता॒म् । अव॑रे । उत् । परा॑सः । उत् । म॒ध्य॒माः । पि॒तरः॑ । सो॒म्यासः॑ ।
असु॑म् । ये । ई॒युः । अ॒वृ॒काः । ऋ॒त॒ज्ञा इत्यृ॒त॒ऽज्ञाः ।
ते । नः॒ । अ॒व॒न्तु । पि॒तरः॑ । हवे॑षु ॥ ग्रौं ॥ १ ॥

---

आ– ' उदीरताम् ' इति । त्रयोदश पैत्र्यस्त्रिष्टुभः । शङ्खः । जगत्येकादशी । यजमानवाचनम् । ईर गतौ कम्पने च । '' ईर्ते '' इति निघण्टुः ( निघण्टु २·१४·७९ ) । [v]उदीरताम् ऊर्ध्वं क्रमताम् । पूर्वस्थितस्थानात् उत्कृष्टं स्थानं गच्छन्तु । पितॄन् विशिनष्टि– ' अवरे ' इति । [v]अवरे अस्मिन् लोके स्थिता ये [v]पितरः उत्कृष्टं स्थानम् उदीरताम् । ' पितरः उत् परासः ' । परा इव परासः । [v]उत् [v]परासः उत्कृष्टाः [v]पितरः । अमुष्मिन् लोके ये स्थिताः उत् परासः पितरः तस्मादपि स्थानाद्विशिष्टतरं स्थानमुदीरतां गच्छन्तु । [v]उत् [v]मध्यमाः । मध्ये भवाः मध्यमाः । तत्राप्युत्कृष्टाः उन्मध्यमास्ते पितरोऽपि विशिष्टतरं स्थानम् उदीरताम् । [v]सोम्यासः । सोम्या इव सोम्यासः सोमसंपादिनः सोम्या उदीरताम् । ' असुं य ईयुः ' । [v]असुं प्राणं प्राणवृत्तिं [v]ये [v]ईयुः । [v]अवृकाः । वृका हिंसकाः अमित्राः । [ न वृकाः ] अवृकाः । [v]ते [v]पितरः उत्कृष्टं स्थानम् उद्गच्छन्तु । [v]ऋतज्ञाः स्वाध्यायनिष्ठाः वा ते पितरः अतिविशिष्टस्थानम् उद्गच्छन्तु । एवं स्वकीयेन च कर्मणा अस्मदीयेन च ये उन्नतिं प्राप्ताः, [v]हवेषु आह्वानेषु । अस्माभिराहूताः संतर्पिताश्च ये पितरः ते [v]नः अस्मान् [v]अवन्तु पालयन्तु ॥५१॥

---

12. S3 पाठस्तु – उदीरताम् ... हवेष्विति for उदीरताम् इति ।

23. V2 S3 क्षत्रियेषु अज्ञानेषु for हवेषु आह्वानेषु; V2 S3 आहृताः for आहूताः

अ– कात्यायनः – " सोमवतां बर्हिषदामग्निष्वात्तानां च " ( काश्रौ १९.३.११ ) [ इति ]। " उदीरताम् " ( मासं १९.४९ ), " अङ्गिरसो न पितरः " ( मासं १९.५० ), " ये नः पूर्वे " ( मासं १९.५१ ) इत्यृक्त्रयस्य " अग्निष्वात्तान् ( मासं १९.६१ ) इत्यन्यायाश्च विनियोगः कल्पकृतोक्तः। द्वितीयतृतीये काण्वशाखायां न पठ्येते । तथापि कर्मसमवेतार्थप्रकाशकत्वात् ते अपि व्याक्रियेते । " त्वं सोम " ( मासं १९.५२-५४ ) इति तृचं सोमवताम् । " बर्हिषदः " ( मासं १९.५५.५७ ) इति तृचं बर्हिषदाम् । " आ यन्तु नः " ( मासं १९.५८-६० ) इति तृचम् अग्निष्वात्तानाम् । इत्यृग्जातमध्वर्युर्यजमानं वाचयतीत्यर्थः ॥

'उदीरताम्' । त्रयोदश शङ्खदृष्टाः पितृदेवत्याः । एकादशी " अग्निष्वात्ताः पितरः " ( मासं १९.५९ ) । इयं जगती । अन्यास्त्रिष्टुभः । vअवरे ये vपितरः अस्मिन् लोकेऽवस्थितास्ते पितरः vउदीरताम् उर्ध्वं क्रमन्ताम्, ऊर्ध्वलोकं गच्छन्तु । ईर कम्पे इति धातोः अदादेर्लोट् । तथा vउत् vपरासः पराः परस्मिन् लोकेऽवस्थिताः पितर उदीरतां, तस्मादपि परं स्थानं गच्छन्तु । तथा vउत् vमध्यमाः । मध्ये भवाः मध्यमाः । तेऽपि तत् स्थानं त्यक्त्वा उत्कृष्टं स्थानमुदीरताम् । कीदृशास्ते ? vसोम्यासः सोम्याः संपादकाः । vये च vअसुं प्राणम् vईयुः । वातात्मानो वातलोकं वा गताः। ते सर्वे vपितरःvहवेषु आह्वानेषु vनः अस्मान् vअवन्तु रक्षन्तु । कीदृशाः? vअवृकाः । नास्ति वृकः शत्रुर्येषां ते । यद्वा– वृको हिंसकस्तद्भिन्ना अवृकाः । अत एव vऋतज्ञाः सत्यज्ञा यज्ञज्ञा वा । स्वाध्यायनित्ययज्ञनिष्ठा वा । ऋतशब्दस्यानेकार्थत्वात् ।

" अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः।
तेषाꣳ वयꣳ सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥ " ( मासं १९.५० )

ये vनः अस्माकं vपितरः सन्ति तेषां vसुमतौ शोभनबुद्धौ vस्याम भवेम । अस्तेर्लिङ् । ते अस्मासु सुमतिं कुर्वन्त्वित्यर्थः। अपि तथा vतेषां vभद्रे कल्याणकारिणि vसौमनसे शोभनमनस्त्वे वयं स्याम तत् प्रियकारिणो वयं भवेमेत्यर्थः । कीदृशानाम् ? vयज्ञियानां यज्ञप्रियाणाम् । कीदृशाः ? पितरः ? vअङ्गिरसः । अङ्गिरसो बहून्यपत्यानि । अङ्गिरसः बहुत्वे तद्धितलोपः । पुनः कीदृशाः vनवग्वाः नवा नूतना ग्वा गतिर्येषां ते नवग्वाः । नवा नवनीया स्तोतव्या वाग्वा येषामिति वा । पुनः कीदृशाः ? vअथर्वाणः । अथर्वमुनेरपत्यत्वात् तथा । भृगोरपत्यानि vभृगवः । सोमार्हत्वात् vसोम्यासः ॥

" ये नः पूर्वे पितरः सोम्यासोऽनूहिरे सोमपीथं वसिष्ठाः।
तेभिर्यमः सꣳरराणो हवीꣳष्युशन्नुशद्भिः प्रतिकाममत्तु ॥ " ( मासं १९.५१ )

vनः अस्माकं vये vपूर्वे vपितरः vसोमपीथं सोमपानम् vअनूहिरे अनुवहन्ति स्म । देवान् प्रापितवन्तः। वह प्रापण इत्यस्माल्लिट् । कीदृशाः ? vसोम्यासः सोमसंपादकाः । वसिष्ठापत्यत्वात् vवसिष्ठाः । vतेभिः तैः पितृभिः vसंरराणः प्रीयमाणः vयमः पित्राधिपतिः । vप्रतिकामं यथाकामम् अस्मात् संपादितानि vहवींषि vअत्तु प्राश्नातु । रा दान इति धातोः शानचि द्वित्वे रराणेति रूपसिद्धिः । कीदृशो यमः ? vउशन् । वष्टि कामयत इति उशन् । वश कान्ताविति धातुः । शतृप्रत्ययः । कामयमानः । कीदृशैः पितृभिः ? vउशद्भिः । उशन्तीत्युशन्तस्तैः कामयमानैः ॥१॥

12. M4 om. मध्ये भवा मध्यमाः

14. M4 सर्वेऽपि for सर्वे; M4 वातात्मना for वातात्मानो

22. M4 om. पुनः ... येषामिति वा [ L 23 ]

सोमवतां पितॄणाम् ऋचः ]

त्वꣳ सोम॒ प्र चि॑कि॒तो म॑नी॒षा त्वꣳ रजि॑ष्ठ॒मनु॑ नेषि॒ पन्था॑म् ।
तव॒ प्रणी॑ती पि॒तरो॑ न इन्दो दे॒वेषु॒ रत्न॑मभजन्त॒ धीरा॑: ।।२।।

त्वम् । सो॒म॒ । प्र । चि॒कि॒तः । म॒नी॒षा । त्वम् । रजि॑ष्ठम् । अनु॑ । ने॒षि॒ । पन्था॑म् ।
तव॑ । प्रणी॑ती । प्रनी॒ती॒ति॒ प्रऽनी॑ती । पि॒तर॑: । न॒: । इ॒न्दो॒ इती॑न्दो ।
दे॒वेषु॑ । रत्न॑म् । अ॒भ॒ज॒न्त॒ । धीरा॑: ॥ झौं ॥२॥

आ – ' त्वꣳ सोम ' इति । हे Vसोम, Vत्वं Vप्रचिकितः । चिकित्वान् चेतनावान् । प्रकर्षेण चेतनावान् प्रचेतनायुक्तः प्रचिकितः । यद्वा– कित ज्ञाने । प्रकर्षेण ज्ञातोऽसि । Vमनीषा । इष गतिहिंसादर्शनेषु । व्यत्ययः । मनीषया प्रज्ञया युक्तः Vत्वं Vरजिष्ठम् ऋजुतरं Vपन्थां पन्थानं देवयानाख्यं मार्गम् Vअनुनेषि अनुनयसि । Vतव Vप्रणीती । व्यत्ययः । प्रणीत्या प्रापयन् हे Vइन्दो रसविक्लेदनसंपन्न, ( Vनः ) अस्माकं Vपितरः Vधीराः धीमन्तो विशिष्टं कर्म कृत्वा Vदेवेषु मध्ये Vरत्नं रमणीयं पदम् Vअभजन्त सेवितवन्तः ॥५२॥

अ– ' त्वꣳ सोम प्र चिकितः ' । हे Vसोम Vत्वं Vमनीषा मनीषया । तृतीयाया पूर्वसवर्णदीर्घः । स्वप्रज्ञया Vरजिष्ठम् ऋजुतमं देवयानलक्षणं 'Vपन्थां पन्थानम् Vअनुनेषि अनुनयसि प्रापयसि शिष्टानी(नि?)ति शेषः । अत्यन्तम् ऋजुः रजिष्ठः । " अतिशायने तमबिष्ठनौ " ( पा ५.३.५५ ) इतीष्ठन् प्रत्ययः । " विभाषर्जोश्छन्दसि " ( पा ६.४.१६२ ) इति ऋकारस्य रेफः । " अयस्मयादीनि छन्दसि " ( पा १.४.२० ) इति सर्वनामस्थानेऽपि पदसंज्ञायां " नलोपः प्रातिपदिकान्तस्य " (पा ८.२.७) इति नलोपः । (यद्वा–) "दृष्टानुविधिश्च छन्दसि" ( पा १.१.६ मभा ) इति र-(न ?)स्याकारे सति पन्थामिति रूपम् । अनुनेषि । नयतेः शपिलुप्ते गुणे च सति लिटि रूपम् । कीदृशस्त्वम् ? Vप्रचिकितः प्रकर्षेण चिकितः चिकित्वान् चेतनावान् प्रकृष्टचेतनायुक्तः । यद्वा– [ प्र ] चिकितः प्रकृष्टज्ञानवान् । कित ज्ञाने इति धातोर्द्विरुक्तस्य शप्प्रत्ययान्तस्य रूपम् । यद्वा– ' प्रचिकितः ' इत्यामन्त्रितं रकारान्तं सोमविशेषणम् । सर्वानुदात्तत्वात् । किं च– हे Vइन्दो, सर्वैश्वर्यप्रद सोम, Vनः अस्माकं Vपितरः Vतव Vप्रणीती प्रणीत्या । विभक्तेः पूर्वसवर्णत्वात् । अभ्यनुज्ञानेन Vदेवेषु देवानां Vरत्नं

6. S3 पाठस्तु – त्वꣳ सोम ... धीरा इति for ' त्वꣳ सोम ' इति; V2 चेतन° for चेतना°

7. V2 after प्रकर्षेण adds– चेतना प्रचेतना

8. V2 उरुतर° for ऋजुतरं

12. M4 om. मनीषया

रमणीयं यज्ञफलरूपं स्थानम् अभजन्त सिषेविरे। सोमयागेनैव स्वर्गप्राप्तेः। अत एव धीराः धीमन्त यज्ञस्वरूपज्ञानवन्तः। यद्वा– हे इन्दो सोम, नः अस्माकं धीराः पितरः तव प्रणीत्या सोमयाग-प्रयोगेन करणेन वेदेषु मध्ये रत्नं सर्वोत्तमं परब्रह्म अभजन्त भजानन्। "तमेतं वेदानुवचनेन ब्राह्मण विविदिष्यन्ति यज्ञेन दानेन तपसाऽनाशकेन" ( बृउ ४.४.२२ ) इति श्रुतेः ॥२॥

---

त्वया हि नः पितरः सोम पूर्वे कर्माणि चक्रुः पवमान धीराः ।
वन्वन्नवातः परिधीँरपोर्णु वीरेभिरश्वैर्मघवा भवा नः ॥३॥

---

त्वया । हि । नः । पितरः । सोम । पूर्वे । कर्माणि । चक्रुः । पवमान । धीराः ।
वन्वन् । अवातः । परिधीनिति परिऽधीन् । अप । ऊर्णु ।
वीरेभिः । अश्वैः । मघवेति मघऽवा । भव । नः ॥ ऋः ॥३॥

---

आ– 'त्वया हि नः' इति। हे पवमान हे सोम, त्वया हि त्वयैव नः अस्माकं पूर्वे धीराः धीमन्तः पितरः कर्माणि विहितकर्माणि चक्रुः। 'वन्वन्नवातः परिधीन्'। यस्त्वं वन्वन् संभजमानः। वन षण संभक्तौ। अस्मदीयानि कर्माणि अवातः वाताद्युपद्रवरहितः सन् परिधीन् सर्वतः परिनिहितान् यज्ञोपद्रवकारिणः अपोर्णु। ऊर्णुञ् आच्छादने। अपगमय। 'वीरेभिरश्वैर्मघवा भवा नः।' वीरेभिः अश्वैः वीरैश्च सहितः नः अस्माकं मघवा धनवान् भव। ॥३॥

---

अ- 'त्वया हि'। हे सोम हे पवमानशोधक, नः अस्माकं धीराः धीमन्तः पूर्वे पूर्वजाः पितरः हि यस्मात् कारणात् त्वया कृत्वा कर्माणि यज्ञादीनि चक्रुः। अतोऽहं प्रार्थये। त्वं परिधीन् परिनिहितान् यज्ञोपद्रवकारिणः दुष्टान्। रेफागमश्छान्दसः। अपोर्णु अपगमय। ऊर्णुञ् आच्छादने इत्यस्माल्लोट्। परि आत्मानं दधति सर्वत्र उपद्रवाय तिष्ठन्तीति परिधय इति व्युत्पत्तिः। कीदृशस्त्वम्? वन्वन्। वनुत इति वन्वन्। अस्मत्कर्माणि संभजमानः। वन षण संभक्तौ। शतृप्रत्ययः। पुनः कीदृशः? अवातः। न विद्यते वातो यस्य स तथा। वात उपलक्षणम्। वातपित्ताद्युपद्रवरहितः। अत्र "नलोपो नञः" ( पा ६.३.७३ ) इति नञो नकारलोपः। किं च। वीरेभिः वीरैः अश्वैः च सहितः सन् नः अस्माकं मघवा धनवान् भव। मघमिति धननाम। मघं धनमस्यास्तीति मघवा। यो यस्य दाता स तदीयो धनवानिति लोकप्रसिद्धिः। 'भव' इत्यस्य च संहितायां दीर्घश्छान्दसः ॥३॥

---

10. S3 पाठस्तु – त्वया ... भवा न इति for 'त्वया हि नः' इति।
12. V2 S3 यस्तन्वन् वन्वन्ननेन for यस्त्वं वन्वन् संभाजमानः; V2 S3 विश्व संभक्तौ for वनषण संभक्तौ; V2 S3 सजलान् स वासवाद्युप° for अवातः वाताद्युप°

**सोमवतां पितॄणाम् ऋचः ]**

**त्वꣳ सोमꣳ पितृभिः संविदानोऽनु द्यावापृथिवी आ ततन्थ ।**
**तस्मै त इन्दो हविषा विधेम वयꣳ स्याम पतयो रयीणाम् ॥४॥**

---

त्वम् । सोम । पितृभिरिति पितृऽभिः । संविदान इति सम्ऽविदानः ।
अनु । द्यावापृथिवी इति द्यावापृथिवी । आ । ततन्थ ।
तस्मै । ते । इन्दो इतीन्दो । हविषा । विधेम ।
वयम् । स्याम । पतयः । रयीणाम् ॥ दैम् ॥४॥

---

आ— ' त्वꣳ सोम पितृभिः ' इति । हे सोम पितृभिः सोमवद्भिः संविदानः संविदं मर्यादां कुर्वाणः अनु द्यावापृथिवी आततन्थ । तनु विस्तारे । द्यावापृथिव्यौ अन्वातनोति विस्तारयन् । ' तस्मै त इन्दो हविषा विधेम ' । तस्मै ते तुभ्यं हे इन्दो, हविषा विधेम इति विपरिणामः । ' वयं स्याम पतयो रयीणाम् ' । हविःप्रदानानां परं रयीणां पतयः वयं स्याम । चतस्र एताः सोमवत्यो ऋचः ॥ ५४ ॥

---

अ- ' त्वꣳ सोम पितृभिः ' । हे सोम, त्वं द्यावापृथिवी द्यावापृथिव्यौ अनु आ ततन्थ विस्तारितवान् । तनु विस्तारे, अस्माल्लिटि " बभूथाततन्थाजगृम्भववर्थेति निगमे " (पा ७.२.६४) इति निपातः । किं भूतस्त्वम् ? पितृभिः सह संविदानः । संवित्त इति संविदानः । संवादं कुर्वाणः । विद विचारण इति धातोः " समो गमि° " (पा १.३.२९ ) इत्यादिना आत्मनेपदत्वात् शानच् । हे इन्दो, तस्मै ते तुभ्यं वयं हविषा विधेम हविर्दध्मः । विभक्तिव्यत्ययः । विधतिर्दानार्थः । हविर्दानेन च वयं रयीणां धनानां पतयः यथेष्टविनियोजकाः स्याम भवेम ॥४॥

---

**बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् ।**
**त आ गतावसा शंतमेनाथा नः शं योररपो दधात ॥५॥**

---

7. S3 पाठस्तु – त्वं सोम ... रयीणामिति for ' त्वं सोम पितृभिः ' इति
16. P2 om. विधतिर्दा ... भवेम ( L 17 )

बर्हिषदः । बर्हिसद् इति बर्हिऽसदः । पितरः । ऊती । अर्वाक् ।
इमा । वः । हव्या । चकृम । जुषध्वम् ।
ते । आ । गत । अवसा । शंतमेनेति शम्ऽतमेन ।
अथ । नः । शम् । योः । अरपः । दधात ॥ त्राः ॥५॥

---

आ– ‘ बर्हिषदः पितरः ’ इति तिस्रो ऋचः बर्हिषदाम् । हविर्यज्ञयाजिनः $^{v}$बर्हिषदः । बर्हिषि सीदन्तीति बर्हिषदः । $^{v}$पितरः $^{v}$ऊती ऊत्या अवनेन $^{v}$अर्वाक् अर्वाचीनाः आभिमुख्येन आगच्छत । $^{v}$इमा इमानि $^{v}$वः युष्माकं $^{v}$हव्या हव्यानि हवींषि $^{v}$चकृम कृतवन्तो वयम् । तानि च यूयं $^{v}$जुषध्वम् । यैश्च युष्माभिर्हवींष्यासेवितानि $^{v}$ते यूयं पुनरपि आहूयमानाः $^{v}$आगत आगच्छत । $^{v}$अवसा $^{v}$शंतमेन सुखसाधनेन सुखयितृतमेन अवसा अन्नेन ‘ शं योररपो दधात ’ । यु मिश्रणे । युनातीति युः । तस्मात् सुखदुःखमिश्रीभूतसाधनात् $^{v}$शं सुखमेव $^{v}$नः अस्मासु $^{v}$दधात स्थापयत । किं च । $^{v}$अरपः अपापम् अरोगं वा, दधातन ॥५५॥

---

अ– सोमवतां पितॄणां षडृचं समाप्य बर्हिषदां पितॄणाम् ऋचो व्याख्यायन्ते ।

‘ बर्हिषदः पितरः ’ । बर्हिषि दर्भे सीदन्तीति $^{v}$बर्हिषदः । पृषोदरादित्वात् बर्हिषः षकारलोपः । हे बर्हिषदः $^{v}$पितरः, $^{v}$ऊती ऊत्या अवनेन निमित्तेन $^{v}$अर्वाक् अस्मदभिमुखम् $^{v}$आगत आगच्छत । “ इषुगमि° ” ( पा ७.३.७७ ) छत्वाभावश्छान्दसः । किमर्थमिति चेत् । $^{v}$वः युष्माकम् $^{v}$इमा इमानि $^{v}$हव्या हव्यानि वयं $^{v}$चकृम । करोतेर्लिटि रूपम् । कृतवन्तः । तानि $^{v}$जुषध्वम् । जुषी प्रीतिसेवनयोरिति धातुः । लोट् । $^{v}$अथ अनन्तरं $^{v}$शंतमेन सुखयितृतमेन $^{v}$अवसा । अव इत्यन्ननाम । अन्नेन तर्पिताः सन्तः $^{v}$नः अस्माकं $^{v}$शं सुखं रोगशमनम् । $^{v}$योः भयपृथक्करणम् । $^{v}$अरपः । रप इति पापनाम । पापाभावं च $^{v}$दधात धत्त स्थापयत । “ अथा नः शं योररपो दधात ” इति शंयुः सुखंयुः । रपो रिप्रम् इति पापनामनी भवतः । शंयोः शमनं च रोगाणां यावनं च भयानाम् ” ( नि ४.२१ ) इति यास्कनिर्वचनादयमर्थः । यू मिश्रणामिश्रणयोः इति धातोः क्विपि रूपम् । कर्मणि षष्ठी ॥५॥

---

5. S3 पाठस्तु – बर्हिषदः दधानेति for ‘ बर्हिषदः पितरः ’ इति; S3 V2 ऋचः बर्हिषदः for ऋचः बर्हिषदाम्

6. V2 अर्वाचनः, S3 अर्वाञ्चनः for अर्वाचीनाः

7. V2 S3 अवान्तरः for आगच्छत; V2 S3 च for चकृम

9. V2 after शंतमेन adds सुखतमेन; V2 चमसा for अवसा

11. V2 दधातु स्थापयतु for अपापम् ; S3 om. अपापम्

बर्हिषदां पितॄणाम् ऋचः ]

उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु ।
त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥६॥

---

उपहूता इत्युपऽहूताः । पितरः । सोम्यासः ।
बर्हिष्येषु । निधिष्विति निऽधिषु । प्रियेषु ।
ते । आ । गमन्तु । ते । इह । श्रुवन्तु । अधि । ब्रुवन्तु ।
ते । अवन्तु । अस्मान् ॥ ३५ ॥६॥

---

आ– ' उपहूताः पितरः सोम्यासः ' इति । सोमसंपादिताः पितरः उपहूताः । ' बर्हिष्येषु निधिषु प्रियेषु ' । बार्हिषो यज्ञस्य योग्येषु [V]बर्हिष्येषु [V]निधिषु तेषु तेषु पितॄणां [V]प्रियेषु हविःषु निमित्तभूतेषु आसादितेषु [V]उपहूताः [V]पितरः एते [V]आगमन्तु आगच्छन्तु । आगत्य च [V]ते [V]इह यज्ञेषु [V]श्रुवन्तु अस्मदुक्तानि वाक्यानि शृण्वन्तु । श्रुत्वाऽपि च युष्माभिर्यद्वक्तव्यम् अस्मद्धितं तत् [V]अधिब्रुवन्तु । [V]ते च यूयम् [V]अस्मान् [V]अवन्तु ॥५६॥

---

अ– ' उपहूताः पितरः सोम्यासः '। सोम्याः [V]पितरः [V]बर्हिष्येषु बर्हिषो यज्ञस्य योग्येषु [V]निधिषु । देवाः पितरश्च निधीयन्ते येषु ते। तथा देवपित्राश्रयेषु । अत एव [V]प्रियेषु हविःषु आसादितेषु सत्सु [V]उपहूताः मया आहूताः । [V]ते पितरः [V]आगमन्तु आगच्छन्तु। आगत्य च [V]इह यज्ञेषु [V]श्रुवन्तु अस्मदुक्तानि वाक्यानि शृण्वन्तु । श्नुप्रत्ययाभावश्छान्दसः। श्रुत्वाऽपि च [V]अधिब्रुवन्तु । ' एतेऽस्माकं प्रियत्वेनाधिकाः ' इति ब्रुवन्तु। उक्त्वाऽपि च [V]ते [V]अस्मान् [V]अवन्तु रक्षन्तु योगक्षेमसमर्पणेन ॥६॥

---

आऽहं पितॄन्त्सुविदत्राँ अवित्सि नपातं च विक्रमणं च विष्णोः ।
बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहागमिष्ठाः ॥७॥

---

7. S3 पाठस्तु – उपहूताः ... अस्मानिति for ' उपहूताः पितरः सोम्यासः ' इति ।

10. V2 सुवन्तु अवन्तु for श्रुवन्तु

16. M4 अधिकारः for अधिकाः

आ । अहम् । पितॄन् । सुविदत्रानिति सुऽविदत्रान् । अवित्सि ।
नपातम् । च । विक्रमणमिति विऽक्रमणम् । च । विष्णोः ।
बर्हिषदः । बर्हिसद इति बर्हिऽसदः । ये । स्वधया । सुतस्य ।
भजन्त । पित्वः । ते । इह । आगमिष्ठा इत्याऽगमिष्ठाः ॥ द्रों ॥७॥

---

आ– ' आऽहं पितॄन् सुविदत्रान् ' [ इति ] । [ Vसुविदत्रान् ] कल्याणदान् Vपितॄन् Vआऽवित्सि । अत्र व्यत्ययः । Vअहम् इह समन्ततः वेद । Vनपातं पतनरहितम् । पातो यत्र जगतो न विद्यते देवयानमार्गे स नपातः । तं नपातम् । यद्वा– Vविष्णोः यज्ञस्य Vनपातम् । ' नपात् ' इत्यपत्यनाम । यज्ञस्यापत्यं सूक्ष्मरूपं वेद्मि । विष्णोर्यज्ञस्य Vविक्रमणं विविधं क्रमणं ( यत्र ) गतानां, फलप्रदानाय गमनं वा, सः पितृयाणः पन्थास्तं च वेद्मि । तत्र [ हि ] अरघट्टघटीवत् उत्तराधरं प्राणिनो गच्छन्ति । तौ देवयानपितृयाणौ पन्थानौ चाहं वेद्मि । Vबर्हिषदः Vये पितरः Vस्वधया अन्नेन सवनीयलक्षणेन सह Vसुतस्य अभिषुतस्य सोमस्य Vपित्वः पानं Vभजन्त । अत्र कर्मणि षष्ठी वा । सुतस्य सुतं सोमं भजन्त । पित्वः सोमं पीत्वा च Vते पितरो यूयम् Vइह कर्मणि निमित्ते Vआगमिष्ठाः । वचनव्यत्ययः । आगच्छन्त्विति संबन्धः ॥५७॥

---

अ– Vअहं Vपितॄन् Vआऽवित्सि आभिमुख्येन वेद्मि, विदितवान् वा । विदेर्लुङि आत्मनेपदे उत्तमैकवचने रूपम् । कीदृशान् ? Vसुविदत्रान् । सुष्ठु विशेषेण ददतीति सुविदत्राः । तान् कल्याणदान् । किं च– वेवेष्टीति विष्णुस्तस्य Vविष्णोः व्यापनशीलस्य यज्ञस्य । " यज्ञो वै विष्णुः " ( शब्रा १२·१·३ ) इति श्रुतेः । तस्य Vनपातं Vच Vविक्रमणं Vच वेद्मि । नास्ति पातो यत्र स नपातः देवयानपथः । यत्र गतानां पातो नास्तीत्यर्थः । " यद्गत्वा न निवर्तन्ते तद्धाम परमं मम " ( भगी १५·६ ) इति स्मृतेः । विविधं क्रमणं गमनागमनं यत्र स विक्रमणः । पितृयाणपथः । यत्र गतानां पुनर्भोगान्ते पतनमस्ति । " त एवमेवानु परिवर्तन्ते " ( बृआउप ६·२·१६ ) इति श्रुतेः । यज्ञसंबन्धिनौ देवयान-पितृयाणौ पन्थानौ वेद्मीत्यर्थः । तद्गामिनः पितॄंश्च । " नभ्राण्नपात्° " ( पा ६·३·७५ ) इति नञो नलोपाभावः । अतो ब्रवीमि– Vये Vबर्हिषदः पितरः Vस्वधया सवनीयलक्षणेनान्नेन सह Vसुतस्य अभिषुतस्य सोमस्य Vपित्वः । पित्व इति पाननाम । पानं Vभजन्त सेवन्ते । लङि अडभाव आर्षः । Vते पितरः Vइह यज्ञे Vआगमिष्ठाः आगच्छन्तु । लोडर्थे लुङ् । पुरुषवचनव्यत्ययः ॥७॥

---

5. S3 पाठस्तु – आहं ... आगमिष्ठाः इति for ' आहं पितॄन् सुविदत्रान् '
8. S3 वेद for वेद्मि
9. V2 S3 after गतानां add च; V2 S3 पितृयाणपन्थान for पितृयाणः पन्थास्तं
10. V2 before गच्छन्ति adds यत्र

अग्निष्वात्तानां पितॄणाम् ऋचः ]

**अग्निष्वात्ताः पितर् एह गच्छत् सदःसदः सदत सुप्रणीतयः ।**
**अत्ता हवींश्षि प्रयतानि बर्हिष्यथा रयिं सर्ववीरं दधातन ।।८।।**

आग्निष्वाताः । अग्निस्वात्ता इत्यग्निऽस्वात्ताः । पितरः । आ । इह । गच्छत । सदःसद् इति सदःऽसदः । सदत । सुप्रणीतयः । सुप्रनीतय इति सुऽप्रनीतयः । अत्त । हवींश्षि । प्रयतानीति प्रऽयतानि । बर्हिषि । अथ । रयिम् । सर्ववीरामिति सर्वऽवीरम् । दधातन ॥ त्रों ॥८॥

आ– ‘ अग्निष्वात्ताः पितरः ’ इति । चतस्रोऽग्निष्वात्तेभ्यः । अत्राग्निष्वात्ताः अग्निस्वकीयतया प्राप्ताः अग्निनाऽऽस्वादिता वा हे $^{v}$पितरः, $^{v}$आ $^{v}$इह यज्ञे $^{v}$सदःसदः $^{v}$गच्छत । सभां सभां विशिष्टाम् । वीप्साऽऽदरार्था । आगच्छत । अत्र आगत्य च $^{v}$सदत उपविशत । हे $^{v}$सुप्रणीतयः हे साधुप्रणीतयः, $^{v}$हवींश्षि $^{v}$अत्त । $^{v}$बर्हिषि यज्ञे $^{v}$प्रयतानि यतव्रतैर्दत्तानि अत्त भक्षयत । ‘ अथा रयिं सर्ववीरं दधातन ’ । $^{v}$अथ अनन्तरं $^{v}$सर्ववीरं पशुपुत्रयजमानैः संपन्नां $^{v}$रयिं धनं $^{v}$दधातन स्थापयत । नकारश्छान्दसः ॥५८॥

अ– ‘ अग्निष्वात्ताः पितरः । अथाग्निष्वात्तानां व्याक्रियन्ते– हे $^{v}$अग्निष्वात्ताः $^{v}$पितरः यूयम् $^{v}$इह यज्ञे $^{v}$आगच्छत । आगत्य च $^{v}$सदःसदः प्रतिगृहं सदसि सदसि । विभक्त्यर्थेऽव्ययीभावः । “ नित्यवीप्सयोः ” ( पा ८·१·४ ) इति द्वित्वम् । $^{v}$सदत सीदत उपविशत । कीदृशा यूयम् ? $^{v}$सुप्रणीतयः । शोभना प्रणीतिः प्रणयनं [ येषां ] ते तथा । किं च– सदस्युपविष्टाः सन्तः $^{v}$हवींषि अस्मद्दत्तानि $^{v}$अत्त भक्षयत । अत्तेर्लोट् मध्यमे बहुवचनम् । दीर्घोऽत्र छान्दसः । कीदृशानि हवींषि ? $^{v}$बर्हिषि दर्भे $^{v}$प्रयतानि नियमपूर्वकं स्थापितानि । यत्नवद्भिर्दत्तत्वाद्वा प्रयतानि । $^{v}$अथ अनन्तरं तृप्ताः $^{v}$सन्तः $^{v}$सर्ववीरं $^{v}$रयिं $^{v}$दधातन स्थापयत । सर्वे वीराः पुत्रपौत्रादयः यत्र तम् । “ निपातस्य च ” ( पा ६·३·१३६ ) इति दीर्घोऽथशब्दस्य । “ तप्तनप्तनथनाश्च ” ( पा ७·१·४५ ) इति विभक्तेस्तनवादेशः ॥८॥

7. S3 पाठस्तु – अग्निष्वात्ताः ... दधातनेति for ‘अग्निष्वात्ताः पितरः’ इति; V2 यतश्च for चतस्रः ।
9. V2 अत्रा for अत्र
10. S3 बर्हियज्ञेषु for बर्हिषि यज्ञे
11. V2 इत्वा for अत्त
18. M4 दर्भैः for दर्भे

[ अग्निष्वात्तानां पितॄणाम् ऋचः

आ यन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः ।
अस्मिन् यज्ञे स्वधया मदन्तोऽधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥९॥

आ । यन्तु । नः । पितरः । सोम्यासः ।
अग्निष्वात्ताः । आग्निस्वात्ता इत्यग्निऽस्वात्ताः । पथिभिरिति पथिऽभिः । देवयानैरिति देवऽयानैः ।
अस्मिन् । यज्ञे । स्वधया । मदन्तः । अधि । ब्रुवन्तु । ते । अवन्तु । अस्मान् ॥ द्रौं ॥९॥

आ– 'आ यन्तु नः' इति । ये अग्निष्वात्ताः अग्निरेव हविर्दहन् येन आस्वादयन्ति ते [V]अग्निष्वात्ताः [V]सोम्यासः सोमसंपादिनः सोम्याः [V]पितरः [V]देवयानैः [V]पथिभिः अभिवाहिकदेवताशिष्टैः मार्गैः [V]आयन्तु आगच्छन्तु । आगत्य च [V]अस्मिन् [V]यज्ञे सौत्रामण्याख्ये [V]स्वधया हविर्लक्षणान्नेन [V]मदन्तः [V]ते अस्मान् [V]अधिब्रुवन्तु ऐश्वर्यभावे वदन्तु । उक्त्वा च [V]अस्मान् [V]अवन्तु रक्षन्तु ॥५९॥

अ– 'आ यन्तु नः' । [V]नः अस्माकं [V]पितरः [V]देवयानैः [V]पथिभिः मार्गैः [V]आयन्तु आगच्छन्तु । 'इण् गतौ' इत्यस्य लोट् । देवैः सह यान्ति पितरो येषु ते देवयानाः मार्गाः । देवाः यैः पथिभिर्यान्ति ते देवयानाः । ते त्वनिवर्तमानमार्गाः । तद्गतानां पुनरावर्तनासंभवात् । कीदृशाः ? [V]सोम्यासः सोमपानार्हाः [V]अग्निष्वात्ताः अग्निना स्वादिता स्वादं प्रापिताः । येषां पुत्रादिभिरग्नौ हुतं हविस्तेषां तत्प्रापकोऽग्निरित्यर्थः । उक्तं हि –

"पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते ।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ॥" ( मनुस्मृ ९·३७ )

इति । किं च । पितर आगत्य च [V]अस्मिन् [V]यज्ञे [V]स्वधया अन्नेन । स्वधाशब्दोऽत्रान्नवाची न त्वव्ययः । [V]मदन्तः तृप्यन्तस्तुष्टाः सन्तः नः अस्मान् [V]अधिब्रुवन्तु अधिकान् वदन्तु । "अधिरीश्वरे" ( पा १·४·९७ ) इति पाणिनिः । तद्वाक्यादधिकानीश्वरान् । [V]अस्मान् [V]ते पितरः [V]अवन्तु । पालयन्तु ॥९॥

ये अग्निष्वात्ता ये अनग्निष्वात्ता मध्ये दिवः स्वधया मादयन्ते ।
तेभ्यः स्वराळसुनीतिमेतां यथावशं तन्वं कल्पयाति ॥१०॥

6. S3 आयन्तु ... अवन्त्वस्मान् इति for 'आयन्तु नः' इति ।
7. V2 before सोम्यासः adds अग्ने
14. V2 S3 एषां for येषां

पैत्र्यः ऋचः ]

ये । अग्निष्वात्ताः । अग्निस्वात्ता इत्यग्निऽस्वात्ताः ।
ये । अनग्निष्वात्ताः । अनग्निस्वात्ता इत्यनग्निऽस्वात्ताः ।
मध्ये । दिवः । स्वधया । मादयन्ते ॥
तेभ्यः । स्वराळिति स्वऽराट् । असुनीतिमित्यसुऽनीतिम् । एताम् ।
यथावशमिति यथाऽवशम् । तन्वम् । कल्पयाति ॥ भू ॥ १० ॥

---

आ– 'ये अग्निष्वात्ताः' इति । [v]ये [v]अग्निष्वात्ताः [v]ये [v]अनग्निष्वात्ताः अग्न्यास्वादशून्याः श्मशानकर्मरहिताः, [v]मध्ये [v]दिवः द्युलोकस्य मध्ये [v]स्वधया स्वकर्मफलोपभोगेन [v]मादयन्ते सुखं सेवन्ते, [v]तेभ्यः उभयविधेभ्यः पितृभ्यः पित्रर्थे । [v]स्वराट् । स्वयमेव राजत इति स्वराट् । स्वतन्त्रो भगवानीश्वरः । [v]यथावशम् । वश कान्तौ । यथाकामम् । [v]एतां प्रसिद्धाम् [v]असुनीतिम् । असवः प्राणाः चक्षुरादयः यया तन्वा नीयन्ते स्वविषयेषु प्रवर्त्यन्ते सा असुनीतिः । ताम् असुनीतिं [v]तन्वं शरीरं [v]कल्पयाति कल्पयति ॥६०॥

---

अ– 'ये अग्निष्वात्ताः' । [v]ये पितरः [v]अग्निष्वात्ताः अग्निमुखस्वादाः, [v]ये च [v]अनग्निष्वात्ताः । यद्वा– अग्निना स्वात्ताः दग्धाः विधिवदौर्ध्वदेहिकं प्राप्ताः । ये अनग्निष्वात्ताः अग्निना अदग्धाः श्मशानकर्मवार्जिताः संन्यासिनः ये च [v]दिवः स्वर्गस्य [v]मध्ये [v]स्वधया स्वकर्मोपार्जितेन अन्नेन [v]मादयन्ते तृप्ता भवन्ति, [v]तेभ्यः पितृभ्योऽर्थे । [v]स्वराट् । यमलोके स्वेनैव राजते इति स्वराट् यमः । [v]यथावशं यथाभिलाषम् । [v]एतां मनुष्यसंबन्धिनीं तन्वं तनुं [v]कल्पयाति कल्पयतु । "लेटोऽडाटौ" (पा ३·४·९४) इत्याकारः । व्यत्ययश्च । तेभ्यः सर्वार्थसाधकं नृशरीरं यमो ददात्वित्यर्थः । कीदृशीं तन्वम् ? [v]असुनीतिम् । असूनां प्राणानां नीतिर्नयनं यस्यां सा तथा ताम् चिरकालजीविनीमित्यर्थः । ते तथा पुनः साधनमनुतिष्ठन्तीति यावत् । यद्वा– स्वेनैव अनन्याधिपतित्वेन राजत इति स्वराट् परमात्मा तेषाम् एतां तन्वं कल्पयत्विति योज्यम् ॥१०॥

---

6. S3 पाठस्तु– ये अग्निष्वात्ताः ... कल्पयातीति for first 'ये अग्निष्वात्ताः' इति; V2 om. ये अग्निष्वात्ताः

8. V2 S3 सेवयन्ते for सेवन्ते

10. S3 प्रवर्तन्ते for प्रवर्त्यन्ते

14. P2 after संन्यासिनः adds कर्मवर्जिताः; M2 स्वादुष्टोपवाजितान्नेन, P2 स्वादुष्टोपार्जितेनान्नेन for स्वकर्मोपार्जितेनान्नेन [ L 15 ]

15. M4 पितृभ्योऽर्थों for पितृभ्योऽर्थे

अग्निष्वात्तानृतुमतो हवामहे नाराशꣳसे सोमपीथं य आशुः ।
ते नो विप्रासः सुहवा भवन्तु वयꣳ स्याम पतयो रयीणाम् ॥११॥

---

अग्निष्वात्तान् । अग्निस्वात्तानित्यग्निऽस्वात्तान् । ऋतुमत इत्यृतुऽमतः । हवामहे ।
नाराशꣳसे । सोमपीथमिति सोमऽपीथम् । ये । आशुः ।
ते । नः । विप्रासः । सुहवा इति सुऽहवाः । भवन्तु ।
वयम् । स्याम । पतयः । रयीणाम् ॥ त्र्यैं ॥११॥

---

आ– 'अग्निष्वात्तान्' इति । इयमग्निष्वात्ता पितृदेवत्या जगती । नाराशꣳसे । "पितृभ्यो नाराशꣳसेभ्यः" ( शब्रा १२·६·१·३३ ) इति श्रुतेः । नाराशंसेन युक्ते नाराशंसे चमसे सोमपीथं सोमपानं ये पितरः आशुः आप्नुयुः । तान् ऋतुमतः ऋतुसंयुक्तान् अग्निष्वात्तान् पितॄन् हवामहे आह्वयामः । ते नः विप्रासः मेधाविनः सुहवाः शोभनाह्वानाः भवन्तु । एवं कृते वयं रयीणां पतयः स्याम ॥६१॥

---

अ– 'अग्निष्वात्तानृतुमतः' । वयम् अग्निष्वात्तान् पितॄन् हवामहे आह्वयामः । कीदृशान् ? ऋतुमतः । ऋतवो विद्यन्ते येषु ते ऋतुमन्तस्तान् ऋतुमतः, ऋतुरूपान् । "ऋतवो वै पितरः ऋतुष्वेवैतद्यज्ञं प्रतिष्ठापयति" ( शब्रा द्र· २·४·२·२४ ) इति श्रुतेः । ये च पितरः नाराशंसे नाराशंसनयुक्ते चमसे सोमपीथं सोमपानम् आशुः प्राश्नन्ति स्म, अपिबन् । अश भोजने । लिट् । "अथ यदि नाराशंसे सन्ने" इत्युपक्रम्य "पितृभ्यो नाराशंसेभ्यो जुहुयात्" ( शब्रा १२·६·१·३३ ) इति श्रुत्या नाराशंसे चमसे पितृपक्षः प्रतिपादितः । ते पितरः नः अस्माकं सुहवाः सुखाह्वानाः भवन्तु । अस्मदाहूताः शीघ्रमायान्त्वित्यर्थः । अत एव विप्राः मेधाविनः हिताहितप्राप्तिपरिहार-ज्ञातवन्तः । तेषां प्रसादात् वयं रयीणां धनानां पतयः पोषकाः स्याम भवेम ॥११॥

---

आच्या जानु दक्षिणतो निषद्येमं यज्ञमभि गृणीत विश्वे ।
मा हिꣳसिष्ट पितरः केन चिन्नो यद्व आगः पुरुषता कराम ॥१२॥

---

7. S3 अग्निष्वातान् ... रयीणामिति for अग्निष्वात्तानिति

पैत्र्यः ऋत्वः ]

आच्येत्याऽअच्य॑ । जानु॑ । द॒क्षि॒ण॒तः । नि॒षद्य॑ । नि॒सद्येति॑ नि॒ऽसद्य॑ ।
इ॒मम् । य॒ज्ञम् । अ॒भि । गृ॒णी॒त॒ । विश्वे॑ ॥
मा । हिं॒सि॒ष्ट॒ । पि॒त॒रः॒ । केन॑ । चि॒त् । न॒ः ।
यत् । व॒ः । आगः॑ । पु॒रु॒षता॑ । करा॑म ॥ ज्ञः ॥१२॥

आ– ' आच्या जानु दक्षिणतः ' इति । सव्यं vजानु vआऽच्य पातयित्वा, vदक्षिणतः vनिषद्य अवस्थानं कृत्वा । " अथ हैनं पितरः प्राचीनावीतिनः सव्यं जान्वाच्योपसेदुः " ( शब्रा २·३·४·२ ) इति श्रुतेः । ' इमं यज्ञमभिगृणीत विश्वे ' । vइमम् अस्मदीयं vयज्ञं vविश्वे सर्वे सोमवन्तो बर्हिषदः अग्निष्वात्ताश्च पितरः vअभिगृणीत अभिष्टुवत दक्षिणामन्त्र-कालकर्तृहविर्यजमानोत्कर्षैः यज्ञं स्तुवन्तु । हे vपितरः, vनः अस्मान् vमा vहिंसिष्ट हिंसां मा कुरुत । vकेन vचित् vवः युष्माकम् vआगः अपराधः vयत् यदि केनचिन्निमित्तवशेन । vपुरुषता विभक्तिव्यत्ययः । पुरुषतया चलचित्ततया यद्यपराधं vकराम कुर्मः तथाऽपि यूयं नः अस्मान् मा हिंसिष्ट ॥६२॥

अ– ' आच्या जानु ' । इत ऊर्ध्वं यावदनुवाकान्तं यज्ञकर्मणि न विनियुक्ताः । श्राद्धे ब्राह्मणेषु अश्नत्सु जपे विनियुक्ताः । सर्वा पितृदेवत्याः । त्रिष्टुभौ द्वे । हे vपितरः, vविश्वे सर्वे सोमवन्तो बर्हिषदोऽग्निष्वात्ताश्च यूयम् vइमं vयज्ञम् सौत्रामण्याख्यं श्राद्धाख्यं वा vअभि-गृणीत अभिष्टुत । अभिगिरणं स्तवनम् । गॄ निगिरणे । लोट् । दक्षिणामन्त्रकालहविराद्युत्कर्षैः ? साध्वयं यज्ञ इति स्तुतिं कुरुतेत्यर्थः । किं कृत्वा ? vजानु vआऽच्य वामजानुं पातयित्वा । तथा vदक्षिणतः vनिषद्य दक्षिणमुखा उपविश्य । अयं हि तेषां स्वभावः । " अथ हैनं पितरः । प्राचीनावीतिनः सव्यं जान्वाच्योपसेदुः " ( शब्रा २·३·४·२ ) इति श्रुतेः । किं च– हे पितरः, vकेन vचित् । चिदप्यर्थे । केनाप्यपराधेन vनः अस्मान् vमा vहिंसिष्ट अस्मद्धिंसां मा कुरुत । हिनस्तेर्लुङ् । माङ्योगादडभावः । vयत् यस्मात् vपुरुषता । पुरुषस्य भावः पुरुषता । तया । विभक्तिलोपः । पुरुषभावेन चलचित्तत्वेन vवः युष्माकम् vआगः अपराधं वयं vकराम कुर्मः । करोतेः शपि लङि छान्दसं रूपम् । अडभावः । यद्यप्यपराधिनो वयं पुरुषत्वेन तथाऽपि माऽस्मान् वधिष्टेत्यर्थः ॥१२॥

5. S3 आच्या ... करामेति for आच्या जानु दक्षिणत इति ; V2 व्यापातयित्वा for पातयित्वा
11. V2 पुरुषं for विभक्ति° ; V2 कारयामः for कराम
13. V2 S3 °वाकः° for वाकान्तं
16. M4 निगरणे for निगिरणे
24. M4 विद्विष्ट for वधिष्ट

आसीनासो अरुणीनामुपस्थे रयिं धत्त दाशुषे मर्त्याय ।
पुत्रेभ्यः पितरस्तस्य वस्वः प्र यच्छत त इहोर्जं दधात ।।१३।।

आसीनासः । अरुणीनाम् । उपस्थ इत्युपऽस्थे । रयिम् । धत्त । दाशुषे । मर्त्याय ।
पुत्रेभ्यः । पितरः । तस्य । वस्वः । प्र । यच्छत । ते । इह । ऊर्जम् । दधात ॥ थैं ॥१३॥

आ– ' आसीनासः ' इति । vअरुणीनाम् अरुणवर्णानां तिलानाम् ( ? ऊर्णानां ) vउपस्थे उत्सङ्गे vआसीनासः आसीनाः पितरः इति प्रसिद्धेः । यद्वा– अरुणीनां सूर्यरश्मीनाम् उपस्थे । अस्तमयसमये सूर्यकिरणासनवचनेन पितॄणां जन्मकालो लक्ष्यते । सायंसंध्यानिवासिन इत्यभिप्रायः । एवमासीनाः पितरः vदाशुषे दानशीलाय vमर्त्याय मनुष्याय यजमानाय vरयिं धनं vधत्त । vपुत्रेभ्यः हे vपितरः, vवस्वः वसवः वसुरूपाः । vतस्य यजमानस्य पुत्रेभ्यो रयिं धनं vप्रयच्छत ददत । ' इहोर्जं दधात ' । vइह अस्मदीये यज्ञे vऊर्जं vदधात ऊर्जं स्थापयत ॥६३॥

अ– ' आसीनासः ' । हे 'पितरः 'दाशुषे हविर्दत्तवते 'मर्त्याय मनुष्याय यजमानाय यूयं 'रयिं धनं 'धत्त दत्त । " दाश्वान् साह्वान् मीढ्वांश्च " (पा ६.१.१२) इति निपातात् दाश्वानिति । कीदृशा यूयम् ? 'अरुणीनाम् अरुणवर्णानाम् ऊर्णानाम् 'उपस्थे उपरिभागे 'आसीनासः आसीनाः । याभिः कुतपाः क्रियन्ते ता ऊर्णा अरुणा भवन्ति । " कुतपं चासने दद्यात् " इति स्मृतेः । कुतपप्रियाश्च पितरः । और्णस्य कुतपत्वमुक्तं स्मृतौ–

" दौहित्रः खड्गपात्रं च तथा नेपालकम्बलः ।
रौप्यं दर्भास्तिला गावो मध्याह्नश्चाष्टमः स्मृतः " ॥ ( द्र. मत्स्यपु २२.८६.८७ ) इति ।

यद्वा– अरुणीनाम् अरुणवर्णानां सूर्यरश्मीनाम् उपस्थे उत्सङ्गे आसीनाः । आदित्यलोकस्था इत्यर्थः । किं च– हे पितरः 'पुत्रेभ्यः यजमानरूपेभ्यः 'तस्य 'वस्वः वसुनः । नुमभावश्छान्दसः । धनस्य । धनम् । कर्मणि षष्ठी । 'प्रयच्छत दत्त । यत् पुत्राणामभीष्टं धनं तद्दत्त । पितॄणां पुत्रा एव यजमानाः । यतः 'ते यूयम् 'इह अस्मदीये यज्ञे 'ऊर्जं रसं बलं वा 'दधात स्थापयत ॥१३॥

5. S3 पाठस्तु — आसीनासो ... दधातेति for आसीनास इति
14. M4 om. ऊर्णानाम्

यमग्ने कव्यवाहन् त्वं चिन्मन्यसे रयिम् ।
तं नो गीर्भिः श्रवाय्यं देवत्रा पनया युजम् ॥१४॥

~~~~~~~~~~~~~~~

यम् । अग्ने । कव्यवाहनेति कव्यऽवाहन । त्वम् । चित् । मन्यसे । रयिम् ॥
तम् । नः । गीर्भिरिति गीःऽभिः । श्रवाय्यम् ।
देवत्रेति देवऽत्रा । पनय । युजम् ॥ ङुं ॥ १४ ॥

~~~~~~~~~~~~~~~

आ–'यमग्ने कव्यवाहन' इति । चतसृभिर्ऋग्भिः स्विष्टकृदग्निरुच्यते । 'यमग्ने' इत्याद्या ऋचः सप्त पितृदेवत्याः । आद्ये द्वे अनुष्टुभौ । तृतीयचतुर्थपञ्चमषष्ठास्त्रिष्टुभः । ततोऽनुष्टुप् । हे श्रीभगवन् [V]अग्ने, कव्यं पित्रर्थमन्नं वहतीति कव्यवाहनः । तत्संबोधनं हे [V]कव्यवाहन, [V]रायिं हविर्लक्षणं धनं [V]त्वं [V]चित् त्वमपि [V]मन्यसे अभ्यनुगच्छसि । [V]तं हविर्लक्षणं रायिं [V]नः अस्माकं स्वभूतं [V]गीर्भिः पुरोनुवाक्यायाज्यावषट्कारलक्षणाभिः वाग्भिः [V]श्रवाय्यं श्रवणीयं [V]युजं देवतासंबन्धयुक्तं रायिं हविः [V]देवत्रा देवेषु [V]पनय । पण व्यवहारे । व्यवहारं प्रयच्छेत्यर्थः ॥६४॥

~~~~~~~~~~~~~~~

अ– 'यमग्ने' द्वे अनुष्टुभौ । कव्यं पितृभ्यो देयमन्नं वहतीति कव्यवाहनः । "कव्यपुरीषपुरीष्येषु ञ्युट्" ( पा ३·२·६४ ) इति ञ्युट् । तत्संबोधनं हे [V]कव्यवाहन हे [V]अग्ने, [V]त्वं [V]चित् त्वमपि [V]यं [V]रयिं हविर्लक्षणं धनं [V]मन्यसे उत्तमं जानासि । [V]नः अस्माकं [V]तं रायिं [V]देवत्रा देवेषु । "देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्" ( पा ५·४·५६ ) इति सप्तम्यर्थे देवशब्दात् त्राप्रत्ययः । [V]पनय देहि । पनतिर्दानकर्मा । पण व्यवहारे स्तुतौ च । पन चेति धातुः । कीदृशं रयिम् ? [V]गीर्भिः वाग्भिः पुरोनुवाक्यायाज्यावषट्कारलक्षणाभिः । [V]श्रवाय्यं श्रोतुं योग्यम् । "श्रुदक्षिस्पृहिगृहिभ्य आय्यः" ( उसू° ३·९६ ) इति श्रुणोतेराय्यप्रत्ययः । तथा [V]युजम् । युज्यत इति युक् तम् । युजेः "क्विप् च" ( पा ३.२.७६ ) इति क्विप्प्रत्ययः । योग्यम् । देवादिसंबन्धयोग्यम् इत्यर्थः ॥१४॥

~~~~~~~~~~~~~~~

यो अग्निः कव्यवाहनः पितॄन् यक्षदृतावृधः ।
प्रेदु हव्यानि वोचति देवेभ्यश्च पितृभ्य आ ॥१५॥

~~~~~~~~~~~~~~~

6. S3 पाठस्तु– यमग्ने ... युजमिति for यमग्ने कव्यवाहनेति; S3 om. ऋग्भिः

9. V2 चित्तमपि for चित् त्वमपि
~~~~~~~~~~~~~~~

यः । अग्निः । कव्यवाहन इति कव्यऽवाहनः ।
पितॄन् । यक्षत् । ऋतावृधः । ऋतवृध इत्यृतऽवृधः ।
प्र । इत् । ॐ इत्यूँ । हव्यानि । वोचति ।
देवेभ्यः । च । पितृभ्य इति पितृऽभ्यः । आ ॥ त्र्युं ॥१५॥

---

आ– 'यो अग्निः' इति । $^{v}$यः $^{v}$अग्निः $^{v}$कव्यवाहनः $^{v}$ऋतावृधः । ऋतं वर्धयतीति ऋतवृधः । छान्दसो दीर्घः । ऋतावृधः । ऋताभिवर्धकान् $^{v}$पितॄन् $^{v}$यक्षत् । अडागमलोपश्छान्दसः । अयक्षत् अयजत । 'प्रेदु हव्यानि' । $^{v}$प्र $^{v}$इत् $^{v}$हव्यानि हवींषि $^{v}$देवेभ्यः $^{v}$पितृभ्यः च $^{v}$उ एवम् इत् अपि सोऽप्यग्निः $^{v}$आ आभिमुख्येन, देवेभ्यः एवमादीनि हव्यानि, इमानि पितृभ्य एवेति हविर्विभज्य $^{v}$प्रवोचति प्रब्रवीति ब्रवीतु ॥६५॥

---

अ– 'यो अग्निः'। $^{v}$यः $^{v}$कव्यवाहनः $^{v}$अग्निः $^{v}$पितॄन् $^{v}$यक्षत् इष्टवान् । "लेटोऽडाटौ" (पा ३.४.९४) इत्यट् । "सिब्बहुलं लेटि" (पा ३.१.३४), "इतश्च लोपः परस्मैपदेषु" (पा ३.४.९७)। यद्योगित्वादाद्युदात्तः। कीदृशान् पितॄन् ? $^{v}$ऋतावृधः । ऋतं सत्यं यज्ञं वा वर्धयन्तीति तथा । संहितायां दीर्घः । "ऋतावृध इति सत्यवृध इत्येवैतदाह" (शब्रा ९.२.१.१८) इति श्रुतिः । तानृतावृधः । सोऽग्निरिदानीं $^{v}$देवेभ्यः $^{v}$पितृभ्यः च $^{v}$हव्यानि हवींषि $^{v}$प्रवोचति प्रब्रवीतु । लेडयम् । इमानि हवींषि देवेभ्यः, इमानि तु पितृभ्यः इति वदत्वित्यर्थः । $^{v}$इत् $^{v}$उ इति निपातौ पादपूरणौ । आकारः समुच्चयार्थः । व्यत्ययेन वचेः शपि "वच उम्" (पा ७.४.२०) इति छान्दस उमागमः ॥१५॥

---

त्वमग्न ईळितो जातवेदोऽवाड्ढव्यानि सुरभीणि कृत्वी ।
प्रादाः पितृभ्यः स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवीꣳषि ॥१६॥

---

त्वम् । अग्ने । ईळितः । जातवेद इति जातऽवेदः ।
अवाट् । हव्यानि । सुरभीणि । कृत्वी ।
प्र । अदाः । पितृभ्य इति पितृऽभ्यः । स्वधया । ते । अक्षन् ।
अद्धि । त्वम् । देव । प्रयतेति प्रऽयता । हवीꣳषि ॥ टचौ ॥१६॥

---

5. S3 यो अग्निः ... पितृभ्य आ । इति for यो अग्निः इति ।
7. V2 अयक्ष्यत् for अयक्षत्; S3 अयजत् for अयजत
12. M4 तद्° for यद्°

आ– ‘ त्वमग्ने ’ इति। हे श्रीभगवन् ᵛअग्ने, हे ᵛजातवेदः, ᵛत्वम् ᵛईळितः स्तुतः सन् ᵛहव्यानि हवींषि ᵛअवाट्। वह प्रापणे। हविःप्रापणं कृत्वाऽनशितानि च हव्यानि ᵛसुरभीणि सुगन्धयुक्तानि ᵛकृत्वी कृत्वा ᵛपितृभ्यः ᵛप्रादाः प्रदत्तवानासि। ‘ स्वधया ते अक्षन् ’। त्वद्दत्तया ᵛस्वधया अन्नेन ᵛते पितरः ᵛअक्षन् अदितवन्तः। ‘ अद्धि त्वं देव ’। हे ᵛदेव श्री अग्ने, ᵛत्वं च ᵛप्रयता प्रयतानि शुद्धानि ᵛहवींषि ᵛअद्धि भक्षय ॥६६॥

~~~~~~~~~~

अ– ‘ त्वमग्ने ’। चतस्रस्त्रिष्टुभः। हे कव्यवाहन ᵛअग्ने, ᵛजातवेदः अग्ने, ᵛत्वं ᵛहव्यानि हवींषि ᵛसुरभीणि सुगन्धयुक्तानि ᵛकृत्वी कृत्वा। आकारस्येकारः “ स्नात्व्यादयश्च ” ( पा ७·१·४९ ) इति छान्दसः। ᵛअवाट् वहसि स्म। वहेर्लुङि इडागमाभावे सिचो लोपे रूपम् अवाडिति। कीदृशस्त्वम्? ᵛईळितः। ईड स्तुतौ। “ डढौ ळळ्हावेकेषाम् ” ( वाप्रा ४·१४६ ) इति प्रातिशाख्येन ळकारः। स्तुतः देवैर्ऋत्विग्भिश्च। किं च। हव्यानि ऊढ्वा ᵛस्वधया पितृमन्त्रेण। स्वधाशब्दयुतेनेत्यर्थः। ᵛपितृभ्यः त्वं ᵛप्रादाः दत्तवानसि। ईदृशस्त्वं परोपकर्तेत्यर्थः। ददातेर्लुङि रूपम्। ᵛते च पितरः त्वद्दत्तानि हव्यानि ᵛअक्षन् अभक्षयन्। घस्लृ अदने इत्यस्य लुङि रूपम्। हे ᵛदेव ᵛत्वम् अपि ᵛअद्धि ᵛहवींषि भक्षय। न भृत्यवद्भारवहनमेव कुरु। अद भक्षणे। अस्माल्लोटि मध्यमैकवचनम्। कीदृशानि? ᵛप्रयता प्रयतानि शुद्धानि। नियमपूर्वं गृहीतत्वात् ॥१६॥

~~~~~~~~~~

इ॒दं पि॒तृभ्यो॒ नमो॑ अस्त्व॒द्य ये पूर्वा॑सो॒ य उप॑रास ई॒युः।
ये पार्थि॑वे॒ रज॒स्या निष॑त्ता॒ ये वा॑ नू॒नं सु॑वृ॒जना॑सु वि॒क्षु ॥१७॥

~~~~~~~~~~

इ॒दम्। पि॒तृभ्य॒ इति॑ पि॒तृऽभ्यः॑। नमः॑। अ॒स्तु।
अ॒द्य। ये। पूर्वा॑सः। ये। उप॑रासः। ई॒युः।
ये। पार्थि॑वे। रज॑सि। आ। निष॑त्ताः। निस॑त्ता॒ इ॒ति॒ निऽस॑त्ताः।
ये। वा॒। नू॒नम्। सु॒वृ॒जना॒स्विति॑ सु॒ऽवृ॒जना॑सु। वि॒क्षु ॥ द्वः ॥१७॥

~~~~~~~~~~

आ– ‘ इदं पितृभ्यः ’ इति। ‘ इदम् ’ इति प्रत्यक्षतो निर्देशः। ᵛइदं ᵛनमः अन्नं हविर्लक्षणमन्नं ᵛपितृभ्यः ᵛअस्तु भवतु। ᵛअद्य ᵛये इदानींतना ये पितरः। ᵛपूर्वासः ᵛये पूर्वमेव ये स्वर्गं प्राप्ताः। ᵛउपरासः। कृतव्यापाराः कृतकृत्या उपरासः। उप समीपे अव्यवहिते

~~~~~~~~~~

1. S3 पाठस्तु – त्वमग्न ईळितो … हवीꣳषीति for त्वमग्न इति।
9. M4 P2 लकारः for ळकारः
21. S3 पाठस्तु – इदं … विक्ष्विति for इदं पितृभ्य इति।
~~~~~~~~~~

आत्म[-त-]त्वे रमन्त इत्युपराः। उपरा एव उपरासः। ये परब्रह्म vईयुः गताः। vये vपार्थिवे vरजसि। पृथिव्यां भवं पार्थिवम्। रजः ज्योतिः, तस्मिन् पार्थिवे रजसि vआ vनिषत्ताः आभिमुख्येन निषण्णाः अग्निलोकं प्राप्ता इत्यर्थः। vये vवा ये च vनूनं vसुवृजनासु सुपुण्ययुक्तासु उत्पद्य स्थिताः। साधुजनेषु vविक्षु प्रजासु उत्पद्य स्थिताः ये पितरस्तेभ्यः पितृभ्यः इदं नमोऽन्नमस्त्विति संबन्धः ॥६७॥

---

अ- 'इदं पितृभ्यः'। vये vपूर्वासः ये पूर्वे पितरः vईयुः अर्थात् स्वर्गं जग्मुः, vये च vउपरासः उपराः। उपरमन्ति विरमन्ति त उपरा, उपरतव्यापाराः, कृतकृत्याः सन्तः ईयुः परं ब्रह्म प्रापुः। vये च पितरः vपार्थिवे vरजसि। पृथिव्यां भवं पार्थिवं रजो ज्योतिरग्निस्तस्मिन् vआ vनिषत्ताः आभिमुख्येन निषण्णाः। "नसत्तनिषत्तानु°" (पा ८·२·६१) इत्यादिना निष्ठायां निपातोऽयम्। vये vवा। वाशब्दः समुच्चयार्थः। ये च vनूनं निश्चितं vविक्षु प्रजासु यजमानलक्षणासु पुत्रादिषु निषण्णाः सन्ति। किदृशीषु विक्षु ? vसुवृजनासु, शोभनं वृजनं धर्मरूपं बलं यासां तासु सुवृजनासु, धर्मरूपबलयुक्तासु उत्पद्य स्थिता इत्यर्थः। vअद्य अस्मिन् दिने। तेभ्यश्चतुर्विधेभ्यः स्वर्गब्रह्माऽग्नियजमानस्थेभ्यः vपितृभ्यः vइदं vनमः अन्नं नमस्कारश्च vअस्तु ॥१७॥

---

ये चे॒ह पि॒त॒रो॒ ये च॒ नेह याँ॑श्च वि॒द्म याँ२ उ॑ च॒ न प्र॑वि॒द्म।
त्वं वे॑त्थ॒ यति॒ ते जा॑तवेदः स्व॒धाभि॑र्य॒ज्ञꣳ सुकृ॑तं जुषस्व ॥१८॥

---

ये। च॒। इ॒ह। पि॒तर॑ः। ये। च॒। न। इ॒ह।
यान्। च॒। वि॒द्म। यान्। ऊँ॒ इत्यूँ॑। च॒। न। प्र॒वि॒द्मेति॑ प्र॒ऽवि॒द्म।
त्वम्। वे॒त्थ॒। यति॑। ते। जा॒त॒वे॒द॒ इति॑ जातऽवेदः।
स्व॒धाभि॑ः। य॒ज्ञम्। सु॒कृ॒त॒मिति॒ सुऽकृतम्। जु॒ष॒स्व॒ ॥ द्रुः ॥१८॥

---

आ- 'ये चेह'। vइह अस्मत्समीपे vये vच vपितरः, vइह अस्मिन् लोके vये vच vन। vयान् पितॄन् वयं vविद्म जानीमः। vउ vच vन vप्रविद्म। इह वा अन्यत्र वा मया ये अविदिताः, यान् वयं न विद्मः, तान् सर्वान् हे श्री भगवन्नग्ने, vत्वं vवेत्थ जानासि। vयति। व्यत्ययः। यन् अवगच्छन्, हे vजातवेदः, सर्वज्ञः vस्वधाभिः हविर्लक्षणैरन्नैः vसुकृतं साधुकृतं साङ्गमनुष्ठितं vयज्ञं vजुषस्व सेवस्व ॥६८॥

---

20. S3 पाठस्तु – ये चेह ... जुषस्वेति for ये चेह
21. V2 न विद्म न जानीमः for विद्म जानीमः
22. S3 विद्म for विद्मः

अ– ‘ ये चेह पितरः ’। [v]ये [v]पितरः [v]इह अस्मिन् लोके वर्तन्ते, [v]ये [v]च [v]न [v]इह इहलोके न सन्ति, [v]यान् [v]च पितॄन् वयं [v]विद्म जानीमः। उशब्दः पादपूरणः । [v]यान् [v]च पितॄन् वयं [v]न [v]प्रविद्म प्रकर्षेण न जानीमः। यद्वृत्तयोगात् ‘विद्म’ इति क्रियापदं न सर्वानुदात्तम्। हे [v]जातवेदः, [v]ते पितरः [v]यति यावन्तो वर्तन्ते तावत्संख्यांस्तान् [v]त्वं [v]वेत्थ जानासि। या संख्या येषां ते यति। “ किमः संख्यापरिमाणे डति च ” (पा ५.२.४१) इति सूत्रे *“ यत्तद्भ्यामपि डतिः ” इति वार्तिकेन यच्छब्दात् डतिप्रत्ययः। “ डति च ” (पा १.१.२५) इति तस्य षट्संज्ञत्वात् “ षड्भ्यो लुक् ” ( पा ७.१-२२ ) इति जसो लुक्। यद्वा– यति यतीन् शुचीन्। नित्यनैमित्तिकानुष्ठानैः निष्पापांस्तान्। त्वं वेत्थ। विभक्तिलोपः। ते इत्यत्र व्यत्ययेन जस्। किं च– [v]स्वधाभिः पितॄणामन्नैः। [v]सुकृतं शोभनं कृतं [v]यज्ञं त्वं [v]जुषस्व ॥१८॥

---

अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशुषाणाः।
शुचीदयन् दीधितिमुक्थशासः क्षामा भिन्दन्तो अरुणीरप व्रन् ॥१९॥

---

अध। यथा। नः। पितरः। परासः। प्रत्नासः। अग्ने। ऋतम्। आशुषाणाः।
शुचि। इत्। अयन्। दीधितिम्। उक्थशासः। उक्थशास इत्युक्थऽशसः।
क्षाम। भिन्दन्तः। अरुणीः। अप। व्रन्॥ ग्रौं ॥१९॥

---

आ– ‘ अधा यथा ’ इति। [v]अध अथ एवं सति [v]यथा येन प्रकारेण [v]नः अस्माकं [v]पितरः [v]परासः परा एव परासः, उत्कृष्टाः। [v]प्रत्नासः। प्रत्नशब्दः पुराणवचनः, पुराणाः। हे श्रीभगवन् [v]अग्ने, [v]ऋतं यज्ञम् [v]आशुषाणाः आप्नुवानाः व्याप्नुवन्तः। [v]उक्थशासः। उक्थं शंसन्ति ये त उक्थशासः पितरः। [v]शुचि दीप्तं। यज्ञे हविर्भागम्। योगमाहात्म्येनान्तःकरणद्वारा च परमतेजोरूपं सौरं ज्योतिः। [v]इत् एव। अयं व्यत्ययः। [v]अयन् संगताः। [v]दीधितिं सुषुम्नाख्यं रश्मिम् अयन् आगताः प्राप्ताः। ‘ क्षाम भिन्दन्तो अरुणीरप व्रन् ’ । [v]क्षामा छान्दसः। क्षमां भूमिं [v]भिन्दन्तः अवटादिभेदेन भिन्दन्तः विदारयन्तः। यद्वा– तदाश्रितयूपपश्वादिभेदेन वा विदारयन्तः। [v]अरुणीः दीधितीः रश्मीनिति । अरुण्युपलक्षितमार्ग(पर्व?)देवताः [v]अपव्रन्। वृङ् संभक्तौ। संप्राप्ता इत्यर्थः ॥६९॥

---

5. * This is not found in among the Vārtikas
14. S3 अधा ... व्रन्निति for ‘ अधा यथा ’ इति

अ– ' अधा यथा ' इति। हे अग्ने, नः अस्माकं पितरः अध अथ। धकारश्छान्दसः। अनन्तरं देहपातोत्तरकालम् यथा येन प्रकारेण शुचि। सुपो लोपाच्छुचि। इच्छन्द एवार्थे । शुचिं निर्मलमेव दीधितिं रविमण्डलम्। अयन् प्राप्ताः। अय गतौ । अस्माल्लुङ् । अडभावश्छान्दसः । कीदृशाः? परासः पराः, उत्कृष्टाः। प्रत्नासः प्रत्नाः पुराणाः । प्रत्न इति पुराणनाम। ऋतं यज्ञम् आशुषाणा अश्नुवानाः, व्याप्नुवन्तः। एवंभूताः पितरो यथा देवयानं पन्थानं प्राप्ताः, तथा वयमपि अरुणीः अरुणवर्णाः सूर्यदीधितीः अपव्रन् अपवृणुमः । सूर्यरश्मीनपवृत्य देवयानमार्गं प्राप्नुम इत्यर्थः। वृं वरणे। अस्य विकरणव्यत्ययेन शपि लुप्ते लङि रूपम् । अडभावः पुरुषव्यत्ययश्छान्दसः । कीदृशा वयम्? उक्थशासः। यज्ञेषु उक्थानि शस्त्राणि शंसन्ति वदन्ति ते उक्थशसः । क्विप् संहितायां दीर्घः। तथा क्षामा क्षामम् । अमो लोपः । भूमिं भिन्दन्तः । वेदिचात्वालयूपावटोपरवादिखननैर्भुवं विदारयन्त इत्यर्थः। यज्ञकारिण इति यावत् । यद्वा– भूमिं पार्थिवीं तनुं भिन्दन्तः भेदयन्तस्त्यजन्त इत्यथः। शरीरत्यागानन्तरमेव लोकान्तरप्राप्तेः ॥१९॥

---

उशन्तस्त्वा नि धीमह्युशन्तः समिधीमहि ।
उशन्नुशत आ वह पितॄन् हविषे अत्तवे ॥२०॥

---

उशन्तः । त्वा । नि । धीमहि । उशन्तः । सम् । इधीमहि ।
उशन् । उशतः । आ । वह । पितॄन् । हविषे । अत्तवे ॥ स्युं ॥ २० ॥

---

आ– ' उशन्तस्त्वा ' इति। वश कान्तौ । कृतसंप्रसारणस्यैतद्रूपम् ' उशन्तः ' इति श्रीभगवन्नग्ने, यत् उशन्तः कामयमानाः वयं त्वा त्वां अग्निं निधीमही स्थापयामहे। यतश्च वयं उशन्तः कामयमानाः संमिधीमहि त्वां संदीपयामः । अतस्त्वमपि उशन् कामयमान एव उशतः हविः कामयमानान् पितॄन् आवह। किमर्थमिति। हविषे अत्तवे। व्यत्ययः। हविरत्तवे अत्तुं, हविषो भक्षणायेत्यर्थः ॥७०॥

---

अ– ' उशन्तस्त्वा '। अनुष्टुप्। हे अग्ने, उशन्तः कामयमानाः वयं त्वा त्वां निधीमहि स्थापयामः। तथा उशन्तः वयमेव त्वां समिधीमहि संदीपयामः समित्काष्ठादिभिः। त्वं च उशन् कामयमानः सन् उशतः कामयमानान् पितॄन् आवह आनय। किं कर्तुम्? हविषे अत्तवे । विभक्तिव्यत्ययः। हविरत्तुं भक्षयितुम् । " तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन् शध्यैशध्यैन् तवैतवेङ्तवेनः " ( पा ३.४.९ ) इति तुमर्थे तवेङ् ॥२०॥

---

1. M4 om. अथ
2. P2 M4 सेव्यस्व for शुचि
6. M4 om. अपवृणुमः
10. M4 पृथिवीं for पार्थिवीं

अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः ।
विश्वा यदजय स्पृधः ॥२१॥(४) ॥

---

अपाम् । फेनेन । नमुचेः । शिरः । इन्द्र । उत् । अवर्तयः ।
विश्वाः । यत् । अजयः । स्पृधः ॥ श्रां ॥२१॥ (४) ॥

---

आ– ‘ अपां फेनेन ’ इति । ऐन्द्री गायत्री । हे श्रीभगवन् vइन्द्र । ‘ विश्वा यदजयः स्पृधः ’ । vयत् यदा vविश्वाः सर्वाः vस्पृधः समितीः संग्रामान् vअजयः जयं प्राप्तवानसि, तदा vअपां vफेनेन वज्रीभूतेन vनमुचेः असुरस्य vशिरः हे इन्द्र, vउदवर्तयः । उत्पूर्वो वृतिः छेदने वर्तते । शिरः छिन्धीति ( ? )। इदानीमेतं च मन्त्रं वक्ष्यमाणं चानुवाकं श्रुतिः संबध्नाति– “ तस्य शीर्षश्छिन्ने लोहितमिश्रः सोमोऽतिष्ठत् तस्माद-बीभत्सन्त । एतदन्धसोर्विपानमपश्यन् ” ( शब्रा १२.७.३.४ ) [ इत्यादि ] ॥७१॥

---

अ– ‘ अपां फेनेन ’। ऐन्द्री गायत्री अग्रिमानुवाकनिदानभूता। हे ▾इन्द्र, ▾यत् यदा त्वं ▾विश्वाः ▾स्पृधः सर्वान् संग्रामान् ▾अजयः जितवानसि तदा ▾अपां ▾फेनेन जलडिण्डीरेण ▾नमुचेः असुरस्य ▾शिरः ▾उदवर्तयः छिन्नवानसि। उत्पूर्वो वृतिश्छेदनार्थः। एवमेवाम्नायते ब्राह्मणे– “ तस्मादेतदृषिणाभ्यनूक्तम्। ‘अपां फेनेन ’, इत्यृचमुक्त्वा “ पाप्मा वै नमुचिः । पाप्मानं वाव तद्द्विषन्तं भ्रातृव्यं हत्वन्द्रियं ··· वीर्यमस्य वृङ्क्ते तस्य शीर्षश्छिन्ने लोहितमिश्रः सोमोऽतिष्ठत् तस्मादबीभत्सन्तः । त एतदन्धसो-र्विपानमपश्यन्त्सोमो राजाऽमृतꣳ सुतः इति तैनैनꣳ स्वदयित्वाऽऽत्मन्नदधत ” ( शब्रा १२.७.३.४ ) इति ॥२१॥

इति श्रीवेदार्थदीपिकायां संहिताभाष्ये एकविंशाध्यायस्य चतुर्थोऽनुवाकः ॥

[ इति चतुर्थोऽनुवाकः । ]

---

[ अथ पञ्चमोऽनुवाकः । ]

सोमो राजाऽमृतꣳ सुत ऋजीषेणाजहान्मृत्युम् ।
ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥१॥

---

13.　M4 om. ब्राह्मणे

सोमः । राजा । अमृतम् । सुतः । ऋजीषेण । अजहात् । मृत्युम् ॥
ऋतेन । सत्यम् । इन्द्रियम् । विपानमितिं विऽपानम् । शुक्रम् । अन्धसः ।
इन्द्रस्य । इन्द्रियम् । इदम् । पयः । अमृतम् । मधु ॥ ह्वौं ॥१॥

---

आ – 'सोमो राजाऽमृतं सुतः' इति । 'सोमो राजा' इति पञ्चभिः कण्डिकाभिः त्रिभिरवान्तरावसानैश्चेत्यष्टभिर्ग्रहोपस्थानम् । अश्विसरस्वतीन्द्रदेवताश्चापश्यन् । 'सोमो राजा' । महाबृहती । अष्टाक्षरपादाश्चत्वारः, पञ्चमो जागतश्चेन्महाबृहती नाम छन्दो भवति । सोम एव [v]सोमः [v]राजा । [v]सुतः अभिषुतः । [v]अमृतम् अमरीभावात् । स्थूलस्य सूक्ष्मता अमृतीभावः । अभिषूयमाणायाः सोमवल्याः चूर्णपुञ्ज ऋजीषः, तेन [v]ऋजीषेण सोमसूक्ष्मरूपेण [v]मृत्युम् [v]अजहात् ।

'ऋतेन सत्यमिन्द्रियम्' । [v]ऋतेन अनेन सत्यचरितेन इदमपि [v]सत्यं जातम् । [v]इन्द्रियं वीर्यम् । [v]विपानं लोहिताद्विविक्तं पानं पानार्हं [v]शुक्रं शुद्धम् । [v]अन्धसः अन्नात् संभूतम् ।

'इन्द्रस्येन्द्रियम्' । [v]इन्द्रस्य संबन्धि [v]इन्द्रियम् । [v]पयः [v]इदं अमरत्वकारणं मधुरसवत् ॥७२॥

---

अ – कात्यायनः – "सोमो राजेत्यनुवाकेन गृहानुपतिष्ठते युगपत्" (काश्रौ १९.२.२४)। अष्टर्चेनानुवाकेन समानकालमेव पयोग्रहान् सुराग्रहांश्च अध्वर्युरुपतिष्ठत इति सूत्रार्थः ॥

'सोमो राजा' । अश्विसरस्वतीन्द्रदृष्टा अष्टौ ऋचः पञ्चकण्डिकात्मिकाः । आद्यास्तिस्रो महाबृहत्यः । यस्याश्चत्वारः पादा अष्टकाः पञ्चमो द्वादशकः सा महाबृहती । [v]सोमः [v]राजा [v]सुतः अभिषुतः सन् [v]अमृतम् अमृतरूपेण रसरूपो भवति । स्थूलस्य सूक्ष्मत्वापादनममृतीभावः । यतः [v]ऋजीषेण । ऋजीषं नीरससोमलताचूर्णम् । तद्रूपेण [v]मृत्युं स्थूलभावम् [v]अजहात् जहाति । [v]ऋतेन अनेन सत्यचरितेन एतत् [v]सत्यं जातम् । किम् ? [v]अन्धसः अन्नस्य सोमस्य [v]विपानं लोहिताद्विविच्य पानं [v]शुक्रं शुक्लं शुद्धम् । अत एव [v]इन्द्रियं वीर्यप्रदं भूयात् । [v]इदं [v]पयः च [v]इन्द्रस्य ईदृशं भवतु । कीदृशम् ? [v]इन्द्रियं वीर्यवत् । [v]अमृतम् अजरामरत्वप्रदं [v]मधु मधुरं च । एतन्निदानं तु– "तस्य शीर्षश्छिन्ने लोहितमिश्रः सोमोऽतिष्ठत्" इत्युक्तमेव । तथा चैककारणानि वस्तूनि यथा विविच्यमानानि दृश्यन्ते । यथा च पृथग्भूतानि संसृष्टानि पुनर्विविच्यन्ते । एवमयमपि लोहितमिश्रः सोमो विविक्तः सोम एवेति सर्वानुवाकतात्पर्यार्थः ॥१॥

---

4. S3 पाठस्तु – सोमो ... मध्विति for 'सोमो ... सुतः' इति; V2 खण्डिकाभिः for कण्डिकाभिः

अद्भ्यः क्षीरं व्यपिबत् क्रुङ्ङाङ्गिरसो धिया ।
ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धस
इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ।
सोममद्भ्यो व्यपिबच्छन्दसा हꣳसः शुचिषत् ।
ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धस
इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ।
अन्नात् परिस्रुतो रसं ब्रह्मणा व्यपिबत् क्षत्रं पयः सोमं प्रजापतिः ।
ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धस
इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥२॥

---

अद्भ्य इत्यत्ऽभ्यः । क्षीरम् । वि । अपिबत् । क्रुङ् । आङ्गिरसः । धिया ।
सोमम् । अद्भ्य इत्यत्ऽभ्यः । वि । अपिबत् । छन्दसा ।
हꣳसः । शुचिषत् । शुचिसदिति शुचिऽसत् ।
अन्नात् । परिस्रुत इति परिऽस्रुतः । रसम् । ब्रह्मणा । वि । अपिबत् ।
क्षत्रम् । पयः । सोमम् । प्रजापतिरिति प्रजाऽपतिः ॥ ऋः ॥२॥

---

आ– ' अद्भ्यः क्षीरम् ' इति । त्र्यवसाना शक्वरी । [v]अद्भ्यः [v]क्षीरं [v]व्यपिबत् । क्षीरोदकयोः संसृष्टयोरद्भ्यः सकाशात् क्षीरं वियुज्य । [v]क्रुङ् हंसः । क्रुङ् गतिकौटिल्ये । कुटिलगतियोगात् । अपिबत् पीतवान् । अत्र [v]आङ्गिरसः प्राणो हंसजातिमास्थाय क्षीरं व्यपिबत् । प्राणो हि अङ्गानां रसः । आङ्गिरसः [v]धिया प्रज्ञया यः पीतवान् तस्य मे अनेन [v]ऋतेन सत्याचरणेन [v]इन्द्रियं वीर्यं [v]विपानं [v]शुक्रं शुक्रम् [v]अन्धसः संभूतं [v]सत्यं भूयात् । अथ [v]इन्द्रस्य [v]इन्द्रियं [v]पयः [v]अमृतं [v]मधु भूयात् ॥

---

15. S3 अद्भ्यः ... मध्विति for ' अद्भ्यः क्षीरम् ' इति ।
16. V2 क्रुङ् ... । कुङ् गति° for क्रुङ् ... । क्रुङ् गति°
17. V2 प्राणोऽहं सजातिमत् स्थायि for प्राणो हंसजातिमास्थाय
19. V2 सततं, S3 सतः for संभूतं

‘ सोममद्भ्यो व्यपिबत्छन्दसा हꣳसः शुचिषत् ’ [ इति ]। सोमोदकयोः संसृष्टयोः $^{V}$सोमम् $^{V}$अद्भ्यः सकाशात् $^{V}$छन्दसा छन्दोनिवहेन वेदेन $^{V}$हꣳसः $^{V}$शुचिषत् आदित्यः सोमं वियुज्य $^{V}$अपिबत् ।

‘ ऋतेन सत्यम् ’ इति व्याख्यातम् ॥

‘ अन्नात् परिस्रुतः ’ इति । $^{V}$अन्नात् हविर्लक्षणात् $^{V}$परिस्रुतः पारिसृत्य यः $^{V}$सोमं $^{V}$रसं $^{V}$ब्रह्मणा वेदलक्षणेन $^{V}$प्रजापतिः प्रथमं $^{V}$व्यपिबत् पीतवान् । $^{V}$क्षत्रं व्यपिबत् । क्षत्रस्य पानं तु क्षत्रवशीकरणमेव ।

‘ ऋतेन सत्यम् ’ इति समानार्थः ॥७२॥

---

अ- ‘ अद्भ्यः क्षीरम् ’ । $^{V}$आङ्गिरसः अङ्गानां रसः प्राणः । “ प्राणो वाऽङ्गानां रसः ” ( शब्रा १४·४·१·२१ ) इति श्रुतेः । यथा $^{V}$क्रुङ् । क्रुङ् गतिकौटिल्ये । हंसः भूत्वा $^{V}$धिया प्रज्ञया $^{V}$अद्भ्यः सकाशात् $^{V}$क्षीरम् $^{V}$अपिबत् पिबति । लकारव्यत्ययः। संसृष्टाभ्यां क्षीरोदकाभ्यां क्षीरमेव हंसः पिबति इति जातिस्वभावः। अनेन $^{V}$ऋतेन सत्येन इदं $^{V}$सत्यं यत् $^{V}$अन्धसः $^{V}$विपानं $^{V}$शुक्रं भवतु । अथ $^{V}$इन्द्रस्य $^{V}$पयः वीर्यम् $^{V}$अमृतं भवतु ॥

‘ सोममद्भ्यः ’। $^{V}$हंसः आदित्यः। “ हंस आदित्यः ” (शब्रा ६·७·३·११) इति *नैरुक्ताः । $^{V}$अद्भ्यः सकाशात् $^{V}$छन्दसा वेदेन वेदरूपैः किरणैर्यथा $^{V}$सोमं $^{V}$व्यपिबत् वियुज्य पिबति । सोमोदकाभ्यां संसृष्टाभ्यां सकाशाद्रविः सोममेव पिबति । अनेन ऋतेन, इत्यादि पूर्ववत् । कीदृशो हंसः ? $^{V}$शुचिषत् । $^{V}$शुचिनि निर्मले गगने सीदतीति शुचिषत् । ‘ हंसः शुचिषत् ’ इति समाख्या श्रुतेः । हंसशब्दः सूर्यपरः ॥

‘ अन्नात् परिस्रुतः ’ इति । अतिजगती द्वात्रिपञ्चाशदक्षरा । $^{V}$प्रजापतिः हिरण्यगर्भः $^{V}$परिस्रुतः $^{V}$अन्नात् सुरारूपादन्नात् $^{V}$रसं $^{V}$ब्रह्मणा वेदेन परब्रह्मानुग्रहेण वा $^{V}$व्यपिबत् विविच्य पीतवान् । तथा $^{V}$क्षत्रम् क्षत्रजातिं क्षतात् त्राणं वा व्यपिबत्, विशेषतः स्ववशं चकार । अत्र पानं वशीकरणमेव । तथा $^{V}$पयः $^{V}$सोमं च व्यपिबत् । अनेन ऋतेन सत्येनेदम्, इत्यादि पूर्ववत् ॥२॥

---

रेतो मूत्रं वि जहाति योनिं प्रविशदिन्द्रियम् ।
गर्भो जरायुणाऽऽवृत उल्बं जहाति जन्मना ।
ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धस
इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥३॥

---

1. S3 सोममद्भ्यो ... मध्विति for ‘ सोममद्भ्यो ... शुचिषत् ’।

5. S2 अन्नात् ... माध्विति for ‘ अन्नात् परि स्रुत ’ इति; V2 S3 °स्रुतः for °स्रुतः ।

* [ हंस आदित्यः ’ इत्याकारको ग्रन्थः निरुक्ते नोपलभ्यते । ]

रेतः । मूत्रम् । वि । जहाति । योनिम् । प्रविशदिति प्रऽविशत् । इन्द्रियम् ।

गर्भः । जरायुणा । आवृत इत्याऽवृतः । उल्बम् । जहाति । जन्मना ॥ जीं ॥३॥

---

आ– ‘ रेतो मूत्रम् ’ इति । अनुष्टुप् लिङ्गोक्तदेवता । रेतः वीर्यम् इन्द्रियं योनिं स्त्रीप्रजननं योनिं प्रविशत् योनिप्रवेशादन्यत्र मूत्रं विजहाति । मूत्ररेतसोस्तुल्यद्वारत्वेऽपि मूत्रस्थानं हित्वा रेतोऽन्यत्रावतिष्ठते । ततः गर्भः जरायुणा गर्भवेष्टनेन आवृतः गर्भः जन्मना प्रसवेन उल्बं गर्भावस्थितिस्थानं जहाति त्यजति । सत्यमेतत् । नानास्थानानामेकद्वाराणां प्रथममुदाहरणम् । एकस्थानानामनेकद्वाराणां द्वितीयम् ।

‘ ऋतेन ’ इति समानार्थः ॥७४॥

---

अ– ‘ रेतो मूत्रम् ’ । अतिशक्वर्यौ द्वे । षष्ठ्यक्षरातिशक्करी । इन्द्रियं पुंजननं शिश्नम् । योनिं स्त्रीप्रजननं प्रविशत् सत् रेतः वीर्यं विजहाति त्यजति । योनिप्रवेशादन्यत्र मूत्रं विजहाति । समानद्वारयोरपि रेतोमूत्रयोर्मूत्रस्थानादन्यत्र रेतोऽवतिष्ठते येन सत्येन तथा, जरायुणा गर्भवेष्टनेन आवृतः गर्भः जन्मना प्रसवेन उल्बं जरायुं जहाति । भिन्नस्थानानामेकद्वाराणामाद्यमुदाहरणम् । एकस्थानानामनेकद्वाराणां द्वितीयमिति विवेकः ।

‘ ऋतेन ’ इति व्याख्यातम् ॥३॥

---

दृष्ट्वा रूपे व्याकरोत् सत्यानृते प्रजापतिः ।

अश्रद्धामनृतेऽदधाच्छ्रद्धाꣳ सत्ये प्रजापतिः ।

ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धस

इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥४॥

---

दृष्ट्वा । रूपे इति रूपे । वि । आ । अकरोत् ।

सत्यानृते इति सत्यानृते । प्रजापतिरिति प्रजाऽपतिः ।

अश्रद्धाम् । अनृते । अदधात् । श्रद्धाम् । सत्ये । प्रजापतिरितिऽप्रजा पतिः ॥थीं॥४॥

---

3. S3 पाठस्तु — रेतो ... मध्विति for ‘ रेतो मूत्रम् ’ इति

5. V2 मूत्रस्य for मूत्र°

7. S3 om. एक° ... द्वितीयम्; V2 एकद्वाराणामुदाहरणम् for अनेकद्वाराणां द्वितीयम्

आ– ' दृष्ट्वा रूपे ' इति । अनुष्टुप् यजुरन्ता लिङ्गोक्तदेवत्या । vप्रजापतिः vरूपे vदृष्ट्वा उपलभ्य vसत्यानृते रूपे । ' सत्यस्येदं रूपम् अनृतस्येदं रूपम् ' इति असाधारणरूपं दृष्ट्वा vव्याकरोत् । व्याकरणं पृथक्कार्यसंघ्ग्राकरणम् । तत्रापि vअनृते अयथारूपे । vअश्रद्धां आस्तिक्यबुद्धिशून्यताम् अनृते vअदधात् । vप्रजापतिः vसत्ये vश्रद्धां । श्रद्धा तात्पर्यमास्तिक्यबुद्धिः । तां श्रद्धां सत्ये अबाध्यरूपे अदधात् स्थापितवान् ।

' ऋतेन ' इति व्याख्यातम् ॥७५॥

---

अ– ' दृष्ट्वा रूपे ' । vप्रजापतिः vरूपे रूपवती मूर्तिमती vसत्यानृते vदृष्ट्वा व्याकरोत् । विविधकरणं पृथक् चकार । इदं सत्यमिदमनृतमिति पृथगवस्थापयत् । तदेव स्पष्टयन्नाह– vअनृते vअश्रद्धाम् vअदधात् अस्थापयत् । अनृतस्याश्रद्धानिमित्तत्वात् । vसत्ये vश्रद्धाम् अदधात् । सत्यस्य श्रद्धानिमित्तत्वात् । श्रद्धाऽऽस्तिक्यबुद्धिः ।

' ऋतेन ' इति पूर्ववत् ॥४॥

---

वेदेन रूपे व्यपिबत् सुतासुतौ प्रजापतिः ।
ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ।
दृष्ट्वा परिस्रुतो रसꣳ शुक्रेण शुक्रं व्यपिबत् पयः सोमं प्रजापतिः ।
ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धस
इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥५॥ (५) ॥

---

वेदेन । रूपे इति रूपे । वि । अपिबत् । सुतासुतौ । प्रजापतिरिति प्रजाऽपतिः ।
दृष्ट्वा । परिस्रुत इति परिऽस्रुतः । रसम् । शुक्रेण । शुक्रम् ।
वि । अपिबत् । पयः । सोमम् । प्रजापतिरिति प्रजाऽपतिः ॥ घें ॥ ५ ॥ (५) ॥

---

आ– ' वेदेन ' इति । महाबृहती लिङ्गोक्तदेवत्या । vवेदेन vरूपे । वेदेन परिज्ञानेन त्रय्या विद्यया वा vसुतासुतौ । सुतः सोमः असुतं पयः । सुतासुतौ vप्रजापतिः vव्यपिबत् ।

---

1. S3 पाठस्तु — दृष्ट्वा … मध्विति for ' दृष्ट्वा रूपे ' इति ।

'दृष्ट्वा परिस्रुतो रसꣳ शुक्रेण शुक्रꣳ व्यपिबत्' [ इति ]। vशुक्रेण शुद्धेन अमलेन मन्त्रेण शुक्ररसं vदृष्ट्वा vपरिस्रुतः, परिज्ञाता vप्रजापतिः vपयः च vसोमं च vव्यपिबत् पीतवान्।

'ऋतेन सत्यम्' इति समानार्थः ॥७६॥

---

अ– 'वेदेन रूपे'। महाबृहती। vप्रजापतिः vसुतासुतौ । विभक्तिव्यत्ययः । सुतासुतयोः सोमपयसोः। vरूपे vवेदेन ज्ञानेन त्रयीलक्षणेन वा, vव्यपिबत् विविच्य पीतवान् च।

'ऋतेन' इत्युक्तम् ॥

'दृष्ट्वा परिस्रुतः'। अतिजगती । vप्रजापतिः। परिस्रवतीति परिस्रुत्, तस्याः vपरिस्रुतः सुरायाः vरसं vदृष्ट्वा शुक्रेण शुद्धेन vमनसा मन्त्रेण वा vपयः vसोमं च vशुक्रं शुक्रं शुद्धं कृत्वा vव्यपिबत् वियुज्य पीतवान्।

'ऋतेन' इति पूर्ववद्व्याख्येयम् ।।५॥

[ इत्येकविंशाध्यायभाष्ये पञ्चमोऽनुवाकः ।।५॥ ]

---

[ अथ षष्ठोऽनुवाकः । ]

सीसे॑न॒ तन्त्रं॒ मन॑सा मनी॒षिण॑ ऊर्णासू॒त्रेण॑ क॒वयो॑ वयन्ति ।
अ॒श्विना॑ य॒ज्ञꣳ स॑वि॒ता सर॑स्वती॒न्द्र॑स्य रू॒पं वरु॑णो भिष॒ज्यन् ।।१।।

---

सीसे॑न । तन्त्र॑म् । मन॑सा । म॒नी॒षिण॑ः । ऊ॒र्णा॒सू॒त्रेणेत्यू॒र्णा॒ऽसू॒त्रेण॑ । क॒वय॑ः । व॒य॒न्ति॒ ।
अ॒श्विना॑ । य॒ज्ञम् । स॒वि॒ता । सर॑स्वती । इन्द्र॑स्य । रू॒पम् । वरु॑णः । भि॒ष॒ज्यन् ॥ग्यू॥१॥

---

आ- खुरैर्वसाग्रहान् द्वात्रिꣳशतं जुहोति– 'सीसेन तन्त्रम्' इति । प्रत्यर्चमश्विसरस्वतीन्द्रदेवत्या त्रिष्टुप् जगती वा । अत्र षोडश जगत्यः पूर्वमश्विसरस्वतीन्द्रा अपश्यन्। अतस्त एव ऋषयः। एत एव देवताश्च। यथेन्द्रस्य भैषज्यं तथा आभिर्भैषज्यमुच्यते [ यज्ञः पटेन रूप्यते ] प्रथमायामृचि ॥

---

1. S3 पाठस्तु — दृष्ट्वा ... मध्विति for दृष्ट्वा ... व्यपिबत्; V2 °सुतो ... for °स्रुतो
2. V2 °सुतः for °स्रुतः
10. M4 P2 वियुत्य for वियुज्य

'सीसेन तन्त्रं मनसा मनीषिण ऊर्णासूत्रेण' इति । vसीसेन vऊर्णासूत्रेण ऊर्णनाभिनिर्मितसूत्रेण, यद्वा– ऊर्णायाः सूत्रेण च, vतन्त्रं द्वौ द्वौ समासीभूय यज्ञं vवयन्ति रचयान्ति vकवयः । तन्तुभिरिव पटं पूर्वाधरैः सूत्रैः दक्षिणोत्तरैश्च तन्तुभिर्वयन्ति । किं वयन्ति ? यज्ञम् । कवयः क्रान्तदर्शिनः vमनीषिणः vमनसा पर्यालोच्य रचयान्ति ॥

गुणत उक्त्वेदानीं नामत आह– 'अश्विना यज्ञम्' इति । vअश्विना अश्विनौ vसविता प्रसविता vसरस्वती vवरुणः च vइन्द्रस्य vरूपं vयज्ञम् एते सर्वे देवाः vभिषज्यन् भैषज्यं कुर्वन् ॥७७॥

---

अ- कात्यायनः – "खुरैर्वसाग्रहान् द्वात्रिंशतं जुहोति सीसेनेति प्रत्यृचम्" (काश्रौ १९.४.१२) इति । 'पञ्चपलो ग्रहः' इति परिशिष्टोक्तेर्ऋषभखुराणां स्थूलत्वाचार्षभैः खुरैः पशूनां वसां गृहीत्वा 'सीसेन' इति षोडशर्चानुवाकेन प्रतिमन्त्रं द्वौ द्वाविति द्वात्रिंशत्संख्याकान् वसाग्रहान् जुहोतीति सूत्रार्थः ॥

'सीसेन तन्त्रम्' । अश्विसरस्वतीन्द्रदेवत्याः षोडश जगत्यः । 'जगतीभिर्जुहोति' इति श्रुतिबलात् बह्वक्षरन्यूनानामपि कासांचिज्जगतीत्वं ज्ञेयं छत्रिन्यायेन । दस्रादिभिर्यथा इन्द्रस्य भैषज्यं कृतं तदनेनानुवाकेन प्रतिपाद्यते ॥

vअश्विना अश्विनौ दस्रौ । vसविता vसरस्वती vवरुणः च vमनसा विचार्य vयज्ञं सौत्रामण्याख्यं vवयन्ति निष्पादयन्ति । वेञ् तन्तुसंतान इति धातुः । केन ? vसीसेन vऊर्णासूत्रेण च । सीसेन शष्पक्रयणादूर्णया तोक्मक्रयणात् ताभ्यां यज्ञनिष्पत्तिरित्यर्थः । तत्र दृष्टान्तः सीसेन इत्यत्रापि संबध्यते । सीसेन ऊर्णासूत्रेण च तन्त्रम् इव । यथा कश्चित् सीसेन धातुविशेषेण vतन्त्रम् अगदविशेषं वयति । ऊर्णासूत्रेण च तन्त्रं पटं वयति तद्वत् ।

"तन्त्रं राष्ट्रे च सिद्धान्ते परच्छन्दाप्रधानयोः ।
अगदे कुटुम्बकृत्ये तन्तुवाने परिच्छदे" ॥ इति कोशात् ।

कीदृशा अश्व्यादयः ? vमनीषिणः मेधाविनः । vकवयः क्रान्तदर्शनाः विचक्षणाः । पुनः कीदृशाः ? vइन्द्रस्य vरूपं vभिषज्यन् भिषज्यन्तः समादधतः । अन्तोदात्तत्वान्नेदं क्रियापदम् । भिषज् रुजये । कण्ड्वादित्वाद्यक्प्रत्ययः । ततः शतृप्रत्ययः वचनव्यत्ययश्च । इन्द्रभैषज्याय यज्ञं संपादयन्त इत्यर्थः ॥१॥

---

1. पाठस्तु – सीसेन ... भिषज्यन्निति for सीसेन ... सूत्रेणेति
2. V2 समांसीभूय द्वौ द्वौ समांसीभूय for द्वौ द्वौ समासीभूय; V2 वहन्ति for वयन्ति
18. M4 तत्र किमिव for तन्त्रमिव
19. P2 तन्तुम् for तन्त्रम्

वसामहाः ]

**तदस्य रूपममृतꣳ शचीभिस्तिस्रो दधुर्देवताः सꣳरराणाः ।**
**लोमानि शष्पैर्बहुधा न तोक्मभिस्त्वगस्य माꣳसमभवन्न लाजाः ॥२॥**

~~~~~~~~~~~~~~~~~~~~

तत् । अस्य । रूपम् । अमृतम् । शचीभिः ।
तिस्रः । दधुः । देवताः । सꣳरराणा इति सम्ऽरराणाः ॥
लोमानि । शष्पैः । बहुधा । न । तोक्मभिरिति तोक्मऽभिः ।
त्वक् । अस्य । माꣳसम् । अभवत् । न । लाजाः ॥त्र॥२॥

~~~~~~~~~~~~~~~~~~~~

आ– ‘ तदस्य रूपम् ’ इति । [V]अस्य इन्द्रस्य भैषज्यं [V]रूपं [V]तत् रूपम् । [V]तिस्रः [V]देवताः [V]सꣳरराणाः सम्यग्रममाणाः अश्विनौ सरस्वती च [V]शचीभिः कर्मभिः तद्रूपम् [V]अमृतं रूपं [V]दधुः संदधुः । [V]लोमानि [V]शष्पैः बालतृणैः संदधुः । ‘ बहुधा न तोक्मभिः ’ । नकारोऽत्र समुच्चयार्थः । [V]बहुधा च । [V]अस्य इन्द्रस्य यज्ञात्मकस्य [V]त्वक् त्वचं बहुधा बहुप्रकारैः च [V]तोक्मभिः अपत्यरूपैः तत्तत्सस्यैः संदधुः । ‘ मांसमभवन्न लाजाः ’ । अस्य [V]लाजाः [V]मांसम् [V]अभवत् ॥७८॥

~~~~~~~~~~~~~~~~~~~~

अ– ‘ तदस्य ’ । [V]तिस्रः [V]देवताः । अश्विसरस्वत्यः [V]संरराणाः सम्यगाददानाः । संपादयन्त्यः सत्यः [V]अस्य इन्द्रस्य [V]तत् प्रसिद्धम् [V]अमृतं मरणरहितं [V]रूपं [V]शचीभिः कर्मभिः [V]दधुः संदधुः । साङ्गोपाङ्गैः कर्मभिः संधानं चक्रुः । तदेवाह– [V]लोमानि इन्द्ररोमाणि [V]शष्पैः विरूढव्रीहिभिः संदधुः । तथा इन्द्रस्य [V]त्वक् त्वचं [V]तोक्मभिः विरूढ यवैः [V]बहुधा [V]न । बहुधा च संदधुः । तथा [V]लाजाः [V]न लाजाश्च [V]अस्य इन्द्रस्य [V]मांसम् [V]अभवत् । इत ऊर्ध्वम् अध्यायसमाप्तिपर्यन्तं नकाराः सर्वे छान्दसत्वाच्चकारार्थाः ॥२॥

~~~~~~~~~~~~~~~~~~~~

**तदश्विना भिषजा रुद्रवर्तनी सरस्वती वयति पेशो अन्तरम् ।**
**अस्थि मज्जानं मासरैः कारोतरेण दधतो गवां त्वचि ॥३॥**

~~~~~~~~~~~~~~~~~~~~

तत् । अश्विना । भिषजा । रुद्रवर्तनीति रुद्रऽवर्तनी ।
सरस्वती । वयति । पेशः । अन्तरम् ।
अस्थि । मज्जानम् । मासरैः । कारोतरेण । दधतः । गवाम् । त्वचि ॥ गूं ॥३॥

~~~~~~~~~~~~~~~~~~~~

7. S3 पाठस्तु – तदस्य रूपम्...लाजा इति for ‘ तदस्य रूपम् ’ इति

[ वसाग्रहाः

आ– ‘ तदश्विना ’ इति । vअश्विना अश्विनौ vभिषजा भिषजौ । vरुद्रवर्तनी रुद्रस्य श्रीभगवतो वर्तनं मार्गो यस्याम् । vसरस्वती इन्द्रस्य vतत् रूपं vवयति । अश्विनौ । व्यत्ययः । वयतः रचयतः । वेञ् तन्तुसंताने । ‘ वयति पेशः अन्तरम् ’ । vअन्तरम् अभ्यन्तरं यद्रूपं तत् vपेशः सुवर्णरूपं तत् सरस्वती वयति । vअस्थि vमज्जानम् । अस्थि च मज्जानं च यथाक्रमेण । vगवां पशूनां vत्वचि चर्मणि अस्थि । व्रीहिश्यामाकौदनानां चूर्णसंसर्गे मासरं भवति । एवंरूपैः vमासरैः । गोचर्ममयः सुराधारको व्याघ्रमुखाकारः कारोतरः । तेन vकारोतरेण वा मज्जानमश्विनौ vदधतः ॥७९॥

अ– ‘ तदश्विना ’ । रुद्रवत् वर्तनिः मार्गो ययोस्तौ vरुद्रवर्तनी रुग्णवर्तनी वा । vभिषजा भिषजौ वैद्यौ अश्विनौ vसरस्वती च एते । vतत् vअन्तरं शरीरान्तर्वर्त्ति । vपेशः । पेश इति रूपनाम । इन्द्रस्य रूपम् । vवयति । व्यत्ययाद्वयन्ति संदधति । तदेवाह– vमासरैः शष्पादिचूर्णयुक्तचरुनिस्रावैः । vअस्थि वयन्ति । vकारोतरेण गलनवाससा vमज्जानं वयन्ति । कीदृशास्ते ? vगवां vत्वचि चर्मणि vदधतः सुरां स्थापयन्तः ॥

वस्तुतस्तु ‘ रुद्रवर्तनी ’ इति सरस्वत्या एव विशेषणं, नाश्विनोः । तथात्वे पदपाठे प्रगृह्यत्वेन वेष्टनापत्तेः । सरस्वतीविशेषणत्वे तु एकवचनत्वेन प्रगृह्यत्वाभावात् न वेष्टनम् । रुद्रस्य वर्तनिरिव क्षिप्रप्रसादमार्गो यस्याः सेति तथाऽर्थः ॥३॥

**सर॑स्वती॒ मन॑सा पेश॒लं वसु॒ नास॑त्याभ्यां वयति द॒र्श॒तं वपुः॑ ।**
**रसं॑ परि॒स्रुता॒ न रोहि॑तं न॒ग्नहु॒र्धीर॒स्तस॑रं॒ न वेम॑ ॥४॥**

सर॑स्वती । मन॑सा । पे॒श॒लम् । वसु॑ । नास॑त्याभ्याम् । व॒य॒ति॒ । द॒र्श॒तम् । वपुः॑ ।
रस॑म् । प॒रि॒स्रुतेति॑ प॒रि॒ऽस्रुता॑ । न । रोहि॑तम् ।
न॒ग्नहुः॑ । धीरः॑ । तस॑रम् । न । वेम॑ ॥ गिं ॥४॥

आ– ‘ सरस्वती मनसा ’ इति । vसरस्वती पूर्वं vमनसा vपेशलम् । पेशलमिति हिरण्यरूप्ययोर्नाम । अतिसमीचीनं रूपं पर्यालोच्य पश्चात् vनासत्याभ्याम् अश्विनीभ्यां सह vवसु सुवर्णवत् इन्द्रस्य सुसमीचीनं रूपम् । तच्च vदर्शतं दर्शनीयं vवपुः शरीरं vवयति रचयति,

1. S3 पाठस्तु – तदश्विना ... त्वचीति for तदश्विनेति; V2 om. भिषजा
4. V2 नाभ्यन्तरं for अभ्यन्तरं
6. V2 °मुखीकारो for °मुखाकारः
8. M4 after °वर्तनी ins. सरणिः पद्धति पद्या वर्तन्येकपदीति चेति अभिधानं

संतनोति । ' रसं परिस्रुता न रोहितम् ' vरसं च vरोहितं । लोहितं vन इव vपरिस्रुता परितो ज्ञानंसपन्ना vसरस्वती अश्विभ्यां सहिता vवयति । वपुषो रञ्जनार्थं रोहितरसविरेचनम् । अतश्चेन्द्रो देवेषु रूपवान् यथा vनग्नहुः । सौरीकाणां प्रसिद्धो नग्नहुः । नग्ना येनाह्वयन्ति नग्नहुः । vधीरः सूक्ष्मबुद्धिः । ' तसरं न ' । वस्त्रेषु तन्तुसंपात्तियुक्तं वापः vतसरम् । कुविन्दानां प्रसिद्धेयं परिभाषा । vन इव । vवेम छान्दसं पदम् । व्यत्ययः । वयतीति तथा । सरस्वती पेशलम् ॥८०॥

---

अ– ' सरस्वती मनसा ' । 'नासत्याभ्याम् अश्विभ्यां सहिता 'सरस्वती । 'वसु धनम् । 'दर्शतं दर्शनीयं 'वपुः च 'वयति पटमिव सृजति । इन्द्रस्येति सर्वत्र । कीदृशं वसु ? 'पेशलम् । पेश इति हिरण्यरूप्ययोर्नाम । पेशं लाति गृह्णातीति पेशलं हिरण्यरूप्यवत् 'मनसा विचार्य । तदाह– 'परिस्रुता' । 'परिस्रुता सुरायाः सकाशात् । 'रोहितं लोहितं 'रसं 'न रसं च वयति । इन्द्रवपुषो रञ्जनाय । अत एव श्रुतौ रोहित इन्द्रः पठ्यते । तथा 'नग्नहुः किण्वः सुराकन्द पूर्वोक्तः । 'तसरं वयनसाधनं, 'वेम 'न वेम च भवति । तसरवेमनी कुविन्दानां प्रसिद्धे । कीदृशो नग्नहुः ? 'धीरः । धियम् ईरयति प्रेरयतीति धीरः । मादक इत्यर्थः । ' विवक्षातः कारकाणि भवन्ति ' इति वचनान्नग्नहोः कर्तृत्वं विवक्षितम् ॥४॥

---

पयसा शुक्रममृतं जनित्रꣳ सुरया मूत्राज्जनयन्त रेतः ।
अपामतिं दुर्मतिं बाधमाना ऊवध्यं वातꣳ सब्वं तदारात् ॥५॥

---

पयसा । शुक्रम् । अमृतम् । जनित्रम् । सुरया । मूत्रात् । जनयन्त । रेतः ।
अप । अमतिम् । दुर्मतिमिति दुःऽमतिम् । बाधमानाः ।
ऊवध्यम् । वातम् । सब्वम् । तत् । आरात् ॥ गै ॥५॥

---

आ– ' पयसा शुक्रम् ' इति । vपयसा क्षीरेण कारणभूतेन vशुक्रं शुद्धं दीप्तिमत् vअमृतम् अमरत्वकारकं vजनित्रम् । जनिः श्रेष्ठं [ जन्म ] । जन्मवत् रूपं vसुरया vजनयन्त अश्विनौ सरस्वती च तिस्रो देवताः उत्पादयन्ति । vमूत्रात् रेतः vजनयन्त । कथंभूताः इति । ' अपामतिम् ' । तिस्रो देवताः vअप vअमतिं सुमतिविरोधिनीं मतिं, दुर्मार्गवर्तिनीं मतिं

---

1. V2 'सुता for 'स्रुता
4. V2 त्रसरं for first & second तसरं
18. S3 पाठस्तु – पयसा ... तदारात् for पयसा शुक्रमिति

[V]दुर्मतिम् [V]बाधमानाः संहरन्त्यः देवता जनयन्तीति गतेन संबन्धः । ' ऊवध्यं वातं सब्वं तत् ' । उदरस्थं पक्वमन्नम् [V]ऊवध्यम् । [V]वातम् अन्नसहचरं वातम् । [V]सब्वं पक्वाशयाश्रयं यत् [V]तत् [V]आरात् समीपवर्तिन्या सुरया जनयन्ति स्म ॥८१॥

---

अ– ' पयसा शुक्रम् ' । प्रकृतत्वादश्विसरस्वत्यः । [V]पयसा दुग्धेन । [V]रेतः वीर्यं [V]जनयन्त अजनयन्त उत्पादितवन्तः । कीदृशास्ते ? [V]अमतिं बुध्यभावम् । [V]दुर्मतिं दुष्टबुद्धिं च [V]अपबाधमानाः, निवर्तयन्तः सुबुद्धिदानेन । कीदृशं रेतः ? [V]शुक्रं शुक्लम् । [V]अमृतम् अनश्यत् । [V]जनित्रम्, जनयतीति जनित्रम्, जननशीलम् । [V]आरात् समीपे स्थितत्वात् प्रसिद्धम् । [V]ऊवध्यं [V]वातं नाडीगतं [V]सब्वं च [V]सुरया कृत्वा जनयन्त । सुरयैव [V]मूत्रात् मूत्रं च अजनयन्त । अडभाव आर्षः । आमाशयगतमन्नमूवध्यमुच्यते । पक्वाशयगतमन्नं तु सब्वमिति भेदः ॥५॥

---

इन्द्रः सुत्रामा हृदयेन सत्यं पुरोळाशेन सविता जजान ।
यकृत् क्लोमानं वरुणो भिषज्यन् मतस्ने वायव्यैर्न मिनाति पित्तम् ॥६॥

---

इन्द्रः । सुत्रामेति सुऽत्रामा । हृदयेन । सत्यम् । पुरोळाशेन । सविता । जजान ।
यकृत् । क्लोमानम् । वरुणः । भिषज्यन् ।
मतस्ने इति मतस्ने । वायव्यैः । न । मिनाति । पित्तम् ॥ ठ्यें ॥६॥

---

आ– ' इन्द्रः सुत्रामा ' इति । [V]इन्द्रः [V]सुत्रामा पशुपुरोडाशदेवताभव इन्द्रः प्रकृतमिन्द्रं भिषज्यति । सुत्रामा इन्द्रः [V]हृदयेन स्वहृदयेन [V]सत्यं सत्यधर्मयुक्तं हृदयजन्मानं जनयति । ' पुरोळाशेन सविता ' यकृत् कालखण्डस्नायुभेदः । [V]सविता [V]पुरोळाशेन [V]यकृत् [V]जजान, [V]क्लोमानं मस्तिष्कं जजान । [V]वरुणः [V]भिषज्यन् भैषज्यं कुर्वाणः वरुणः [V]मतस्ने स्नायुविशेषौ । यद्वा– पित्तोदकाधारपात्रे मतस्ने । [V]पित्तं च [V]वायव्यैः ऊर्ध्वपात्रैश्च । सौमिकानि वायव्यानि पात्राणि । पित्तं [V]न [V]मिनाति निर्ममे जनयति ॥८२॥

---

2. V2 राकाश्रयं for पक्वाशयाश्रयं
6. M4 after °दानेन adds च
15. S3 पाठस्तु — इन्द्रः ... पित्तम् for ' इन्द्रः सुत्रामा ' इति
16. V2 °जन्मा न for °जन्मानं
17. V2 यः कृतः for यकृत्

बसाग्रहाः ]

अ– ' इन्द्रः सुत्रामा ' । सुष्ठु त्रायते रक्षतीति Vसुत्रामा Vइन्द्रः पुरोळाशदेवता Vहृदयेन हृदयं Vजजान जनयति । Vसविता च Vपुरोळाशेन Vसत्यं जजान । Vवरुणः Vभिषज्यन् इन्द्रस्य चिकित्सां कुर्वन् सन्, Vयकृत् कालखण्डं Vक्लोमानं गलनाडिकां च जजान । Vवायव्यैः सौमिकोर्ध्वपात्रैः कृत्वा [ Vमतस्ने ] हृदयोभयपार्श्वस्थे अस्थिनी । Vपित्तं Vन पित्तं च Vमिनाति निर्मिमीते, सृजतीत्यर्थः। अनेकेन्द्राणां सद्भावात् हृदयेन हृदयमिति संगच्छते । यद्वा– सुत्रामा सविता हृदयेन स्वीयेन प्रकृतेन्द्रस्य सत्यं हृदयं जजानेति संबन्धः । सत्यस्य हृदयाधारत्वात् आधाराधेययोरभेदोपचारेण हृदयस्य तच्छब्दाभिधेयत्वम् ॥६॥

---

आ॒न्त्राणि॑ स्था॒लीर्मधु॒ पिन्व॑माना॒ गु॒दाः पात्रा॑णि सु॒दु॒घा॒ न धे॒नुः ।
श्ये॒नस्य॒ पत्रं॒ न प्ली॒हा शची॑भिरास॒न्दी नाभि॑रु॒दरं॒ न मा॒ता ॥७॥

---

आ॒न्त्राणि॑ । स्था॒लीः । मधु॑ । पिन्व॑मानाः । गु॒दाः । पात्रा॑णि । सु॒दु॒घेति॑ सु॒ऽदुघा॑ । न । धे॒नुः । श्ये॒नस्य॑ । पत्र॑म् । न । प्ली॒हा । शची॑भिः । आ॒स॒न्दीत्या॑ऽस॒न्दी । नाभिः॑ । उ॒दर॑म् । न । मा॒ता ॥ त्रौं ॥७॥

---

आ– ' आन्त्राणि स्थालीः ' [ इति ] । पिन्वतिः सेचनार्थः । Vआन्त्राणि पुरीततः Vमधु Vपिन्वमानाः । Vस्थालीः स्थाल्यः आन्त्राण्यभवन् । Vपात्राणि Vगुदाः गुदा अपानमभवन् । ' सुदुघा न धेनुः ' । Vधेनुः नवप्रसूता गौः । Vसुदुघा सुष्टु दोग्ध्री चाभूत् । Vश्येनस्य Vपत्रं Vन Vप्लीहा अभूत् । Vशचीभिः कर्मभिः Vआसन्दी नाभिः अभूत् । ' उदरं न माता ' । Vमाता भूमिः इन्द्रस्य Vउदरं Vन चाभूत् ॥८३॥

---

अ– ' आन्त्राणि स्थालीः ' । विभक्तिव्यत्ययात् स्थाल्यः । इन्द्रस्य Vआन्त्राणि अभवन् । कीदृश्यस्ताः ? Vमधु Vपिन्वमानाः मधु सिञ्चन्त्यः, मधुरा इत्यर्थः । तथा Vपात्राणि सौत्रामणीयज्ञपात्राणि Vगुदाः अभवन् । गुदमिति वक्तव्ये गुदा इत्यार्षम् । ' सुदुघा न धेनुः ' । सुष्ठु दुग्धे सा Vसुदुघा दोग्ध्री च Vधेनुः आदित्येष्टेर्दक्षिणारूपा गुदमभवत् । ' श्येनस्य पत्रं न ' । Vश्येनस्य Vपत्रं च । Vप्लीहा, हृदयवामभागस्थः शिथिलमांसपिण्डः गुल्मसंज्ञोऽभवत् । Vआसन्दी Vशचीभिः कर्मभिः ॥ Vनाभिः Vउदरं चाभवत् । कीदृशी सा ? Vमाता मातृस्थानीया । आसन्द्यामभिषिच्यतेऽतस्तस्या जायत इव । नकाराश्चकारार्थाः ॥७॥

---

13. आन्त्राणि ... मातेति for आन्त्राणि स्थालीः
23. M4 एव for इव

कुम्भो वनिष्ठुर्जनिता शचीभिर्यस्मिन्नग्रे योन्यां गर्भो अन्तः ।
प्लाशिर्व्यक्तः शतधार उत्सो दुहे न कुम्भी स्वधां पितृभ्यः ॥८॥

कुम्भः । वनिष्ठुः । जनिता । शचीभिः ।
यस्मिन् । अग्रे । योन्याम् । गर्भः । अन्तरित्यन्तः ॥
प्लाशिः । व्यक्त इति विऽअक्तः । शतधार इति शतऽधारः । उत्सः ।
दुहे । न । कुम्भी । स्वधाम् । पितृभ्य इति पितृऽभ्यः ॥ त्र्यों ॥८॥

आ– ' कुम्भो वनिष्ठुः ' [ इति ] । $^{V}$कुम्भः सुराधानकुम्भः $^{V}$वनिष्ठुः, वनोतिः सेवार्थः, तत्र तिष्ठतीति वनिष्ठुः । $^{V}$जनिता जनकश्च । $^{V}$शचीभिः स्वकीयैरेव कर्मभिः । $^{V}$यस्मिन् कुम्भे $^{V}$अग्रे प्रथमं $^{V}$योन्यां $^{V}$गर्भः $^{V}$अन्तः मध्ये गर्भः सुरालक्षणः, $^{V}$प्लाशिः तत्र प्रकर्षेण व्याप्तः $^{V}$व्यक्तः प्रकटश्च । $^{V}$शतधारः बह्वमृतधारः $^{V}$उत्सः कूपः बहुस्रोतः कूपः एवंभूतः । $^{V}$कुम्भी $^{V}$पितृभ्यः $^{V}$स्वधाम् अमृतान्नरसं $^{V}$दुहे $^{V}$न दोग्ध्री च ॥८४॥

अ– ' कुम्भो वनिष्ठुः ' । $^{V}$कुम्भः सुराकुम्भः $^{V}$शचीभिः कर्मभिः कृत्वा $^{V}$वनिष्ठुः स्थूलान्त्रं $^{V}$जनिता जनयति । लकारव्यत्ययः । $^{V}$यस्मिन् कुम्भे $^{V}$योन्यां कुम्भरूपे योनौ स्थाने $^{V}$अग्रे प्रथमम् $^{V}$अन्तः मध्ये । $^{V}$गर्भः सुरारूपः अस्ति । $^{V}$शतधारः बहुधारः $^{V}$उत्सः कूपः, कूपतुल्यः कुम्भः $^{V}$व्यक्तः विशेषेण सुरयाऽक्तः स्निग्धः स्पष्टो वा । $^{V}$प्लाशिः इन्द्रस्य शिश्नमभवत् । ' कुम्भी न ' । सुराधानी $^{V}$कुम्भी $^{V}$च प्लाशिरभवत् । कीदृशी सा ? या $^{V}$पितृभ्यः $^{V}$स्वधां $^{V}$दुहे दुग्धे अन्नं पूरयति । " लोपस्त आत्मनेपदेषु " ( पा ७.१.४१ ) इति तकारलोपः ॥८॥

मुखꣳ सदस्य शिर इत् सतेन जिह्वा पवित्रमश्विनाऽऽसन्त्सरस्वती ।
चप्पं न पायुर्भिषगस्य वालो वस्तिर्न शेपो हरसा तरस्वी ॥९॥

मुखम् । सत् । अस्य । शिरः । इत् । सतेन ।
जिह्वा । पवित्रम् । अश्विना । आसन् । सरस्वती ॥
चप्पम् । न । पायुः । भिषक् । अस्य । वालः ।
वस्तिः । न । शेपः । हरसा । तरस्वी ॥ ल्मिः ॥९॥

7. S3 कुम्भोवनिष्ठुर...दुहे नेति for कुम्भो वनिष्ठुः; S3 om. कुम्भः सुरा...वनिष्ठुः । [ L 8 ]
12. M4 कृत° for कृत्वा; M4 स्थूलान्त्र° for स्थूलान्त्रं

आ– 'मुखं[1] सत्' इति । vअस्य इन्द्रस्य vमुखं प्रमुखं vसत्, एकदेशलोपः, सतमिति प्राप्ते । तथा च श्रुतिः– "मुखं सतमस्य जिह्वा पवित्रं चप्यं पायुर्वस्तिर्वालः" (शब्रा १२·८·३·३) इति श्रुतिः । vशिरः अभूत् । vइत् एव । vसतेन पात्रेण vजिह्वा अभूत् । vपवित्रं vचप्पं vन अन्नाद्यं च पवित्रं च । vअश्विना vसरस्वती च vआसन् । एवं जनका अभवन् । 'पायुर्भिषगस्य वालः' । vअस्य यज्ञात्मकस्येन्द्रस्य vभिषक् भेषजस्य कर्ता vवालः । वालस्य त्रिधा परिणामः – वैद्यश्च वस्तिश्च शेपश्च पवित्रं भवति । vवस्तिःनाभेरधः प्रदेशः । vन च vशेपः मेढ्रः । vहरसा वीर्येण तु vतरस्वी वेगवान् ॥८५॥

---

अ– 'मुखं[१] सत्' । vअस्य इन्द्रस्य vसत्, छान्दसत्वात् सतः, पात्रविशेषः vमुखम् अभवत् । vसतेन vइत् । इच्छब्द एवार्थः । सतेनैव अस्य vशिरः अभूत् । vपवित्रं vजिह्वा अभूत् । vअश्विना अश्विनौ vसरस्वती च एते vआसन् आस्ये मुखे तस्था अभवन् । "पद्दन्नोमास्°" (पा ६·१·६३) इति आस्यशब्दस्य आसन्नादेशे सप्तम्या लोपे च रूपम् । 'चप्पं न' । vचप्पं च पिष्टमयम् पात्रम् । vपायुः इन्द्रियमभूत् । vवालः सुरागलनवस्त्रम् । vभिषक् वैद्यः । vवस्तिः गुदम् । vशेपः vन लिङ्गं चाभूत् । वालेन त्रयं जातमित्यर्थः । कीदृशः शेपः ? vहरसा वीर्येण vतरस्वी वेगवान्, स्वकर्मणि शिश्नस्य वेगवत्त्वात् ॥९॥

---

अश्विभ्यां चक्षुरमृतं ग्रहाभ्यां छागेन तेजो हविषा शृतेन ।
पक्ष्माणि गोधूमैः कुवलैरुतानि पेशो न शुक्रमसितं वसाते ॥१०॥

---

अश्विभ्यामित्यश्विऽभ्याम् । चक्षुः । अमृतम् । ग्रहाभ्याम् ।
छागेन । तेजः । हविषा । शृतेन ।
पक्ष्माणि । गोधूमैः । कुवलैः । उतानि ।
पेशः । न । शुक्रम् । असितम् । वसाते इति वसाते । ३ ॥१०॥

---

1. S3 पाठस्तु – मुखरं सदस्य ... तरस्वीति for 'मुखं सत्' इति
4. V2 S3 चप्य° for चप्प°
5. V2 S2 यस्य for अस्य

आ–‘ अश्विभ्यां चक्षुः ’ इति । vअश्विभ्यां देवताभ्यां vचक्षुः इन्द्रस्य चक्षुः संस्क्रियते । ‘अमृतं ग्रहाभ्याम् ’ । तदेव चक्षुः vग्रहाभ्याम् vअमृतं संस्क्रियते । vछागेन vतेजः । अनेन चक्षुषस्तेजः दीप्तिः क्रियते । vहविषा vशृतेन हविर्भूतेन शृतेन पक्वेन । vपक्ष्माणि चक्षुः- पक्ष्माणि vगोधूमैः संस्क्रियन्ते । ‘ कुवलैरुतानि ’ । vकुवलैः बदरविशेषैः vउतानि पक्ष्ममूलानि सांस्क्रियन्ते । ‘ पेशो न शुक्रमसितं वसाते ’ । vपेशः च रूपं चक्षुषो रूपं vशुक्रं शुभ्रम् vअसितं कृष्णं vन च vवसाते आच्छादयतः ॥८६॥

---

अ- ‘ अश्विभ्यां चक्षुः ’ । vअश्विभ्याम् इन्द्रस्य vचक्षुः कृतम् । तथा vग्रहाभ्याम् संनिधानादश्विदेवताभ्यां चक्षुरेव vअमृतम् अनश्वरं कृतम् । vशृतेन पक्वेन । श्रा पाके अस्य निष्ठायां रूपम् । vहविषा तद्रूपेण vछागेन vतेजः सामर्थ्यं कृतम् । vगोधूमैः vपक्ष्माणि नेत्रप्रान्तलोमानि कृतानि । vकुवलैः बदरैः vउतानि पक्ष्ममूलानि कृतानि । ‘ उतं तु पक्ष्ममूले स्यात् ’ इत्यभिधानात् । vशुक्रं शुक्लम् vअसितं कृष्णं च नेत्रगते रूपे कृते । vपेशः vन पेशश्च कृतः । गोधूमबदरादिभिरेवेन्द्रस्य नेत्रगतशुक्लकृष्णरूपे पेशश्च कृतानीति भावः । कीदृशे ते रूपे ? ये vवसाते, नेत्रमभिव्याप्य तिष्ठतः । प्रकृतत्वादश्विनौ कर्तारौ ॥१०॥

---

अवि॒र्न मे॒षो न॒सि वी॒र्या॑य प्रा॒णस्य॒ पन्था॑ अ॒मृतो॒ ग्रहा॑भ्याम् ।
सर॑स्वत्युपवा॒कैर्व्या॒नं नस्या॑नि ब॒र्हिर्बद॑रैर्जजान ॥११॥

---

अविः॑ । न । मे॒षः । न॒सि । वी॒र्या॑य । प्रा॒णस्य॑ । पन्था॑ः । अ॒मृत॑ः । ग्रहा॑भ्याम् ।
सर॑स्वती । उ॒प॒वा॒कैरित्यु॑प॒ऽवा॒कैः । व्या॒नमिति॑ वि॒ऽआ॒नम् ।
नस्या॑नि । ब॒र्हिः । बद॑रैः । ज॒जा॒न ॥ ट्ं ॥११॥

---

आ– ‘ अविर्न मेषः ’ इति । vअविः च vमेषः च, सारस्वतः vनसि नासिकायां vवीर्याय वीर्यार्थं संस्थितौ प्राणस्थितौ । vप्राणस्य vपन्थाः मार्गः vअमृतः अमरत्वाय vग्रहाभ्यां सारस्वताभ्यां क्रियते । vसरस्वती च vउपवाकैः चोष्मभिः vव्यानं vजजान जनयति । vनस्यानि vबर्हिः यज्ञार्थं vबदरैः, नस्यानि नासि भवानि, जजान ॥८७॥

---

1. S3 पाठस्तु – अश्विभ्यां ... वसाते इति for ‘ अश्विभ्यां चक्षुः ’ इति

11. M4 कृच्छ्रं for कृष्णं, M4 कृते for °गते

19. S3 पाठस्तु – अविर्न ... जजानेति for ‘ अविर्न मेषः ’इति ।

22. V2 नशि भव्यानि for ( नसि भवानि )

वसाग्रहाः ]

अ- ' अविर्न ' । Vअविः, सारस्वतः Vमेषः च Vनसि इन्द्रस्य नासिकायां Vवीर्याय स्थितः। Vग्रहाभ्यां सारस्वताभ्यां Vप्राणस्य प्राणवायोः Vपन्थाः मार्गः Vअमृतः अनश्वरः क्रियते । Vसरस्वती Vउपवाकैः यवाङ्कुरैः कृत्वा Vव्यानम् इन्द्रस्य व्यानवायुं Vजजान जनयति। Vबर्हिः Vबदरैः सह Vनस्यानि नसि भवानि नस्यानि नासिकालोमानि जजान ॥११॥

---

इन्द्रस्य रूपमृषभो बलाय कर्णाभ्यां श्रोत्रममृतं ग्रहाभ्याम् ।
यवा न बर्हिर्भ्रुवि केसराणि कर्कन्धु जज्ञे मधु सारघं मुखात् ॥१२॥

---

इन्द्रस्य । रूपम् । ऋषभः । बलाय । कर्णाभ्याम् । श्रोत्रम् । अमृतम् । ग्रहाभ्याम् ।
यवाः । न । बर्हिः । भ्रुवि । केसराणि ।
कर्कन्धु । जज्ञे । मधु । सारघम् । मुखात् ॥ सों ॥१२॥

---

आ- ' इन्द्रस्य रूपम् ' इति । Vऋषभः अस्य सौत्रामणीसंबन्धिनः Vइन्द्रस्य Vरूपं Vबलाय बलार्थं ( Vजज्ञे ) जजान । ' कर्णाभ्यां श्रोत्रम् अमृतं ग्रहाभ्याम् ' । Vग्रहाभ्यां Vकर्णाभ्यां सह Vश्रोत्रम् Vअमृतं अमृतत्वकारणं ऋषभो जनयति । ' यवा न बर्हिः ' । Vयवाः च यवान् कर्कन्धूनि च Vबर्हिः च ऋषभो जनयति । Vभ्रुवि भ्रुवोः Vकेसराणि लोमानि कर्कन्धूनि च जनयति । ' जज्ञे मधु सारघं मुखात् ' । जज्ञे ॥८८॥

---

अ- ' इन्द्रस्य रूपम् ' । Vऋषभः Vबलाय सामर्थ्याय Vइन्द्रस्य Vरूपं चक्रे । अस्ति-भवति-करोतीनां सर्वत्रानुप्रयोगः ( द्र. महाभाष्य ३.१.४० ) इत्यस्त्यादीनां यथायथमध्याहारः। Vग्रहाभ्याम् ऐन्द्राभ्याम् Vअमृतं मरणवर्जितं भूतभविष्यद्वर्तमानशब्दग्राहि । Vश्रोत्रं श्रोत्रेन्द्रियं । Vकर्णाभ्याम् इन्द्रस्य कर्णयोश्चक्रे, कर्णशष्कुल्योः श्रोत्रेन्द्रियं । स्थापितवानित्यर्थः । Vयवाः Vबर्हिः च Vभ्रुवि भ्रुवोः Vकेसराणि लोमानि अभवन् Vकर्कन्धु बदरम् । Vमुखात् निःसृतं Vसारघं Vमधु। तत्तुल्यं लालाश्लेष्मादि Vजज्ञे। सरघा मधुमक्षिका । तत्संबन्धि सारघम् । यथा मधु नानातरुभ्य आनीयते, एवं सर्वाङ्गेभ्यो लालादिकं भवतीति लालादीनां मधुसाम्यम् ॥

---

10. S3 पाठस्तु – इन्द्रस्य रूपम् ... मुखादिति for इन्द्रस्य रूपम् इति; V2 after ऋषभः adds आद्यामिन्द्रः

13. V2 वृषभो for ऋषभो

आत्मन्नुपस्थे न वृकस्य लोम मुखे श्मश्रूणि न व्याघ्रलोम।
केशा न शीर्षन् यशसे श्रियै शिखा सिꣳहस्य लोम त्विषिरिन्द्रियाणि ॥१३॥

आत्मन् । उपस्थ इत्युपऽस्थे । न । वृकस्य । लोम ।
मुखे । श्मश्रूणि । न । व्याघ्रलोमेति व्याघ्रऽलोम ॥
केशाः । न । शीर्षन् । यशसे । श्रियै । शिखा ।
सिꣳहस्य । लोम । त्विषिः । इन्द्रियाणि ॥ छ्लौं ॥१३॥

आ– 'आत्मन्नुपस्थे' [ इति ] । आत्मन् आत्मनि उपस्थे अधःस्थाने यानि लोमानि तानि वृकस्य लोमानि । मुखे श्मश्रूणि न च मुखे यानि श्मश्रूणि तानि व्याघ्रलोम व्याघ्रस्य लोमानि । 'केशा न शीर्षन् यशसे'। शीर्षन् शीर्ष्णि ये केशाः च यशसे कीर्त्यै श्रियै शोभायै, शिखा च या तानि सर्वाणि लोमानि सिꣳहस्य लोमानि । अस्य या च त्विषिः दीप्तिः तानि इन्द्रियाणि ॥८९॥

अ– 'आत्मन्नुपस्थे'। आत्मन् आत्मनि शरीरे। गुह्ये च यानि लोमानि तानि वृकस्य लोम। लोमानीति ज्ञेयानि। जातावेकवचनम्। तथेन्द्रस्य मुखे यानि लोमानि श्मश्रूणि तानि च व्याघ्रलोम। शीर्षन् शीर्ष्णि शिरसि च, यशसे यशोऽर्थं ये केशाः सन्ति, या च श्रियै शोभायै शिखा अस्ति, या च त्विषिः कान्तिरस्ति, यानि च इन्द्रियाणि सन्ति, तत्सर्वं सिंहस्य लोम लोमानि ॥१३॥

अङ्गान्यात्मन् भिषजा तदश्विनाऽऽत्मानमङ्गैः समधात् सरस्वती ।
इन्द्रस्य रूपꣳ शतमानमायुश्चन्द्रेण ज्योतिरमृतं दधानाः ॥१४॥

अङ्गानि । आत्मन् । भिषजा । तत् । अश्विना ।
आत्मानम् । अङ्गैः । सम् । अधात् । सरस्वती ॥
इन्द्रस्य । रूपम् । शतमानमिति शतऽमानम् । आयुः ।
चन्द्रेण । ज्योतिः । अमृतम् । दधानाः ॥ ध्यों ॥१४॥

7. S3 पाठस्तु आत्मन्नुपस्थे ... इन्द्रियाणीति for आत्मन्नुपस्थे ।
14. M4 om. शोभायै

आ– ‘ अङ्गान्यात्मन् भिषजा ’ [ इति ] । भिषजौ देववैद्यावश्विनौ । [v]आत्मन् आत्मनः अङ्गैः इन्द्रस्य [v]तत् तानि [v]अङ्गानि [v]समधात् । ‘ आत्मानमङ्गैः समधात् सरस्वती ’। इन्द्रस्य [v]आत्मानं देहं स्वदेहेन [v]सरस्वती समधात्, पुनःसंघानं कृतवती । आत्मनो रूपेण [v]इन्द्रस्य [v]रूपं समधात् सरस्वती, [v]आयुः च [v]शतमानम् । अचिन्त्यत्वाच्छतमानमित्युच्यते । ततः उचितं शतायुः समधादित्यर्थः । ननु “ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ” इति श्रीभगवद्व्यतिरिक्तानामेवंविधरूपादिकर्तृत्वं कथमिति चेत् । तत्राह—‘ चन्द्रेण ज्योतिरमृतं दधानाः ’ इति । ‘ सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवताः ’ इत्यादौ त्रिवृत्करणे यः कर्ता स एव संज्ञामूर्तिक्लृप्तावपि वर्ततेति प्रतिपादितत्वात्, ततोऽर्वाचीनकार्यनिर्माणे श्रीभगवानेव साक्षाद्वा संसृष्टरूपान्तरैर्वा कार्याणि जनयतीति न दोषः । [v]चन्द्रेण [v]ज्योतिः । चन्द्रेणोपलक्षितं सर्वजगदाह्यं ज्योतिः । [v]अमृतम् अमृताभयलक्षणं परं ब्रह्म ज्योतिरात्मत्वेन [v]दधानाः अश्विसरस्वत्यः समदधुरिति ॥९०॥

---

अ– ‘ अङ्गान्यात्मन् ’। [v]भिषजा भिषजौ । [v]अश्विना अश्विनौ । [v]आत्मन् आत्मनि । [v]अङ्गानि अवयवान् [v]समधात् । व्यत्ययः समधातां समयोजताम् । [v]सरस्वती [v]तत् तम् [v]आत्मानं [v]अङ्गैः समधात् संदधे । कीदृशाः अश्व्यादयः ? [v]इन्द्रस्य [v]रूपम् । [v]आयुः [v]चन्द्रेण आह्लादकेन । [v]ज्योतिः ज्योतिषा सह [v]अमृतम् अनश्वरं [v]दधानाः संपादयन्तः । कीदृशं रूपम् ? [v]शतमानम् । शतानामनेकेषां प्राणिनां मानं पूजा यत्र तत् । जगत्पूज्यमित्यर्थः ॥१४॥

---

सरस्वती योन्यां गर्भमन्तरश्विभ्यां पत्नी सुकृतं बिभर्ति ।
अपाꣳ रसेन वरुणो न साम्नेन्द्रꣳ श्रियै जनयन्नप्सु राजा ॥१५॥

---

सरस्वती । योन्याम् । गर्भम् । अन्तः ।
अश्विभ्यामित्यश्विऽभ्याम् । पत्नी । सुकृतमिति सुऽकृतम् । बिभर्ति ।
अपाम् । रसेन । वरुणः । न । साम्ना ।
इन्द्रम् । श्रियै । जनयन् । अप्स्वित्यप्ऽसु । राजा ॥ द्वौ ॥१५॥

---

1. S3 पाठस्तु — अङ्गात्मन् for अङ्गान्यात्मन्
3. V2 देहे for देहं
9. V2 कार्यान्तराणि for कार्याणि
13. M4 om. अङ्गैः

आ– ' सरस्वती योन्याम् ' [ इति ] । [ योन्यां ] सर्वोत्पत्तिस्थाने अन्तः मध्ये अश्विभ्यां सह पत्नी श्रीभगवतः सृष्टिकर्तुर्ब्रह्मणः पत्नी सरस्वती सुकृतं सर्वप्राणिनां पुण्यरूपं गर्भम् इमं गर्भं बिभर्ति। अपां सूक्ष्मभूतानां रसेन पोषयति। धरुणः राजा अपि इदं ( ? मं ) रसेन पुष्णाति। साम्ना सोमोपलक्षितसर्वमन्त्रैश्च इन्द्रम्। एवमेताः सर्वा देवताः अप्सु जनयन् श्रियै कर्माधिकारिणां सर्वेषामैश्वर्याय जनयन्निति ॥९१॥

---

अ– ' सरस्वती योन्याम् '। सरस्वती अश्विभ्यां पत्नी। अश्विनोः पत्नी भूत्वा योन्याम् अन्तः योनिमध्ये गर्भम् इन्द्रलक्षणं सुकृतं कृत्वा बिभर्ति । अप्सु राजा, अपामीश्वरः वरुणः अपां रसेन साम्ना उदकानां रसभूतेन साम्ना स्तोत्रेण इन्द्रं श्रियै जनयन्। बिभर्ति इत्यनुषङ्गः। नकारश्चकारार्थः ॥१५॥

---

तेजः पशूनाꣳ हविरिन्द्रियावत् परिस्रुता पयसा सारघं मधु ।
अश्विभ्यां दुग्धं भिषजा सरस्वत्या सुतासुताभ्याममृतः सोम इन्दुः॥१६॥ (६)

---

तेजः । पशूनाम् । हविः । इन्द्रियावत् । इन्द्रियवदितीन्द्रियऽवत् ।
परिस्रुतेति परिऽस्रुता । पयसा । सारघम् । मधु ॥
अश्विभ्यामित्यश्विऽभ्याम् । दुग्धम् । भिषजा । सरस्वत्या ।
सुतासुताभ्याम् । अमृतः । सोमः । इन्दुः ॥ णों ॥१६॥ (६)

---

आ– ' तेजः पशूनाम् ' इति । पशूनां संबन्धि यत् तेजः । गोरूधसः सकाशात परिस्रुता । परितः स्रवतीति परिस्रुत् तेन परिस्रुता । पयसा पयसः जातं तेजः आज्यम् । " तेजो वा आज्यम् " ( तैसं २·६·१२ ) इति श्रुतेः । तच्च हविः इन्द्रियावत् । अश्विसरस्वतीनां प्रसादत इदानीं सामर्थ्यं च जातम् । अनेन सह सारघं मधु च इन्द्रियवज्जातम्। एवमुक्तप्रकारेण भिषजा भिषग्भ्याम् अश्विभ्यां सरस्वत्या च दुग्धम्। दुह परिपूरणे।

---

1. S3 पाठस्तु – सरस्वती ... राजेति for सरस्वती योन्याम्
6. M4 om. अश्विनोः पत्नी
17. S3 पाठस्तु — तेजः ... इन्दुरिति for ' तेजः पशूनाम् ' इति
18. V2 °स्रुता for स्रुता; सरतीति for स्रवतीति
21. S2 om. अश्विभ्यां

आसन्दीशंसनम् ]

इन्द्रसोमादेर्हविषश्च रूपं यद्यत् आहृतं तत्सर्वम् । नमुचिं घातयित्वा तत्सर्वमादाय प्रत्यर्पणद्वारेण परिपूरणं कृतम् । सुतासुताभ्याम् । सुतः सोमः, असुतं पयः, ताभ्यां सोमपयोभ्यां सह सर्वं हविः वीर्यवज्जातं यतोऽतः अमृतः सोमः इन्दुः क्लेदनादिगुणयुक्तः सोम अमृतः अमृतत्वसाधकोऽभूदिति शेषः ॥९२॥

---

अ– ' तेजः पशूनाम् '। भिषजा भिषग्भ्याम् अश्विभ्यां सरस्वत्या च इन्द्रियावत् । दीर्घश्छान्दसः । इन्द्रियवत् वीर्ययुक्तं पशूनां संबन्धि हविः आदाय परिस्रुता सुरया पयसा सह सारघं मधु चादायेन्द्रार्थे । तेजःसाधनत्वात् तेजः दुग्धं स्रावितम् । सुतासुताभ्यां परिस्रुत्यां योन्यां सकाशात् अमृतः अमृतरूपः इन्दुः ऐश्वर्यप्रदः सोमः च दुग्धं स्रावितः । एवं यैः सरस्वत्याश्विभिः इन्द्राय नानाद्रव्येभ्यो नानारसानादाय उपकारः कृतः तेभ्यः सौत्रामणीद्रष्टृभ्यो नमस्कारः कर्तव्य इति तात्पर्यार्थः ॥१६॥

इत्येकविंशाध्याय-भाष्ये वेदार्थदीपिकायां षष्ठोऽनुवाकः समाप्तः । ॥६॥

---

[ अथ सप्तमोऽनुवाकः । ]

क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसि ।
मा त्वा हिꣳसीन्मा मा हिꣳसीः ।
निषसाद धृतव्रतो वरुणः पस्त्यास्वा ।
साम्राज्याय सुक्रतुः । मृत्योः पाहि विद्योत् पाहि ।
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥१॥

---

क्षत्रस्य । नाभिः । असि । क्षत्रस्य । योनिः । असि ।
मा । त्वा । हिꣳसीत् । मा । मा । हिꣳसीः ।
मृत्योः । पाहि । विद्योदिति विऽद्योत् । पाहि ॥ धें ॥१॥

---

आ– ' क्षत्रस्य नाभिः ' इति । आसन्दीदेवत्या द्विपदा गायत्री । हे आसन्दि, क्षत्रस्य नाभिः स्थितिः स्थानम् असि । क्षत्रस्य योनिः असि उत्पत्तिस्थानमसि ।

---

11. M4 अध्याये for °ध्यायभाष्ये

21. S3 क्षत्रस्य ... हस्ताभ्यामिति for ' क्षत्रस्य नाभिः ' इति ।

अथैनां कृष्णाजिनेन आस्तृणाति– ‘ मा त्वा हिꣳसीत् ’ इति । कृष्णाजिनदेवत्यं यजुः । कृष्णाजिनं त्वां कश्चिदपि [V]मा [V]हिꣳसीत् । त्वं च हे कृष्णाजिन, [V]मा [V]मा [V]हिꣳसीः, यजमानं मां मा हिꣳसीः हिंसां मा कुरु ॥

अथाधिरोहति– ‘ निषसाद ’ इति । वारुणी गायत्री । [V]पस्त्यासु [ पश्चिमासु ] दिक्षु । अवान्तरभेदेन बहुवचनम् । [V]सुक्रतुः राजसूययाजी [V]धृतव्रतः नियतव्रतधारी [V]वरुणः तत्र [V]आनिषसाद आनिषण्णः । कस्मै ? [V]साम्राज्याय ऐश्वर्याय ।

अथ सुवर्णरजतौ रुक्मौ प्रास्यति । ‘ मृत्योः पाहि ’ इति । रुक्मदेवत्यं यजुः । हे रजतरुक्म, [V]मृत्योः सकाशात् [V]मा [V]पाहि । हे सुवर्णरुक्म, [V]विद्योत् विद्युतः ह्रादुनेरशनेः सकाशात् मां पाहि ।

‘ देवस्य त्वा ’ इति व्याख्यातम् ॥९३॥

---

अ– कात्यायनः– “ सोमासन्दीवदासन्दीं जानुमात्रपादीं वेद्योर्निदधाति क्षत्रस्य योनिरिति ” ( काश्रौ १९.४.७ ) इति । जानुमात्रपादामासन्दीं वेद्योर्मध्ये निदधाति । सोमासन्दीवदिति मुञ्जरज्जुनिर्मिताम् । आसन्द्या द्वौ पदौ दक्षिणवेदौ वर्तेते, द्वावुत्तरवेदौ यथा, तथेति सूत्रार्थः ॥

‘ क्षत्रस्य नाभिः ’ । आसन्दीदेवत्या द्विपदा गायत्री । हे आसन्दि, त्वं [V]क्षत्रस्य क्षत्रजातेः [V]नाभिः नहनं बन्धनम् [V]असि । णह बन्धन इति धातुः । तथा [V]क्षत्रस्य [V]योनिः उत्पत्तिस्थानम् [V]असि । आसन्द्याम् अभिषिक्तो राजा गुणधर्मानर्हतीति भावः ॥

कात्यायनः – “ कृष्णाजिनमस्यामास्तृणाति मा त्वेति ” ( काश्रौ १९.४.८ ) इति । [V]मा [V]त्वा [V]हिंसीत् । यजुः कृष्णाजिनदेवत्यम् । प्राजापत्या गायत्री । यज्ञाध्यासेन कृष्णाजिनं प्रार्थ्यते । हे कृष्णाजिन, आसन्दी [V]त्वा त्वां [V]मा [V]हिंसीत् । त्वं च [V]मा मां [V]मा [V]हिंसीः मा जहि । एषोऽर्थो ब्राह्मणेऽभिहितः– “ स आसन्दीमास्तृणाति । क्षत्रस्य योनिरसि क्षत्रस्य नाभिरसीति । क्षत्रस्य वा एषा नाभिः । क्षत्रस्य योनिः । अथैना कृष्णाजिनेना स्तृणाति । मा त्वा हिंसीन्मा मा हिंसीरिति यज्ञो वै कृष्णाजिनं यज्ञस्य चैवात्मनश्चाहिंसायै ” ( शब्रा १२.८.३.९ ) इति ॥

कात्यायनः – “ तस्मिन्नास्ते यजमानो निषसादेति ” ( काश्रौ १९.४.९ ) इति । आस्ते उपविशतीति ॥

‘ निषसाद ’ वरुणदेवत्या गायत्री । [V]सुक्रतुः शोभनः क्रतुर्यज्ञो यस्य सः सुक्रतुः । धृतं गृहीतं व्रतं नियमो येन सः [V]धृतव्रतः । [V]वरुणः इव । लुप्तोपमा । [V]पस्त्यासु पश्चिमासु दिक्षु, पश्चिमदिशि । अवान्तरभेदेन बहुवचनम् । यजमानः [V]आनिषसाद उपविवेश । किमर्थम् ? [V]साम्राज्याय । सम्राजो भावः साम्राज्यम् । तस्मै साम्राज्याय, सर्वैश्वर्याय ॥

---

5. V2 °वाजी for °याजी

8. V2 रुक्म for °रुक्म

27. M4 सर्वैश्वराय for सर्वैश्वर्याय

कात्यायनः – “ पादयो रुक्मा उपास्यति राजतं सव्ये मृत्योरिति । सौवर्णं शिरस्यक विद्योदिति ” ( काश्रौ १९·४·१०-११ ) इति । आसन्द्युपविष्टयजमानस्य पादयोरधो रुक्मौ मण्डलाकारौ भूषणविशेषौ न्यस्यति । राजतं सव्ये ‘ मृत्योः ’ इति मन्त्रेण । सौवर्णं दक्षिणे ‘ विद्योत् ’ इति । ‘ सौवर्णं रुक्मं शिरसि ’ इत्येके ऊचुरिति सूत्रार्थः ॥

‘ मृत्योः पाहि ’ । रुक्मदेवत्ये द्वे यजुषी । दैव्यौ बृहत्यौ । हे रुक्म, मृत्योः अकालमरणात् मां पाहि । हे द्वितीयरुक्म, विद्योत् विद्युतः मां पाहि । विद्योतत इति विद्योत् । द्युत दीप्तावित्यस्माद्द्विपूर्वाद्द्विप्रत्यये गुणे रूपसिद्धिः । पञ्चम्या लुक् । विद्युत्पाताद्रक्षेत्यर्थः । एषोऽर्थो ब्राह्मणे- “ अथाधिरोहति वारुण्यर्चा वरुणो वै देवानाꣳ राजा स्वयैवैनमेतद्देवतयाऽभिषिञ्चति निषसाद धृतव्रत इति । अथ सुवर्णरजतौ रुक्मौ व्युपास्यति मृत्योः पाहि विद्योत् पाहि ” ( शब्रा १२·८·३·१०-११ ) इति ॥

कात्यायनः – “ सर्वसुरभ्युन्मृदितं शेषैरभिषिञ्चत्या मुखादवस्रावयन् प्रतिदिशꣳ सर्वत्र सावित्रमश्विनोः सरस्वत्या इन्द्रस्येति प्रतिमन्त्रम् ” (काश्रौ १९·४·१४) । वेतसपात्रस्थापितैर्वसाग्रहशेषैः प्रतिदिशं स्थितोऽध्वर्युरामुखादवस्रावयन् राजासन्दीस्थं यजमानमभिषिञ्चति मन्त्रत्रयेण । कीदृशम् ? सर्वैः सुरभिचन्दनकर्पूरकस्तूरिकेसरादिभिरुद्वर्तितम् । सावित्रं यजुः । ‘ देवस्य त्वा ’ इति सर्वत्र त्रिष्वपि मन्त्रेष्वन्वेतीति सूत्रार्थः ॥

‘ देवस्य त्वा ’ । सावित्रं यजुः । हे यजमान, सवितुः देवादिसर्वप्राणिनां प्रेरकस्य देवस्य प्रसवे आज्ञायां वर्तमानोऽहम् अश्विनोः बाहुभ्यां पूष्णः देवतायाः हस्ताभ्यां कराभ्यां त्वा त्वाम् ‘ अभिषिञ्चामि ’ इत्युत्तरकण्डिकास्थेन अन्वेतव्यम् । स्वहस्तस्यान्यहस्तत्वोक्तिः प्रशस्त्यर्था । तथा हि ब्राह्मणे- “ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामिति सविता वै देवानां प्रसविता तस्मादाह देवस्य त्वा सवितुः प्रसव इति । अश्विना उ वै देवानामध्वर्यू तस्मादाह अश्विनोर्बाहुभ्यामिति । पूष्णो हस्ताभ्यामिति । पूषा भागदुघोऽशनं पाणिभ्यामुपनिधाता तस्मादाह पूष्णो हस्ताभ्यां न स्वाभ्यामिति ” ( द्र. शब्रा १·१·२·१७ ) इति ॥१॥

---

अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभि षिञ्चामि
सरस्वत्यै भैषज्येन वीर्यायान्नाद्यायाभि षिञ्चामि ।
इन्द्रस्येन्द्रियेण बलाय श्रियै यशसेऽभि षिञ्चामि ॥२॥

---

अश्विनोः । भैषज्येन । तेजसे । ब्रह्मवर्चसायेति ब्रह्मऽवर्चसाय । अभि । सिञ्चामि ।
सरस्वत्यै । भैषज्येन । वीर्याय । अन्नाद्यायेत्यन्नऽअद्याय ।
इन्द्रस्य । इन्द्रियेण । बलाय । श्रियै । यशसे । अभि । सिञ्चामि ॥ चैं ॥२॥

---

2. M4 om. its मण्डलाकारौ

आ– आश्विनेन सारस्वतेनैन्द्रेण वा अभिषिञ्चति– ‘अश्विनोर्भैषज्येन’ इति । आश्विनसारस्वतैन्द्रदेवत्यानि त्रीणि यजूंषि । vअश्विनोः देवतयोः vभैषज्येन अमङ्गलनिवर्तकेन माङ्गल्यप्रापकेन भैषज्येन भिषजोः संबन्धिना ओषधिविशेषेण एनं यजमानम् vअभिषिञ्चामि । vतेजसे अप्रधृष्यत्वाय । vब्रह्मवर्चसाय ब्रह्मतेजसे तेजसोऽभिवृद्ध्यै । vसरस्वत्यै । व्यत्ययः । सरस्वत्याः । vभैषज्येन कारणभूतेन त्वां यजमानम् vअभिषिञ्चामि । vवीर्याय सामर्थ्यसिद्धये । vअन्नाद्याय अन्नादिसिद्ध्यर्थं च । vइन्द्रस्य vइन्द्रियेण vअभिषिञ्चामि। vबलाय vश्रियै vयशसे कीर्त्यै अभिषिञ्चामि ॥९४॥

---

अ– ‘अश्विनोर्भैषज्येन’। त्रीणि लिङ्गोक्तदेवत्यानि । आद्यं प्राजापत्या बृहती । द्वे गायत्र्यौ । हे यजमान, vअश्विनोः vभैषज्येन वैद्यकर्मणा त्वाम् vअभिषिञ्चामि । किमर्थम्? vतेजसे कान्त्यै । vब्रह्मवर्चसाय सर्वत्रास्खलितवेदवेदाङ्गज्ञानजनिता कीर्तिर्ब्रह्मवर्चसं, तस्मै । “ब्रह्महस्तिभ्यां वर्चसः” ( पा ५.४.७८) इत्यत् । vसरस्वत्यै vभैषज्येन । षष्ठ्यर्थे चतुर्थी । सरस्वत्या भिषक्कर्मणा च भवन्तम् vअभिषिञ्चामि । किमर्थम्? vवीर्याय vअन्नाद्याय च । वीर्यं सामर्थ्यम् । अन्नाद्यमन्नभक्षणसामर्थ्यम् । तस्मै । तथा । vइन्द्रस्य vइन्द्रियेण इन्द्रियपाटवेन सामर्थ्येन च । vबलाय । vश्रियै सर्वसमृद्ध्यै । vयशसे कीर्त्यै च । त्वाम् vअभिषिञ्चामि ॥२॥

---

**कोऽसि कतमोऽसि कस्मै त्वा काय त्वा ।**
**सुश्लोक सुमङ्गल सत्यराजन् ॥३॥**

---

कः । असि । कतमः । कस्मै । काय । त्वा ।
सुश्लोकेति सुऽश्लोक । सुमङ्गलेति सुऽमङ्गल । सत्यराजन्निति सत्यऽराजन् ॥ ढचैं ॥३॥

---

आ– यजमानमालभते– ‘कोऽसि’ इति। प्रजापतिदेवत्या गायत्री । ‘कः असि’ इति यजमानं पृच्छति । यद्वा– vकः प्रजापतिः vअसि । ‘कतमोऽसि’ इति । बहूनां मध्ये प्रतीयमानस्त्वं vकतमः vअसि । प्रजापतिपरिगणनपर्याये त्वं तु कोऽसि । vकस्मै प्रयोजनाय vत्वा यजमानं त्वामभिषिञ्चामि । vकाय प्रजापतये । हे vसुश्लोक हे सुकीर्ते, हे vसुमङ्गल कल्याण, हे vसत्यराजन् ॥९५॥

---

11. M4 अभिषिक्तकर्मणा for भिषक्कर्मणा

19. S3 पाठस्तु – कोऽसि ... °राजन्निति for ‘कोऽसि’ इति

अ- कात्यायनः – "यजमानमालभते कोऽसीति" ( काश्रौ १९·४·१९ ) । आलभते स्पृशतीत्यर्थः । 'कोऽसि कतमोऽसि' । प्राजापत्या गायत्री उष्णिग्गर्भा । 'षट्कसैकादशोष्णिग्गर्भा' इति वचनात् । हे यजमान, त्वं ˇकः प्रजापतिः ˇअसि । "प्रजापतिर्वै कः" ( शब्रा ७·३·१·१९ ) इति श्रुतेः । ˇकतमः अत्यन्तं कः कतमः श्रेष्ठः प्रजापतिः ˇअसि । प्रजापतयो हि पुराणे बहवोऽभिहिताः । तेषु त्वमुत्तमोऽसि । ˇकस्मै प्रजापतिपदप्राप्तये त्वामहमभिषिक्तवानिति शेषः । ˇकाय प्रजापतिभावाय च त्वामभिषिक्तवानस्मि ।

कात्यायनः – "सुश्लोकेत्यालब्धो ह्वयति" ( काश्रौ १९·४·२० ) इति । अध्वर्युणा स्पृष्टो यजमानः सुश्लोकादिसंज्ञाभ्यामाह्वयति । हे ˇसुश्लोक एहीति । शोभनः श्लोकः कीर्तिः यस्य सः । तथा "श्लोकः यशसि पद्ये च" ( अको ३·३·२ ) इति कोशात् । शोभनं मङ्गलमुदयो यस्य स तथा । तत्संबोधनं हे ˇसुमङ्गल, त्वमेहि । सत्योऽविनाशी राजा यस्य स तथा । सत्येन राजत इति वा सत्यराजा, तत्संबोधनं हे ˇसत्यराजन्, त्वमेहि ॥३॥

---

शिरो॑ मे॒ श्रीर्यशो॑ मुखं॒ त्विषिः॒ केशा॑श्च॒ श्मश्रू॑णि ।
राजा॑ मे प्रा॒णो अ॒मृत॑ꣳ स॒म्राट् चक्षु॑र्वि॒राट् श्रोत्र॑म् ॥४॥

---

शिर॑ः । मे॒ । श्रीः । यश॑ः । मुख॑म् । त्विषि॑ः । केशा॑ः । च॒ । श्मश्रू॑णि ।
राजा॑ । मे॒ । प्रा॒णः । अ॒मृत॑म् ।
स॒म्राळिति॑ स॒म्ऽराट् । चक्षु॑ः । वि॒राळिति॑ विऽराट् । श्रोत्र॑म् ॥ द्वै ॥४॥

---

आ– अङ्गानि चालभते– 'शिरो मे' इति । सार्धपञ्चर्चमिन्द्रशरीरावयवदेवताकं सर्वमानुष्टुभम् । तृतीयं तु गायत्रम् । 'शिरो मे श्रीः' । ˇमे मम ˇशिरः ˇश्रीः अनुवर्तताम् । मे ˇमुखं ˇयशः अनुवर्तताम् । ˇकेशाः केशान् ˇत्विषिः कान्तिरनुवर्तताम् । मे ˇश्मश्रूणि ˇराजा सोमोऽनुवर्तताम् । ˇमे ˇप्राणः प्राणम् ˇअमृतं ब्रह्माऽनुवर्तताम् । 'सम्राट् चक्षुः' । मे ˇचक्षुः ˇसम्राट् श्रीभगवाननुवर्तताम् । 'विराट् श्रोत्रम्' । ˇविराट् प्रथमशरीरी हिरण्यगर्भः ˇश्रोत्रम् अनुवर्तताम् ॥९६॥

---

अ– कात्यायनः – "अङ्गानि चालभते यथालिङ्गं शिरो म इति प्रतिमन्त्रम्" ( काश्रौ १९·४·२१ ) इति । यजमानो यथालिङ्गम् आत्मनोऽङ्गान्यालभत इत्यर्थः । 'शिरो मे' इन्द्रशरीरावयवदेवत्यं पञ्चर्चम् । तत्र तृतीया गायत्री, अन्त्या त्र्यवसाना महापङ्क्तिस्तिस्रोऽनुष्टुभः । अभिषिक्तो यजमान इन्द्ररूपः सन् आत्मानं सर्वात्मकं पश्यन्नाह– ˇमे मम ˇशिरः शिरसि ˇश्रीः शोभा । अनुवर्ततामिति सर्वत्र

---

17. S3 पाठस्तु — शिरो मे ... श्रोत्रमिति for 'शिरो मे' इति ।; S3 °देवदेवतान्तं, V2 °देवतान्तं for °देवताकं

योज्यम् । विभक्तिव्यत्ययः । शोभा छत्रादिजन्या । vमुखं मुखे vयशः अस्तु यशस्करं वाक्यमस्तु । vकेशाः केशेषु vश्मश्रूणि श्मश्रुलोमसु च vत्विषिः दीप्तिरस्तु । झटिति जरा माऽस्तु । राजतेऽसौ vराजा दीप्यमानः vमे vप्राणः मुखवायुः vअमृतम् अस्तु, मरणरहितोऽस्तु । यद्वा– अमृतम् मरणहीनं यथा तथा प्राणो राजाऽस्तु । vचक्षुः इन्द्रियम् । सम्यक् राजत इति vसम्राट्, स्वकार्ये पटु अस्तु । vश्रोत्रम् इन्द्रियम् । विशेषेण राजते स्वकार्ये इति vविराट् अस्तु ॥४॥

---

जिह्वा मे भद्रं वाङ् महो मनो मन्युः स्वराड् भामः ।
मोदाः प्रमोदा अङ्गुलीरङ्गानि मित्रं मे सहः ॥५॥

---

जिह्वा । मे । भद्रम् । वाक् । महः । मनः । मन्युः । स्वराळिति स्वऽराट् । भामः ।
मोदाः । प्रमोदा इति प्रऽमोदाः । अङ्गुलीः । अङ्गानि । मित्रम् । मे । सहः ॥ ज्रों ॥५॥

---

आ– ' जिह्वा मे भद्रम् ' इति । vमे vजिह्वा vभद्रं vवाक् कल्याणवागनुवर्तताम् । vमहः वाक् च पूजाकारिणी वाक् च मे जिह्वामनुवर्तताम् । ' मनो मन्युः ' । मे vमनः vमन्युः क्रोधः धर्मविषयः यज्ञविषयो वाऽनुवर्तताम् । ' स्वराट् भामः ' । vस्वराट् स्वतन्त्रः vभामः क्रोधः अतिक्रोधः । दुराचारं प्रति मन्मनो नानुवर्तताम् । vमोदाः सामान्यतो हर्षाः vप्रमोदाः विषयविशेषप्रयुक्ताः । मम vअङ्गुलीः । व्यत्ययः । अङ्गुलीनवुर्तन्ताम् । vअङ्गानि [vमे] ममाङ्गानि vमित्रं सुहृत् vसहः बलं अनुवर्तताम् ॥९७॥

---

अ– ' जिह्वा मे ' । vमे vजिह्वा रसनेन्द्रियं vभद्रं कल्याणरूपाऽस्तु, उत्तमरसमश्नातु । vवाक् वागिन्द्रियम् । vमहः । मह्यते पूज्यते इति महः । पूज्यमानाऽस्तु । सर्वप्राणिप्रियेत्यर्थः । मह पूजाया-मित्यस्मादसुन्प्रत्ययः । vमनः ममान्तरिन्द्रियं vमन्युः क्रोधरूपं शत्रून् प्रत्यस्तु । यद्वा– मन इन्द्रियं मन्युः ज्ञानात्मकमस्तु । मनु अवबोधने । अस्मात् औणादिको युट् । तथा vभामः । भातेऽसौ भामः । बुद्धिपदार्थः । vस्वराट् । स्वत एव राजमानोऽस्तु । न तु कुतश्चित् प्रतिहन्यतामित्यर्थः । यद्वा– भामः क्रोधः । तद्गणपाठात् । शत्रुषु स्वराट् स्वतन्त्रोऽस्तु । तदुक्तम् – " अवन्ध्यकोपस्य विहन्तुरापदो

---

10. S3 पाठस्तु — before जिह्वा मे भद्रम् । S3 after इति om. जिह्वा मे

11. V2 प्रजा° for पूजा°

12. V2 यज्ञावानु° for यज्ञविषयो वाऽनु°

भवन्ति वश्याः स्वयमेव देहिनः " ( किराता° १.३३ ) इति । vअङ्गुलीः अङ्गुलयः । vमोदाः आनन्दरूपाः सन्तु । गुणगुणिनोरभेदोपचारात् एवं प्रयोगः । मुद हर्षे । अस्मात् पचाद्यच् । vअङ्गानि vप्रमोदाः प्रकृष्टहर्षाः सन्तु । अङ्गुल्यादीनां पुत्राद्युत्तमवस्तुस्पर्शनेन संतोषोऽस्त्वित्यर्थः । तथा vमे मम vमित्रम् अधिष्ठानाधिष्ठेययोरभेदोपचारेण शब्दप्रवृत्तेर्मित्रं पायुरूपमिन्द्रियम् । अङ्गप्रकरणात् मित्रं vसहः अस्तु । सहते अभिभवति शत्रुमिति सहः रिपुनाशकमस्तु ॥५॥

बाहू मे बलमिन्द्रियꣳ हस्तौ मे कर्म वीर्यम् ।
आत्मा क्षत्रमुरो मम ॥६॥

बाहू इति बाहू । मे । बलम् । इन्द्रियम् । हस्तौ । मे । कर्म । वीर्यम् ।
आत्मा । क्षत्रम् । उरः । मम ॥ किं ॥६॥

आ– ' बाहू मे ' इति । vइन्द्रियं सामर्थ्यम् । बहुविधं vबलं vमे vबाहू अनुवर्तताम् । vहस्तौ vमे vकर्म सामर्थ्ययुक्तं कर्म मे हस्तौ [ अनु ] वर्तताम् । vआत्मा vक्षत्रम् मम आत्मा क्षत्रम् । vमम vउरः च क्षत्रम् अनुवर्तताम् ॥९८॥

अ– " बाहू मे बलम् " । vमे vबाहू vबलम् अस्तु बलवन्तौ स्तामित्यर्थः । यद्वा– बाहू बाह्वोर्बलमस्तु । " बाहुवोर्बलम् " ( तैसं ५.५.९ ) इति तैत्तिरीयश्रुतेः । बलमित्यनुवर्तते । vइन्द्रियं बलम् स्वकार्यक्षममस्तु । vमे vहस्तौ vकर्म vवीर्यं चास्तु, सत्कर्मानुष्ठानकुशलौ सामर्थ्यवन्तौ च स्तामित्यर्थः । हस्तकरयोरूर्ध्वाधरत्वेन भेदो ज्ञेयः । तथा vमम vआत्मा अन्तरात्मा । vउरः हृदयं च । vक्षत्रं, क्षतात् त्रायत इति क्षत्रं, त्राणकरमस्तु ॥६॥

पृष्ठीर्मे राष्ट्रमुदरमꣳसौ ग्रीवाश्च श्रोणी ।
ऊरू अरत्नी जानुनी विशो मेऽङ्गानि सर्वतः ॥७॥

पृष्ठीः । मे । राष्ट्रम् । उदरम् । अꣳसौ । ग्रीवाः । च । श्रोणी इति श्रोणी ।
ऊरू इत्यूरू । अरत्नी इत्यरत्नी । जानुनी इति जानुनी ।
विशः । मे । अङ्गानि । सर्वतः ॥ धूं ॥७॥

4. M4 om. अधिष्ठान° ... °प्रकरणात्
5. M4 स्नेहः for सहः
10. S3 पाठस्तु·बाहू ममेति for ' बाहू मे ' इति ।

आ– ' पृष्टीर्मे ' इति । vमे vपृष्टीः पृष्ठप्रदेशाः । vराष्ट्रम् अनुवर्तताम् । vउदरं जठरम् vअꣳसौ कन्धरौ vग्रीवाः vश्रोणी । श्रोणिः ककुद्मती । vउरू सक्थिनी । vअरत्नी । " अरत्निस्तु निष्कनिष्ठेन मुष्टिना " ( अको २.६.८६ ) । vजानुनी । अतोऽप्यन्यानि यान्यङ्गानि तानि च । vविशः vसर्वतः । विशः प्रजा अनुवर्तताम् ॥९९॥

---

अ– ' पृष्टीर्मे ' । vमे मम vपृष्टीः पृष्ठप्रदेशाः । विभक्तिवचनव्यत्ययः । vराष्ट्रं देशः । देशवत् सर्वाधारमस्तु । परशब्दः परत्र च प्रयुज्यमानो विनापि वतिं वत्यर्थं ज्ञापयतीति वचनात् । मे मम vउदरम् vअꣳसौ स्कन्धौ vग्रीवाः ग्रीवाप्रदेशः । व्यत्ययात् बहुवचनम् । श्रोणी कटिप्रदेशौ । vऊरू सक्थिनी । vअरत्नी हस्तदेशौ । vजानुनी च । सर्वतोऽन्यान्यङ्गानि च । vविशः प्रजाः । प्रजावत् पोष्याः सन्तु । यद्वा– प्रजावन्मदधीनाः सन्तु । जितेन्द्रियो भूयासमित्यर्थः ॥७॥

---

नाभिर्मे चित्तं विज्ञानं पायुर्मेऽपचितिर्भसत् ।
आनन्दनन्दा आण्डौ मे भगः सौभाग्यं पसः ॥८॥

---

नाभिः । मे । चित्तम् । विज्ञानमिति विऽज्ञानम् ।
पायुः । मे । अपचितिरित्यपऽचितिः । भसत् ।
आनन्दनन्दौ । आण्डौ । मे । भगः । सौभाग्यम् । पसः ॥८॥

---

आ– ' नाभिर्मे ' इति । vमे vनाभिः vचित्तं vविज्ञानं बुद्धिं चानुवर्तताम् । ' पायुर्मेऽपचितिर्भसत् ' । यजमानपत्नीविषयोऽयं vपायुः अपानस्थानम् । vअपचितिः पूजा । vभसत् स्त्रीणां प्रजननस्थानं । vमे मम vआण्डौ vआनन्दनन्दौ अनुवर्तताम् । vमे vभगः vसौभाग्यम् । भगो महदैश्वर्यं तस्य विशेषः । सौभाग्यं सुभगसंबन्धि सौभाग्यम् । vपसः शिश्नम् । एवं सर्वं सौभाग्यमनुवर्तताम् ॥१००॥

---

1. S3 पाठस्तु — पृष्टीर्मे ... सर्वत इति for ' पृष्टीर्मे ' इति ।
2. V2 कुकुद्मती for ककुद्मती
15. S3 पाठस्तु – नाभिर्मे ... पस इति for ' नाभिर्मे ' इति ।

यजमानाभिषिञ्चनम् ]

अ– ' नाभिर्मे ' । मे नाभिः चित्तं ज्ञानरूपमस्तु । मे मम पायुः गुदेन्द्रियम् विज्ञानं विविधज्ञानजनितसंस्काराधारमस्तु । यद्वा– ' मे नाभिश्चित्तं विज्ञानं पायुः '। पातीति पायुश्चास्तु । चित्तं सामान्यज्ञानाधारम् । विज्ञानं निश्चितज्ञानाधारं चास्त्वित्यर्थः । बुद्धिरहंकारश्चित्तमिति मनसो वृत्तिभेदात् । भसत् स्त्रीप्रजननम् । अपचितिः पूजारूपमस्तु । पुत्राद्युत्पादकत्वेन सुभगमस्तु यजमानपत्नीविषयमेतत् । मे आण्डौ वृषणौ आनन्दनन्दौ स्ताम् । आनन्देन संभोगसुखेन नन्दतस्तौ तथा । तत्सुखभोक्तारौ भवतामित्यर्थः । " पसः पसतेः स्पृशतिकर्मणः " इति यास्कोक्तेः ( नि ५.१६ ) । पसः लिङ्गम् । भगः सुभगरूपमस्तु, सौभाग्यरूपं चास्तु । भग ऐश्वर्यम् । सौभाग्यं संपत्तिरिति भेदः । सर्वदा भोगासक्तं प्रजाफलवच्चास्त्विति तात्पर्यार्थः ॥८॥

जङ्घा॑भ्यां प॒द्भ्यां धर्मो॑ऽस्मि वि॒शि रा॒जा प्रति॑ष्ठितः ।
प्रति॑ क्ष॒त्रे प्रति॑ तिष्ठामि रा॒ष्ट्रे प्रत्यश्वे॑षु॒ प्रति॑ तिष्ठाम्मि॒ गोषु॑ ॥९॥

जङ्घा॑भ्याम् । प॒द्भ्यामिति॑ प॒त्ऽभ्याम् । धर्मः॑ । अ॒स्मि॒ ।
वि॒शि । राजा॑ । प्रति॑ष्ठितः । प्रति॑स्थित॒ इ॒ति प्रति॑ऽस्थितः ।
प्रति॑ । क्ष॒त्रे । प्रति॑ । ति॒ष्ठा॒मि॒ । रा॒ष्ट्रे । अश्वे॑षु । गोषु॑ ॥ ङ ॥९॥

आ– ' जङ्घाभ्याम् ' इति । धर्मः अस्मि धर्मप्रतिष्ठोऽस्मि । ' विशि राजा प्रतिष्ठितः ' । विशि प्रजासु राजा प्रतिष्ठितः । अहं च तथा प्रतिष्ठितोऽस्मि । कृष्णाजिने प्रत्यवरोहति– ' प्रति क्षत्रे ' इति । क्षत्रे [ प्रति ] प्रतिक्षत्रं प्रति तिष्ठामि । राष्ट्रे प्रतितिष्ठामि । प्रति अश्वेषु प्रतितिष्ठामि । गोषु प्रतितिष्ठामि ॥१०१॥

अ– ' जङ्घाभ्याम् ' । अहं जङ्घाभ्यां पद्भ्यां च धर्मः धर्मरूपोऽस्मि । स्वधर्मसाधनाय तीर्थयात्राकुञ्जवेयमित्यर्थः । उपलक्षणमेतत् । सर्वाङ्गैर्धर्मरूपत्वादेव विशि प्रजायां राजा सन् प्रतिष्ठितोऽस्मि धर्मप्रतिष्ठितो हि राजा भवति ।

3. M4 निश्चितं for निश्चित°
8. M4 °फलं for °फल°
14. S3 पाठस्तु – जङ्घाभ्या ... गोषु for जङ्घाभ्याम्
19. M4 om. तीर्थ°

कात्यायनः – "कृष्णाजिने अवरोहति प्रति क्षत्र इति" ( काश्रौ १९.४.२६ ) इति। आसन्दीतो यजमानः कृष्णाजिने उपविशतीत्यर्थः। 'प्रति क्षत्रे प्रति तिष्ठामि'। विश्वेदेवदेवत्यं यजुः। अतिशक्वरी। अहं $^{v}$क्षत्रे क्षत्रियजातौ क्षतत्राणे च $^{v}$प्रति $^{v}$तिष्ठामि प्रतिष्ठायुक्तो भवामि। $^{v}$राष्ट्रे देशे $^{v}$अश्वेषु $^{v}$गोषु $^{v}$प्रतितिष्ठामि इति प्रत्येकमन्वयः ॥९॥

---

प्रत्यङ्गेषु प्रति तिष्ठाम्यात्मन् प्रति प्राणेषु प्रति तिष्ठामि पुष्टे ।
प्रति द्यावापृथिव्योः प्रति तिष्ठामि यज्ञे ॥१०॥

---

अङ्गेषु । आत्मन् । प्राणेषु । पुष्टे ।
द्यावापृथिव्योः । यज्ञे ॥ श्वे ॥१०॥

---

आ– 'प्रत्यङ्गेषु' इति । द्वे वैश्वदेवत्ये । आद्या द्विपदा त्रिष्टुप् । द्वितीया बृहती । $^{v}$प्रति $^{v}$अङ्गेषु प्रतितिष्ठामि। $^{v}$आत्मन् आत्मनि $^{v}$प्रतितिष्ठामि। $^{v}$प्रति $^{v}$प्राणेषु प्रतितिष्ठामि। $^{v}$पुष्टे प्रति तिष्ठामि। $^{v}$प्रति $^{v}$द्यावापृथिव्योः प्रति तिष्ठामि। $^{v}$यज्ञे च $^{v}$प्रतितिष्ठामि ॥१०२॥

---

अ– 'प्रत्यङ्गेषु'। $^{v}$अङ्गेषु करपादाद्यवयवेषु। $^{v}$आत्मन् आत्मनि चित्ते । $^{v}$प्राणेषु पञ्चसु। $^{v}$पुष्टे पुष्टौ। $^{v}$द्यावापृथिव्योः स्वर्गेहलोकयोः $^{v}$यज्ञे ज्योतिष्टोमादौ च $^{v}$प्रतितिष्ठामि इति प्रत्येकमन्वयः। क्रियापदावृत्तिः फलातिशयद्योतनार्था । क्षत्रियदेशयोः प्रतिष्ठा नाम तद्वशीकरणम् । गोअश्वप्रतिष्ठा तद्भोगः। प्राणाङ्गप्रतिष्ठा नीरोगत्वम् । आत्मप्रतिष्ठा निराधित्वम् । पुष्टप्रतिष्ठा धनपुत्रादिसमृद्धिः । द्यावापृथिव्योः प्रतिष्ठा तूभयलोककीर्तिः। यज्ञप्रतिष्ठा साङ्गतत्करणम्। वश्यविश्वः पशुमान् निराधिव्याधिः श्रीमान् यज्ञकर्ता च भवेयमिति भावः॥१०॥

---

त्रया देवा एकादश त्रयस्त्रिꣳशाः सुराधसः ।
बृहस्पतिपुरोहिता देवस्य सवितुः सवे । देवा देवैरवन्तु मा ॥११॥

---

त्रयाः । देवाः। एकादश । त्रयस्त्रिꣳशा इति त्रयःऽत्रिꣳशाः। सुराधस इति सुऽराधसः।
बृहस्पतिपुरोहिता इति बृहस्पतिऽपुरोहिताः । देवस्य । सवितुः । सवे ।
देवाः । देवैः । अवन्तु । मा ॥ द्वीम ॥११॥

---

9. S2 पाठस्तु– प्रत्यङ्गेषु ... यज्ञ इति for 'प्रत्यङ्गेषु' इति।

वसाग्रहः ]

आ– 'त्रया देवाः' इति । दैवी पङ्क्तिः त्र्यवसाना । [v]त्रयाः त्रयः [v]देवाः [v]एकादश । एकादशः देवाः ते त्रयः त्रिगुणीकृत्य गुणिताः [v]त्रयस्त्रिंशाः त्रयस्त्रिंशद्देवाः संपद्यन्ते । ते च देवाः [v]बृहस्पतिपुरोहिताः । बृहस्पतिः पुरोहितो येषां देवानां ते बृहस्पतिपुरोहिताः । ते [v]सवितुः [v]देवस्य देवनादिगुणयुक्तस्य श्रीभगवतः [v]सवे प्रसवे आज्ञायां वर्तमानाः [v]देवाः [v]देवैः वक्ष्यमाणैर्देवैः सह यजमानं [v]मा [माम्] [v]अवन्तु पालयन्तु ॥१०३॥

---

अ– कात्यायनः – "त्रया देवाः इति शस्त्रान्ते जुहोति" ( काश्रौ १९.५.८ ) इति । शस्त्रसमाप्तौ सत्यां वषट्कृते 'त्रया' इति कण्डिकाद्वयात्मकेन मन्त्रेण त्रयस्त्रिंशं वसाग्रहं जुहोति इति सूत्रार्थः ।

'त्रया देवाः' । त्र्यवसाना देवदेवत्या पङ्क्तिः । [v]एकादश [v]देवाः [v]देवैः वक्ष्यमाणैः सह [v]मा माम् [v]अवन्तु रक्षन्तु । कीदृशाः ? [v]त्रयाः त्रयोऽवयवा येषां ते तथा । संख्याया अवयवे तयप् । "द्वित्रिभ्यां तयस्यायज्वा" ( पा ५.२.४२.४३ ) इति अयजादेशः । एकादश त्रिगुणा इत्यर्थः । ते च कतीति स्वयं श्रुतिराह– [v]त्रयस्त्रिंशाः । तिसृभिरधिका त्रिंशत्संख्या येषां ते तथा । त्रयस्त्रिंशत्संख्या इत्यर्थः । कीदृशाः ? [v]सुराधसः । राध इति धननाम । शोभनं राधो येषां ते तथा । तथा [v]बृहस्पतिपुरोहिताः । बृहस्पतिः पुरोहितो येषां ते तथा । [v]सवितुः सर्वप्रेरकस्य [v]देवस्य परब्रह्मणः [v]सवे आज्ञायां वर्तमानाः [v]देवाः दीप्यमानाः ( [v]देवैः ) क्रीडादिगुणैः । दिवु क्रीडाविजिगीषाव्यवहारश्रुतिस्तुतिमोहमदस्वप्नकान्तिगतिष्विति धातुः ॥११॥

---

प्रथमा द्वितीयैर्द्वितीयास्तृतीयैस्तृतीयाः सत्येन ।
सत्यं यज्ञेन यज्ञो यजुर्भिर्यजूꣳषि सामभिः ॥१२॥

---

प्रथमाः । द्वितीयैः । द्वितीयाः । तृतीयैः । तृतीयाः । सत्येन ।
सत्यम् । यज्ञेन । यज्ञः । यजुर्भिरिति यजुःऽभिः ।
यजूꣳषि । सामभिरिति सामऽभिः ॥ झि ॥१२॥

---

आ– 'प्रथमा द्वितीयैः' इति । कथमवन्तु ? 'प्रथमा द्वितीयैः' इति । [v]प्रथमाः देवाः [v]द्वितीयैः सहिता अवन्तु । [v]द्वितीयाः देवाः [v]तृतीयैः देवैः सहिता अवन्तु । [v]तृतीयाः देवाः [v]सत्येन सहिता अवन्तु । [v]सत्यं च [v]यज्ञेन सहितमवतु । [v]यज्ञः अपि [v]यजुर्भिः सहितोऽवतु । [v]यजूꣳषि [v]सामभिः सहितान्यवन्तु । ॥१०४॥

---

1. V2 त्रयो for first त्रया; S3 पाठस्तु– त्रयो देवा...अवन्तु मेति for 'त्रया देवाः' इति ।
13. M4 om. देवाः दीप्यमानाः
21. S3 पाठस्तु– प्रथमा ... सामभिः । सामानि ... स्वाहेति for 'प्रथमा द्वितीयैः' इति ।
22. S3 om. द्वितीया देवाः ... सहितोऽवतु [ L 24 ]

अ– कथमवन्तु तत्राह– ‘ प्रथमा द्वितीयैः ’। विश्वदेवदेवत्यमाशीर्लिङ्गं यजुः। प्रकृतिश्छन्दः। प्रथमाः देवाः द्वितीयैः देवैः सहिता मामवन्तु। द्वितीयाः तृतीयैः सह। तृतीयाः सत्येन सह। सत्यं यज्ञेन सह। यज्ञः यजुर्भिः सह। यजूंषि सामभिः सह ॥१२॥

---

सामान्यृग्भिर्ऋचः पुरोऽनुवाक्याभिः पुरोऽनुवाक्या याज्याभिर्याज्या वषट्कारैः। वषट्कारा आहुतिभिराहुतयो मे कामान्त्समर्धयन्तु भूः स्वाहा ॥१३॥

---

सामानि। ऋग्भिरित्यृक्ऽभिः। ऋचः। पुरोनुवाक्याभिरिति पुरःऽअनुवाक्याभिः।
पुरोनुवाक्या इति पुरःऽअनुवाक्याः। याज्याभिः।
याज्याः। वषट्कारैरिति वषट्ऽकारैः।
वषट्कारा इति वषट्ऽकाराः। आहुतिभिरित्याहुतिऽभिः।
आहुतय इत्याऽहुतयः। मे। कामान्। सम्। अर्द्धयन्तु। भूः। स्वाहा ॥ व्यै ॥१३॥

---

आ– सामानि च ऋग्भिः सहितान्यवन्तु। ऋचः पुरोनुवाक्याभिः ऋग्भिः सहिता अवन्तु। पुरोनुवाक्याः च याज्याभिः सहिता अवन्तु। याज्याः च वषट्कारैः सहिता अवन्तु। वषट्काराः च आहुतिभिः सहिता अवन्तु। आहुतयः च मे मम कामान् समर्धयन्तु। ब्राह्मणवाक्यानुसारेण प्रथमा देवा द्वितीयैः सह एनं यजमामभिषिञ्चन्तीति वा क्रियापदाध्याहारः कार्यः। भूः स्वाहा सुहुतमस्तु ॥१०५॥

---

अ– सामानि ऋग्भिः सह। ऋचः पुरोनुवाक्याभिः सह। पुरोनुवाक्याः याज्याभिः सह। याज्याः वषट्कारैः सह। वषट्काराः आहुतिभिः सह। एवं त्रिप्रकारेण एकादशसंख्यैर्देवैरुत्तरोत्तरं पालिताः आहुतयः मे मम कामान् :अभिलाषान् समर्धयन्तु समृद्धान् कुर्वन्तु। ऋधु वर्धने। अस्माल्लोट्। भूः। भवनं भूः। तृप्तिकरत्वेन देवानां स्थानं हविरित्यर्थः। हुतमिदं स्वाहा सुहुतमस्तु॥

---

3. M4 om. सत्यं यज्ञेन सह

वसाग्रहाः ]

एषोऽर्थे ब्राह्मणे – " त्रया देवा एकादशेत्येतद्वा एतस्य साम्न उक्थमेषा प्रतिष्ठा। ... त्रया हि देवा एकादश त्रयस्त्रिंशाः सुराधस इति। त्रयस्त्रिंशद्धि देवा बृहस्पतिपुरोहिता इति। ब्रह्म वै बृहस्पतिः ब्रह्मपुरोहिता इत्येवैतदाह। देवस्य सवितुः सव इति। देवेन सवित्रा प्रसूता इत्येवैतदाह। देवा देवैरवन्तु मेति। देवा ह्येनं देवैरभिषिञ्चन्ति। प्रथमा द्वितीयैरिति। प्रथमा ह्येतद् द्वितीयैरभिषिञ्चन्ति" (शब्रा १२·८·३·२८–३०) इत्यादौ ॥१३॥

---

लोमा॑नि॒ प्रय॑ति॒र्मम॒ त्वङ् म॒ आन॑ति॒राग॑तिः।

मा॑ꣳसं म॒ उप॑नति॒र्वस्वस्थि॑ म॒ज्जा म॒ आन॑तिः ॥१४॥(७)॥

---

लोमा॑नि। प्रय॑ति॒रिति॒ प्रऽय॑तिः। मम॑।

त्वक्। मे॒। आन॑ति॒रित्याऽन॑तिः। आग॑ति॒रित्याऽग॑तिः।

माꣳसम्। मे॒। उप॑नति॒रित्युप॑ऽनतिः।

वसु॑। अस्थि॑। म॒ज्जा। मे॒। आन॑ति॒रित्याऽन॑तिः। मू ॥१४॥(७)॥

---

[ स्वाद्वींत्वैकादश ॥११॥ देवा यज्ञं विंशतिः ॥२०॥ सुरावन्तमेकोनविंशतिः ॥१९॥ उदीरतामेकविंशतिः ॥२१॥ सोमो राजा पञ्च ॥५॥ सीसेन तन्त्रं षोळश ॥१६॥ क्षत्रस्य नाभिश्चतुर्दश ॥१४॥ सप्तानुवाकेषु षडोत्तरशतम् ॥१०६॥ ]

इति शुक्लयजुर्वेदकाण्वसंहितायाम् एकविंशतितमोऽध्यायः ॥२१॥

आ– यजमानो भक्षयति– 'लोमानि' इति। लिङ्गोक्तदेवत्याऽनुष्टुप्। Vमम यानि Vलोमानि तानि Vप्रयतिः प्रयत्नः वर्तते। 'त्वङ् म आनतिः'। आनमनम् Vआनतिः वर्तते। Vत्वक् इव सर्वाणि भूतानि आनतानीत्यभिप्रायः। Vआगतिः च द्रव्यादेर्वर्तते। 'माꣳसं म उपनतिः'। Vमे मम Vमांसम् Vउपनतिः वर्तते। एवं मम भूतान्युपनमन्ति। Vवसु धनं Vअस्थि मे वर्तते।

---

12-14. Hubli padapāṭha does not give the number of mantras of anuvākas, of adhyāyas at the enclusion of each adhyāya as given in the printed text.

16. before इति adds सोमो राजा त्वद्भ्यः सोममद्भ्योऽन्नाद्रेत एव च। दृष्ट्वा श्रद्धा च वेदेन दृष्ट्वा परिस्रुतो रसम् ॥१॥

17. S3 पाठस्तु– लोमानि ... आनतिरिति for 'लोमानि' इति।

vमज्जा vमे मम आनतिर्वर्तते । एवं मे मम सर्वतनूः सर्वलोकदेवताप्रवेशैः कृत्स्नः साङ्गः संभवतीति ॥१०६॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीवासुदेवपुरीपूज्यपादपरमकारुण्यासादित-श्रीकृष्णभक्ति-साम्राज्यस्य श्रीमज्जातवेदभट्टोपाध्यायस्य सूनुना चतुर्वेदि-श्रीमदानन्दबोध-भट्टोपाध्यायेन विरचिते काण्ववेदमन्त्रभाष्यसंग्रहे एकविंशोऽध्यायः ॥२१॥

---

अ- कात्यायनः – " प्रत्यक्ष भक्षं यजमानो लोमानि प्रयतिरिति " ( काश्रौ १९.५.१० ) इति । यजमानो ग्रहशेषं प्रत्यक्षम् उपहवपूर्वकं भक्षयतीति सूत्रार्थः । ' लोमानि प्रयतिः '। लोमत्वगादिदेवत्याऽनुष्टुप्। vमम vलोमानि vप्रयतिः । प्रयतनं प्रयतिः प्रयत्नः । तद्रूपाणि सन्तु । तथोद्यमी स्यां यथा मम लोमस्वपि प्रयत्नः । वेदाः प्रमाणम् इतिवत् सामानाधिकरण्यम् । तथा vमे मम vत्वक् vआनतिः vआगतिः चास्तु । आनमन्ति भूतानि यस्यां सा तथा । आगच्छन्ति भूतानि यां प्रतीति सा तथा । मदीयां त्वचं दृष्ट्वा भूतान्यागच्छन्तु नमन्तु चेत्यर्थः । तथा vमे मम vमांसम् vउपनतिः । उप पादसमीपे नमन्ति भूतानि यस्मिन् तत्तथा । स्त्रीत्वं छान्दसम् । मम vअस्थि vवसु धनम् । तद्रूपमस्तु । vमे मम vमज्जा vआनतिः । आनमन्ति भूतानि यस्यै सा तथा । उपलक्षणमेतत् । तेन मम सप्तधात-वोऽपि जगद्वशीकरणसमर्थाः भूयासुरिति भक्ष्यं प्रति प्रार्थनापरोऽयं मन्त्रः । एष एवार्थो ब्राह्मणे समाम्नायते– " तदुपहवमिच्छते स भक्षयति लोमानि प्रयतिः ... इति प्रेव वा एष लोकांश्च देवताश्च विशति यः सौत्रामण्याभिषिच्यते तदेतदवान्तरामात्मानमुपह्वयते तथा कृत्स्न एव सर्वतनूः साङ्गः संभवति " ( शब्रा १२.८.३.३०-३१ ) इति ॥

एषोऽनुवाकः परमात्मपरत्वे स्पष्टार्थः । तथा हि – हे परमात्मन्, त्वं क्षत्रस्य । क्षतो दैत्याहिंसना अस्य (?) त्राणस्य नाभिः मुख्यं [ मध्यं ? ] स्थानमसि । नाभिशब्दोऽत्राभयार्थः । " मध्यं वै नाभिः मध्यमभयम् " ( शब्रा १.१.२.२३ ) इति श्रुतेः ।

" परित्राणाय साधूनां विनाशाय च दुष्कृताम्
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ " ( भगी ४.८ ) इति भगवद्वचनात् ।

यत्र साक्षान्न त्राणं तत्राह– " क्षत्रस्य योनिरसि " इति । क्षत्रस्य भरतादिक्रियमाणशिष्ट-रक्षणस्यापि त्वमेव योनिः कारणम् । तेषां निमित्तमात्रत्वात् ।

" यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम् ॥ " ( भगी १०.४१ ) इति स्मरणात् ।

एवं सति अयं प्राकृतो जनः त्वा त्वां मा हिंसीत् । अभजनेन त्वदवज्ञां न कुर्यात् । सर्वं जगत् त्वत्पूजां कृत्वा सुखं प्राप्नोतु । एवं संप्रार्थ्य श्रुतिः स्वं कार्यं प्रार्थयते– हे परमात्मन्, अयं जनस्त्वदर्चां करोतु वा मा वा । मा मां मा हिंसीः मा विनाशय । त्वदभजनेन मां भ्रष्टं न कुरु । सर्वदा त्वामेव भजिष्यामीत्यर्थः । यतस्त्वं साम्राज्याय सर्वप्रतिपालनाय सर्वैश्वर्याय च पस्त्यासु प्रजासु विषत्रे निषसाद उपविष्टवानसि । कीदृशस्त्वम् ? धृतव्रतः शिष्टसंरक्षणरूपव्रतवान् । वारयति दुष्टानिति वृणोत्यात्मीयत्वेन भक्तानिति वा वरुणः । आ

---

चसाग्रहाः ]

सत्यमेव। यतस्त्वं सुक्रतुः। क्रतुरिति संकल्पनाम। सत्यसंकल्पः। अन्यजनवन्न वितथसंकल्प इत्यर्थः। अन्यत् सर्वं यथायथं स्वबुद्धयोह्यम्। वेदस्य कामधेनुरूपत्वात्। "वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः। तावन्ति हरिनामानि कीर्तितानि न संशयः" इति शौनकोक्तेः। "सर्वे वेदा यत्पदमामनन्ति" ( कउ २·१५ ) इति कठश्रुतेः। "वेदैश्च सर्वैरहमेव वेद्यः" ( भगी १५·१५ ) इत्यादि भगवद्वचनाच्च। परमात्मपरत्वं सर्ववेदस्येत्यलं पल्लवितेन ॥१४॥ (७) ॥

देशतः कालतश्चैव गुणतश्चैव सर्वतः।
अनन्तं सर्वलेखानामध्यक्षं विष्णुमाश्रये ॥

इति श्रीमन्नागभट्टात्मजेन श्रीमदनन्ताचार्येण प्रथमशाखिना विरचितायां वेदार्थदीपिकायाम् एकविंशाध्यायस्य सप्तमोऽनुवाकः ॥(७)॥

अध्यायः समाप्तः ॥

अनन्ताचार्यवर्येण व्याख्यातश्चैकविंशकः।
अध्यायः श्रीहरेः प्रीत्यै सतामपि विशेषतः ॥

---

[ इत्येकविंशोऽध्यायः ]

## द्वाविंशोऽध्यायः

[ अथ प्रथमोऽनुवाकः । ]

यद्देवा देवहेळनं देवासश्चकृमा वयम् ।
अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः ॥१॥

---

यत् । देवाः । देवहेळनमिति देवऽहेळनम् । देवासः । चकृम । वयम् ।
अग्निः । मा । तस्मात् । एनसः । विश्वात् । मुञ्चतु । अꣳहसः ॥ ङीम् ॥१॥

---

आ– इत उत्तरमावभृथं मासरकुम्भं प्लावयति– ' यद्देवाः ' इति । अग्निवायुसूर्यदेवत्यास्तिस्रोऽनुष्टुभः। हे देवाः, यद् देवहेळनं देवापराधं वयं चकृम कृतवन्तः। देवासः। आदरार्थं पुनः संबोधनम् । ' अग्निर्मा तस्मादेनसः ' । तस्मात् अपराधकरणप्रयुक्तात् एनसः पापात् मा माम् अग्निः मुञ्चतु मोचयतु वा । एतत्प्रसङ्गेन विश्वात् विश्वस्मात् सर्वस्मात् अꣳहसः पापात् विमुञ्चतु ॥१॥

---

अ– देशतः कालतश्चैव गुणतश्चैव सर्वतः ।
अनन्तं देवताध्यक्षं विष्णुं वन्दे श्रियः पतिम् ॥

अत उत्तरम् अवभृथः प्रवर्तते । कात्यायनः – " मासरकुम्भं प्लावयति यद्देवा इति " ( काश्रौ १९·५·१३ ) इति। अवभृथेष्टिं कृत्वा ' यद्देवाः' इत्यादिना ' वरुणो नो मुञ्च ' इत्यन्तेन मन्त्रेण मासरकुम्भं जले तारयति ॥

' यद्देवाः ' । अग्निवायुसूर्यदेवत्यास्तिस्रोऽनुष्टुभः कूष्माण्डीसंज्ञाः । दीव्यन्तीति देवाः दीप्यमानाः । हे देवासः देवाः, वयं यत् देवहेळनं देवानां हेळनम् अपराधं चकृम कृतवन्तः। करोतेर्लिट् । संहितायां दीर्घश्छान्दसः । अग्निः तस्मात् एनसः पापात् मा मां मुञ्चतु । अन्तर्भूतार्थत्वात् मोचयतु । न केवलमेतदेव । किं तर्हि– विश्वात् विश्वस्मात् सर्वस्मात् अंहसः पापात् मुञ्चतु । ङसेः स्मादभाव आर्षः । पृथक्करोत्वित्यर्थः । देवास इत्यत्र " आज्जसेरसुक् " ( पा. ७·१·५० ) इति असुक् । देवास इत्यस्य पादादित्वान्न सर्वनिघातत्वम् । चकृमेत्यस्यामन्त्रितपरत्वान्न तथात्वम् ॥१॥

---

7. S3 पाठस्तु – यद्देवा ... अꣳहस इति for ' यद्देवाः ' इति।

यदि दिवा यदि नक्तमेनांऽसि चकृमा वयम् ।
वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वंऽहसः ॥२॥

---

यदि । दिवा । यदि । नक्तम् । एनांऽसि । चकृम । वयम् ।
वायुः । मा । तस्मात् । एनसः । विश्वात् । मुञ्चतु । अंऽहसः ॥ सुम् ॥ २ ॥

---

आ– 'यदि दिवा' इति । यदि दिवा अह्नि यदि नक्तं रात्रौ एनांसि चकृम निषिद्धकर्माणि पापकर्माणि वयं चकृम । तस्मात् एनसः सकाशात्, विश्वात् विश्वस्मात् अंऽहसः च मा मां वायुः मुञ्चतु ॥२॥

---

अ– 'यदि दिवा' । यदि चेत् दिवा अहनि, यदि चेत् नक्तं रात्रौ, वयम् एनांसि पापानि चकृम । वायुः तस्मात् एनसः, विश्वात् अंऽहसः च [ मा ] मां मुञ्चतु ॥२॥

---

यदि जाग्रद्यदि स्वप्न एनांऽसि चकृमा वयम् ।
सूर्यो मा तस्मादेनसो विश्वान्मुञ्चत्वंऽहसः ॥३॥

---

यदि । जाग्रत् । यदि । स्वप्ने । एनांऽसि । चकृम । वयम् ।
सूर्यः । मा । तस्मात् । एनसः । विश्वात् । मुञ्चतु । अंऽहसः ॥ सुम् ॥३॥

---

आ– 'यदि जाग्रत्' इति । यदि जाग्रत् । व्यत्ययः । जाग्रति जाग्रदवस्थायां, यदि स्वप्ने स्वप्नावस्थायाम् एनांऽसि पापकर्माणि वयं चकृम । तस्मात् एनसः पापात् प्रसङ्गात्, विश्वस्मात् अंऽहसः सकाशात् [मा] मां सूर्यः मुञ्चतु ॥३॥

---

5. S3 पाठस्तु – यदि ... अंऽहस इति for 'यदि दिवा' इति ।
14. S3 पाठस्तु – यदि जाग्रद् ... अंऽहस इति for 'यदि जाग्रत्' इति ।

अ– ' यदि जाग्रत् ' । सप्तम्या लुक् । यदि जाग्रत् जाग्रदवस्थायां, यदि स्वप्ने स्वप्नावस्थायाम्, एनांसि वयं चकृम । सूर्यः तस्मात् एनसः, विश्वात् अंहसः च मां मुञ्चतु । ब्राह्मणे तु जाग्रत्स्वप्नशब्दौ मनुष्यपितृपरत्वेन व्याख्यातौ– " यद्देवा देवहेळनमिति देवकृताद्देवैनमेनसो मुञ्चति । यदि दिवा यदि नक्तमिति यदेव अहोरात्राभ्यामेनः करोति तस्मादेवैनं मुञ्चति । यदि जाग्रद्यदि स्वप्ने इति मनुष्या वै जागरितम् पितरः सुप्तम् मनुष्यकिल्बिषाच्चैवैनं पितृकिल्बिषाच्च मुञ्चति " ( शब्रा १२·९·२·२ ) इति । तदा मनुष्ययज्ञविषये पितृयज्ञविषये यदेनश्चकृम तस्मान्मुञ्चत्वित्यर्थः ॥३॥

यद्ग्रामे यदरण्ये यत् सभायां यदिन्द्रिये । यच्छूद्रे यदर्ये यदेनश्चकृमा वयम् ।
यदेकस्याधि धर्मणि तस्यावयजनमसि ।
यदापो अघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुञ्च ।
अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः ।
अव देवैर्देवकृतमेनोऽयक्ष्यव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देव रिषस्पाहि ।
समुद्रे ते हृदयमप्स्वन्तः सं त्वा विशन्त्वोषधीरुतापः ।
सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु ।
योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥४॥

शूद्रे । अर्ये ।
एकस्य । अधि । धर्मणि ।
तस्य । अवयजनमित्यवऽयजनम् ।
यत् । आपः ।
एनः । अयक्षि । ॥ खिम् ॥४॥

आ– ' यद्ग्रामे ' इति लिङ्गोक्तदेवत्यं यजुः । ' यद्ग्रामे ' । ग्रामे यत् एनः चकृम, अरण्ये यत् एनश्चकृम । ' यत् सभायाम् ' सभायां यत् एनः चकृम । यत् इन्द्रिये इन्द्रियविषये देवविषये वा यदेनश्च वयं चकृम । यत् शूद्रे शूद्रविषये च यदेनश्चकृम । यत् अर्ये । " अर्यः स्वामिवैश्ययोः " ( पा ३·१·१०३ ) इति । अर्यविषयो यदेनश्चकृम । यत् एकस्य अधि धर्मणि । पत्नीयजमानयोरावयोर्मध्ये एकस्याधि धर्मणि एकाधिकारतया विहितकर्मणि एतत्कर्मविषये यत् एनः वयं चकृम, तस्य एनसः अवयजनम् असि । अवपूर्वो यजिर्नाशार्थे वर्तते, नाशनमसि । यत्

20. S3 पाठस्तु– यद्ग्रामे ... द्विष्म इति for ' यद् ग्रामे ' इति ।

अवभृथः ]

' यदापो अघ्न्याः ' इति । व्याख्यातम् । " वरुण्यादेवैनमेनसो मुञ्चति " ( शब्रा १२·९·२·४ ) इति श्रुतेः ।

' अवभृथ निचुम्पुण ' इति व्याख्यातम् । पूर्वम् ' एनोऽयासिषम् ' इति स्थितम् । इह तु ' एनोऽयक्ष्यव ' इति तिष्ठति । तथापि स एवार्थः ॥

' समुद्रे ते ' इति । द्विपदा विराड्वाऽपि ( ? ) । इयमपि व्याख्याता ।

' सुमित्रिया नः ' इत्यपोऽञ्जलिनाऽऽदाय ' दुर्मित्रियाः ' इति द्वेष्यं प्रति निषिञ्चति । अब्देवत्याऽनुष्टुप् । व्याख्याता ॥४॥

---

अ- ' यद्ग्रामे ' । लिङ्गोक्तदेवत्यं यजुः । ग्रामे अरण्ये प्रकाशाप्रकाशत्वेन, सभायां पक्षपातादिना, इन्द्रिये इन्द्रियविषये दुर्विषयग्रहणेन । यत् एनः वयं चकृम इति प्रत्येकमन्वयः । यद्यदिति प्रतिवाक्यं श्रवणात् । तथा शूद्रे । अर्ये वैश्ये स्वामिनि च । " अर्यः स्वामिवैश्ययोः " (पा ३·१·१०३ ) इति निपातात् । यदेनश्चकृम यदि केवलमुक्तान्यविषयम् । आवयोः पत्नीयजमानयोर्मध्ये एकस्य पत्न्या वा मम वा अधि धर्मणि अधिकृतधर्मविषये यदेनः धर्मलोपलक्षणं जातं तस्य एनसः अवयजनं नाशनं त्वम् असि इति कुम्भं प्रति वचनम् । धर्मन्-शब्दो नकारान्तः । ' ध्रुवेण धर्मणा ', ' देवास्तानि धर्माणि ' इत्यादौ दर्शनात् । अवपूर्वो यजतिर्नाशनार्थः ॥

किं च- हे वरुण, अबाधाः सर्वदेवताः अघ्न्याः अहननार्हाः पूजनीया इति यद्ब्रह्मवादिनः आहुः । एवं सत्यपि अस्मदिष्टानिष्टप्राप्तिपरिहारार्थम् । कास्ताः आपः देवताः ? कश्च वरुणः ? इति शपामहे । आक्रुश्यामहे । शप आक्रोशे । वरुणेत्यत्र विभक्तिलोपः । ततस्तस्माज्जनितात् पापात् नः अस्मान् मुञ्च मोचय ॥

कात्यायनः – " पूर्ववन्मज्जनम् " ( काश्रौ १९·५·१४ ) इति । पूर्ववदित्यतिदेशेन ' अवभृथ ' इत्यादि ' ओषधीरुतापः ' इत्यन्तेन मन्त्रेण सुराकुम्भस्य जले मज्जनं कार्यमित्यर्थः । ' अवभृथ निचुम्पुण ' अत्र ' अवायाक्षि ' इति मन्त्रपाठे विशेषः । यज्ञदेवत्या जगती प्रजापतिदृष्टा । अवाचीनानि पात्राणि जले यत्र क्रियन्ते सोऽयमवभृथः । हे अवभृथ, हे अवभृथाख्य यज्ञ, त्वं निचुम्पुण नितरां मन्दं गच्छ । चुप मन्दायां गतौ । कीदृशः ? निचेरुः असि नितरां चरणशीलोऽसि, शीघ्रगमनोऽसि तथाप्यत्र निचुम्पुण मन्दं गच्छ । कुत इत्यत आह- देवैः द्योतनात्मकैः अस्मदीयैरिन्द्रियैः । देवकृतं हविः स्वामिषु देवेषु कृतं यत् एनः पापमस्ति तदहम् अव अयक्षि, अस्मिन् जले अवनीतवानस्मि । तथा मर्त्यैः मनुष्यैरस्मदीयैर्ऋत्विगादिभिः मर्त्यकृतं मर्त्येषु मनुष्येषु कृतम् अवज्ञारूपं यदेनोऽस्ति तदप्यवयासिषमित्यनुषञ्जनीयम् । किं च- हे देव अवभृथाख्य यज्ञ, पुरुराव्णः । रा दाने इति धातुः । बहुविरुद्धफलदायिनः रिषः वधात् मां पाहि पालय । रिषतिर्हिंसार्थः । विरुद्धफलदायी वधस्त्वत्प्रसादादस्माकं मा भूदित्यर्थः । रातेर्वन्प्रत्यये पुरुरावेति रूपम् । यजेर्लुङि आत्मनेपदे उत्तमैकवचनमयक्षीति ।

---

25. M4 om. देवेषु; M4 यस्मिन् for अस्मिन्

' समुद्रे ते ' । अब्देवत्या द्विपदा विराट् । हे अवभृथ, ते तव हृदयं समुद्रे समुद्रसमानासु अप्सु अन्तः मध्ये प्रतितिष्ठत्विति शेषः । किं च, ओषधीः । विभक्तिव्यत्ययः । ओषधयस्त्वां संविशन्तु । उत अपि च आपः अपि विशन्तु ॥

कात्यायनः – " सुमित्रिया न इत्यपोऽञ्जलिनादाय दुर्मित्रिया इति द्वेष्यं प्रति निषिञ्चति द्वौ विक्रमा उदङ् गत्वा " ( काश्रौ १९.५.१५ ) [ इति ] । यजमानोऽवभृथप्रदेशात् द्वौ विक्रमौ उदीच्यां गत्वा ' सुमित्रिया नः ' इति जलाञ्जलिमादाय यस्यां दिशि रिपुस्तां प्रतिषिञ्चतीति सूत्रार्थः ॥

' सुमित्रिया नः ' । अब्देवत्या जगती । हे अवभृथ, आपः अब्देवताः ओषधयश्च, नः अस्माकं सुमित्रियाः मित्रेषु साध्याः सन्तु । किं च एता एव तस्मै दुर्मित्रियाः, अमित्रेणावस्थिताः सन्तु । स कः? यः अस्मान् द्वेष्टि । यं च शत्रुं वयं द्विष्मः द्वेषं कुर्मः । उक्तोऽर्थो ब्राह्मणे– " यद्ग्रामे यदरण्य इति ग्रामे वा ह्यरण्ये वैनः क्रियते तस्मादेवैनं मुञ्चति । यत्सभायामिति सभ्यादेवैनमेनसो यदिन्द्रिय इति दैवादेवैनमेनसो मुञ्चति । यच्छूद्रे यदर्ये यदेनश्चकृमा वयं यदेकस्याधिधर्मणि । तस्यावयजनमसीति सर्वस्मादेवैनमेनसो मुञ्चति । यदापो अघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुञ्चेति वरुण्यादेवैनमेनसो मुञ्चति " ( शब्रा १२.९.२.३-४ ) इत्यादौ ॥४॥

---

द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव ।
पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः ॥५॥

---

द्रुपदादिवेति द्रुपदात्ऽइव । मुमुचानः ।
स्विन्नः । स्नातः । मलादिवेति मलात्ऽइव ।
पूतम् । पवित्रेणेवेति पवित्रेणऽइव । आज्यम् ।
आपः । शुन्धन्तु । मा । एनसः ॥ णिम् ॥५॥

---

आ– ' द्रुपदादिव मुमुचानः ' इति । अब्देवत्याऽनुष्टुप् । द्रुपदादिव । द्रोः पादो द्रुपदः । द्रुशब्दो वृक्षवचनः । द्रुमयो वृक्षमयः पादो द्रुपदः । पादुकः । एकवचनमविवक्षितम् । गमनसाधकत्वेन पादुकाभ्यां मुमुचानः मुच्यमानो यथा पुमान् गमनावसाने अक्लेशेन विमुच्यते । स्विन्नः स्वेदं प्राप्तः पुमान्, तन्निवृत्त्यर्थं स्नातः सन् मलादिव यथा मलाद्विमुच्यते । 'पूतं पवित्रेणेवाज्यम्' । पवित्रेणेव यथा पवित्रेण पूतम् आज्यं पवित्रात् मुच्यते पृथक् । तथा ' आपः शुन्धन्तु मैनसः ' । मा मां मया उपासिताः आपः एनसः पापात् सकाशात् शुन्धन्तु मुञ्चन्तु । प्रस्विन्नस्य कृत्स्नमलात् तापादिव अन्तःशुद्धिं निःशेषतया पापनिवृत्तिं कुर्वन्तु ॥५॥

---

10. M4 om. यत्सभायां यदिन्द्रिय इति ... मुञ्चति । [ L 11 ]

20. S3 पाठस्तु – द्रुपदादिव ... मैनस इति for ' द्रुपदादिव मुमुचानः ' इति ।

अवभृथः ]

अ– कात्यायनः – " अवभृथवत् स्नात्वा वासोऽपासनं द्रुपदादिवेति " ( काश्रौ १९·५·१६ ) इति । जलस्थावेव जायापती सौमिकावभृथवत् स्नात्वा कर्मकालधृतवासोऽप्सु क्षिपत इति सूत्रार्थः ॥

' द्रुपदादिव मुमुचानः ' । अब्देवत्या अनुष्टुप् । आपः जलदेवताः । एनसः पापात् मा मां शुन्धन्तु । शुधि शुद्धाविति धातुः । पापात् पृथक् कुर्वन्तु । तत्र दृष्टान्तत्रयमाह– ' द्रुपदादिव ' इत्यादिना । " पलाशी द्रुद्रुमागमः " ( अको २·४·५ ) इत्यभिधानात् द्रुस्तरुस्तन्मयं पदं द्रुपदम् । पादुका । तस्मात् पादशृङ्खलारूपात् मुमुचानः पृथग्भवन् यथा पादुकादोषैरसंबद्धो भवति । मुचेर्विकरणव्यत्ययेन शानचि जुहोत्यादित्वाद् द्वित्वे कृते मुमुचान इति रूपम् । यथाच – स्विन्नः ऊष्मजन्यस्वेदयुक्तः प्राणी स्नातः सन् मलात् पृथग्भवति, यथा च– आज्यं पवित्रेणेव पूतम् । इवशब्दो भिन्नक्रमः । तथा च महाभाष्ये– " केषां शालीनामोदनः " ( व्यामभा २·१·१ ) इति विग्रहे किमोदनः शालीनामित्यसमर्थसमासो यथा, तथाऽत्रेति ज्ञेयम् । पवित्रेण गालनवस्त्रेण पूतं गालितम् आज्यं यथा किट्टादिभ्यः पृथग्भवति, तथा ' आपो मा शुन्धन्तु ' इति पूर्वेणान्वयः । यद्वा– द्रुपदात् वृक्षस्थानात् मुमुचानः फलपुष्पादिः यथा विविक्तो भवति तथेति । उक्तोऽर्थो ब्राह्मणेऽपि– "द्रुपदादिव मुमुचानः... इति वासोऽपप्लावयति यथेषीकां मुञ्जाद्विवृहेदेवमेनं सर्वस्मात् पाप्मनो विवृहति स्नाति तम एवापहते " ( शब्रा १२·९·२·७ ) इति ॥५॥

---

उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥६॥

---

उत् । वयम् । तमसः । परि । स्वरिति स्वः । पश्यन्तः । उत्तरमित्युत्ऽतरम् ।
देवम् । देवत्रेति देवऽत्रा । सूर्यम् । अगन्म । ज्योतिः । उत्तममित्युत्ऽतमम् ॥ धीम् ॥ ६ ॥

---

आ– उत्क्रामति– ' उद्वयम् ' इति । सूर्यदेवत्याऽनुष्टुप् प्रस्कण्वः । ' उद्वयं तमसः परि ' । तमःप्रचुरादस्माल्लोकात् तमसः पाप्मनो वा परि उपरि स्वः स्वर्गलोकं, ततः उत्तरम् उत्तारकं देवत्रा देवेषु उत्तरं देवं देवनादिगुणयुक्तम् उत्तमं सर्वज्योतिर्भ्य उत्तमम् उत्कृष्टतमं सूर्यं सर्वप्रेरकं पश्यन्तः शास्त्रदृष्ट्या साक्षात्कुर्वन्तः । सूर्यं ज्योतिः उत् अगन्म उद्गताः स्मः ॥ ६ ॥

---

2. M4 °जाल° for °काल°
4. M4 °यन्त्रम् for त्रयम्
10. P2 M4 कीटादिभ्य for किट्टादिभ्यः
18. S3 पाठस्तु – उद्वयं ... उत्तममिति for ' उद्वयम् ' इति ।
20. S3 om. सर्वं°
21. S3 सूर्यस्य for सूर्यं

अ– कात्यायनः – "सोमवदुत्क्रमणमागमनं च" ( काश्रौ १९·५·१७ ) सोमवदिति 'उद्वयम्' इति मन्त्रेण जलान्निष्क्रमणम् । अपाम सोमममृता 'अभूम' इति जपतां सर्वेषां त्रिपशुदेशगमनमिति सूत्रार्थः ॥

'उद्वयम्'। सूर्यदेवत्याऽनुष्टुप् प्रस्कण्वदृष्टा । 'वयं तमसः परि'। vपरि परितः । vतमसः तमोबहुलादस्माल्लोकात् vउत् vअगन्म उद्गतवन्तः निर्गताः । गमेर्लङि शपि लुप्ते मस्य नत्वे रूपसिद्धिः । कीदृशाः vवयम् ? vउत्तरम् उत्कृष्टतरं vस्वः स्वर्गः। "स्वरव्ययं स्वर्गनाक°" ( अको १·१·५ ) इत्यभिधानम् । vपश्यन्तः ईक्षमाणाः । किं च– vदेवत्रा देवलोके । "देवमनुष्य°" ( पा ५·४·५६ ) इति सप्तम्यां त्राप्रत्ययः । vसूर्यं vदेवं पश्यन्तः सन्तः । कीदृशं सूर्यम् ? vउत्तमं vज्योतिः । यद्वा– सूर्यं पश्यन्तो वयम् उत्तमं ज्योतिः परं ब्रह्म उदगन्म प्राप्ताः । ब्राह्मणेऽपि– "उद्वयं तमसः परीति । पाप्मा वै तमः पाप्मानमेव तमोऽपहते । स्वः पश्यन्त उत्तरमिति । अयं वै लोकोऽद्भ्य उत्तरोऽस्मिन्नेव लोके प्रतितिष्ठति । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तममिति । स्वर्गो वै लोकः सूर्यो ज्योतिरुत्तमꣳ स्वर्ग एव लोकेऽन्ततः प्रतितिष्ठति" ( शब्रा १२·९·२·८ ) इति ॥६॥

---

अपो अद्यान्वचारिषꣳ रसेन समसृक्ष्महि ।
पयस्वानग्न आऽगमं तं मा सꣳ सृज वर्चसा प्रजया च धनेन च ।
एधोऽस्येधिषीमहि समिदसि तेजोऽसि तेजो मयि धेहि ॥७॥

---

अपः । अद्य । अनु । अचारिषम् । रसेन । सम् । असृक्ष्महि ।
पयस्वान् । अग्ने । आ । अगमम् ।तम् । मा । सम् । सृज । वर्चसा ।
प्रजयेति प्रऽजया । च । धनेन । च ।
एधः । असि । एधिषीमहि । समिदिति सम्ऽइत् । असि ।
तेजः । असि । तेजः । मयि । धेहि ॥ इय ॥७॥

---

आ– आहवनीयमुपतिष्ठते– 'अपो अद्य' इति । अपो अद्येत्यग्निदेवत्या पङ्क्तिः । vअद्य अस्मिन्नहनि योऽहम् vअपः vअन्वचारिषम् अनेन अवभृथकर्मणा अपः अनुचरितवानस्मि । यश्चाहं vरसेन अवभृथाख्येन रसेन vसमसृक्ष्महि संदृष्टवानस्मि । एवं यश्चाहं vपयस्वान् उदकवान् सन् हे भगवन् vअग्ने, vआऽगमम् आऽगतवानस्मि । 'तं मा सꣳसृज' । आगतं vतं vमा मां vवर्चसा तेजसा vप्रजया संतत्या vधनेन सुवर्णादिना मां vसंसृज ॥

---

21. S3 पाठस्तु – अपो अद्य ... धनेन चेति for 'अपो अद्य' इति; S3 आपो for Second अपो

अवभृथः ]

समिधमाधत्ते– ' एधोऽस्येधिषीमहि ' इति । समिद्देवत्ये यजुषी । ' एधोऽसि ' । [v]एधः समिन्धनम् । अग्नेः समिन्धनम् [v]असि । अतः साधनभूतं समिन्धनं त्वामुपादाय अग्निम् [v]एधिषीमहि संवर्धयामः । [v]समित् [v]असि समिद्रूपोऽसि । अतस्त्वं [v]तेजः [v]असि । समित्संयोगाज्ज्वलतीति । अत एव त्वां ब्रवीमि [v]तेजः [v]मयि [v]धेहि इति, स्थापय ॥७॥

---

अ– कात्यायनः – " आहवनीयमुपतिष्ठतेऽपो अद्येति " ( काश्रौ १९·५·१८ ) । यजमानः आहवनीयमुपतिष्ठत इत्यर्थः ॥

' अपो अद्य ' इति ॥ अग्निदेवत्या पङ्क्तिः । हे [v]अग्ने, [v]तं [v]मा मां [v]वर्चसा ब्रह्मवर्चसेन [v]प्रजया पुत्रादिकया [v]च [v]धनेन त्वं [v]संसृज संयोजय । चकारद्वयं सर्वसमुच्चयार्थम् । तं कम्? योऽहम् [v]अद्य [v]अपः [v]अन्वचारिषम् अवभृथकर्मणा जलमनुचरितवानस्मि प्राप्तोऽस्मि । चरतेर्लुङि उत्तमैकवचनम् । किं च– योऽहं [v]रसेन जलस्थमधुररसेन [v]समसृक्ष्महि संसृष्टोऽस्मि । सृजेर्लुङ् । व्यत्ययेनैकवचने बहुवचनम् । यश्चाहं [v]पयस्वान् उदकवान् सन् [v]आऽगमम् आगतवानस्मि । गमेर्लुङि " पुषादि° " ( पा ३·१·५५ ) इति च्लेरङ् । एषोऽर्थो ब्राह्मणे– " अनपेक्षमेत्याहवनीयमुपतिष्ठतेऽपो अद्यान्वचारिषमित्यपामेव समवरुन्द्धे रसेन समसृक्ष्महीत्यपामेव रसमात्मन्धत्ते पयस्वानग्न आऽगमं तं मा संसृज वर्चसा प्रजया च धनेन चेति आशिषमाशास्ते " ( शब्रा १२.९.२.८-९ ) इति ।

कात्यायनः – " एधोऽसीति समिधमादायाहवनीयेऽभ्यादधाति समिदसीति " ( काश्रौ १९·५·१९ ) । यजमान इति शेषः । ' एधोऽस्येधिषीमहि ' । समिद्देवत्ये यजुषी । हे समित्, त्वम् [v]एधः । एधयति दीपयतीत्येधः दीपिका [v]असि । इन्धी दीप्ताविति धातुः । असुन् प्रत्ययान्तः । वयं त्वत्प्रसादात् [v]एधिषीमहि पुत्रधनादिभिर्वृद्धिं प्राप्नुयाम । एधतेराशीर्लिङ् । हे समित्, त्वं सम्यगेधयतीति [v]समित् [v]असि । [v]तेजः च [v]असि । त्वत्संयोगेनैवाग्नेः ज्वलनात् । अतः [v]मयि विषये [v]तेजः [v]धेहि धारय । एषोऽर्थो ब्राह्मणे – " एधोऽस्येधिषीमहीति समिधमाधत्ते । एधो ह वा अग्नेः समित् समिदसि तेजोऽसि तेजो मयि धेहीत्याहवनीये समिधमभ्यादधाति । अग्निमेवैतया समिन्द्धे । स एनं समिद्धस्तेजसा समिन्द्धे " ( शब्रा १२.९.२·१० ) इति ॥७॥

---

सु॒मावव॑र्ति पृ॒थि॒वी सम॒ुषाः सम॒ु सूर्यः॑ । सम॒ु विश्व॑मि॒दं जग॑त् ।
वै॒श्वा॒न॒रज्यो॑तिर्भूयासं वि॒भून् कामा॒न् व्य॑श्नवै॒ भूः स्वाहा॑ ॥८॥(१)॥

---

13.　M4 आप्तं for आत्मन्

18.　M4 पुत्रादिभिः for पुत्रधनादिभिः

21.　M4 आदधाति for अभ्यादधाति

समाव॑वर्ती॒ति॑ स॒म्ऽआव॑वर्ति । पृ॒थि॒वी । सम् । उ॒षाः । सम् । ऊँ॒ इत्यूँ॑ । सूर्यः॑ ।

सम् । ऊँ॒ इत्यूँ॑ । विश्व॑म् । इ॒दम् । जग॑त् ।

वै॒श्वा॒न॒रज्यो॑ति॒रि॒ति॑ वै॒श्वा॒न॒रऽज्यो॑तिः । भू॒या॒स॒म् ।

वि॒भूनि॒ति॑ वि॒ऽभून् । कामा॑न् । वि । अ॒श्न॒वै॒ । भूः । स्वाहा॑ ॥ म्याः ॥८॥(१)॥

---

आ– जुहोति- ‘ समावव्रर्ति पृथिवी ’ इति । अग्निदेवत्या गायत्री । अग्नौ हविषि हुते सति vपृथिवी vसमाववर्ति समावर्तते । vसम् vउषाः च समावर्तेते । vसम् vउ vसूर्यः सूर्योऽपि समावर्तते । vसम् अपि vविश्वम् vइदं vजगत् समाववर्ति अतिशयेन वर्तते । यद्वा— समाववर्ति याति चायाति च सर्वमागमापायि यतः सर्वं नश्वरम् । अतो नित्यस्थानप्राप्त्यर्थमाह - ‘ वैश्वानरज्योतिः ’ इति । वैश्वानरदेवत्यं यजुः । vवैश्वानरज्योतिः परब्रह्मज्योतिःस्वरूपं vभूयासं भवेयम् । एवं सति vविभून् vकामान् कामयमानान् , काम्यन्त इति कामास्तान् विभून् vव्यश्नवै व्याप्नुयाम् । ‘ भूः स्वाहा ’ इति होमार्थः ॥८॥

---

अ- कात्यायनः – “ जुहोति समाववर्तीति ” ( काश्रौ १९·५·२० ) इति । यजमानः सकृत् गृहीतमाज्यं जुहोति, ‘ समाववर्ति ’ इति मन्त्रेणेत्यर्थः ॥

‘ समाववर्ति ’ । आग्नेयी गायत्री । ‘ वैश्वानरज्योतिः ’ इति अग्रिमं वाक्यं यजुराग्नेयम् । vपृथिवी vसमाववर्ति सम्यगावर्तते । विकरणव्यत्ययेन संपूर्वात् वृतेः शपः श्लुः । यातायातं करोतीत्यर्थः । vउषाः दिवसोऽपि समाववर्ति । vसूर्यः vउ सूर्योऽपि समाववर्ति । अविशेषेणाह– vविश्वम् vउ कृत्स्नमपि vजगत् vइदं समाववर्ति, प्रतिकल्पमावर्तत इत्यर्थः । अतो विश्वान्तर्वर्ती खिन्नोऽहं हे अग्ने, त्वत्प्रसादात् vवैश्वानरज्योतिः vभूयासम् । विश्वेभ्यो नरेभ्यो हितत्वाद्वैश्वानरः परमात्मा तस्य ज्योतिरिव ज्योतिस्तुल्यः । संसारे यातायातरहिते मुक्तो भूयासम् । तथा vविभून् महतः vकामान् । काम्यन्त इति कामास्तान् मनोरथान् vव्यश्नवै प्राप्नुयाम् । vभूः vस्वाहा । भवनं भूः । सत्तास्वरूपं ब्रह्म, तस्मै स्वाहा सुहुतमस्तु । भूरित्यव्ययम् । “ अहं वैश्वानरो भूत्वा ” ( भगी १५·१४ ) इति भगवद्वचनाद्वैश्वानरशब्दः परमात्मपरः ॥८॥

इति श्रीवेदार्थदीपिकायां द्वाविंशाऽध्याये प्रथमोऽनुवाकः ॥१॥

---

5. S3 पाठस्तु – समाववर्ति ... स्वाहेति for ‘ समाववर्ति पृथिवी ’ इति ।

14. P2 M4 आग्नेयम् for आग्नेयम्

15. M4 यातं for आयातं

[ अथ द्वितीयोऽनुवाकः । ]

अभ्या दधामि समिधमग्ने व्रतपते त्वयि ।
व्रतं च श्रद्धां चोपैमीन्धे त्वा दीक्षितो अहम् ॥१॥

---

अभि । आ । दधामि । समिधमिति सम्ऽइधम् ।
अग्ने । व्रतपत इति व्रतऽपते । त्वयि ।
व्रतम् । च । श्रद्धाम् । च । उप । एमि ।
इन्धे । त्वा । दीक्षितः । अहम् ॥ चैम् ॥१॥

---

आ– सौत्रामण्यारम्भे यजमान आहवनीये तिस्रः समिधोऽभ्यादधाति– ‘अभ्या दधामि’ इति । त्र्यृचमाग्नेयमानुष्टुभम् । हे भगवन् $^{V}$अग्ने । प्रथमा व्रतग्रहणीया । यामेतां $^{V}$समिधं $^{V}$त्वयि $^{V}$आदधामि । हे $^{V}$व्रतपते, त्वयि त्वद्विषये पयोव्रतादिनियमः । $^{V}$व्रतं $^{V}$च $^{V}$श्रद्धां $^{V}$च तात्पर्यं च आस्तिक्यबुद्धिर्वा त्वाम् $^{V}$उपैमि उपगच्छामि । अतः ‘इन्धे त्वा दीक्षितः अहम्’ । अग्निं $^{V}$त्वा त्वाम् $^{V}$इन्धे संदीपयामि ॥९॥

---

अ– कात्यायनः – “अभ्यादधामीति प्रत्यृचमाहवनीये तिस्रः समिधोऽभ्यादधाति” (काश्रौ १९.१.११) । सौत्रामण्यादौ आदित्येष्टिं समाप्य त्रिपश्वर्थमाहवनीयदक्षिणाग्नी विहृत्य अग्न्यन्वाधानं ब्रह्मवरणं च कृत्वा आहवनीये यजमानस्तिस्रः समिधः प्रत्यृचमादधातीत्यर्थः ॥

‘अभ्यादधामि’ । अग्निदेवत्यास्तिस्रोऽनुष्टुभः । आश्वतराश्विदृष्टाः । हे $^{V}$अग्ने $^{V}$व्रतपते व्रतस्य नियमस्य पालक, अहं $^{V}$समिधं $^{V}$त्वयि $^{V}$अभि $^{V}$आदधामि जुहोमि । तेन समिदाधानेन $^{V}$दीक्षितः सन् $^{V}$अहं $^{V}$व्रतं नियमं $^{V}$श्रद्धाम् आस्तिक्यबुद्धिं $^{V}$च $^{V}$उपैमि प्राप्नोमि । चद्वयं परस्परं समुच्चयार्थम् । अतः $^{V}$त्वा त्वाम् $^{V}$इन्धे दीपयामि ॥१॥

---

यत्र ब्रह्म च क्षत्रं च सम्यञ्चौ चरतः सह ।
तं लोकं पुण्यं प्र ज्ञेषं यत्र देवाः सहाग्निना ॥२॥

---

8. S3 पाठस्तु – अभ्या ... अहमिति for ‘अभ्यादधामि’ इति । [ L 9- ]
15. M4 °वर्णं° for °वरण°; M4 om. यजमानः

[ समिदाधानम्

यत्रं । ब्रह्मं । च । क्षत्रम् । च । सम्यञ्चौं । चरंतः । सह ।
तम् । लोकम् । पुण्यंम् । प्र । ज्ञेषम् । यत्रं । देवाः । सह । अग्निनां ॥ षैं ॥२॥

आ– ' यत्र ब्रह्म ' [ इति ] । [ $^{v}$ब्रह्म ] ब्राह्मणजातिः । $^{v}$क्षत्रं क्षत्रियजातिः । $^{v}$सम्यञ्चौ । व्यत्ययः । समीचीने । $^{v}$यत्र $^{v}$सह पूज्यपूजकादिभावेन सह $^{v}$चरतः $^{v}$तं $^{v}$लोकं $^{v}$पुण्यं पुण्यसाधकं पुण्यात्मकं च $^{v}$प्र ज्ञेषम् प्रज्ञासिष्टम् अवगच्छेयं जानीयामिति । $^{v}$यत्र $^{v}$देवाः $^{v}$सह $^{v}$अग्निना चरन्ति तं च लोकं पुण्यं प्रज्ञेषमिति ॥१०॥

अ– ' यत्र ब्रह्म ' । अहं पुण्यं पवित्रं $^{v}$तं $^{v}$लोकं $^{v}$प्रज्ञेषं जानीयाम् । लोकमप्राप्तानां तल्लोकज्ञानं प्रकर्षेण न भवतीति हेतोः प्रशब्देन स्वर्गलोकगमनं प्रार्थ्यते । कं लोकम् ? $^{v}$यत्र लोके $^{v}$ब्रह्म ब्राह्मणजातिः $^{v}$क्षत्रं क्षत्रजातिश्च तौ $^{v}$सह अविरोधेन $^{v}$चरतः । कीदृशे ब्रह्मक्षेत्रे ? $^{v}$सम्यञ्चौ । लिङ्गव्यत्ययः । समीचीने । सम्यगञ्चत इति तथा । $^{v}$यत्र च $^{v}$अग्निना $^{v}$सह $^{v}$देवाः तिष्ठन्ति । सदाचाररताः क्षत्रियाः विप्राश्च यं गच्छन्ति यत्र चाग्न्यादयो देवास्तिष्ठन्ति तं देवलोकं प्राप्नुयामिति तात्पर्यार्थः ॥२॥

यत्रेन्द्रंश्च वायुश्चं सम्यञ्चौं चरंतः सह ।
तं लोकं पुण्यं प्र ज्ञेषं यत्रं सेदिर्न विद्यतें ॥३॥

यत्रं । इन्द्रंः । च । वायुः । च । सम्यञ्चौं । चरंतः । सह ।
तम् । लोकम् । पुण्यंम् । प्र । ज्ञेषम् । यत्रं । सेदिः । न । विद्यतें ॥हैं॥३॥

आ– ' यत्रेन्द्रश्च वायुश्च ' इति । $^{v}$इन्द्रः $^{v}$च $^{v}$वायुः $^{v}$च $^{v}$सम्यञ्चौ सम्यग्गमनवन्तौ $^{v}$यत्र $^{v}$सह $^{v}$चरतः, $^{v}$तं $^{v}$लोकं $^{v}$पुण्यं $^{v}$प्रज्ञेषं प्रज्ञासिष्टम् । छान्दसं पदम् । गच्छेयं प्राप्नुयामित्यर्थः । $^{v}$यत्र लोके $^{v}$सेदिः सिन्धु–( ? न्धौ )शास्त्रे माङ्गल्ये च यस्मिन् देशे सेदिः निषेधः शास्त्रतो $^{v}$न अस्ति तं लोकं पुण्यं प्रज्ञेषम् अवगच्छेयं जानीयामिति ॥११॥

3. S3 पाठस्तु – यत्र ब्रह्म ... अग्निनेति for ' यत्र ब्रह्म '; S3 after क्षत्रं adds च

16. S3 पाठस्तु – यत्रेन्द्रश्च ... विद्यत इति for ' यत्रेन्द्रश्च वायुश्च ' इति ।

18. V2 सिन्धू° for सिन्धु°

अ– ' यत्रेन्द्रः '। यत्र लोके इन्द्रः च वायुः च द्वौ सम्यञ्चौ संगतौ मिथः पूजयन्तौ वा सह चरतः। यत्र लोके सेदिः। सदनं सेदिः। " आदृगम° " ( पा ३.२.१७१ ) इति चात्* किप्रत्ययः। लिड्वत्त्वादेत्वाभ्यासलोपौ। सुप्रत्यये कृते रूपसिद्धिः। अन्नाप्राप्तिजनितं दुःखं सेदिः। सः यत्र न विद्यते। षद्लृ विशरणगत्यवसादनेषु इति धातुः। ' तं लोकं प्रज्ञेषम् ' इति पूर्ववत्। प्रपूर्वात् जानातेः, " सिब्बहुलं लेटि " ( पा ३.१.३४ ) इति सिप्रत्यये इडागमे च रूपम् ॥३॥

अंशुना ते अंशुः पृच्यतां परुषा परुः।
गन्धस्ते सोममवतु मदाय रसो अच्युतः ॥४॥

अंशुना। ते। अंशुः। पृच्यताम्। परुषा। परुः।
गन्धः। ते। सोमम्। अवतु। मदाय। रसः। अच्युतः ॥ ळीं ॥४॥

आ– ' अंशुना ते ' इति। सौर्यनुष्टुप्। द्वितीया सुरासंधाने। अंशुना सोमस्य अंशुना। हे सुरे, ते तत्र अंशुः सूक्ष्मांशुः पृच्यताम् संपृच्यताम्। परुषा पर्वणा। परुः पर्व संपृच्यताम्। ते तत्र गन्धः सोमम् अवतु रक्षतु। तत्र अच्युतः अनश्वरः रसः मदाय अस्तु ॥१२॥

अ– ' अंशुना ते ' इति। सुरादेवत्याऽनुष्टुप्। पूर्वं सुरासंमर्जने विनियुक्ता। हे सुरे, ते तव अंशुः भागः सोमस्य अंशुना भागेन सह पृच्यतां संयुज्यताम्। पृची संपर्के। तव परुः पर्व सोमस्य परुषा पर्वणा सह पृच्यताम्। ते तव गन्धः अच्युतः अनष्टः, रसः च सोमम् अवतु, तद्गन्धरसानभिभवेन आलिङ्गतु। किमर्थम् ? मदाय मत्ततायै हर्षाय वा। सुरायुक्तः सोमः पीतो मदजनको भवति। अत उभयोर्योगोऽस्त्वित्यर्थः। पृ पालनपूरणयोः। अस्मादसुनि " उरत् " ( पा ७.४.६६ ) इत्यत्वे परुरिति रूपम् ॥

परमेश्वरपरत्वं स्पष्टम्। यथा हे हरे, ते अंशुना तेजसा मे अंशुनैवं तेजः पृच्यतामिति। ते पर्वणा उत्सवकालेन मे मम पर्व पृच्यताम्। ते गन्धः, कीर्तिर्व्यापकत्वात् धारकत्वाच्च गन्धशब्दवाच्या। सोमं सौम्यं सात्त्विकं जनमवतु। तथा तव अच्युतः रसः प्रीतिश्च भवतु इति ॥४॥

2. *इति सूत्रे ' उत्सर्गश्छन्दसि सदादिभ्यो दर्शनात् ' इति वार्तिकात् इत्यर्थः वेदितव्यः।

10. S3 पाठस्तु – अंशुना ... अच्युत इति for ' अंशुना ते ' इति

21. M4 °शब्दत्वाच्च for , °शब्दवाच्या

सिञ्चन्ति परि षिञ्चन्त्युत्सिञ्चन्ति पुनन्ति च ।
सुरायै बभ्र्वै मदे किन्त्वो वदति किन्त्वः ।।५।।

सिञ्चन्ति । परि । सिञ्चन्ति । उत् । सिञ्चन्ति । पुनन्ति । च ।
सुरायै । बभ्र्वै । मदे । किन्त्वः । वदति । किन्त्वः ॥ षीम् ॥५॥

आ– पूतमादत्ते पुनः– ' सिञ्चन्ति परि सिञ्चति ' इति । सौम्येन्द्री वा अनुष्टुप् । यां सुरां Vसिञ्चन्ति यस्याः सेचनं कुर्वन्ति पयःप्रभृतिभिः Vपरिषिञ्चन्ति ग्रहैः Vउत् Vसिञ्चन्ति बालहिरण्यादिभिः Vपुनन्ति Vच, तस्यै Vसुरायै Vबभ्र्वै । बभ्रूः कपिला, तस्यै बभ्रुवर्णायै । षष्ठ्यर्थे चतुर्थी । सुरायाः Vमदे अवस्थितः इन्द्रः Vकिंत्वः Vवदति ' किंत्वः ' कस्य त्वमिति Vकिंत्वः कस्य त्वं ब्रूहीति वदतीति किंत्वः ॥१३॥

अ– ' सिञ्चान्ति परि '। सुरादेवत्या इन्द्रदेवत्या वा अनुष्टुप् । पूतसुरादाने विनियुक्ता । Vबभ्र्वै बभ्रवै बभ्रुवर्णायै । अवादेशश्छान्दसः । ऊकारान्तपाठो वा । षष्ठ्यर्थे चतुर्थी । तस्याः सुरायाः Vमदे स्थितः सुरया मत्त इन्द्रः Vकिंत्वः Vकिंत्व इति Vवदति । त्वं किम् कस्य त्वम् इत्याद्यन्यतिरस्कारकं वचो वदति । यां सुरां Vसिञ्चन्ति पात्रे ऋत्विजः Vपरिषिञ्चन्ति पय आदिभिः Vउत् Vसिञ्चन्ति ग्रहैः, Vपुनान्ति Vच गोवालपवित्रहिरण्यादिभिस्तां सुरामिन्द्रः पीत्वा अनन्वितं वदतीति पूर्वेणान्वयः ॥५॥

धानावन्तं करम्भिणमपूपवन्तमुक्थिनम् ।
इन्द्र प्रातर्जुषस्व नः ।।६।।

धानावन्तमिति धानाऽवन्तम् । करम्भिणम् ।
अपूपवन्तमित्यपूपऽवन्तम् । उक्थिनम् ।
इन्द्र । प्रातः । जुषस्व । नः ॥ प्छौं ॥६॥

आ– ' धानावन्तं करम्भिणम् ' इति । ऐन्द्री गायत्री विश्वामित्रः । पुरोऽनुवाक्यया प्रातःसवने पुरोडाशं Vधानावन्तं धानाभिः संयुक्तं, Vकरम्भिणं करम्भेण संयुक्तम् Vअपूपवन्तम् अपूपेन संयुक्तम् Vउक्थिनं वचनवन्तं स्तुतिमन्तं, Vनः अस्मदीयं पुरोडाशं, हे Vइन्द्र, Vप्रातः प्रातःसवने Vजुषस्व सेवस्व ॥४॥

7. V2 बभ्रुः for बभ्रूः

20. S3 पाठस्तु – धानावन्त° ... जुषस्व न इति for ' धानावन्तं करम्भिणम् ' इति ।

समिदाधानम् ]

अ– धानावन्तं करम्भिणम् । इन्द्रदेवत्या गायत्री विश्वामित्रदृष्टा । स्मार्ते श्रवणाकर्मणि धानाहोमे विनियुक्ता । प्रातःसवने पुरोडाशपुरोऽनुवाक्याऽपि । हे $^{v}$इन्द्र, त्वं $^{v}$प्रातः प्रातःकाले $^{v}$नः अस्माकं पुरोडाशं $^{v}$जुषस्व । कीदृशम् ? $^{v}$धाना विद्यन्ते यत्र तं $^{v}$धानावन्तम् । करम्भोऽस्यास्तीति [ करम्भी तं ] $^{v}$करम्भिणम् । अपूपा अस्य सन्तीति अपूपवान्, तम् $^{v}$अपूपवन्तम् । उक्थं शस्त्रमस्यास्तीति उक्थी तम् $^{v}$उक्थिनम् । पुरोडाशमित्यध्याहारो विशेष्यत्वात् कार्यः ॥६॥

बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम् ।
येन ज्योतिरजनयन्नृतावृधो देवं देवाय जागृवि ॥७॥

बृहत् । इन्द्राय । गायत । मरुतः । वृत्रहन्तममिति वृत्रहन्ऽतमम् ।
येन । ज्योतिः । अजनयन् । ऋतावृधः । ऋतवृध इत्यृतऽवृधः ।
देवम् । देवाय । जागृवि ॥ ज्रि ॥७॥

आ– ऐन्द्रयां बृहत्यां गायति– ‘ बृहदिन्द्राय ’ इति । ऐन्द्री बृहती । हे $^{v}$मरुतः, $^{v}$इन्द्राय $^{v}$बृहत् बृहत्साम $^{v}$गायत सामगानं कुरुत । $^{v}$वृत्रहन्तमम् इन्द्रं $^{v}$देवं प्रति गायत । वृत्रं पाप्मानमतिशयेन हन्तीति वृत्रहन्तमस्तम् । ‘ येन ज्योतिः अजनयन् ’ । $^{v}$येन साम्ना $^{v}$ऋतावृधः सत्यवृधः यज्ञवृधो वा । $^{v}$ज्योतिः आत्मभूतिः । कथंभूतं ज्योतिः ? $^{v}$जागृवि जागरणशीलं निरवद्यम् अविद्यानिवृत्त्या उपचारतो जातमिव भवतीति $^{v}$अजनयन् इत्युपचारः । अतस्तत् साम, $^{v}$देवाय इन्द्राय गायतेति संबन्धः ॥१५॥

अ– कात्यायनः – “ ऐन्द्रयां बृहत्यां गायति बृहदिति ” ( काश्रौ १९.५.२ ) । अध्वर्युप्रेषितो ब्रह्मा इन्द्रदेवत्यायां बृहतीछन्दस्कायामृचि साम गायतीत्यर्थः ॥

‘ बृहदिन्द्राय ’ । इन्द्रदेवत्या बृहती । नृमेधपुरुषमेधऋषिदृष्टा । हे $^{v}$मरुतः मरुत्सदृशाः ऋत्विजः, $^{v}$इन्द्राय इन्द्रार्थं यूयं $^{v}$बृहत् साम $^{v}$गायत गानं कुरुत । कीदृशं बृहत् ? $^{v}$वृत्रहन्तमम् । वृत्रं पापमतिशयेन हन्तीति वा वृत्रमसुरम् अतिशयेन हन्तीति वा वृत्रहन्तमम् । “ नाद्घस्य ” (पा ८.२.१७)

4. M4 P2 अपूपवन्तन् for अपूपवान् तम् ।

5. P2 M4 उक्थिनम् for उक्थी । तम् ।

11. S3 पाठस्तु – बृहदिन्द्राय ... जागृवीति for ‘ बृहदिन्द्राय ’ इति

इति नुट् । अत्र वृत्रहन्निति प्रातिपदिकान्तनकारस्य "स्वादिष्वसर्वनामस्थाने" (पा. १.४.१७) इति पदसंज्ञायां "नलोपः प्रातिपदिकान्तस्य" (पा ८.२.७) इति नलोपे, "नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति" (पा ८.२.२) इति नलोपस्यासिद्धत्वात्, "नाद्घस्य" इति नकारान्तात् परस्य घस्य तरप्तमप्प्रत्ययस्य नुडागमे च सति नुटः परावयवत्वेऽपि, वार्तिकात (?) पूर्वाङ्गत्वम् [ इति ]। विवेकः। पुनः कीदृशम्? येन सामगानेन ऋतं यज्ञं वर्धयन्तीति ऋतावृधः देवा ऋत्विजो वा देवाय इन्द्राय ज्योतिः तेजः अजनयन् उदपादयन्। 'ऋतावृधः' इत्यत्र दीर्घश्छान्दसः। कीदृशं ज्योतिः? देवं दीप्यमानम्। तथा जागर्तीति जागृवि जागरणशीलम् अविनश्वरमित्यर्थः। सामगानेन इन्द्रस्तेजस्वी जायत इत्यर्थः। एषोऽर्थो ब्राह्मणे- "बृहत्यां गायति । बृहत्यां वा असावादित्यः श्रियां प्रतिष्ठायां प्रतिष्ठितस्तपति बृहत्यामेवैनमेतच्छ्रियां प्रतिष्ठायां प्रतिष्ठापयति" (शब्रा १२.८.३.२४) इति ॥

---

अध्व॑र्यो॒ अद्रि॑भिः सु॒त॑ꣳ सोम॑ं प॒वित्र॒ आ न॑य ।
पु॒नी॒हीन्द्रा॑य॒ पात॑वे ॥८॥(२)॥

---

अध्व॑र्यो॒ इत्य॑ध्व॑र्यो । अद्रि॑भि॒रित्यद्रि॑ऽभिः । सु॒तम् । सोम॑म् । प॒वित्रे॑ । आ । न॒य॒ ।
पु॒नी॒हि । इन्द्रा॑य । पात॑वे ॥ चं ॥८॥(२)॥

---

आ– 'अध्वर्यो अद्रिभिः' इति। ऐन्द्री गायत्री । हे अध्वर्यो, अद्रिभिः पञ्चग्रावभिः सुतम् अभिषुतं दशापवित्रे सोमं पवित्रे आ नय आनीय आसिञ्चत । 'पुनीहि इन्द्राय पातवे'। पुनीहि पावय। इन्द्राय इन्द्रस्य। पातवे पातुं पानार्थम् ॥१६॥

---

अ- कात्यायनः - "ब्रह्मानुमन्त्रणमध्वर्यो अद्रिभिरिति" (काश्रौ १९.२.११)। ब्रह्मा पयोऽनुमन्त्रयत इत्यर्थः॥ 'अध्वर्यो अद्रिभिः'। ऐन्द्री गायत्री। हे अध्वर्यो, त्वं सोमं पवित्रे कम्बलमये आनय सिञ्च। कीदृशम्? अद्रिभिः अद्रयवयवैर्ग्रावाभिः सुतम् अभिषुतम्। ततः पुनीहि गालय। किमर्थम्? इन्द्राय इन्द्रस्य पातवे पानार्थम् पातुमित्यर्थः। तुमर्थे तवेप्रत्ययः ॥८॥

इति द्वाविंशाऽध्याये [ वेदार्थ- ] दीपिकायां द्वितीयोऽनुवाकः ॥२॥

---

3. M4 om. घस्य
14. S3 पाठस्तु- अध्वर्यो ... पातव इति for 'अध्वर्यो अद्रिभिः' इति।
19. M4 ते ते for ततः

[ अथ तृतीयोऽनुवाकः । ]

योभूतानामधिपतिर्यस्मिँल्लोका अधि श्रिताः ।
य ईशे महतो महाँस्तेन गृह्णामि त्वामहं मयि गृह्णामि त्वामहम् ॥१॥

---

यः । भूतानाम् । अधिपतिरित्यधिऽपतिः । यस्मिन् । लोकाः । अधि । श्रिताः ।
यः । ईशे । महतः । महान् । तेन । गृह्णामि । त्वाम् । अहम् ।
मयि । गृह्णामि । त्वाम् । अहम् । ॥ त्क्कौं ॥१॥

---

आ– त्रयस्त्रिंशं वसाग्रहं गृह्णाति– 'यो भूतानाम्' इति । आत्मप्रवादा पङ्क्तिः । नारायणीयकौण्डिन्यस्यार्षम् । भवन्तीति भूतानि । बलाधिक्याद्विकरणसिद्धत्वात् । पृथिव्यादीनां [v]भूतानां [v]यः स्वतःसिद्धः [v]अधिपतिः । अधिरीश्वरे । सर्वपतीनामीश्वरत्वेन प्रत्यधिपतिरिति । 'यस्मिन् लोकाः अधिश्रिताः' । [v]यस्मिन् स्वमहिमप्रतिष्ठे सच्चिदानन्दात्मके परमेश्वरे [v]लोकाः, लोक्यन्त इति दृश्यन्त इति पूर्वोक्तभूरादिभूतात्मका भौतिकाश्च लोकाः [v]अधिश्रिताः । स्वोत्पत्तिकारणमेवाश्रित्य कार्याणि वर्तन्त इति प्रसिद्धम् । 'य ईशे महतो महान्' । [v]महतः महदादिकार्यजातस्य [v]यः [v]महान् [v]ईशे ईश्वरो बभूवेत्यात्मप्रवादम् । 'तेन गृह्णामि त्वामहं मयि गृह्णामि त्वाम् अहम्' । हे ग्रह, [v]तेन अभ्यनुज्ञातः [v]अहं ग्रहं [v]त्वां [v]गृह्णामि । [v]मयि च परमात्मभावमुपगते मयि विषयभूते ग्रहं [v]त्वाम् [v]अहं [v]गृह्णामि ॥१७॥

---

अ– कात्यायनः – "त्रयस्त्रिंशं वसाग्रहं गृह्णाति यो भूतानामिति" ( काश्रौ १९·४·२४ ) इति । 'यो भूतानाम्' । आत्मवादिनी नारायणीया ग्रहदेवत्या कौण्डिन्यदृष्टा पङ्क्तिः । [v]यः परमात्मा नारायणः । [v]भूतानां जरय्वादिचतुर्विधानां प्राणिनाम् [v]अधिपतिः अधिकं पालकः । [v]यस्मिन् परमात्मनि [v]लोकाः भूरादयश्चतुर्दश [v]अधिश्रिताः आश्रिताः । [v]महान् सर्वोत्कृष्टः [v]यः [v]महतः महत्तत्त्वप्रमुखस्य तत्त्वगणस्य [v]ईशे ईष्टे नियन्ता भवति । "लोपस्त आत्मनेपदेषु" (पा ७·१·४१) इति तलोपे लटि तङि प्रथमैकवचने ईश ऐश्वर्ये इत्यस्य रूपम् । "अधीगर्थदयेशां कर्मणि" ( पा २.३·५२ ) इति कर्मणि षष्ठी । हे ग्रह, [v]अहं [v]तेन परमात्मना, तदनुग्रहेण कृत्वा [v]त्वां [v]गृह्णामि [v]मयि । निमित्तसप्तमीयम् । मम स्वर्गादिनिमित्तं [v]त्वां [v]गृह्णामि । उक्तोऽर्थो ब्राह्मणे– "स एष सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान् नो एवासाधुना कर्मणा कनीयानेष सर्वेश्वरः एषः भूताधिपतिः एष भूतपाल एष सेतुर्विधरणः सर्वेषां लोकानामसंभेदाय" ( द्र. शब्रा १४·७·२·२४ ) इत्यादौ ॥१॥

---

7. S3 पाठस्तु – यो भूतानाम् ... त्वामहमिति for 'यो भूतानाम्' इति ।
8. V2 बलाधिक्याद्विकरणसिध्यत्वात् for बलाधिक्याद्विकरणसिद्धत्वात्
9. V2 ऐश्वर्ये for ईश्वरे

उपयामगृहीतोऽस्यश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्णे ।
एष ते योनिरश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्णे ।।२।।

उपयामगृहीतोऽसि ॥

आ— व्याख्यातम् ॥१॥

अ– ' उपयामगृहीतोऽसि '। यजुःसाम त्रिष्टुप् ।
' एषः ते योनिः ' यजुः प्राजापत्या बृहती ।
सादने विनियुक्ते ग्रहदेवत्ये द्वे यजुषी पूर्ववद्व्याख्येये ॥२॥

प्राणपा मे अपानपाश्चक्षुष्पाः श्रोत्रपाश्च मे ।
वाचो मे विश्वभेषजो मनसोऽसि विलायकः ।।३।।

प्राणपा इति प्राणऽपाः । मे । अपानपा इत्यपानऽपाः ।
चक्षुष्पाः । चक्षुःपा इति चक्षुःऽपाः । श्रोत्रपा इति श्रोत्रऽपाः । च । मे ।
वाचः । मे । विश्वभेषज इति विश्वऽभेषजः ।
मनसः । असि । विलायक इति विऽलायकः । ॥ घीं ॥३॥

अश्विनकृतस्य ते सरस्वतिकृतस्येन्द्रेण सुत्राम्णा कृतस्य ।
उपहूत उपहूतस्य भक्षयामि ।।४।। (३)

अश्विनकृतस्येत्यश्विनऽकृतस्य । ते । सरस्वति कृतस्येति सरस्वतिऽकृतस्य ।
इन्द्रेण । सुत्राम्णेति सुऽत्राम्णा । कृतस्य ।
उपहूत इत्युपऽहूतः । उपहूतस्येत्युपऽहूतस्य । भक्षयामि ॥ पौ ॥४॥

7. P2 M2 ग्रहे for ग्रह°; M2 व्याख्येयम् for व्याख्येये ।

वसाग्रहः ]

आ– ऋत्विजः प्राणभक्षं भक्षयन्ति । ‘ प्राणपा मे.... अश्विनकृतस्य.... ’ इति द्वाभ्यामनुष्टुबुपरिष्टाद्बृहत्यौ लिङ्गोक्तदेवत्ये । प्राणपाः । यतस्त्वं मे मम प्राणपालकः । अपानपाः अपानपालकः । चक्षुः पातीति चक्षुष्पाः । तथा श्रोत्रपाः च । मम वाचश्च पालकः । विश्वभेषजः सर्वस्य भेषजकारी । मनसः विलायकः असि । लीङ् श्लेषणे । मनसः संश्लेषकोऽसि ॥१६॥

‘ अश्विनकृतस्य ते ’ । अश्विभ्यां कृतस्य दृष्टस्य सरस्वतिकृतस्य सरस्वत्या दृष्टस्य इन्द्रेण सुत्राम्णा दृष्टस्य । एताभिर्देवताभिः उपहूतस्य अभ्यनुज्ञातस्य सोमस्य ते तव भागम् उपहूतः अभ्यनुज्ञातोऽहं ऋत्विग्भिः सह भक्षयामि ॥२०॥

~~~~~~~~~~~~~~~~~~~~

अ– कात्यायनः – “ शेषमृत्विजः प्राणभक्षं भक्षयन्ति प्राणपा म इति ” ( काश्रौ १९.५.६ ) सशस्त्रग्रहहोमानन्तरं शेषमृत्विजः सर्वेऽवजिघ्रन्ति कण्डिकाद्वयेनेत्यर्थः । ‘ प्राणपा मे ’ । ग्रहदेवत्ये द्वे अनुष्टुबुपरिष्टात् बृहत्यौ । हे ग्रह, त्वं मे मम प्राणान् पातीति प्राणपाः असि । एवम् अपानपाः चक्षुष्पाः श्रोत्रपाः च असीति व्याख्येयम् । किं च– मे वाचः वागिन्द्रियस्य विश्वं सर्वं भेषजं यस्मात् विश्वभेषजः त्वमसि । वागिन्द्रियभेषजं तु अध्ययनाध्यापनजपादिप्रवर्तनम् । किं च– मे मनसः विलायकः असि । विलाययति विषयेभ्यो निवर्त्य परमात्मविषये स्थापयतीति विलायकः । आत्मज्ञानप्रदश्चासीत्यर्थः । यद्वा– लीङ् श्लेषणे । विलायतीति चक्षुरादिभिः सह श्लेषयतीति विलायकः । बाह्येन्द्रियैः सह आन्तरेन्द्रियं योजयसीत्यर्थः ।

परमात्मपरत्वं स्पष्टमेव ॥३॥

‘ अश्विनकृतस्य ते ’ । हे ग्रह, उपहूतः आज्ञप्तोऽहं ते तव । कर्मणि षष्ठी । त्वां भक्षयामि । कीदृशस्य ते ? अश्विनकृतस्य ते । करोतिर्दर्शनार्थः, स्वार्थेऽण् । वृद्ध्यभाव आर्षः । अश्विभ्यां कृतो दृष्टस्तस्य, सरस्वत्या कृतः सरस्वतिकृतस्तस्य सरस्वतिकृतस्य सरस्वत्या दृष्टस्य । “ ङ्यापोः संज्ञाछन्दसोर्बहुलम् ” ( पा. ६.३.६३ ) इति सरस्वतीशब्दस्य ह्रस्वः । सुष्ठु त्रायते रक्षतीति सुत्रामा तेन । इन्द्रेण कृतस्य दृष्टस्य उपहूतस्य ऋत्विग्भिः कृतोपह्वस्य ॥४॥

इति द्वाविंशे तृतीयोऽनुवाकः ॥३॥

आध्वर्यवं समाप्तम् ॥

~~~~~~~~~~~~~~~~~~~~

1. S3 पाठस्तु – प्राणपा मे ... विलायक इति द्वितीय पाठस्तु आश्विनकृतस्य ... भक्षयामीति for ‘ प्राणपा मे ... अश्विनकृतस्य ... ’ इति ।

6. S3 om. अश्विनकृतस्य ते; V2 सरस्वती° for सरस्वति°; S3 after दृष्टस्य adds च

[ अथ चतुर्थोऽनुवाकः । ]

समिद्ध इन्द्र उषसामनीके पुरोरुचा पूर्वकृद्वावृधानः ।
त्रिभिर्देवैस्त्रिंशता वज्रबाहुर्जघान वृत्रं वि दुरो ववार ॥१॥

---

समिद्ध इति सम्ऽइद्धः । इन्द्रः । उषसाम् । अनीके ।
पुरोरुचेति पुरःऽरुचा । पूर्वकृदिति पूर्वऽकृत् । वावृधानः । ववृधान इति ववृधानः ।
त्रिभिरिति त्रिऽभिः । देवैः । त्रिंशता । वज्रबाहुरिति वज्रऽबाहुः ।
जघान । वृत्रम् । वि । दुरः । ववार ॥ ग्रै ॥१॥

---

आ - ' समिद्ध इन्द्रः ' इति । इत उत्तरं हौत्रं मैत्रावरुणं च सौत्रामण्यामा अश्वमेधात् । तत्रैन्द्रस्य पशोरेकादश वपाः तत्रैता आयोज्या एकादशैन्द्र्यस्त्रिष्टुभः । ऋषिराङ्गिरसः । यास्वाप्रीदेवताः इध्मः तनूनपान्नाराशंस इळा बर्हिर्द्वारः उषासानक्ता देव्या होतारा तिस्रो देवीस्त्वष्टा वनस्पतिः स्वाहाकृतीरित्येता यथायोगं तेन तेन विशेषेण व्याख्यायन्ते । इन्द्रोऽत्र स्तूयते । यः [v]समिद्धः [v]संदीप्तः आदित्यात्मना [v]इन्द्रः [v]उषसाम् [v]अनीके प्रभातानां मुखे । उषसां हि यत्र मुखं तत्र भगवानादित्योऽवतिष्ठते । कया समिद्धः ? [v]पुरोरुचा अग्रगामिन्या रुचा दीप्त्या समिद्धः [v]वावृधानः ववृधानश्च [v]पूर्वकृत् च पूर्वं करोतीति पूर्वकृत् । पूर्वमिति पूर्वदिग्विशेषं करोति । आदित्योदयोपलक्षिता हि पूर्वा दिक् । स एव मयाऽत्रस्थितः सन् [v]त्रिभिः [v]देवैः [v]त्रिंशता च सहितः त्रयस्त्रिंशद्देवैः सहितः । " अष्टौ वसव .... एकादश रुद्राः .... द्वादशादित्यास्त एकत्रिंशत् इन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशत् । " ( द्र. तैसं ३.४.९.७ ) इति श्रुतेः । [v]वज्रबाहुः वज्रपाणिः सन् [v]वृत्रं नाम महासुरं [v]जघान हिनस्ति । पाप्मानं वृत्रं हत्वा च [v]वि [v]दुरः [v]ववार । दुरः द्वारः । छान्दसं संप्रसारणम् । द्वारः द्वाराणि । सज्जनानां हृदयद्वाराणि दुरः विवार । हृदयद्वारः पूर्वं वृत्ररूपेण पाप्मना संवृताः इदानीं तु विवार विवरणं विवृतं कृतवान् । वृत्रवधेन सज्जनानां हृदयद्वारविकासम्-अकरोदित्यभिप्रायः ॥२१॥

---

8. S3 पाठस्तु – समिद्ध इन्द्रः ... ववारेति for ' समिद्ध इन्द्रः ' इति ।
11. V2 °यग्य° for °योगं

हौत्रम् आप्रीसूक्तम् ]

अ– इत उत्तरं सौत्रामणिकं हौत्रमुच्यते । कात्यायनः – "समिद्ध इन्द्र इत्याप्रियः प्रथमस्य" (काश्रौ १९.६.१२ ) । 'समिद्धः' इत्याद्या एकादश ऋचः प्रथमस्यैन्द्रस्य पशोः आप्रियः, प्रयाजयाज्या इत्यर्थः ॥

'समिद्ध इन्द्रः' । आङ्गिरसदृष्टा एकादशाप्रियस्त्रिष्टुभः । तासां क्रमादेता देवताः – 'इध्मस्तनूनपान्नराशंस इळा बर्हिर्द्वारः उषासानक्ता दैव्यौ होतारौ तिस्रो देव्यः त्वष्टा वनस्पतिः स्वाहाकृतयः' इति । देवताः यथायोगमिन्द्रादिविशेषणत्वेन व्याख्येयाः । अनुवाकेनेन्द्रः स्तूयते । इन्द्रः कर्ता । वृत्रं मेघं दैत्यं पाप्मानं च जघान हतं चक्रे । "वृत्रो वृत्रासुरे मेघे" इति कोशः । "पाप्मा वै वृत्रो यो भूतेर्वारयित्वा तिष्ठति कल्याणात् कर्मणः साधोः" (शब्रा ११.१.५.७) इति श्रुतिरुक्तार्थे प्रमाणम् । दुरः द्वाराणि च विववार मेघस्य द्वाराणि स्रोतांसि विवृतान्यकरोत् । दैत्यपक्षे तत्पुरोद्वाराणि शून्यान्यकरोदिति ज्ञेयम् । द्वारशब्दस्य छान्दसत्वेन संप्रसारणे दुर इति रूपम् । कीदृश इन्द्रः ? समिद्धः संदीप्तः उषसाम् अनीके प्रातःकाले पुरोरुचा अग्रे प्रसरन्त्या दीप्त्या पूर्वकृत् पूर्वां दिशं करोतीति आदित्यात्मना पूर्वस्याः कर्ता । सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः । त्रिभिः देवैः त्रिंशता च त्रयस्त्रिंशता देवैः सह वावृधानः वर्धमानः । वृधु वर्धन इत्यस्य विकरणव्यत्ययेन शपः श्लुः । "तुजादीनां दीर्घोऽभ्यासस्य" (पा ६.१.७) इति अभ्यासस्य दीर्घे वावृधान इति रूपम् । वज्रबाहुः वज्रं बाहौ यस्य सः वज्रबाहुः वज्रपाणिः । अत्रेन्द्रादिशब्दैः भगवानेवोच्यते । विरुद्धगुणसमभिव्याहारात् । "यस्मिन् विरुद्धगतयोऽप्यनिशं पतन्ति" इति पुराणात् ।

"इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥" (ऋ १.१६४.४६) इति श्रुतेश्च ।

"अष्टौ वसव एकादश रुद्रा द्वादश आदित्यास्त एकत्रिंशत्, इन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशौ" (द्र. तैसं ३.४.९.७) इति श्रुत्युक्तास्त्रयस्त्रिंशद्देवाः । आसामाप्रीत्वं ब्राह्मणे उक्तम्– "अनुष्टुभस्त्रिष्टुभश्चाप्रियो भवन्ति जागता अनुप्रैषा भवन्ति" (द्र. शब्रा १२.८.२.१९-२०) इत्यादौ ॥१॥

---

**नराशंसः प्रति शूरो मिमानस्तनूनपात् प्रति यज्ञस्य धाम ।**
**गोभिर्वपावान् मधुना समञ्जन् हिरण्यैश्चन्द्री यजति प्रचेताः ॥२॥**

---

नराशंसः । प्रति । शूरः । मिमानः ।
तनूनपादिति तनूऽनपात् । प्रति । यज्ञस्य । धाम ।
गोभिः । वपावानिति वपाऽवान् । मधुना । समञ्जन्निति सम्ऽअञ्जन् ।
हिरण्यैः । चन्द्री । यजति । प्रचेता इति प्रऽचेताः ॥ ढयै ॥२॥

---

7. M4 ऐन्द्रदेवत्यम् for मेघं दैत्यम्; M4 वा for च ।
14. P2 अभ्यासदीर्घे: for अभ्यासस्य दीर्घे ।

कासं ... १८

आ– ' नराशꣳसः ' इति । यः vशूरः । शृ हिंसायाम् । वैरिणः शृणाति हिनस्तीति शूर इन्द्रः । सः vनराशंसः च । नरैराशंस्यत इति नराशंस इन्द्रः । माङ् माने । vमिमानः । vयज्ञस्य vधाम स्थानं vप्रति मिमानः परिगणयन् । ' गोभिर्वपावान् ' । vगोभिः गोप्रभृतिभिः पशुसंबन्धि(भिः) vवपावान् । वपालक्षणं हविः अस्यास्तीति वपावान् । इन्द्रः vहिरण्यैः वपायाश्चाधारभूतैर्हिरण्यैः अयमिन्द्रः vचन्द्री । चन्द्रमिति हिरण्यनाम । तद्वान् चन्द्री । vतनूनपात् । तनूं पातयतीति तनूनपात् । छान्दसं पदम् । देहधारको य इन्द्रस्तमेवंगुणविशिष्टमिन्द्रं vप्रचेताः प्रकृष्टप्रज्ञो यजमानः vमधुना मधुरसेन vसमञ्जन् हवींषि रञ्जयन् vयजति नराशंसादिविशेषणैर्विशिष्टमिन्द्रं यजमानो यजतीति संबन्धः ॥२२॥

अ– ' नराशꣳसः प्रति ' । प्रकृष्टं चेतो ज्ञानं यस्य सः vप्रचेताः कर्मादिस्वरूपज्ञाता यजमानस्तम् इन्द्रं vप्रति vयजति प्रत्यहं यजति । तं कम् ? य ईदृशः । vनराशंसः । नराणामृत्विजामाशंसः आशंसनं यस्य स तथा । यद्वा– " नरा यस्मिन्नासीनाः शंसन्ति " ( नि ८.६ ) इति यास्कोक्तेः । नाराशंसो यज्ञस्तद्वान् । " अर्शआदिभ्योऽच् " ( पा ५.२.१२७ ) इति वत्यर्थे प्रत्ययः । तथा vयज्ञस्य vधाम स्थानं vप्रति vमिमानः । मिमीतेऽसौ मिमानः प्रति गणयन् । एतावन्ति यज्ञस्थानानीति जानन्नित्यर्थः । एकः प्रतिशब्दः ' मिमानः ' इत्यनेन संबध्यते, अपरः ' यजति ' इत्यनेन । तथा vशूरः शौर्यवान् । vतनूनपात् । तनोति विस्तारयति सृष्टिमिति तनूर्मरीचिः । तस्य नपात् पौत्रः कश्यपात्मजत्वात् । यद्वा– तनूं शरीरं न पातयति रक्षति जठराग्निरूपेणेति तनूनपादग्निस्तद्रूपः । यद्वा– तनोति भोगानिति तनूर्गौः । तस्या नपात् पौत्रः घृतम् । गोः पयो जायते पयस आज्यमिति तृतीयत्वात् । पातीति पात् । तादृशो न भवतीति अपात् । सोऽपि न भवतीति नपात् । द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत इति वचनादत्यन्तरक्षक इत्यर्थः । " नभ्राण्नपात्° " ( पा ६.३.७५ ) इत्यादिना नञो नकारलोपाभावः । पुनः कीदृशः ? गोभिः vवपावान् । तृतीया षष्ठ्यर्थे । गोवपायुक्तः । vमधुना मधुरसेन vघृतेन vसमञ्जन् । हवींषि म्रक्षयन् संपृचन् । अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु इति धातोः शतृप्रत्ययः । तथा– vहिरण्यैः पश्ववदानभूतैः । चन्द्रमस्यास्तीति vचन्द्री । " चन्द्रं सुवर्णम् " (द्र. तैब्रा· १·७·६·३ ) इति श्रुतेः । यद्वा– हिरण्यैर्ज्वलनश्चन्द्री, चन्दयत्याह्लादयतीति चन्द्री । चदि आह्लादने । भावे क्तः, नुम् । ग्रहादित्वादिति रूपम् ॥२॥

ई॒ळि॒तो दे॒वैर्हरि॑वाꣳ२ अभि॒ष्टिरा॒जुह्वा॑नो ह॒विषा॒ शर्ध॑मानः ।
पु॒र॒न्द॒रो गो॑त्र॒भिद्वज्र॑बाहु॒रा या॑तु य॒ज्ञमुप॑ नो जुषा॒णः ॥३॥

1. S3 पाठस्तु-नराशंस ... प्रचेता इति for ' नराशꣳसः ' इति ।
7. S3 मधुर° for मधु°
16. M4 °स्वरूपः for °स्तद्रूपः ।
17. M4 om. पातीति पात्
18. M4 om. द्वौ नञौ ... गमयतः

हौत्रम् आप्रीसूक्तम् ]

ई॒ळि॒तः । दे॒वैः । हरि॑वानिति॒ हरि॑ऽवान् । अ॒भिष्टिः ।

आ॒जुह्वा॑न॒ इत्या॒ऽजुह्वा॑नः । ह॒विषा॑ । शर्ध॑मानः ।

पु॒र॒न्द॒र इति॑ पु॒रम्ऽद॒रः । गो॒त्र॒भिदिति॑ गो॒त्र॒ऽभित् । वज्र॑ऽबाहु॒रिति॒ वज्र॑ऽबाहुः ।

आ । या॒तु॒ । य॒ज्ञम् । उप॑ । नः॒ । जु॒षा॒णः ॥ ३ ॥

आ– ' ईळितो देवैः ' [ इति ] । Vदेवैः Vईळितः पूजितः स्तुतश्च । Vहरिवान् । हरी इन्द्रस्य अश्वौ । हरी विद्येते यस्य स हरिवान् । Vअभिष्टिः । इषु इच्छायाम् । छान्दसं पदम् । अन्वेषणावान्, अभीष्टार्थवान् । Vआजुह्वानः, Vहविषा निमित्तेन आहूयमानः । हविषा च [ Vशर्धमानः ] । शर्धमिति बलनाम । बलं प्राप्नुवानः । Vपुरंदरः । असुरपुरं दारयतीति पुरंदरः । Vगोत्रभित् । गोत्रमिति मेघनाम । पर्वतो वा । तं च भिनत्तीति गोत्रभित् । Vवज्रबाहुः वज्रपाणिः । Vनः अस्माकं Vयज्ञम् Vउप Vजुषाणः उपसेवमानः Vआयातु आगच्छतु ॥२ ३॥

अ– ' ईळितो देवैः ' । ईदृशः इन्द्रः Vआयातु आगच्छतु । कीदृशः ? Vदेवैः Vईळितः स्तुतः । ईड स्तुतौ । Vहरिवान् । इन्द्रस्याश्वा हरय उच्यन्ते । हरी अश्वौ विद्येते यस्य स तथा । Vअभिष्टिः अभि समन्ताद् इष्टिः यागो यस्य स तथा । इलोपश्छान्दसः । यद्वा– अभितः स्तूयते इत्यभिष्टः । स्तौतेरौणादिको डिप्रत्ययः । आजुहोति आह्वयति देवान् इति Vआजुह्वानः । Vहविषा यजमानदत्तहविर्निमित्तेन । यद्वा– ऋत्विग्भिरुपहूयमानत्वादाजुह्वानः । कर्मणि कर्तृप्रत्ययः । हविर्निमित्तं द्विजैराहूयमान इत्यर्थः । Vशर्धमानः । शर्ध इति बलनाम । अति बलायमानः । पुरं रिपुनगरं दारयतीति Vपुरंदरः । Vगोत्रभित् । गां भूमिं वृष्ट्या त्रायन्ते इति गोत्रा मेघास्तान् वृष्ट्यर्थं भिनत्तीति गोत्रभित् । गोत्रान् गिरीन् भिनत्तीति वा । गोत्रान् गोत्रजान् मरुतो भिनत्तीति वा । तथा Vवज्रबाहुः वज्रहस्तः Vनः अस्माकं Vयज्ञम् Vउप Vजुषाणः उपसेवमानः । जुषी प्रीतिसेवनयोः । अस्माच्छानच् ॥३॥

जु॒षा॒णो ब॒र्हिर्हरि॑वान्न॒ इन्द्रः॑ प्रा॒चीनं॑ सीदत् प्र॒दिशा॑ पृथि॒व्याः ।

उ॒रु॒प्रथाः॒ प्रथ॑मानं स्यो॒नमा॑दि॒त्यैर॒क्तं वसु॑भिः स॒जोषाः॑ ॥४॥

5. S3 पाठस्तु – ईळितो ... जुषाण इति for ' ईळितो देवैः ' [ इति ]; S3 हरिश्चन्द्रस्य for हरी इन्द्रस्य [L 6]

10. V2 after उप adds (नो)

11. P2 M4 ईडितः for ईळितः

14. M4 ङि° for डि°

जुषाणः । बर्हिः । हरिवानिति हरिऽवान् । नः । इन्द्रः ।

प्राचीनम् । सीदत् । प्रदिशेति प्रऽदिशा । पृथिव्याः ।

उरुप्रथा इत्युरुऽप्रथाः । प्रथमानम् । स्योनम् ।

आदित्यैः । अक्तम् । वसुभिरिति वसुऽभिः । सजोषा इति सऽजोषाः ॥ भ्यों ॥४॥

---

आ– ' जुषाणो बर्हिः ' । ᵛबर्हिः ᵛजुषाणः सेवमानः ᵛहरिवान् अश्ववान् । ᵛप्राचीनं प्रागञ्चनं देशं ᵛसीदत् आसीदत् । ' प्रदिशा पृथिव्याः ' । ᵛपृथिव्याः ᵛप्रदिशा दिश उपदिशन् । ᵛउरुप्रथाः उरु विस्तीर्णं प्रथः प्रथनं ख्यातिः अस्येति उरुप्रथाः विस्तृतकीर्तिः । ᵛआदित्यैः द्वादशभिः ᵛवसुभिः अष्टाभिश्च ᵛसजोषाः समानजोषणः समानप्रीतियुक्तः सन् इन्द्रः ᵛप्रथमानं विस्तारमापद्यमानं ᵛस्योनं सुखरूपम् ᵛअक्तम् आज्यादिसंबद्धं बर्हिः जुषाणः इन्द्रः आयात्विति संबन्धः ॥२४॥

---

अ– ' जुषाणो बर्हिः ' । ᵛइन्द्रः ᵛनः अस्माकं ᵛप्राचोनं प्राग्भवं प्रदेशं ᵛसीदत् सीदतु । तत्रास्तामित्यर्थः । " लेटोऽडाटौ " ( पा ३.४.९४ ) । " इतश्च लोपः " ( पा ३.४.८७ ) इतीकारलोपश्छान्दसः । कीदृगिन्द्रः ? ᵛहरिवान् । हरिरूपेन्द्रो विद्यते यस्य स्वामित्वेन स तथा । अश्ववान् वा । ᵛपृथिव्याः ᵛप्रदिशा । द्वितीयार्थे षष्ठी । पृथिव्यां देवयजनभूमिं प्रदिशा प्रदिशन् । " सुपां सुलुक् ° " ( पा ७.१.३९ ) इत्यादिना सोराडादेशः । ᵛउरुप्रथाः । प्रथनं प्रथः ख्यातिः । उरु विस्तीर्णं प्रथो यस्य स तथा । ᵛसजोषाः । जोषणं जोषः । जोषसा प्रीत्या सहितः सजोषाः, संतुष्ट इत्यर्थः । प्रथ प्रख्याने । जुषी प्रीतौ । आभ्यामसुन्प्रत्ययः । ᵛबर्हिः ᵛजुषाणः सेवमानः । शानचि शपो लुक् । कीदृग्बर्हिः ? ᵛप्रथमानम् । प्रथते तत्प्रथमानं, विस्तीर्णम् । ᵛस्योनम् । स्योनमिति सुखनाम । सुखरूपम् । ᵛआदित्यैः ᵛवसुभिः च ᵛअक्तं म्रक्षितम् । बर्हिरञ्जनमन्त्रे आदित्यादीनामुक्तत्वात् तैरक्तम् ॥४॥

---

इन्द्रं दुरः कव्ष्यो धावमाना वृषाणं यन्तु जनयः सुपत्नीः ।

द्वारो देवीरभितो वि श्रयन्ताᳬ सुवीरा वीरं प्रथमाना महोभिः ॥५॥

---

इन्द्रम् । दुरः । कव्ष्यः । धावमानाः ।

वृषाणम् । यन्तु । जनयः । सुपत्नीरिति सुऽपत्नीः ।

द्वारः । देवीः । अभितः । वि । श्रयन्ताम् ।

सुवीरा इति सुऽवीराः । वीरम् । प्रथमानाः । महोभिरिति महःऽभिः ॥ ढैं ॥५॥

---

6. V2 °विशत् for °दिशन् ।

9. V2 °संबन्धं for °संबद्धं; V2 हविर् for बर्हिः

आ– ‘ इन्द्रं दुरः ’ इति । द्वारः अस्य छान्दसं संप्रसारणम् । दुरः यज्ञगृहद्वारः कवष्यः [ स]सुषिराः । धावमानाः । धाव गतिशुद्धयोः । परिशुध्यमानाः आदरवत्यः । वृषाणं वर्षितारम् इन्द्रम् । एवं गुणा यज्ञगृहद्वारः द्वाराणि एवंगुणमिन्द्रं यन्तु । इन्द्रदेशसंपन्ना भवन्त्वित्यर्थः । ‘ जनयः सुपत्नीः ’ । सुपत्नीः जनयः उत्पत्तयः । शोभनपत्नी सुपत्नीः । लुप्तोपममेतत् । जनयो जाया इव शोभनवत्यः । अथेन्द्रसंगतिं प्राप्य यज्ञगृहद्वारः देवीः देव्यः सुवीराः ऋत्विग्भिः सुवीराः महोभिः उत्सवैः प्रथमानाः पृथिव्या भवन्त्याः इतश्चेतश्च सुवीरमिन्द्रमेव विश्रयन्तां सेवन्ताम् ॥२५॥

अ– ‘ इन्द्रं दुरः ’। दुरः यज्ञगृहद्वाराणि इन्द्रं यन्तु प्राप्नुवन्तु । विवक्षातः कारकाणि भवन्तीति विपरीतत्वात् इन्द्रो द्वाराणि यान्त्वित्यर्थः । कीदृशमिन्द्रम् ? वृषाणम् वर्षतीति वृषा, तं वर्षितारम् । “ इन्द्रः पृथिव्यै वर्षीयान् ” इति श्रुतेः । कीदृश्यो दुरः ? कवष्यः । कु शब्दे । कूयन्ते कवन्ति वा जना यासु ताः कवष्यः । ससुषिराः । सच्छिद्रे एव शब्दप्रसारात् । कौतेरौणादिकोऽष्प्रत्ययः । “ षिद्गौरादिभ्यश्च ” ( पा ४·१·४१ ) इति ङीप् । तथा धावमानाः । धावन्त इति धावमानाः । आदरयुक्ता इत्यर्थः । तत्रोपमा– जनयः सुपत्नीः इति । शोभनाः साध्व्यः पत्न्यो यज्ञे सहाधिकारिण्यो जनयः स्त्रिय इव । लुप्तोपमा । ता यथा धावमानाः पतिं यान्ति तथा द्वार इन्द्रं यान्त्वित्यन्वयः । “ पत्युर्नो यज्ञसंयोगे ” ( पा ४·१·३३ ) इति ङीप् । जायते यासु स्वयमिति जनयो जायाः । किं च– इन्द्रं प्राप्य द्वारः देवीः देव्यः अभितः सर्वत्र विश्रयन्ताम् विवृता भवन्तु । कीदृश्यो द्वारः ? सुवीराः । शोभना वीरा आरब्धान्तगामिन ऋत्विजो यासु तास्तथा । महोभिः तेजोभिः उत्सवैर्वा प्रथमानाः विस्तृताः । कीदृशमिन्द्रम् ? वीरम् शूरम् । इमानि कर्तृकर्मविशेषणानि यथायोग्यं जायापत्योर्योज्यानि ॥५॥

उषासानक्ता बृहती बृहन्तं पयस्वती सुदुघे शूरमिन्द्रम् ।
तन्तुं ततं पेशसा संवयन्ती देवानां देवं यजतः सुरुक्मे ॥६॥

उषासानक्ता । उषसानक्तेत्युषसानक्ता । बृहती इति बृहती । बृहन्तम् ।
पयस्वती इति पयस्वती । सुदुघे इति सुऽदुघे । शूरम् । इन्द्रम् ।
तन्तुम् । ततम् । पेशसा । संवयन्ती इति सम्ऽवयन्ती ।
देवानाम् । देवम् । यजतः । सुरुक्मे इति सुऽरुक्मे ॥ कूम् ॥६॥

1. S3 पाठस्तु– इन्द्रं दुरः ... महोभिरिति for ‘ इन्द्रं दुरः ’ इति ।
13. M4 om. धावन्त इति धावमानाः

आ– 'उषासानक्ता बृहती'। उषाः प्रभातं नक्तं रात्रिः। उषाश्च रात्रिश्च उषासानक्तम्। छान्दसं रूपम् उषासानक्ता। बृहती बृहन्तम् महान्तं पयस्वती उदकवती सुदुघे साधुदोहने तन्तुं च सूत्रं ततं विस्तृतम्। लुप्तोपममेतत्। तन्तुमिव ततं पटार्थं सूत्रं यथा स्ववशमापादयाति तद्वत् पेशसा विचित्ररूपेण संवयन्ती संग्रथयन्त्यौ सुरुक्मे शोभनरुक्मवत्यौ। एवंगुणविशिष्टे उषासानक्ते देवानां देवं बृहन्तं शूरम् इन्द्रं यजतः संगतं कुरुतः पुनः–पुनर्घटयत इत्यर्थः ॥२६॥

---

अ– 'उषासानक्ता बृहती'। उषाश्च नक्ता च उषासानक्ता, दिवसरात्र्यौ। समासे उषःशब्दस्योषसादेशः। विभक्तेः पूर्वसवर्णत्वम्। इन्द्रं यजतः संगतं कुरुतः, इन्द्रेण संगमं कुरुत इत्यर्थः। यजिरत्र संगतिकरणार्थः। कीदृशमिन्द्रम्? बृहन्तं महान्तम्। शूरं विक्रान्तम्। देवानां देवं पूज्यम्। कीदृश्यौ उषासानक्ता? बृहती बृहत्यौ। पयस्वती उदकवत्यौ। अवश्यायसंबन्धात्। सुदुघे। शोभनं दुग्धः ते तथा। "दुहः कप् घश्च" (पा ३.२.७०) इति कप् घादेशश्च। पेशसा विचित्ररूपेण संवयन्ती संग्रथयन्त्यौ। इन्द्रं विचित्ररूपेण सुखेन वा योजयन्त्यौ। तत्र दृष्टान्तः– 'ततं तन्तुम्'। लुप्तोपमा। यथा पटार्थं ततं विस्तीर्णं तन्तुं सूत्रजातं पेशसा रूपविशेषेण कौचित् संवयतस्तथा। सुरुक्मे शोभनं रुक्मं रोचनं कान्तिर्ययोस्ते सुरुक्मे। अत्र उषासानक्ताशब्दलक्ष्यौ कौचिज्जायापती। देवानां देवम् इन्द्रं परमेश्वरं भाग्यवशादिह लोके यजत इत्यर्थः उत्प्रेक्ष्यः। प्रकाश्याप्रकाश्यत्वेन तयोस्तच्छब्दवाच्यत्वात्। पयस्वती पयस्वत्यौ। देवपूजार्थमुदकसंबद्धौ। शोभनं पूजाफलं दुग्धः ते। पेशसा उत्तमेन पूजोपकरणेन संवयन्ती संपन्ने। सुरुक्मे शोभनालंकारयुक्त्यौ। तन्तुं ततम् इति कर्मविशेषणम्। जगत् तनोतीति तन्तुस्तम्। ततं व्यासम् इति ॥७॥

---

दैव्या मिमाना मनुषः पुरुत्रा होतारा इन्द्रं प्रथमा सुवाचा।
मूर्धन् यज्ञस्य मधुना दधाना प्राचीनं ज्योतिर्हविषा वृधातः ॥७॥

---

दैव्या। मिमाना। मनुषः। पुरुत्रेति पुरुऽत्रा।
होतारा। इन्द्रम्। प्रथमा। सुवाचेति सुऽवाचा।
मूर्धन्। यज्ञस्य। मधुना। दधाना। प्राचीनम्। ज्योतिः। हविषा। वृधातः ॥ ज्ये ॥७॥

---

1. S3 पाठस्तु– उषासानक्ताः ... सुरुक्मे इति for उषासानक्ता बृहती

15. M4 °शब्दवाच्यौ लक्ष्यौ for °शब्दलक्ष्यौ

आ– ‘ दैव्या मिमाना ’ [इति] । दिवः संबन्धिनौ होतारौ दैव्यौ । आकारश्छान्दसः । मिमाना मिमानौ निर्मिमाणौ । मनुषः । तद्धितलोपश्छान्दसः । मनुषः मनुष्यस्य यजमानस्य होतारौ । कथं भूतौ ? पुरुत्रा पुरुत्रौ । पुरुषु बहुषु प्रथमा प्रथमौ । असावग्निः अयं वायुश्च मध्यमः दैव्यौ प्रथमौ होतारौ । सुवाचा शोभनवाचौ होतारौ । मूर्धन् यज्ञस्य । मूर्धन् मूर्धानमुत्तमाङ्गभूतम् इन्द्रं मधुना मधुररसेन दधाना दधानौ स्थापयन्तौ प्राचीनम् आहवनीयाख्यम् ऐन्द्रं ज्योतिः हविषा वृधातः वर्धयतः ॥२७॥

---

अ– ‘ दैव्या मिमाना ’ । अयं चाग्निरसौ च वायुर्मध्यमस्तौ दैव्या देवसंबन्धिनौ होतारौ अग्निवायू प्राचीनं प्राच्यां दिशि वर्तमानं ज्योतिः आहवनीयाख्यम् मधुना मधुरेण हविषा कृत्वा वृधातः वर्धयतः । वृधेः “ लेटोऽडाटौ ” ( पा ३.४.९४ ) इत्याट् । कीदृशौ होतारौ ? पुरुत्रा बहुधा मिमाना मिमानौ यज्ञं निर्मिमाणौ । मनुषः मानुषाद्धोतुः । प्रथमा प्रथमौ । मनुष इति सकारान्तः शब्दः । सुवाचा शोभना वाग्ययोस्तौ तथा सुवाचौ । यज्ञस्य मूर्धन् मूर्धनि प्रधानेऽङ्गे इन्द्रं दधाना दधानौ स्थापयन्तौ । सर्वत्र प्रथमाद्विवचनस्याकारादेशः । अत्रापि जायापतिपरत्वेन पदानि योज्यानि ॥७॥

---

तिस्रो देवीर्हविषा वर्धमाना इन्द्रं जुषाणा जनयो न पत्नीः ।
अच्छिन्नं तन्तुं पयसा सरस्वतीळा देवी भारती विश्वतूर्तिः ॥८॥

---

तिस्रः । देवीः । हविषा । वर्धमानाः । इन्द्रम् । जुषाणाः । जनयः । न । पत्नीः ।
अच्छिन्नम् । तन्तुम् । पयसा । सरस्वती ।
इळा । देवी । भारती । विश्वतूर्तिरिति विश्वऽतूर्तिः ॥ सं ॥८॥

---

आ– ‘ तिस्रो देवीः ’ इति । याः सरस्वती इळा भारती तिस्रः पृथङ्नामवत्यः देवीः विश्वतूर्तिः । व्यत्ययः । [विश्व-] तूर्तयः । सर्वाणि भूतानि दुरितानि संरक्षन्त्यः तिस्रो देव्यः हविषा आज्येन पयसा च वर्धमानाः इन्द्रं जुषाणाः सेवमानाः । जनयः न पत्नीः । पत्न्यः जाया इव पत्युः अच्छिन्नं तन्तुम् अविस्रस्तं यज्ञं विदधुरिति शेषः ॥२८॥

---

1. S3 पाठस्तु– दैव्या ... वृधात for दैव्या मिमाना; V2 देव्यौ for दैव्यौ
3. V2 प्रथमानौ for प्रथमा प्रथमौ
4. V2 देव्यौ for दैव्यौ
6. S3 om. वर्धयतः
18. S3 पाठस्तु– तिस्रो ... विश्वतूर्तिरिति for तिस्रो देवीः इति ।
19. V2 °मूर्तिः for °तूर्तिः ; V2 °मूर्तयः for तूर्तयः

अ– ‘ तिस्रो देवीः ’ । सरस्वती इळा भारती इति तिस्रः देव्यः पयसा हविषा कृत्वा तन्तुं यज्ञम् अच्छिन्नं, छेदेन विघ्नेन रहितं कुर्वन्त्विति शेषः । कीदृश्यः ? वर्धमानाः पुष्टियुक्ताः । का इव ? पत्नीः पत्न्यो यज्ञसहायाः । जनयः जाया इव इन्द्रं जुषाणाः सेवमानाः । देवीः देव्यः दीप्यमानाः । विश्वस्मिन् सर्वत्र तूर्णं गच्छन्तीति विश्वतूर्तिः सर्वगामिन्यः । ‘ देवी विश्वतूर्तिः ’ इति द्वयं तिसृणां विशेषणम् । वचनव्यत्ययः ॥८॥

---

त्वष्टा दधच्छुष्ममिन्द्राय वृष्णेऽपाकोऽचिष्टुर्यशसे पुरूणि ।
वृषा यजन् वृषणं भूरिरेता मूर्धन् यज्ञस्य समनक्तु देवान् ॥९॥

---

त्वष्टा । दधत् । शुष्मम् । इन्द्राय । वृष्णे । अपाकः । अचिष्टुः । यशसे । पुरूणि ।
वृषा । यजन् । वृषणम् । भूरिरेता इति भूरिऽरेताः ।
मूर्धन् । यज्ञस्य । सम् । अनक्तु । देवान् ॥ ग्लौ ॥९॥

---

आ– ‘ त्वष्टा दधत् ’ इति । तक्षु त्वक्षू तनूकरणे । त्वष्टा तक्षकः । पाक इति प्रशस्यनाम । पाकः प्रशस्यः । त्वष्टुरस्मादन्यो न विद्यत इति अयम् अपाकः । अचिष्टुः । चेष्टाकर्ता सचेतनकर्ता वा । चिष्टु सेचने । चिष्टुः अस्मात् त्वष्टुरन्यो न विद्यत इति अयमचिष्टुः । एवंगुणस्त्वष्टा वृष्णे सेचनकर्त्रे इन्द्राय शुष्मं बलं दधत् स्थापयत् यशसे कीर्त्यै पुरूणि बहूनि भैषज्यान्यकरोदिति शेषः। किं च– वृषा सेक्ता । भूरिरेताः बहुवीर्यवान् सर्वजनकस्त्वष्टा । वृषणं सेक्तारम् इन्द्रं मूर्धन् यज्ञस्य मूर्धनि आहवनीये इन्द्रं यजन् देवान् समनक्तु । अनक्तिरत्र भोजनार्थः । देवानाहवनीयात्मना स्थितान् भोजयत्वित्यर्थः ॥२६॥

---

अ– ‘ त्वष्टा दधत् ’ । त्वष्टा देवः यज्ञस्य मूर्धन् मूर्ध्नि शिरःस्थानीये आहवनीये देवान् समनक्तु भोजयतु । अन्तर्भूतण्यर्थोऽनक्तिरत्र भोजनार्थः । धातूनामनेकार्थत्वात् । कीदृशस्त्वष्टा ? यशसे यशस्विने यशोरूपाय वा । वृष्णे सेक्त्रे । वृष सेचने, अस्मात् तृच् । इन्द्राय पुरूणि । वचनव्यत्ययात् पुरु बहु शुष्मं बलं दधत् धारयन् । तथा अपाकः । पाक इति प्रशस्यनाम । न विद्यते पाकः प्रशस्यो यस्मात् सोऽपाकः । “ नञोऽस्त्यर्थानां बहुव्रीहिः वाच्यो वा चोत्तरपदलोपः

---

11. S3 पाठस्तु– त्वष्टा ... देवानिति for त्वष्टा दधत् इति

21. M4 धारयेत् for धारयन्

च " ( वा १५, पा २·२·२४ ) इति समासः । तथा अचिष्टुः अञ्चनशीलः सर्वत्र गतः । अन्चु गतिपूजनयोरस्मादौणादिकः स्तुप्रत्ययः इडागमश्च । न विद्यते चिष्टुश्रेष्ठको यस्येति वा अचिष्टुः । न विद्यते चष्टा द्रष्टा यस्येति वा अचिष्टुः । चक्षिङस्तुप्रत्यये अस्येकारः । वृषा वर्षिता । वृषणं वर्षितारम् । इन्द्रं यजन् । भूरि बहु रेतो यस्य सः भूरिरेताः सर्वजनकः । त्वष्टा त्वक्षतेः करोत्यर्थस्य ( द्र. नि ८·२ ) इति यास्कोक्तेः । ईदृशस्त्वष्टा देवान् भोजयत्वित्यन्वयः । अत्र त्वष्टृशब्दः परमात्मपरः स्पष्टः ॥५॥

---

वनुस्पतिरवंसृष्टो न पाशैस्त्मन्यां समुञ्जञ्छंमिता न देवः ।
इन्द्रंस्य हुव्यैर्जुठरं पृणानः स्वदांति युज्ञं मधुना घृतेनं ॥१०॥

---

वनुस्पतिः । अवंसृष्टु इत्यवंऽसृष्टः । न । पाशैः ।
त्मन्यां । सुमुञ्जन्निति सुम्ऽअञ्जन् । शुमिता । न । देवः ।
इन्द्रंस्य । हुव्यैः । जुठरंम् । पृणानः । स्वदांति । युज्ञम् । मधुना । घृतेनं ॥ त्रैम् ॥१०॥

---

आ– ' वनस्पतिरवसृष्टः ' इति । वनस्पतिः यूपः अवसृष्टः न अभ्यनुज्ञात इवाध्वर्युणा त्मन्या आत्मन्या । छान्दसं पदम् । आत्मानं नयतीत्यात्मनी रज्जुः तयात्मन्या । अवातरैः (?) पाशैः समञ्जन् संबन्धं कुर्वन् शमिता न शमितेव देवः आत्मानं संगमयन् । एवम् ' इन्द्रस्य हव्यैः जठरं पृणानः ', इन्द्रस्य जठरं हव्यैः पृणानः पूरयन् । ' स्वदाति यज्ञं मधुना घृतेन ', मधुना घृतेन च यज्ञं यागं स्वदाति आस्वादयति । यद्वा– यज्ञं श्रीविष्णुम् इन्द्रादिदेवतातर्पणद्वारेण स्वदाति आस्वादयति ॥३०॥

---

अ– ' वनस्पतिरवसृष्टः ' । वनस्पतिः यूपः देवः मधुना मधुरसेन यज्ञं स्वदाति स्वदतु । लेट् । " लेटोऽडाटौ " (पा ३·४·९४) । कीदृशो वनस्पतिः ? ' अवसृष्टो न ' । न इवार्थे । आज्ञप्त इव । पाशैः कृत्वा त्मन्या आत्मना मनसा, आत्मनि वा । समञ्जन् अर्थात् पशुं संयोजयन् । आत्मशब्दस्य तृतीयायाः "सुपां सुलुक्° " (पा ७·१·३९) इत्यादिना या इत्यादेशः । " मन्त्रेष्वाङ्यादेरात्मनः " ( पा ६·४·१४१ ) इत्यात्मन आकारलोपः । तत्र दृष्टान्तः– ' शमिता न ' । शमिता इव । यथा शमिता पशुसंज्ञपनकर्ता पाशैः पशून् आत्मना संयोजयति । पुनः कीदृशः ? वनस्पतिः देवः हव्यैः इन्द्रस्य जठरं उदरं पृणानः । पृणीतेऽसौ पृणानः । पूरयन्नित्यर्थः । यद्वा– वनानां पतिर्देवो रुद्रः । " वनानां पतये नमः " ( कासं १६·१८ ) इति श्रुतेः । हव्यैः पुरोडाशादिभिः मधुना घृतेन च इन्द्रस्य, उपलक्षणत्वात् सर्वदेवानां जठरमुदरं पृणानः सन् । शमितेव, सत्त्वगुणवत्त्वाच्छान्तो विष्णुरिव । अवसृष्टः न प्रीतत्वादस्मदाज्ञप्त इव हव्यादिना इमं यज्ञं स्वदतु इति ॥१०॥

---

11. S3 पाठस्तु– वनस्पतिर् ... घृतेनेति for वनस्पतिरवसृष्टः

कासं .... १९

स्तोकानामिन्दुं प्रति शूर इन्द्रो वृषायमाणो वृषभस्तुराषाट् ।
घृतप्रुषा मनसा मोदमानाः स्वाहा देवा अमृता मादयन्ताम् ।।११।।(४)।।

स्तोकानाम् । इन्दुम् । प्रति । शूरः । इन्द्रः ।
वृषायमाणः । वृषयमाण इति वृषऽयमाणः । वृषभः । तुराषाट् ।
घृतप्रुषेति घृतऽप्रुषा । मनसा । मोदमानाः ।
स्वाहा । देवाः । अमृताः । मादयन्ताम् ।। द्रुम् ।।११।।(४)।।

आ– 'स्तोकानामिन्दुम्' इति । स्तोकमल्पम् । आज्यस्तोकानां संबन्धिनम् [v]इन्दुं [v]प्रति सोमं प्रति। योऽसौ सोमसंस्तवस्तदभिप्रायोऽयम्। सोमं प्रति [v]शूरः विक्रान्तः। [v]वृषायमाणः वृषभ इव चरन् [v]वृषभः सर्वदुर्जनलोकत्रासकृत् । [v]तुराषाट् तुरां त्वरां तूर्णं शत्रूणां वेगं सहत इति तुराषाट् । शत्रुवेगसहः [v]इन्द्रः [v]घृतप्रुषा घृतस्य बिन्दुना स्वजठरं पृणानः । 'मोदमानाः स्वाहा देवा अमृता मादयन्ताम्'। एवमेव इन्द्रस्य अनुचरा [v]देवाः [v]मनसा [v]मोदमानाः हृष्यन्तः । [v]स्वाहा स्वाहाकृतिः । [v]अमृताः अमरा देवा मादयन्तामिति ॥३१॥

अ– 'स्तोकानामिन्दुम्'। [v]इन्द्रः [v]स्वाहा [v]देवाः । नामैकदेशे नाम्नो ग्रहणमित्युक्त्या स्वाहाकृतयो देवाश्च [v]मादयन्ताम् तृप्यन्तु । मद तृप्ताविति धातुश्चुरादिः । किमुद्दिश्येत्येत आह । [v]स्तोकानाम् [v]इन्दुं [v]प्रति । स्तोका वपासंबन्धिघृतबिन्दवः । तत्संबन्धी य इन्दुः सोमरसस्तं प्रति तमुद्दिश्य । वपासंबन्ध्याज्यस्तोकेषु सोमत्वमारोप्यते । यद्वा– स्तोकानामिन्दुं बिन्दुमुद्दिश्य । बकारलोपश्छान्दसः । 'इष्कर्तारमध्वरस्य' इतिवत् । कीदृशः इन्द्रः ? [v]शूरः शौर्यवान् । वृषवदाचरतीति वृषायते । वृषायतेऽसौ वृषायमाणः । दीर्घ आर्षः । वृषभवत् प्रत्यर्थिनः प्रतिगर्जन्नित्यर्थः । [v]वृषभः वर्षिता श्रेष्ठः । [v]तुराषाट् । तुरां त्वरां शीघ्रं सहते शत्रूनभिभवतीति तुराषाट् । कीदृशाः स्वाहाकृतयः ? [v]घृतप्रुषा घृतबिन्दुनापि [v]मनसा [v]मोदमानाः । मोदन्ते ते मोदमानाः संतुष्टाः । नास्ति मृतं मरणं येषां ते [v]अमृताः ॥११॥

[ इति द्वाविंशेऽध्याये चतुर्थोऽनुवाकः ॥४॥ ]

7. S3 पाठस्तु– स्तोकानाम् ... मादयन्तामिति for स्तोकानामिन्दुमिति;
S3 आज्यं for आज्य°; V2 इन्द्रं for इन्दुं

15. M4 om. यः

16. M4 इन्दुः इन्दुम् for इन्दुं बिन्दुम्

17. M4 निष्कर्तारम् for इष्कर्तारम्; M4 वृषायति for वृषायते

[ अथ पञ्चमोऽनुवाकः । ]

आ यात्विन्द्रोऽवस उप न इह स्तुतः सधमादस्तु शूरः ।
वावृधानस्तविषीर्यस्य पूर्वीर्द्यौर्न क्षत्रमभिभूति पुष्यात् ॥१॥

---

आ । यातु । इन्द्रः । अवसे । उप । नः ।
इह । स्तुतः । सधमादिति सधऽमात् । अस्तु । शूरः ।
वावृधानः । ववृधान इति ववृधानः । तविषीः । यस्य । पूर्वीः ।
द्यौः । न । क्षत्रम् । अभिभूतीत्यभिऽभूति । पुष्यात् ॥ङ्म॥१॥

---

आ– ' आ यातु ' इति । सप्त त्रिष्टुभः ऐन्द्रयः ऐन्द्रस्य पशोः वपापुरोडाशपशूनां याज्यानुवाक्याः । ' आ यातु ' । ऐन्द्री त्रिष्टुप् । ऋषिर्वामदेवः । यः Vइन्द्रः । ' उप न इह स्तुतः ' । Vनः अस्माकम् Vउप समीपे Vइह यज्ञे Vस्तुतः अस्माभिः संस्तुतः । Vसधमात् सहभोजनः एवम् Vअस्तु । मदिस्तु भोजनार्थः । Vशूरः विक्रान्तः Vवावृधानः च स्वबलानि वावृधानः अतिशयेन वर्धयन् स्वयं च बलैर्वर्धमानः । ' तविषीर्यस्य पूर्वीर्द्यौर्न ' । Vतविषीः इति बलनाम । Vपूर्वीः इति प्रकरणात् पुरातनानि बलानि Vद्यौः Vन द्यौरिव । द्यौरिव उच्चैरुन्नतानि प्रकटीकृतबलानि पूर्वीः वृत्रवधादिप्रयुक्तबलानि Vयस्य Vक्षत्रम्V अभिभूति Vपुष्यात् । बलमस्मदीयं क्षत्रं बलम् अभिभूति अभिभवति, यच्च बलमस्मान् पुष्यात् पुष्णाति स इन्द्रः परमैश्वर्य-संपन्नः नः अस्माकम् Vअवसे अवनाय तर्पणाय रक्षणाय च Vआयातु आगच्छतु ॥३२॥

---

अ– कात्यायनः– " याज्यानुवाक्याश्च वपापुरोडाशानामायात्विन्द्र इति " (काश्रौ १९.६.१३)। षडृचो यथाक्रमम् ऐन्द्रस्य पशोः वपापुरोडाशपशुयागानां याज्यापुरोऽनुवाक्याः । तद्यथा– ' आ यातु इन्द्रः ' इति वपायाः पुरोऽनुवाक्या ' आ न इन्द्रो दूरात् ' इति याज्या । ' आ न इन्द्रो हरिभिः ' इति पशुपुरोडाशस्य पुरोऽनुवाक्या, ' त्रातारमिन्द्रम् ' इति याज्या । ' इन्द्रः सुत्रामा ' इति पशुयागस्य पुरोऽनुवाक्या, ' तस्य वयम् ' इति याज्येति सूत्रार्थः ॥

' आ यात्विन्द्रः ' । सप्त त्रिष्टुभः ऐन्द्रयः । Vइन्द्रः Vनः अस्मान् Vअवसे अवितुं रक्षितुम् Vउप समीपे Vआयातु । " तुमर्थे सेसेन्° " (पा ३.४.९) इति सेन्प्रत्ययः । सः Vइह आयातः सन् Vसधमात् Vअस्तु । सह देवैः सार्धं मादयति तृप्यतीति सहमात् सह भोजनकर्ता अस्तु । " सध मादस्थयोः° " ( पा ६.३.९६ ) इति सहस्य सधादेशः । चुरादेर्मादयतेः क्विप् । कीदृशः सः ? Vशूरः विक्रान्तः । Vस्तुतः अस्माभिः । Vवावृधानः वर्धमानः । Vयस्य इन्द्रस्य Vपूर्वीः Vतविषीः पूर्वास्तविष्यः । तविषीति

---

8. S3 पाठस्तु– आ यातु ... पुष्यादिति for आ यात्विति; V2 °पुरोडाशः for °पुरोडाश°

बलनाम । पूर्वकृतानि बलानि वृत्रवधादीनि प्रतापरूपाणि ˇद्यौः ˇनः स्वर्गं इव कथ्यन्ते । स्वर्गो यथा स्तूयते तथा यस्य पूर्वास्तविष्यः स्तूयन्ते इत्यर्थः । “ सुपां सुलुक् ” ( पा ७.१.३९ ) इति विभक्तिव्यत्ययः । “ तविषीति बलनाम । तवतेर्वृद्धिकर्मणः ” ( नि ९.२५ ) इति यास्कः । किं च– यश्च इन्द्रः ˇक्षत्रं क्षत्रियजातिं क्षतात् त्राणं वा अस्मदीयं ˇपुष्यात् पुष्यति । “ लेटोऽडाटौ ” ( पा ३.४.९४ ), “ इतश्च लोपः परस्मैपदेषु ” ( पा ३.४.९७ ) इतीकारलोपः । कीदृशं क्षत्रम् ? ˇअभिभूति अभिभवति शत्रूनित्यभिभूति । त्राणपक्षे अभितो भूतिरैश्वर्यं यस्मादिति तत्तथा ॥१॥

आ न इन्द्रो दूरादा न आसादभिष्टिकृदवसे यासदुग्रः ।
ओजिष्ठेभिर्नृपतिर्वज्रबाहुः संगे समत्सु तुर्वणिः पृतन्यून् ॥२॥

आ । नः । इन्द्रः । दूरात् । आ । नः । आसात् ।
अभिष्टिकृदित्यभिष्टिऽकृत् । अवसे । यासत् । उग्रः ।
ओजिष्ठेभिः । नृपतिरिति नृऽपतिः । वज्रबाहुरिति वज्रऽबाहुः ।
संग इति सम्ऽगे । समत्स्विति समत्ऽसु । तुर्वणिः । पृतन्यून् ॥ ठ्यों ॥२॥

आ– ‘ आ न इन्द्रः ’ इति । ‘ आ न इन्द्रो दूरादा न आसात् अभिष्टिकृत् ’ । ˇनः अस्माकम् ˇअभिष्टिकृत्, दीर्घाभावश्छान्दसः । अभिलषितार्थकृत् ˇइन्द्रः ˇदूरात् द्युलोकादेः ˇआसात् । आसादित्यन्तिकनाम । ‘ आ नः ’ इत्यादरार्थं पुनर्ग्रहणम् । ˇनः अस्माकम् आसात् अन्तिकाद्वा स्थानात् ˇअवसे अवनाय ˇआ ˇयासत् आ आभिमुख्येन आगच्छतु । आगत्य च– ‘ ओजिष्ठेभिर्नृपतिः वज्रबाहुः ’ । ˇउग्रः अतिविषमः ˇओजिष्ठेभिः ओजिष्ठतमैः बलैः बलरूपेण ˇनृपतिः नराणां परिपालकः ˇवज्रबाहुः वज्रपाणिः ˇसंगे संग्रामे सति ˇसमत्सु । समत्स्विति संग्रामनाम । बहुषु संग्रामेषु एकपदोपस्थितेषु ˇतुर्वणिः तूर्णं वेगेन । वनि संभक्तौ । ˇपृतन्यून् पृतन्यतः संग्रामतः संग्रामं कुर्वतोऽनेकवीरान् युगपदतिवेगेन संसृज्य संग्रामकर्ता तुर्वणिरिन्द्र आयासत् आगच्छत्विति संबन्धः ॥२ ३॥

अ– ‘ आ न इन्द्रः ’ । ˇइन्द्रः ˇनः अस्मान् ˇदूरात् दूरप्रदेशात् द्युलोकादेः ˇआयासत् आयातु । यातेः ‘ लेटोऽडाटौ ’ ( पा ३.४.९४ ) इति अटि कृते “ सिब्बहुलं लेटि ” ( पा ३.१.३४ ) इति सिप्प्रत्ययः । तथा ˇनः अस्मान् ˇआसात् अन्तिकप्रदेशादपि । आसादित्यन्तिकनाम । आयासत् आयातु । अत्र यासदिति क्रिया द्वाभ्यामाभ्यां प्रत्येकं संबध्यते । आङः क्रियायोगे स्वनियमात् । दूरात्

13. S3 पाठस्तु– आ न इन्द्रो ... पृतन्यूनिति for आ न इन्द्र इति

वपापुरोडाशपशूनां याज्यानुवाक्याः ]

समीपाद्वा अस्मान् प्रत्यागच्छत्वित्यर्थः । किं कर्तुम् ? vअवसे अवितुम् अस्मद्रक्षणं कर्तुम् । कीदृगिन्द्रः ? vअभिष्टिकृत् । अभिष्टिमभिलाषं करोतीति अभिष्टिकृत् मनोरथप्रदः । vउग्रः उत्कृष्टः । vओजिष्ठेभिः तेजस्वितमैर्बलैर्युक्त इति शेषः । " बहुलं छन्दसि " (पा ७.१.१०) इत्यत एत्वम् । ओजोऽस्ति येषां ते ओजस्विनः । अत्यन्तमोजस्विन ओजिष्ठाः । इष्ठन्प्रत्ययः । " विन्मतोर्लुक् " ( पा ५.३.६५ ) इति विन्प्रत्ययस्य लुक् । नृणां पालकः vनृपतिः । वज्रं बाहौ यस्येति vवज्रबाहुः । तथा 'संगे समत्सु तुर्वणिः पृतन्यून्'। संगः समदिति द्वे संग्रामनामनी। vसंगे एकस्मिन् संग्रामे । vसमत्सु बहुष्वपि संग्रामेषु युगपदुपस्थितेषु सत्सु vपृतन्यून् शत्रून् vतुर्वणिः । तुर्वी हिंसायाम् । तुर्वतीति तुर्वणिः । हन्ता । औणादिको निप्रत्ययः । पृतनामिच्छन्तीति पृतन्यन्ति । " सुप आत्मनः क्यच् " ( पा ३.१.८ ) इति क्यचि परे " कव्यध्वरपृतनस्यर्चि लोपः" ( पा ७.४.३९ ) इत्यलोपः । ततः " क्याच्छन्दसि " ( पा ३.२.१७० ) इत्युप्रत्ययः । संग्रामेच्छूनां हन्तेत्यर्थः ॥२॥

---

आ न॒ इन्द्रो॒ हरि॑भिर्या॒त्वच्छा॒र्वा॒ची॒नोऽव॑से॒ राध॑से च ।
तिष्ठा॑ति व॒ज्री म॒घवा॑ विर॒प्शीमं य॒ज्ञमनु॒ नो॒ वाज॑सातौ ॥३॥

---

आ । न॒: । इन्द्र॑: । हरि॑भि॒रिति॒ हरि॑ऽभिः । या॒तु॒ ।
अच्छ॑ । अ॒र्वा॒ची॒नः । अव॑से । राध॑से । च॒ ।
तिष्ठा॑ति । व॒ज्री । म॒घवेति॑ म॒घऽवा॑ । वि॒र॒प्शीति॑ वि॒ऽर॒प्शी ।
इ॒मम् । य॒ज्ञम् । अनु॑ । न॒: । वाज॑साता॒ इति॒ वाज॑ऽसातौ ॥ नौम् ॥३॥

---

आ– 'आ न इन्द्रो हरिभिः' इति । vनः अस्माकम् vइन्द्रः vअच्छ स्वच्छः । छान्दसं पदम् । vअर्वाचीनः अर्वागञ्चनः अस्मदाभिमुखतया गमनशीलः । vहरिभिः अश्वैः vआयातु आगच्छतु । vअवसे अवनाय । vराधसे अन्नाय । vमघवा । मघो धनं तद्वान् । मघवा vतिष्ठाति । छान्दसं पदम् । अतिष्ठत् । किं च– vविरप्शी विरमणशीलः vइमं vयज्ञम् vअनु तिष्ठतु । 'नः वाजसातौ' । vनः अस्माकं वाजस्य सातौ अन्नस्य संभजने निमित्तभूते अनुतिष्ठत्विति संबन्धः ॥३४॥

---

अ– 'आ न इन्द्रो हरिभिर्यातु' । अच्छेति पदमभीत्यर्थे । vइन्द्रः vअर्वाचीनः अभिमुखः सन् vनः अस्मान् vअच्छ अभि vहरिभिः अश्वैः साधनैः vआयातु । किमर्थम् ? vअवसे vराधसे च । रक्षणाय धनाय सर्वसिद्धये च । अव रक्षणे । राध संसिद्धौ । आभ्यामसुन् । आगत्य

---

17. S3 पाठस्तु– आ न इन्द्रो ... वाजसाताविति for आ न इन्द्रो हरिभिः इति

[ वपापुरोडाशपशूनां याज्यानुवाक्याः

च $^{v}$वज्री इन्द्रः $^{v}$नः अस्माकम् $^{v}$इमं $^{v}$यज्ञम् $^{v}$अनु प्रति । $^{v}$वाजसातौ अन्नसंभजने निमित्ते $^{v}$तिष्ठाति तिष्ठतु । लेट् । " लेटोऽडाटौ " ( पा ३·४·९४ ) । सातौ । वन षण संभक्तौ इति धातोः *- क्तिन्प्रत्यये " जनसनखनां° " ( पा ६·४·४२ ) इति आकारे रूपम् -* । " अन्नं वै वाजः " ( शब्रा १२·५·४·९ ) इति श्रुतेः । वाजोऽन्नम् । कीदृश इन्द्रः ? मघं धनमस्यास्तीति $^{v}$मघवा । " मघवा बहुलम् " ( पा ६·४.१२८ ) इति तृजन्तः । धनवान् । $^{v}$विरप्शी । विविधं रपति लपति इति विरप्शी अतिमहान् । विरप्शीति महन्नामसु ( निघण्टु ३.३.२२ ) पाठात् ॥३॥

---

त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ शूरमिन्द्रम् ।
ह्वयामि शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः ॥४॥

---

त्रातारम् । इन्द्रम् । अवितारम् । इन्द्रम् ।
हवेहव इति हवेऽहवे । सुहवमिति सुऽहवम् । शूरम् । इन्द्रम् ।
ह्वयामि । शक्रम् । पुरुहूतमिति पुरुऽहूतम् । इन्द्रम् ।
स्वस्ति । नः । मघवेति मघऽवा । धातु । इन्द्रः ॥ थैम् ॥४॥

---

आ— ' त्रातारमिन्द्रम् ' इति । ऐन्द्री त्रिष्टुप् । गर्ग ऋषिः । त्रैङ् पालने । $^{v}$त्रातारम् अविद्यान्धकारसंहरणद्वारेण स्वरूपानन्दाभिव्यञ्जकत्वेन पालकम् $^{v}$इन्द्रम् । इरां वाणीं दधातीतीन्द्रस्तम् । $^{v}$अवितारम् । अव रक्षणे । आनन्दादिप्रदानेन अवितारम् $^{v}$इन्द्रम् । इरां भुवं दधातीतीन्द्रस्तम् । $^{v}$हवेहवे संग्रामे संग्रामे $^{v}$सुहवं शोभनाह्वानवन्तं युद्धार्थं वीराणां सुशोभनाह्वानं यस्य सः तं सुहवम् । $^{v}$शूरं विक्रान्तम् $^{v}$इन्द्रं शत्रुविदारकम् । शक्लृ शक्तौ । $^{v}$शक्रं शक्तं । स्वकार्यस्य निर्वाहकमिन्द्रम् । $^{v}$पुरुहूतं पुरुभिर्बहुभिर्हूयत इति पुरुहूतस्तम् $^{v}$इन्द्रम् । दृशिर् प्रेक्षणे । इन्द्रं जगद्व्यवधानेन सहस्राक्षैः सर्वदा पश्यतीतीन्द्रस्तमिन्द्रं $^{v}$ह्वयामि इति संबन्धः । ' स्वस्ति नः ' । $^{v}$नः अस्माकं $^{v}$स्वस्ति अविनाशः । अस भुवि, अस्ति सत्ता । सुशोभनं मङ्गलं सुखं च तत् अस्त्विति स्वस्ति सत्यानन्दरूपम् । मघवा धनवानिन्द्रः । इन्धी दीप्तौ । " इन्धं सन्तमिन्द्र इत्याचक्षते " ( शब्रा १४·६·११·२ ) इति श्रुतेः । एवंगुणविशिष्टः $^{v}$इन्द्रः $^{v}$नः अस्माकं स्वास्ति अविनाशफलं $^{v}$धातु दधातु । अस्माकं सत्यज्ञानानन्दरूपं दधातु । पूर्वमावृतमानन्दप्रदानेनावृतं करोतु ॥३५॥

---

3. *-* संभावितोऽयं पाठः । लिखितपुस्तकेषु– ' तिन्प्रत्यये जिन ... कस्यादिति दीर्घे रूपम् ' ।
13. S3 पाठस्तु– त्रातारम् ... धात्विन्द्र इति for त्रातारमिन्द्रमिति

वपापुरोडाशपशूनां याज्यानुवाक्याः ]

अ– ' त्रातारमिन्द्रम् '। गर्गदृष्टा त्रिष्टुप् । vत्रातारं रक्षितारं दुष्टेभ्यः। vइन्द्रं vह्वयामि। तथा vअवितारम्। आनन्दादिमनोरथप्रदानेनापि प्रीणयितारं ह्वयामि। तथा vहवेहवे आह्वाने आह्वाने यज्ञे यज्ञे वा vसुहवं सुखेन हूयते आहूयते इति सुहवस्तम् vइन्द्रम् । ' ह्वयामि ' इति प्रत्येकं क्रियापदसंबन्ध आदरार्थः। कीदृशमिन्द्रम् ? vशूरम्; शक्नोति वैरिणो हन्तुमिति शक्रस्तम्। पुरुभिः बहुभिर्यज्ञकर्तृभिः पुरुषु यज्ञेषु वा हूयत इति पुरुहूतस्तं vपुरुहूतम् vइन्द्रं परमैश्वर्यवन्तम् । एवं मया हूते vमघवा धनवान् vइन्द्रः vनः अस्मभ्यं vस्वस्ति, अव्ययं, परमकल्याणं vधातु दधातु करोतु । विकरणव्यत्ययोऽभ्यासलोपो वा । अत्राद्याश्चत्वार इन्द्रशब्दा विशेषणभूताः। पञ्चमो विशेष्यः। तथा हि शक्रं ह्वयामि अहमित्यन्वयः । कीदृशमित्यत आह– त्रातारम् इन्द्रम् आत्मत्राणे समर्थम् । नैतावदेव। किं तु ? अवितारम् इन्द्रम् भक्तत्राणेऽपि समर्थम्। न केवलमेतावत्। अपि तु हवे हवे तत्तत् कार्यं कर्तुं शूरम् इन्द्रम् अतिसमर्थम् । न केवलमेतावत्। अपि तु पुरुहूतम् इन्द्रम् एककाले बहुभिर्बहुषु यज्ञेषु नानारूपाणि ग्रहीतुं समर्थम्। सः स्वस्ति नः धातु ॥४॥

---

इन्द्रः सुत्रामा स्ववाँ२ अवोभिः सुमृळीको भवतु विश्ववेदाः ।
बाधतां द्वेषो अभयं कृणोतु सुवीर्यस्य पतयः स्याम ॥५॥

---

इन्द्रः । सुत्रामेति सुऽत्रामा । स्ववानिति स्वऽवान् । अवोभिरित्यवःऽभिः ।
सुमृळीक इति सुऽमृळीकः । भवतु । विश्ववेदा इति विश्वऽवेदाः ।
बाधताम् । द्वेषः । अभयम् । कृणोतु ।
सुवीर्यस्येति सुऽवीर्यस्य । पतयः । स्याम ॥ खम् ॥ ॥५॥

---

आ– ' इन्द्रः सुत्रामा ' इति । vइन्द्रः परमैश्वर्यसंपन्नः vसुत्रामा साधुत्राणवान्। स्वं धनमस्यास्तीति vस्ववान् धनवान्। vअवोभिः अवनैः रक्षणैः । मृड सुखने । vसुमृळीकः शोभनसुखकारी। विद सत्तायाम् । विश्वं विद्यत इति vविश्ववेदाः विश्वधनः vभवतु। किं च– ' बाधतां द्वेषः ' । द्विष अप्रीतौ । vद्वेषः अप्रीतिः । तद्धर्मे स्वात्मनि च vबाधताम्। द्वेषः दुर्भगं वा बाधताम् अपगमयतु । vअभयं सर्वभयराहित्यं vकृणोतु । त्वत्प्रसादात् vसुवीर्यस्य शोभनसामर्थ्यस्य सुवीरकर्मादेः उत्साहाभिमानवर्धनस्य च वयं vपतयः vस्याम भवेम ॥३६॥

---

18. S3 पाठस्तु– इन्द्रः ... स्यामेति for इन्द्रः सुत्रामा

अ– ‘ इन्द्रं सुत्रामा ’। vइन्द्रः vअवोभिः रक्षणैरन्नैर्वा vसुमृळीकः शोभनसुखकारी vभवतु। अस्माकमिति शेषः। मृड सुखने। कीदृश इन्द्रः ? सुष्ठु त्रायतेऽसौ vसुत्रामा। “ आतो मनिन्° ” ( पा ३·२·७४ ) इति मनिप्। vस्ववान् स्वं धनं ज्ञातिर्वा यस्य स तथा। विश्वं सर्वं वेदो धनं यस्याऽसौ vविश्ववेदाः। वेद इति धननाम। यद्वा– विश्वं पूर्णं वेदो वेदनं यस्य स तथा। सर्वज्ञ इत्यर्थः। स चेन्द्रः vद्वेषः द्विषः शत्रून् vबाधताम्। गुण आर्षः। यद्वा– द्वेषो दौर्भाग्यं बाधताम्। द्विष अप्रीतावित्यस्मात् धात्वर्थेऽसुन्। vअभयं च vकृणोतु। किं च– त्वत्प्रसादाद्वयं vसुवीर्यस्य शोभनविनियोगस्य धनस्य vपतयः स्वामिनः vस्याम भवेम। यद्वा– शोभनाश्च ते वीराश्च सुवीराः पुत्रक्षत्रादयः। तेभ्यो हितं सुवीर्यं विषयजातम्। तस्य पतयः स्याम ॥५॥

---

तस्य॑ व॒यꣳ सु॑म॒तौ य॒ज्ञिय॒स्यापि॑ भ॒द्रे सौ॑मन॒से स्या॑म।
स सु॒त्रामा॒ स्ववाँ॒२ इन्द्रो॑ अ॒स्मे आ॒राच्चि॒द् द्वेषः॑ सनु॒तर्यु॑योतु ॥६॥

---

तस्य॑। व॒यम्। सु॒म॒ता इति॑ सु॒ऽम॒तौ। य॒ज्ञिय॑स्य।
अपि॑। भ॒द्रे। सौ॒म॒न॒से। स्या॒म॒।
सः। सु॒त्रामेति॑ सु॒ऽत्रामा॑। स्ववा॒निति॒ स्वऽवा॑न्। इन्द्रः॑। अ॒स्मे इत्य॒स्मे।
आ॒रात्। चि॒त्। द्वेषः॑। स॒नु॒तः। यु॒यो॒तु॒ ॥ ध्योम् ॥६॥

---

आ– ‘ तस्य वयम् ’ इति। vतस्य इन्द्रस्य सुत्राम्णः vयाज्ञियस्य यज्ञसंपादिनः vसुमतौ कल्याणमतौ vवयं vस्याम सुमतिविषया भवेम। vअपि च। अस्य vभद्रे भन्दनीये vसौमनसे कल्याणमनसे स्याम। युष्मत्कल्याणमनसो विषया भवेम। vसः vसुत्रामा vस्ववान् धनवान् vइन्द्रः। षणु दाने। vसनुतः दातुः vअस्मे अस्मत्तः vआरात् vचित् दूरादेव vद्वेषः दौर्भाग्यं vयुयोतु वियोजयतु पृथक्करोतु ॥३७॥

---

अ– ‘ तस्य वयम् ’। vवयं vतस्य इन्द्रस्य vसुमतौ शोभनबुद्धौ स्तुतौ वा vस्याम प्रिया भवेम। तत्प्रीत्यर्थं सुकर्मणो भवेमेत्यर्थः। vअपि अपि च vभद्रे कल्याणकरे vतस्य vसौमनसे सुमनसो भावे शोभनमनस्कत्वे स्याम। इन्द्रोऽस्मत्कल्याणविषयं स्वमनः करोत्वित्यर्थः।

---

15. S3 पाठस्तु– तस्य वयं … युयोत्विति for तस्य वयमिति

18. V2 द्विषः for द्वेषः

19. V2 वियोजय पृथकुरु for वियोजयतु पृथक्करोतु

वपापुरोडाशपशूनां याज्यानुवाक्याः ]

" देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ " ( भ. गी. ३.११ )

इति भगवद्वचनात् । कीदृशस्येन्द्रस्य ? [v]यज्ञियस्य यज्ञप्रियस्य । एवं मिथो भावनेन संतुष्टः [v]सुत्रामा सुरक्षकः [v]स्ववान् धनवान् [v]सः [v]इन्द्रः । [v]अस्मे अस्मत्तः [v]आरात् [v]चित् दूरादपि वर्तमानं कालान्तरभावि [v]द्वेषः दौर्भाग्यं [v]सनुतः अन्तर्हितं कृत्वा [v]युयोतु पृथक्करोतु । यु पृथग्भावे । विकरणव्यत्ययः । सनुतरिति निर्णीतान्तर्हितयोर्नाम ( निघण्टु ३.२५.३ )

~~~~~~~~~~~~~~~~~~~~

आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः ।
मा त्वा के चिन्नि यमन् विं न पाशिनोऽति धन्वेव ताँ२ इहि ।।७।।

~~~~~~~~~~~~~~~~~~~~

आ । मन्द्रैः । इन्द्र । हरिभिरिति हरिऽभिः । याहि । मयूररोमभिरिति मयूररोमऽभिः ।
मा । त्वा । के । चित् । नि । यमन् । विम् । न । पाशिनः ।
अति । धन्वेवेति धन्वऽइव । तान् । इहि ॥ द्व्लौ ।।७।।

~~~~~~~~~~~~~~~~~~~~

आ– ' आमन्द्रैः ' इति । बृहत्यैन्द्री विश्वामित्रः । हे [v]इन्द्र, [v]मन्द्रैः मदीयैः हर्षयुक्तैः [v]हरिभिः अश्वैः [v]मयूररोमभिः मयूररोमतुल्यवर्णैः अश्वैः [v]आयाहि । किं च– ' मा त्वा केचिन्नि यमन् ' । [v]त्वा आगच्छन्तमिन्द्रं त्वां [v]के [v]चित् अपि [v]मा [v]नि [v]यमन् न निबध्नन्ति । कमिव ? ' विं न पाशिनः ' । विः पक्षी श्येनादिः । तं [v]विं पक्षिणं [v]न इव [v]पाशिनः क्षुद्रपशुबन्धरज्जुमन्तो यथा श्येनादिकं गगने उत्पतन्तं न निबध्नन्ति तद्वत् त्वां येऽपि न निबध्नान्ति । अतः [v]तान् [v]अति अतिक्रम्य [v]इहि आगच्छ । क इव ? [v]धन्वेव । यथा धनुष्मान् श्रीरामः लीलया स्वधनुषा शत्रुसंघं निहत्य स्वपुरमागच्छति तद्वदागच्छेत्यर्थः ।।७।।

~~~~~~~~~~~~~~~~~~~~

अ– ' आ मन्द्रैः ' । विश्वामित्रदृष्टा बृहती । तृतीयः पादो द्वादशवर्णः, अन्ये त्रयः पादा अष्टवर्णाः, अस्या अग्रिमायाश्च द्वयोर्विनियोगाभावः । तथाप्यध्ययनादौ विनियुक्तत्वात् व्याख्यायेते ।

~~~~~~~~~~~~~~~~~~~~

16. corrected; V2 °मन्त्रो M4, S3 वन्तो

21. M4 व्याख्येयेति for व्याख्येयेते
~~~~~~~~~~~~~~~~~~~~

हे इन्द्र, त्वं हरिभिः अश्वैः आ याहि । कीदृशैः ? मन्द्रैः गम्भीरैः । मयूरस्येव रोमाणि येषां ते मयूररोमाणस्तैः मयूररोमभिः । मयूरसमवर्णैः । किं च– के चित् दुष्टाः आगच्छन्तं त्वां मा नि यमन् मा नियच्छन्तु मा प्रतिबध्नन्तु । यम उपरमे । माङ्योगादटो लोपः । तत्र दृष्टान्तः । पाशिनः पाशवन्तः व्याधाः विं पक्षिणमिव । न इवार्थे । यथा पाशिनः पक्षिणं बध्नन्ति तथा त्वां मा प्रतिबध्नन्त्वित्यर्थः । अथ येऽन्ये परिपन्थिनो भवेयुः, तान् अतिक्रम्य इहि आगच्छ । किमिव ? धन्वेव । धन्व निरुदकदेशः । यथा पान्थो मरुदेशमतिक्रम्य अनूपं गच्छति । विभक्तिव्यत्ययः । यद्वा– धन्वेव धनुष्मान् श्रीराम इव तथा तानतिक्रम्य त्वं यष्टारं मां प्रत्यागच्छेति भावः ॥७॥

एवेदिन्द्रं वृषणं वज्रबाहुं वसिष्ठासो अभ्यर्चन्त्यर्कैः ।
स नं स्तुतो वीरवद्धातु गोमद्यूयं पात स्वस्तिभिः सदा नः ॥८॥५॥

एव । इत् । इन्द्रम् । वृषणम् । वज्रबाहुमिति वज्रऽबाहुम् ।
वसिष्ठासः । अभि । अर्चन्ति । अर्कैः ।
सः । नः । स्तुतः । वीरवदिति वीरऽवत् । धातु । गोमदिति गोऽमत् ।
यूयम् । पात । स्वस्तिभिरिति स्वस्तिऽभिः । सदा । नः ॥ ध्रः ॥८॥५॥

आ– ' एवेत् ' इति । ऐन्द्री त्रिष्टुप् । ऋषिर्वसिष्ठः । एव इत् अपि इन्द्रं वृषणं वज्रबाहुम् । एवं वज्रपाणिं वृषणं वर्षितारम् इन्द्रं वसिष्ठासः वसिष्ठो वसिष्ठापत्यानि च । यद्वा– वसिष्ठादयश्च शिष्याश्च सर्वेऽपि अर्कैः इन्द्रदेवत्यैर्मन्त्रैः इन्द्रम् एव अभ्यर्चन्ति । ' सः नः स्तुतः वीरवद्धातु गोमत् ' । एवं स्तुतः सः इन्द्रः नः अस्मभ्यं गोमत् गोभिः संयुक्तं वीरवत् पुत्रवत् फलं धातु दधातु । एवमिन्द्रम् संप्रार्थ्येदानीम् इन्द्रं ये यजन्ति तान् प्रार्थयन्ति– ' यूयं पात स्वस्तिभिः सदा नः ' । यूयं स्वस्तिभिः अविनाशैः सदा कालम् अस्मान् पात पालयत ॥३६॥

अ– ' एवेदिन्द्रम् ' । वसिष्ठदृष्टेन्द्रदेवत्या त्रिष्टुप् । वसिष्ठासः । " आज्जसेरसुक् " ( पा ७.१.५० ) इति असुगागमः । वसिष्ठाः वसिष्ठस्य पुमपत्यानि च । अर्कैः मन्त्रैरन्नैः समिद्भिर्वा । एव इत् एवमेव इन्द्रम् अभ्यर्चन्ति सम्यक् पूजयन्ति । " अर्को मन्त्रो भवति यदनेनार्चत्यर्कमन्नं भवत्यर्चति भूतान्यर्को वृक्षो भवति सर्वतः कटुकिनः " इति यास्कोक्तेः । कीदृशमिन्द्रम् ?

6. M4 उत्क्रम्य for अतिक्रम्य

14. S3 पाठस्तु– एवेद् ... सदा नः इति for एवेदिति

20. V2 after पालयत adds इति

आप्रियः, त्रिपशोः प्रयाजयाज्याश्च ]

वृषणं वर्षितारम् । वज्रं बाहौ यस्य सः वज्रबाहुः तम् । वसिष्ठैरर्च्यमानः सः इन्द्रः स्तुतः सन् । वीरा विद्यन्ते यत्र तद् वीरवत् पुत्रयुक्तम् । गावो विद्यन्ते यत्र तद् गोमत् । स्वर्गपशुशास्त्रसहितम् अर्थाद्धनम् । नः अस्मभ्यं धातु दधातु पोषयतु वा । डुधाञ् धारणपोषणयोः । विकरणव्यत्ययः । एवं पादत्रयेणेन्द्रं स्तुत्वा ऋत्विजः प्रत्याह– हे ऋत्विजः यूयं स्वस्तिभिः अविनाशैः कल्याणैः सदा सर्वदा नः अस्मान् पात रक्षत । पा रक्षणे । लोड्मध्यमे रूपम् । स्वस्तिशब्दोऽयमिकारान्तः ॥८॥

इति द्वाविंशे पञ्चमोऽनुवाकः ॥५॥

---

[ अथ षष्ठोऽनुवाकः । ]

समि॑द्धो अ॒ग्निर॑श्विना त॒प्तो घ॒र्मो वि॒राट् सु॒तः ।
दु॒हे धे॒नुः सर॑स्वती॒ सोम॑ꣳ शु॒क्रमि॒हेन्द्रि॒यम् ॥१॥

---

समि॑द्ध इ॒ति सम्ऽइ॑द्धः । अ॒ग्निः । अ॒श्विना॒ ।
त॒प्तः । घ॒र्मः । वि॒राळिति॑ वि॒ऽराट् । सु॒तः ।
दु॒हे । धे॒नुः । सर॑स्वती । सोम॑म् । शु॒क्रम् । इ॒ह । इ॒न्द्रि॒यम् ॥ त्रुं ॥१॥

---

आं– 'समिद्धो अग्निः' इति । इत उत्तरं हौत्रं त्रिपशोरध्यायात् द्वादश आप्रियः, अश्विसरस्वतीन्द्रदेवत्याः अनुष्टुभः । समिद्धः संदीप्तः अग्निः । अग्रे नयनात् अग्निः । अश्विना अश्विनौ । किं च– तप्तः । तप संतापे । संतप्तः घर्मः प्रवर्ग्यः विराट् सोमः सुतः अभिषुतः । किं च– 'दुहे धेनुः' । धेनुः दुहे प्रपूरयति । सरस्वती सोमं शुक्रं शुक्लम् इह यज्ञे इन्द्रियं वीर्यं च दुहे इति संबन्धः । एवं यज्ञपतिः ॥४०॥

---

अ– कात्यायनः– "आप्रियश्च समिद्धो अग्निरश्विनेति" (का श्रौ १९.६.१५) । 'समिद्धः' इत्याद्या द्वादशानुष्टुभः ऋचः । चकारात् त्रिपशोः प्रयाजयाज्या इति सूत्रार्थः ॥

'समिद्धो अग्निः अश्विना' । विदर्भिदृष्टा अश्विसरस्वतीन्द्रदेवत्या आप्रीसंज्ञा द्वादशानुष्टुभः । "अश्विनावध्वर्यू देवानाम्" (द्र. मैसं ४.५.४, तैआ ५.२.५) इति श्रुतेः तौ प्रति होता प्राह । हे अश्विना अश्विनौ । "सुपां सुलुक्°" (पा ७.१.३९) इत्यादिना द्विवचनस्याकारादेशः । अग्निः समिद्धः दीप्तोऽस्ति हविरास्वादनक्षमोऽस्तीत्यर्थः । तथा– घर्मः प्रवर्ग्यः । "तद् घृङ्ङिति पपात तत्पतिस्वासावादित्योऽभवत्

---

13. S3 पाठस्तु – समिद्धो ... इन्द्रियम् for समिद्धो अग्निरिति
16. V2 after सरस्वती adds च
19. P2 M4 त्रिः for त्रि°

तद्यद्घृङ्ङित्यपतत् तस्माद्घर्मोऽथ यत्प्रावृज्यत तस्मात् प्रवर्ग्यः " ( शब्रा १४.१.१.१० ) इति श्रुत्या निर्वचनाद्घर्मशब्दः प्रवर्ग्यपरः । सः तप्तः अस्ति । तथा– विराट् । विशेषेण राजमानः, अर्थात् सोमः सुतः अभिषुतोऽस्ति । किं च– धिनोति प्रीणातीति धेनुः । धिवि प्रीणने । अस्मादौणादिको नुप्रत्ययः । वलोपो गुणश्च । प्रीणयित्री । सरस्वती इह यज्ञे सोमं मधुरं घृतं दुहे दुग्धे । दुह प्रपूरणे । अस्माल्लटि तङि प्रथमैकवचने " टित आत्मनेपदानां टेरे " ( पा. ३.४.७९ ) इति टेरेत्वे " लोपस्त आत्मनेपदेषु " ( पा. ७.१.४१ ) इति तलोपे च सति दुहे इति रूपम् । कीदृशं सोमम् ? शुक्रम् शुक्लं शुद्धम् । इन्द्रियम् । इन्द्राय हितं बलकरम् । एवं यज्ञसामर्थ्यमस्ति । युवां शीघ्रमागच्छतमिति भावः ॥१॥

---

तनूपा भिषजा सुतेऽश्विनोभा सरस्वती ।
मध्वा रजांसीन्द्रियमिन्द्राय पथिभिर्वहान् ॥२॥

---

तनूपेति तनूऽपा । भिषजा । सुते । अश्विना । उभा । सरस्वती ।
मध्वा । रजांसि । इन्द्रियम् । इन्द्राय । पथिभिरिति पथिऽभिः । वहान् ॥ च्यि ॥२॥

---

आ– ' तनूपा भिषजा ' इति । तनूपा । छान्दसं पदम् । तनूपौ तनूनां पातारौ । भिषजा भिषजौ । अश्विना अश्विनौ । उभा उभौ । सरस्वती च सुते अभिषु[व]ते सोमम् । छान्दसं पदम् । सुवते । अश्विनौ सरस्वती च तिस्रः सोमं सुवते । मध्वा मधुरसेन । ' रजांसि ' इति । इहलोकवचनो रजःशब्दः । इन्द्रियं वीर्यम् इन्द्राय पथिभिः मार्गैः इन्द्रोपभोगाय रजांस्युच्यन्ते । तनूनां पातारौ भिषजा अश्विनौ सरस्वती चेति याः सोममभिषुवते ताश्च इन्द्राय इन्द्रोपभोगार्थं स्थितानि रजांसि इन्द्रियं वीर्यं च मध्वा मधुरसेन । इन्द्राय पथिभिः वहान् । छान्दसं पदम् । अवहन् । वहन्तु प्रापयन्त्विति संबन्धः ॥४१॥

---

अ– ' तनूपा भिषजा ' । उभा अश्विना उभौ अश्विनौ सरस्वती च । मध्वा मधुना । आगमस्यानित्यत्वान्न नुमागमः । रसेन रजांसि लोकान् । रज इति लोकनाम । दुहन्ति पूरयन्ति । पूर्वऋचि दुहे इत्यस्य वचनव्यत्ययेनेहानुषङ्गः । लोका " रजांसि उच्यन्ते "

---

13. S3 पाठस्तु– तनूपा ... वहान् इति for तनूपा भिषजेति
14. V2 अभिष्टुते for अभिषुवते
15. S3 मधुर° for मधु°
18. V2 अष्टुवते for अभिषुवते

आप्रियः, त्रिपशोः प्रयाजयाज्याश्च ]

इति यास्कोक्तेश्च । कीदृशावश्विनौ ? vतनूपा तनूपौ । शरीराणां रक्षितारौ । वैद्यत्वात् । तदेवाह– vभिषजा भिषजौ वैद्यौ । क्व सति ? vसुते सोमे अभिषुते सति । किं च– अश्विसरस्वत्यः vइन्द्राय vइन्द्रियं वीर्यकरं vपथिभिः यज्ञमार्गैः vवहान् वहान्ति । " इतश्च लोपः परस्मैपदेषु " ( पा. ३.४.९७ ) इति इकारलोपे अटि च कृते वहानिति रूपम् ॥२॥

---

इन्द्रा॒येन्दु॑ꣳ सर॑स्वती नरा॒शꣳसे॑न न॒ग्नहु॑म् ।
अधा॑ताम॒श्विना॒ मधु॑ भेष॒जं भि॒षजा॑ सु॒ते ॥३॥

---

इन्द्रा॑य । इन्दु॑म् । सर॑स्वती । न॒रा॒शꣳसे॑न । न॒ग्नहु॑म् ।
अधा॑ताम् । अ॒श्विना॑ । मधु॑ । भे॒ष॒जम् । भि॒षजा॑ । सु॒ते । आम् ॥३॥

---

आ– ' इन्द्रायेन्दुम् ' इति । vसरस्वती vइन्द्राय इन्द्रार्थम् vइन्दुं सोमम् अभिषुणोत्विति शेषः । vनराशꣳसेन यज्ञेन । यज्ञेन सहितां vनग्नहुं सुराम् vअश्विना अश्विनौ vअधाताम् अधत्ताम् । ' मधु भेषजं भिषजा सुते ' । vसुते सोमे अभिषुते सति vभिषजा भिषजौ अश्विनौ vमधु भेषजरूपमधत्ताम् ॥४२॥

---

अ– ' इन्द्रायेन्दुम् ' । vसरस्वती vनराशꣳसेन यज्ञेन सह vइन्द्राय इन्द्रार्थम् vइन्दुं सोमं vनग्नहुं पूर्वोक्तं सुराकन्दं च । अधादिति वचनपरिणामेन योजना । धृतवती । किं च– vभिषजा vअश्विना भिषजौ अश्विनौ vसुते सोमे अभिषुते सति vमधु मनोहरं vभेषजम् ओषधम् vअधाताम् धारितवन्तौ ॥३॥

---

आ॒जुह्वा॑ना॒ सर॑स्व॒तीन्द्रा॑येन्द्रि॒याणि॑ वी॒र्य॑म् ।
इळा॑भिर॒श्विना॒ इष॑ꣳ स॒मूर्ज॒ꣳ सꣳ र॒यिं द॑धुः ॥४॥

---

आ॒जु॒ह्वा॒नेत्या॒ऽजुह्वा॑ना । सर॑स्वती । इन्द्रा॑य । इ॒न्द्रि॒याणि॑ । वी॒र्य॑म् ।
इळा॑भिः । अ॒श्विना । इष॑म् । सम् । ऊर्ज॑म् । सम् । र॒यिम् । द॒धुः । खीं ॥४॥

---

9. S3 पाठस्तु– इन्द्रायेन्दुं ... सुत इति for इन्द्रायेन्दुमिति; S3 om. सरस्वती
11. S3 आधत्ताम् for अधत्ताम्

आ– ‘ आजुह्वाना सरस्वती ’ इति । [v]आजुह्वाना आह्वयन्ती [v]सरस्वती [v]इन्द्रियाणि चक्षुरादीनि [v]वीर्यं वीरकर्म च । [v]इळाभिः यज्ञियाभिः वाग्भिः [v]अश्विना अश्विनौ चेति तिस्रो देवताः [v]इषम् अन्नम् [v]ऊर्जम् अन्नरसं [v]रयिं धनं च [v]इन्द्राय [v]संदधुः, इन्द्रियाणि स्थापितवन्त्यः ॥४३॥

---

अ– ‘ आजुह्वाना सरस्वती ’। आह्वयत इति [v]आजुह्वाना । अर्थादिन्द्रमाह्वयन्ती [v]सरस्वती [v]अश्विनौ च एते [v]इन्द्राय [v]इन्द्रियाणि चक्षुरादीनि [v]संदधुः । [v]वीर्यं सामर्थ्यं च संदधुः । किं च– [v]इळाभिः पशुभिः । “ पशवो वा इळा ” ( शब्रा ७.५.१.२७ ) इति श्रुतेः । यद्वा– इळाभिः स्तुत्यादिभिर्वाग्भिः सह [v]इषम् अन्नम् [v]ऊर्जं बलहेतुं [v]रयिं दध्यादिरूपं धनं च प्रत्येकं संदधुः ॥४॥

---

अश्विना नमुचेः सुतꣳ सोमꣳ शुक्रं परिस्रुता ।
सरस्वती तमा भरद्बर्हिषेन्द्राय पातवे ॥५॥

---

अश्विना । नमुचेः । सुतम् । सोमम् । शुक्रम् । परिस्रुतेति परिऽस्रुता ।
सरस्वती । तम् । आ । अभरत् । बर्हिषा । इन्द्राय । पातवे ॥ कीम् ॥५॥

---

आ– ‘ अश्विना नमुचेः ’ इति । [v]अश्विना अश्विनौ [v]परिस्रुता ज्ञानात्मिका [v]सरस्वती च [v]तं [v]सुतम् अभिषुतं [v]सोमं [v]शुक्रं शुद्धम् अमलिनं [v]नमुचेः सकाशात् [v]आभरत् आहरत्, अश्विनौ च आहरताम् । ‘ बर्हिषा इन्द्राय ’ । आस्तरणार्थेन [v]बर्हिषा उपलक्षिते यज्ञे [v]इन्द्राय [v]पातवे पातुम् इन्द्रस्य सोमपानार्थमिति ॥४४॥

---

अ– ‘ अश्विना नमुचेः ’। [v]अश्विना अश्विनौ [v]परिस्रुता सुरया सह [v]सुतम् अभिषुतं [v]शुक्रं शुद्धं [v]सोमं [v]नमुचेः असुरात् सकाशात् [v]आभरत् आहरताम् । वचनव्यत्ययः । “ हृग्रहोर्भश्छन्दसि ” ( पा ८.२.३२ वा १ ) इति भत्वम् । तथा [v]सरस्वती अपि । [v]तं सोमं [v]बर्हिषा आस्तरणार्थेन सह [v]इन्द्राय इन्द्रस्य [v]पातवे पानार्थम् आभरत् आहरत् । तुमर्थे तवेप्रत्ययः ॥५॥

---

1. S3 पाठस्तु– आजुह्वाना ... दधुरिति for आजुह्वाना सरस्वती
7. M4 om. पशुभिः
13. S5 अश्विना ... पातव इति for अश्विना नमुचेरिति
15. S3 om. आभरत्

आप्रियः, त्रिपशोः प्रयाजयाज्याश्च ]

कवष्यो न व्यचस्वतीरश्विभ्यां न दुरो दिशः ।
इन्द्रो न रोदसी उभे दुहे कामान् सरस्वती ॥६॥

---

कवष्यः । न । व्यचस्वतीः । आश्विभ्यामित्यश्विऽभ्याम् । न । दुरः । दिशः ।
इन्द्रः । न । रोदसी इति रोदसी । उभे इत्युभे । दुहे । कामान् । सरस्वती ॥ ण्युम् ॥६॥

---

आ– ‘ कवष्यो न ’ इति । [v]कवष्यः यज्ञगृहद्वार उच्यन्ते । समुच्चयार्थो नकारः । [v]व्यचस्वतीः । सस्रुताश्च व्यञ्जनवत्यः कवष्यः [v]दुरः । छान्दसं संप्रसारणम् । द्वारः । [v]दिशः । द्वारा हि दिशो लक्ष्यन्ते । ‘ इन्द्रः न ’ । [v]इन्द्रः च यासु द्वार्षु व्यवस्थितः [v]रोदसी द्यावापृथिव्यौ [v]उभे अपि इन्द्राय यज्ञगृहद्वारश्च यजमानस्य [v]कामान् काम्यमानार्थान् [v]सरस्वती [v]दुहे दोहनं कृतवती । दुदुहुश्च ॥४५॥

---

अ– ‘ कवष्यः न ’ । अस्यामृचि त्रयो नकाराश्चकारार्थाः । [v]अश्विभ्यां सहिता [v]सरस्वती च । [v]इन्द्रः [v]न इन्द्रश्चैते [v]उभे [v]रोदसी द्यावापृथिव्यौ । [v]कामान् [v]दुहे दुहन्ति । द्विकर्मकोऽयम् । “ दुहियाचिरुधिप्रच्छि° ” ( पा १·४·५१ कारिका ) वचनात् । ‘ यो दुदोह धरामन्नम् ’ इतिवत् । द्यावापृथिवीभ्यां सकाशात् [v]कामान् दुहन्तीत्यर्थः । तथा त एव [v]दुरः द्वारः [v]दिशः च [v]कामान् दुहे दुहन्ति । “ अकथितं च ” ( पा १.४.५१ ) इति द्वारां दिशां रोदस्योश्च कर्मत्वम् । कीदृशीर्द्वारः ? [v]कवष्यः कवषीः । कुष निष्कर्षे । कुषिताः सच्छिद्राः । [v]व्यचस्वतीः । [v]व्यचनं व्यचः अवकाशस्तद्वत्यस्ताः । यद्वा– अश्वादित्रयः दुरो दिशः इन्द्रश्च द्यावापृथिवीभ्यां कामान् दुहन्तीति योजना ॥६॥

---

उषासानक्तमश्विना दिवेन्द्रं सायमिन्द्रियैः ।
संजानाने सुपेशसा समञ्जाते सरस्वत्या ॥७॥

---

उषासानक्तम् । उषसानक्तमित्युषसानक्तम् । अश्विना ।
दिवा । इन्द्रम् । सायम् । इन्द्रियैः ।
संजानाने इति समऽजानाने । सुपेशसेति सुऽपेशसा ।
सम् । अञ्जाते इत्यञ्जाते । सरस्वत्या ॥ तिं ॥ ७ ॥।

---

5. S5 पाठस्तु कवष्यो ... सरस्वतीति for कवष्यो न
10. P2 om. सहिता
12. M4 इति वचनात् for इतिवत्

**आ**– ' उषासानक्तम् ' इति । [v]उषासानक्तम् उषः प्रभातं नक्तं रात्रिः, ते प्रभातरात्री अश्विनौ [v]संजानाने एकमतीभूते ते [v]समञ्जाते । अञ्जु म्रक्षणकान्तिगतिषु । व्यक्तीकुरुताम् । [v]दिवा [v]इन्द्रं [v]सायम् [v]इन्द्रियैः वीर्यैः [v]सुपेशसा शोभनरूपेण, शुक्लेन उषासः, कृष्णेन रात्रिः । एते [v]सरस्वत्या सह इन्द्रं देवं सायं चेत्येते समञ्जाते ॥४६॥

---

**अ**– ' उषासानक्तमश्विना ' । हे [v]अश्विना अश्विनौ, [v]उषासानक्तम् । उषासा रविप्रभा । नक्तं रात्रिः । तयोः समाहारः । अव्ययं वा । दीर्घश्छान्दसः । दिवारात्र्यौ । [v]सरस्वत्या सह । [v]दिवा दिवसे [v]सायं सायंकाले च । [v]इन्द्रम् [v]इन्द्रियैः वीर्यैः सह [v]समञ्जाते संयोजयतः । अञ्जु व्यक्ति-म्रक्षणकान्तिगतिष्विति धातुः । कीदृश्येते ? [v]संजानाने । सम्यग् जानात इति संजानाने ज्ञानवत्यौ । सुशोभनं पेशो रूपं ययोस्ते [v]सुपेशसा सुपेशसौ, दिवारात्र्यौः शुक्लकृष्णरूपत्वात् ।।७॥

---

पातं नो अश्विना दिवा पाहि नक्तꣳ सरस्वति ।
दैव्या होतारा भिषजा पातमिन्द्रꣳ सचा सुते ।।८।।

---

पातम् । नः । अश्विना । दिवा । पाहि । नक्तम् । सरस्वति ।
दैव्या । होतारा । भिषजा । पातम् । इन्द्रम् । सचा । सुते ॥ शम् ॥ ८ ॥

---

**आ**– ' पातं नः ' इति । हे [v]अश्विना अश्विनौ, [v]नः अस्मान् [v]दिवा अहनि [v]पातं पालयतम् । ' पाहि नक्तं सरस्वति ' । [v]सरस्वति, [v]नक्तं रात्रौ नः अस्मान् [v]पाहि पालय । [v]दैव्या [v]होतारा [v]भिषजा । हे देव्यौ होतारौ भिषजौ युवाम् [v]इन्द्रं [v]पातम् । [v]सचा [v]सुते । सह सोमे सुते अभिषुते सति नः पातामिति संबन्धः ॥४७॥

---

**अ**– ' पातं नः ' । हे [v]अश्विना, अश्विनौ युवां [v]दिवा दिवसे [v]नः अस्मान् [v]पातं रक्षतम् । पा रक्षणे । हे [v]सरस्वति, त्वं तु [v]नक्तं रात्रौ [v]नः [v]पाहि रक्ष । पुनरश्विसंबोधनम् । हे देव्यौ होतारौ आकारश्छान्दसः । भिषजौ अश्विनौ [v]सुते सोमे अभिषुते सति [v]सचा सह एकीभूय युवाम् [v]इन्द्रं [v]पातम् रक्षतम् ॥८॥

---

तिस्रस्त्रेधा सरस्वत्यश्विना भारतीळा ।
तीव्रं परिस्रुता सोममिन्द्राय सुषुवुर्मदम् ।।९।।

---

1. S3 पाठस्तु– उषासानक्तम् ... सरस्वत्येति for उषासानक्तमिति
14. S3 पाठस्तु – पातं नो ... सुत इति for पातं न इति

आप्रियः, त्रिपशोः प्रयाजयाज्याश्च ]

तिस्रः । त्रेधा । सरस्वती । अश्विना । भारती । इळा ।
तीव्रम् । परिस्रुतेति परिऽस्रुता । सोमम् ।
इन्द्राय । सुषुवुः । सुसुवुरिति सुसुवुः । मदम् ॥ छिम् ॥ ९ ॥

आ– ' तिस्रस्त्रेधा सरस्वती ' इति । ' अश्विना भारती इळा ' इति । vतिस्रः देव्यः vसरस्वती च मध्यस्थाना vभारती आदित्यप्रभा द्युस्थाना vइळा पृथिवीस्थाना एतास्त्रिषु स्थानेषु स्थिताः अश्विनौ च vतीव्रं गन्धादिभिस्तीव्रं vपरिस्रुता परिस्रुतं vसोमम् vइन्द्राय । मदिरत्र तर्पणार्थः । vमदं तर्पणं vसुषुवुः अभिषवं चक्रुः ॥६॥ ॥४८॥

अ– ' तिस्रस्त्रेधा ' । vसरस्वती vभारती vइळा चेति vत्रेधा त्रिप्रकारेण स्थिताः vतिस्रः देव्यः । vअश्विना अश्विनौ च एते । परिस्रवतीति परिस्रुत् सुरा । तया सह vसोमम् vइन्द्राय vसुषुवुः अभिषुतवन्तः । सरस्वती मध्यलोकस्था । भारती द्युस्था । इळा पृथिवीस्थेति विशेषः । कीदृशं सोमम्? vतीव्रं कटुत्वकरम् । vमदं मदजनकम् ॥६॥

अश्विना भेषजं मधु भेषजं नः सरस्वती ।
इन्द्रे त्वष्टा यशः श्रियꣳ रूपꣳ रूपमधुः सुते ॥१०॥

अश्विना । भेषजम् । मधु । भेषजम् । नः । सरस्वती ।
इन्द्रे । त्वष्टा । यशः । श्रियम् । रूपꣳरूपमिति रूपम्ऽरूपम् । अधुः । सुते ॥ गीम् ॥१०॥

आ– ' अश्विना भेषजम् ' इति । ' अधु 'रित्यस्य परिणामः, वर्णलोपश्छान्दसः । दधुरिति । अश्विनौ vसरस्वती vत्वष्टा च प्रयाजदेवताः । vअश्विना अश्विनौ vनः अस्मत्संबन्धिनी सरस्वती त्वष्टा च vभेषजम् औषधम् । कथंभूतमौषधम्? vमधु vभेषजम् मधुरूपं भेषजम् । vयशः कीर्तिः । vश्रियं धनादिसंपदं vरूपꣳरूपम् अतिसुरूपतां च vसुते अभिषुते सोमे सति vइन्द्रे दधुः स्थापनं कुर्युः ॥४६॥

4. S3 पाठस्तु – तिस्रस्त्रेधा ... मदमिति for तिस्रस्त्रेधा सरस्वतीति
6. V2 स्रुतं for स्रुतं
9. V2 °सुता for °स्रुता; M4 °स्रुत् for °स्रुत्
10. P2 M4 इडा for इळा
16. S3 पाठस्तु – अश्विना° ... सुत इति for अश्विना भेषजामिति

[ आप्रियः, त्रिपशोः प्रयाजयाज्याश्च

अ- 'अश्विना भेषजम्'। vअश्विना अश्विनौ vसरस्वती vत्वष्टा प्रयाजदेवाः। एते vसुते सोमे अभिषुते सति vइन्द्रे एतानि वक्ष्यमाणवस्तूनि vअधुः स्थापितवन्तः। दधातेर्लुङ्। कानीत्यत आह। vभेषजम् औषधं vमधु मधुरूपं vभेषजम्। vयशः कीर्तिम्। vश्रियं राज्यलक्ष्मीम्। vरूपंरूपम् नानाविधरूपं च। "नित्यवीप्सयोः" ( पा ८.१.४ ) इति रूपशब्दस्य द्वित्वम् ॥९॥

---

ऋ॒तु॒थेन्द्रो॒ वन॒स्पतिः॑ शशमा॒नः प॑रि॒स्रुता॑ ।
की॒ला॒लम॒श्विभ्यां॒ मधु॑ दु॒हे धे॒नुः सर॑स्वती ।।११।।

---

ऋ॒तु॒थेत्यृ॑तुऽथा । इन्द्रः॑ । वन॒स्पतिः॑ । श॒श॒मा॒नः । प॒रि॒स्रु॒तेति॑ प॒रि॒ऽस्रुता॑ ।
की॒ला॒लम् । अ॒श्विभ्या॒मित्य॒श्विऽभ्या॑म् । मधु॑ । दु॒हे । धे॒नुः । सर॑स्वती ॥ढाम्॥११॥

---

आ- 'ऋतुथेन्द्रः' इति। vऋतुथा। ऋतौ ऋतौ काले काले। vइन्द्रः इत्यत्र व्यत्ययः। इन्द्राय। vवनस्पतिः वनस्पतिधर्मयुक्तो यजमानः नाना आख्याभिर्बहुलीकृतः। vशशमानः इत्यर्चतिकर्मसु पठितः ( निघण्टु ३·१४ )। अर्चयन् स्तुवन्। vपरिस्रुता या vधेनुः तां धेनुम्। vकीलालम् अन्नरसम्। vअश्विभ्यां साहिता सरस्वतीलक्षणा या धेनुस्तां सरस्वतीम्। vमधु अमृतम् इन्द्राय vदुहे दोग्धि इति ॥५०॥

---

अ- 'ऋतुथेन्द्रः'। vवनस्पतिः प्रयाजदेवः। vशशमानः। अर्चतिकर्मसु पठितत्वात् अर्चयन् स्तुवन् सन्। vऋतुथा। ऋतौ ऋतौ काले काले। ऋतुशब्दाद्विभक्त्यर्थे थाल्प्रत्ययः। vपरिस्रुता सुरया सह vकीलालम् अन्नरसम्। vइन्द्रः इन्द्राय इन्द्रार्थं vदुहे दुग्धे। "सुपां सुलुक्°" (पा ७.१.३९) इत्यादिना चतुर्थ्येकवचनस्य सु-आदेशे इन्द्र इति। "लोपस्त आत्मनेपदेषु" ( पा ७·१·४१ ) इति तलोपे दुहे इति रूपम्। किं च। vसरस्वती vअश्विभ्यां सहिता सती vधेनुः भूत्वा इन्द्राय vमधु दुहे दुग्धे ॥११॥

---

गोभि॒र्न सोम॑मश्वि॒ना मास॑रेण परि॒स्रुता॑ ।
सम॑धात॒ꣳ सर॑स्वत्या॒ स्वाहेन्द्रे॑ सु॒तं मधु॑ ॥१२॥(६)॥

---

9. S3 पाठस्तु – ऋतुथेन्द्रो ... सरस्वतीति for ऋतुथेन्द्रः इति

10. S2 om. वनस्पति° ...

15. V2 रुतुथा। रुतौरुतौ for ऋतुथा। ऋतौ ऋतौ।; M4 °स्रुता for °स्रुता

गोभिः । न । सोमम् । अश्विना । मासरेण । परिस्रुतेति परिऽस्रुता ।
सम् । अधातम् । सरस्वत्या । स्वाहा । इन्द्रे । सुतम् । मधु ॥ कीम् ॥१२॥(६)॥

---

आ– ' गोभिर्न ' इति । गोप्रभृतिभिः पशुभिश्च vसोमम् । कथंभूतम् ? vमासरेण मासरवर्णेन vपरिस्रुता परिस्रवणकर्त्र्या vसरस्वत्या vसुतम् अभिषुतं vमधु मधुररसोपेतं सोमम् । सरस्वत्या सह अश्विनौ, vस्वाहा स्वाहाकृतिभिः प्रयाजेन सार्धम् vइन्द्रे vसमधातं स्थापितवन्तौ भवथ । इन्द्रे मधु च कृतमिति संबन्धः ॥५१॥

---

अ– 'गोभिर्न' । हे vअश्विना अश्विनौ । vमासरेण vपरिस्रुता च सह vगोभिः vन । नश्चार्थः । गोप्रभृतिपशुभिश्च सह vसुतम् अभिषुतं vसोमं vमधु च vइन्द्रे युवां vसमधातम् आरोपयतम् । संपूर्वात् दधातेर्लुङि मध्यमद्विवचनम् । तथा– हे vस्वाहा, नामैकदेशे नाम्नो ग्रहणमितिवचनात् स्वाहाकृतयः प्रयाजदेवाः, यूयं vसरस्वत्या सह इन्द्रे सुतं सोमं मधु च समधातेति वचनव्यत्ययः ॥ १२ ॥

इति द्वाविंशे षष्ठोऽनुवाकः ॥६॥

---

## [ अथ सप्तमोऽनुवाकः । ]

अश्विना हविरिन्द्रियं नमुचेर्धिया सरस्वती ।
आ शुक्रमासुराद्वसु मघमिन्द्राय जभ्रिरे ॥१॥

---

अश्विना । हविः । इन्द्रियम् । नमुचेः । धिया । सरस्वती ।
आ । शुक्रम् । आसुरात् । वसु । मघम् । इन्द्राय । जभ्रिरे ॥ षीम् ॥ १ ॥

---

आ– ' अश्विना हविः ' इति । तिस्रोऽनुष्टुभः । एकैका अश्विसरस्वतीन्द्रदेवत्या । ' अश्विना हविरिन्द्रियम् ' । vइन्द्रियं वीर्यं vशुक्रं रोहितादिदोषरहितं vवसु धनहेतुभूतं vमघं धनात्मकं देवानां धनम् एवंगुणविशिष्टं vहविः, अश्विनौ च vसरस्वती च vधिया आहरणप्रकारं निश्चित्य vइन्द्राय इन्द्रार्थं vनमुचेः नमुचिनाम्नः vआसुरात् असुरपुत्रात् नमुचेर्यथोक्तगुणविशिष्टं, हविः vआजभ्रिरे । भकारश्छान्दसः । जह्रिरे । अश्विसरस्वत्यः पुनराहरणं कृतवत्यः ॥५२॥

---

3. S3 पाठस्तु – गोभिर्न ... मश्विति for गोभिर्न इति
18. S3 पाठस्तु – अश्विना ... जभ्रिर इति for अश्विना हविरिति

अ– कात्यायनः – " अश्विना हविरिति तिस्रो वपानां याज्यानुवाक्याः । प्रथमामनूच्य द्वितीया याज्या । द्वितीयामनूच्य तृतीया याज्या । तृतीयामनूच्य प्रथमा याज्या " ( काश्रौ १९.६.१६ ) इति । 'अश्विना' इत्याद्यास्तिस्रः तिसृणां वपानां क्रमाद् याज्यापुरोऽनुवाक्याः । तत्प्रकारमाह– आश्विनवपायागे 'अश्विना' इत्यनुवाक्या, 'यमश्विना' इति याज्या। सारस्वतवपायागे 'यमश्विना' इत्यनुवाक्या, 'तमिन्द्रम्' इति याज्या। ऐन्द्रवपायागे 'तमिन्द्रम्' इति अनुवाक्या, 'अश्विना' इति याज्येति सूत्रार्थः ॥

'अश्विना हविः'। अश्विसरस्वतीन्द्रदेवत्यास्तिस्रोऽनुष्टुभः । अश्विना अश्विनौ । सरस्वती चैते। धिया बुद्ध्या कृत्वा नमुचेः नमुचिसंज्ञात् आसुरात् दैत्यात् । इन्द्राय इन्द्रार्थम् । एतानि वक्ष्यमाणवस्तूनि आजभ्रिरे आजह्रिरे आनीतवन्तः । " हृग्रहोर्भश्छन्दसि " ( पा. ३.१.८४ वा. ) इति हस्य भत्वम् । कानीत्यत आह । शुक्रम् शुद्धं हविः इन्द्रियं वीर्यम् । मघं महनीयं वसु धनं चेत्येतानि ॥१॥

---

**यम॒श्विना॒ सर॑स्वती ह॒विषेन्द्र॑मव॑र्धयन् ।**
**स बि॑भेद व॒लं म॒घं नमु॑चा आसु॒रे सचा॑ ॥२॥**

---

यम् । अ॒श्विना॑ । सर॑स्वती । ह॒विषा॑ । इन्द्र॑म् । अव॑र्धयन् ।
सः । बि॒भे॒द् । व॒लम् । म॒घम् । नमु॑चौ । आ॒सु॒रे । सचा॑ ॥ श्रीं ॥२॥

---

आ– 'यमश्विना' इति । यम् इन्द्रम् अश्विना आश्विनौ सरस्वती च हविषा यम् अवर्धयन् सः इन्द्रः बिभेद । " वलं मघं नमुचा आसुरे सचा " इति । सचाशब्दः सहवचनः । नमुचा इत्यत्र व्यत्ययः । हिंसार्थस्य वृणोतेः रूपं वलम् इति । मघमिति कैतवे । स इन्द्र आसुरेण नमुचिना सह मघं कितवलक्षणं परहिंसकं वलं च बिभेद । भिदिर् विदारणे । विदारितवान् लोकरक्षार्थमिति शेषः ॥५३॥

---

अ– 'यमश्विना' । अश्विना अश्विनौ । सरस्वती च एते हविषा कृत्वा यम् इन्द्रम् अवर्धयन् । यद्वृत्तयोगादाख्यातमिदमाद्युदात्तम् । सः इन्द्रः । नमुचौ आसुरे सचा । विभक्तिव्यत्ययः । नमुचिनाऽसुरेण सह मघं महनीयं वलम् । बवयोरभेदाद्बलम् । वलनामकं दैत्यान्तरं वा मेघं वा बिभेद विदारितवान् । सचा इत्यव्ययं सहार्थे । " वृणोतेर्वलः " ( निरुक्त ६.१ ) इति यास्कः ॥२॥

---

16. S3 पाठस्तु – यमश्विना ... सचेति for यमश्विना इति
18. V2 मघि for मघमिति
19. S3 असुरेण for आसुरेण

वपानां याज्यानुवाक्याः ]

तमि॑न्द्रं॑ पुशव॒ः सचा॒ऽश्विनो॒भा सर॑स्वती ।

दधा॑ना अ॒भ्य॑नूषत ह॒विषा॑ य॒ज्ञ इ॑न्द्रि॒यैः ।।३।।

तम् । इन्द्र॑म् । पु॒शव॑ः । सचा॑ । अ॒श्विना॑ । उ॒भा । सर॑स्वती ।

दधा॑नाः । अ॒भि । अ॒नू॒ष॒त॒ । ह॒विषा॑ । य॒ज्ञे । इ॒न्द्रि॒यैः ॥ खिम् ॥३॥

आ– ‘ तमिन्द्रम् ’ इति । $^{v}$तं पूर्वमन्त्रोक्तम् $^{v}$इन्द्रं $^{v}$पशवः क्रत्वङ्गभूताः गोमेषाजाः $^{v}$सचा सहभूताः $^{v}$अश्विना अश्विनौ $^{v}$उभा उभौ $^{v}$सरस्वती च $^{v}$दधानाः स्वयं पोषिकाः सत्यः $^{v}$यज्ञे $^{v}$इन्द्रियैः इन्द्रार्हैः $^{v}$हविषा हाविर्भिः $^{v}$अभ्यनूषत । अनूषतिः वृद्ध्यर्थः । इन्द्रमभिवर्धयन्ति ॥४॥

अ– ‘ तमिन्द्रं पशवः ’। कर्माङ्गभूताः गोमेषाजाः $^{v}$उभा $^{v}$अश्विना उभौ अश्विनौ $^{v}$सरस्वती च एते सर्वे $^{v}$सचा एकीभूय $^{v}$यज्ञे $^{v}$हविषा $^{v}$इन्द्रियैः वीर्यैः च । “ इन्द्रियं वीर्यम् ” ( शब्रा ३.९.१.१९ ) इति श्रुतेः । इन्द्रं $^{v}$दधानाः पुष्णन्तः सन्तः $^{v}$अभ्यनूषत अवर्धयन्, अस्तुवन् वा । नू स्तवने । अनूषतिर्वृद्ध्यर्थे इत्युक्तेः ॥३॥

य इन्द्र॑ इन्द्रि॒यं द॒धुः स॑वि॒ता वरु॑णो॒ भगः॑ ।

स सु॒त्रामा॑ ह॒विष्प॑ति॒र्यज॑मानाय सश्चत ।।४।।

ये । इन्द्रे॑ । इ॒न्द्रि॒यम् । द॒धुः । स॒वि॒ता । वरु॑णः । भगः॑ ।

सः । सु॒त्रामेति॑ सु॒ऽत्रामा॑ । ह॒विष्प॑तिः । ह॒विःप॑ति॒रिति॑ ह॒विःऽप॑ति ।

यज॑मानाय । स॒श्च॒त ॥ त्रिम् ॥४॥

5. V2 त्वं पूर्वमन्त्रोक्त इन्द्रः for तं पूर्वमन्त्रोक्तामिन्द्रं

9. S3 पाठस्तु – तमिन्द्रं … इन्द्रियैरिति for तमिन्द्रं पशवः

10. M4 वश्यैश्च for वीर्यैश्च

11. M4 पृच्छन्तः for पुष्णन्तः

आ– 'य इन्द्र' इति। तिस्रोऽनुष्टुभः। इन्द्रसवितृवरुणदेवत्याः पशुपुरोडाशानां याज्यानुवाक्याः सर्वाः। Vये Vसविता Vवरुणः च, Vसः Vसुत्रामा च Vहविष्पतिः हविषां पतिः Vभगः सूर्यश्चेति। ये Vइन्द्रे Vइन्द्रियं सामर्थ्यं Vदधुः स्थापितवन्तः, ते देवाः Vयजमानाय इन्द्रियं Vसश्चत। सश्चतिः सेवाकर्मा। यजमानं सेवध्वम् ॥५५॥

---

अ– कात्यायनः – "य इन्द्र इति पुरोडाशानां पूर्ववत्" ( काश्रौ १९·६·१८ )। 'य इन्द्रे' इति तिसृस्त्रयाणां पुरोडाशानां याज्यानुवाक्याः पूर्ववत्। 'य इन्द्रे' 'सविता वरुणः' इत्यैन्द्रस्यानुवाक्या-याज्ये। 'सविता वरुणः'। 'वरुणः क्षत्रम्' इति सावित्रस्य ते। 'वरुणः क्षत्रम्' 'य इन्द्रे' इति वारुणस्य ते, इति सूत्रार्थः॥

'य इन्द्रे'। प्रत्येकमिन्द्रसवितृवरुणदेवत्यास्तिस्रोऽनुष्टुभः। Vसविता Vवरुणः Vभगः च, Vये Vइन्द्रे Vइन्द्रियं वीर्यं Vदधुः स्थापितवन्तः, हे सवित्रादयः, Vसः इन्द्रश्च Vयजमानाय। कर्मणि चतुर्थी। यजमानं Vसश्चत सेवन्ताम्। इष्टार्थदानेन यजमानं सुखयन्त्वित्यर्थः। षच सेवने अस्माल्लोडर्थे लङ्। अडभाव आर्षः। यद्वा– सवित्रादयो ये यस्मिन् इन्द्रे इन्द्रियं दधुः, स इन्द्रः इन्द्र इति योजना। "सुपां सुलुक्°" ( पा ७·१·३९ ) इति विभक्तिवचनव्यत्ययः। कीदृश इन्द्रः? Vहविष्पतिः हविषां स्वामी। Vसुत्रामा शोभनत्राणकरः। छत्रिन्यायेन सवित्रादीनामपि विशेषणत्वेन योज्यम् ॥४॥

---

सविता वरुणो दधद्यजमानाय दाशुषे।
आदत्त नमुचेर्वसु सुत्रामा बलमिन्द्रियम् ॥५॥

---

सविता। वरुणः। दधत्। यजमानाय। दाशुषे।
आ। अदत्त। नमुचेः। वसु। सुत्रामेति सुऽत्रामा। बलम्। इन्द्रियम्॥ खिम् ॥५॥

---

आ– 'सविता वरुणो दधत्' इति। यः Vसुत्रामा Vनमुचेः सकाशात् Vवसु धनं Vबलं च Vइन्द्रियं वीर्यं च Vआदत्त आदानं कृतवान्, सः सुत्रामा Vसविता Vवरुणः चेत्यादयः पशुपुरोडाशदेवताः Vयजमानाय Vदाशुषे दानशीलाय हवींषि दत्तवते यजमानाय वसु धनं बलम् इन्द्रियं च Vदधत् दधातु ददतु ॥५६॥

---

1. S3 पाठस्तु – य इन्द्र इन्द्रियं ... सश्चतेति for य इन्द्र इति।
2. S3 om. सः
6. P2 पुरोळाशानां for पुरोडाशानां
19. S3 पाठस्तु – सविताः ... इन्द्रियमिति for सविता वरुणो दधदिति

पशुपुरोडाशानां याज्यानुवाक्याः ]

अ– ' सविता वरुणः '। सुत्रामा इन्द्रः नमुचेः सकाशात् यत् वसु धनं बलम् इन्द्रियं वीर्यं च आ अदत्त जग्राह, तद्वस्वादिकं सविता वरुणः भगः सुत्रामा च प्रत्येकं यजमानाय दधत् दधातु ददात्वित्यर्थः। आद्युदात्तत्वेनाख्यातत्वासंभवाच्छत्रन्तो वा। दधत् धारयमाणो भवत्विति शेषः। प्रथमपक्षे छान्दसत्वात् साधुत्वम्। कीदृशाय यजमानाय? दाशुषे। दाशति ददातीति दाश्वान्। तस्मै हवींषि दत्तवते। दाशृ दाने। अस्य " दाश्वान् साह्वान् मीढ्वांश्च " ( पा ६·१·१२ ) इति क्वसुन्तो निपातः ॥५॥

---

वरुणः क्षत्रमिन्द्रियं भगेन सविता श्रियम्।
सुत्रामा यशसा बलं दधाना यज्ञमाशत ॥६॥

---

वरुणः। क्षत्रम्। इन्द्रियम्। भगेन। सविता। श्रियम्।
सुत्रामेति सुऽत्रामा। यशसा। बलम्। दधानाः। यज्ञम्। आशत ॥ खिम् ॥६॥

---

आ– ' वरुणः क्षत्रम् ' इति। वरुणः भगेन ऐश्वर्यादिना सह क्षत्रं क्षतात् त्राणलक्षणं धर्मम्, इन्द्रियं सामर्थ्यं च दधानः धारयन् आशत व्याप्नोति। सविता श्रियं दधानः, सुत्रामा च यशसा कीर्त्या च सह बलं दधानः यज्ञम् आशत। विभागेन व्यत्ययः। आष्ट व्याप्नोतु। यद्वा– एते त्रयो देवाः आशत व्याप्नुवन्तु। यद्वा– वरुणः सविता सुत्रामा त्रयो देवाः क्षत्रम् इन्द्रियम् श्रियं बलं भगेन यशसा च सह दधानाः धारयन्तः यज्ञम् आशत ॥७॥

---

अ– ' वरुणः क्षत्रम् '। वरुणः सविता सुत्रामा इन्द्रश्चैते यज्ञं सौत्रामण्याख्यम् आशत भक्षितवन्तः व्याप्तवन्तो वा। अश भोजने। अशूङ् व्याप्तौ वा। उभयोर्विकरणव्यत्ययः। कीदृशास्ते? क्षत्रं क्षतत्राणसामर्थ्यम् इन्द्रियं वीर्यं भगेन भाग्येन सह श्रियं लक्ष्मीं यशसा सह बलं च दधानाः यजमाने स्थापयन्तः। तत्र वरुणः क्षत्रमिन्द्रियं च दधाति। सविता भगं श्रियं च दधाति। सुत्रामा यशो बलं च दधातीति विभागः। वरुणः " क्षत्रं क्षत्रपतिर्दधातु " इत्यादिश्रुतिसिद्धत्वात् ॥६॥

---

अश्विना गोभिरिन्द्रियमश्वेभिर्वीर्यं बलम्।
हविषेन्द्रꣳ सरस्वती यजमानमवर्धयन् ॥७॥

---

10. S3 पाठस्तु – वरुणः ... आशतेति for वरुण क्षत्रमिति
18. M4 om. श्रियं लक्ष्मी ... भगं [ L 18–19 ]

अश्विना । गोभिः । इन्द्रियम् । अश्वेभिः । वीर्यम् । बलम् ।
हविषा । इन्द्रम् । सरस्वती । यजमानम् । अवर्धयन् ॥ ष्याम् ॥७॥

---

आ– 'अश्विना गोभिः' इति । तिस्रोऽनुष्टुभः हविषां याज्यानुवाक्याः अश्विसरस्वतीन्द्रदेवत्याः । vअश्विना अश्विनौ vसरस्वती च vगोभिः vअश्वेभिः च अश्वैश्च दक्षिणाभिः vइन्द्रियं vवीर्यं vबलम् । अत्र व्यत्ययः । इन्द्राहमिन्द्रियम् । इन्द्रियेण वीर्येण बलेन, vहविषा च vइन्द्रं vयजमानं च vअवर्धयन् ॥७॥

---

अ– कात्यायनः – "अश्विना गोभिरिति च हविषाम्" ( काश्रौ १९.६.१९ ) । 'अश्विना गोभिः' इति तिस्रो हविषां याज्यानुवाक्याः । चात् पूर्ववत् । 'अश्विना गोभिः', 'ता नासत्या' इत्याश्विनपशुयागेऽनुवाक्यायाज्ये । 'ता नासत्या' ता भिषजा' इति सारस्वते । 'ता भिषजा' 'अश्विना गोभिः' इत्यैन्द्रे, इति सूत्रार्थः ।

'अश्विना गोभिः' । अश्विसरस्वतीन्द्रदेवत्यास्तिस्रोऽनुष्टुभः । vअश्विना अश्विनौ vसरस्वती च एते वक्ष्यमाणपदार्थैः vइन्द्रं vयजमानम् vअवर्धयन् । कैरित्यत आह– vगोभिः गोप्रभृतिपशुभिः vइन्द्रियम् । विभक्तिव्यत्ययः । इन्द्रियेण वीर्येण । vअश्वेभिः अश्वैः दक्षिणादिरूपैः । vवीर्यं vबलम् । पूर्ववत् । वीर्येण प्रतापेन । बलेन शरीरदार्ढ्येन । vहविषा पशुपुरोडाशादिना चेत्येभिः । यद्वा– अश्वादयो देवाः गोप्रभृतिपदार्थैर्यजमानमिन्द्रं चावर्धयन्निति योजना । तत्पक्षे इन्द्रियस्य वर्धनं तृप्तिः । यजमानवर्धनं धनपुत्रपश्वादिपोषणम् ॥७॥

---

ता नासत्या सुपेशसा हिरण्यवर्तनी नरा ।
सरस्वती हविष्मतीन्द्र कर्मसु नोऽवत ॥८॥

---

ता । नासत्या । सुपेशसेति सुऽपेशसा । हिरण्यवर्तनी इति हिरण्यऽवर्तनी । नरा ।
सरस्वती । हविष्मती । इन्द्र । कर्मस्विति कर्मऽसु । नः । अवत ॥ ठाम् ॥८॥

---

3. S3 पाठस्तु – अश्विना ... अवर्धयन् इति for अश्विना गोभिरिति
5. S3 om. इन्द्रियम्

हविषां याज्यानुवाक्याः ]

आ– ' ता नासत्या ' इति । vता तौ vनासत्या नासत्यौ vसुपेशसा सुपेशसौ शोभनसुवर्णालंकारयुक्तौ vहिरण्यवर्तनी हिरण्यदानोपलक्षितपन्थानौ vनरा नराकारौ अश्विनौ vसरस्वती vहविष्मती हविःसंयुक्ता सरस्वती च vकर्मसु वर्तमानान् vनः अस्मान् vअवत । अत्र पुरुषव्यत्ययः । अवन्तु । हे vइन्द्र नः अस्मानव । अवेति वचनव्यत्ययः । रक्ष ॥५६॥

अ– 'ता नासत्या '। vता तौ vनासत्या नासत्यौ अश्विनौ vसरस्वती चैते vकर्मसु सौत्रामण्यादियागेषु vनः अस्मान् vअवत अवन्तु । पुरुषव्यत्ययः । यद्वा– एते यूयं नोऽस्मान् अवतेति यथास्थितयोजना। किं च– हे vइन्द्र त्वमपि नोऽस्मान् कर्मसु अवत अव । वचनव्यत्ययः । " पुनन्तु ब्रह्मणस्पतिः " ( तैआ १०.२३.१ ) इतिवत् । कीदृशौ नासत्यौ ? vहिरण्यवर्तनी हिरण्येनोपलक्षिता वर्तनिः सरणिः पद्धतिः, " पद्या वर्तन्येकपदीति च " ( अको २.१.१५ ), मार्गो ययोस्तौ तथा । यत्र पथि गच्छतस्तत्र सुवर्णमेव संपद्यत इत्यर्थः । यद्वा– हिरण्येन सुवर्णरथेन वर्तनिः ययोस्तौ तथा। वर्तनिरिति मार्गनाम । यद्वा– हिरण्यवर्तनिरलंकारविशेषः ययोः तौ तथा । vसुपेशसा, शोभनं पेशो रूपं ययोस्तौ, सुन्दरौ । vनरा नरगुणयुक्तौ नराकारौ वा । कीदृशी सरस्वती ? vहविष्मती, हविर्विद्यते यस्याः सा तथा ॥८॥

ता भिषजा सुकर्मणा सा सुदुघा सरस्वती ।
स वृत्रहा शतक्रतुरिन्द्राय दधुरिन्द्रियम् ॥९॥

ता । भिषजा । सुकर्मणेति सुऽकर्मणा । सा । सुदुघेति सुऽदुघा । सरस्वती ।
सः । वृत्रहेति वृत्रऽहा । शतक्रतुरिति शतऽक्रतुः ।
इन्द्राय । दधुः । इन्द्रियम् ॥ दिम् ॥९॥

आ– vता vभिषजा तौ भिषजौ अश्विनौ vसुकर्मणा सुकर्माणौ कल्याणकर्माणौ, vसा vसुदुघा साधुदोहना सा vसरस्वती, vशतक्रतुः vसः vवृत्रहा इन्द्रः vइन्द्राय vइन्द्रियं वीर्यम् एते vदधुः । कल्पान्तरभेदादैश्वर्यविशेषयोगाद्वा इन्द्रदेहभेदोपपत्तेर्विरोधो नास्तीत्यर्थः ॥६०॥

3. V2 हविषा for हवि°
5. M4 °मण्यादिषु for °मण्यादियागेषु [ L 6 ]
6. P2 M4 एके for एते
19. S3 पाठस्तु– ता भिषजाः ... इन्द्रियमिति for ता भिषजा
20. V2 before शत° adds यः

अ- 'ता भिषजा'। ˇता तौ प्रसिद्धौ ˇभिषजा भिषजौ अश्विनौ, ˇसा प्रसिद्धा ˇसरस्वती च, ˇसः प्रसिद्धः ˇवृत्रहा इन्द्रः कल्पान्तरभवश्च एते ˇइन्द्राय एतत्कल्पप्रभवाय ˇइन्द्रियं वीर्यं ˇदधुः। यद्वा- इन्द्र एव दातृपात्ररूपेण बहुधा भवति। देवानामचिन्त्यशक्तित्वात्। कीदृशौ भिषजौ? ˇसुकर्मणा सुकर्माणौ, शोभनं कर्म ययोस्तौ। उपधादीर्घाभाव आकारश्च आर्षः। कीदृशी सरस्वती? ˇसुदुघा, सुष्ठु दुग्धे सा सुदुघा। "दुहः कब् घश्च" (पा ३·२·७०) इति कप्रत्ययो घादेशश्च। कीदृशो वृत्रहा? ˇशतक्रतुः, शतं क्रतवः कर्माणि संकल्पा वा यस्य स तथा ॥९॥

---

युव॑ꣳ सु॒राम॑मश्विना॒ नमु॑चा आसु॒रे सचा॑।
वि॒पि॒पा॒नाः स॑रस्व॒तीन्द्रं॒ कर्म॑स्वावत ॥१०॥

---

यु॒वम्। सु॒राम॑म्। अ॒श्वि॒ना॒। नमु॑चौ। आ॒सु॒रे। सचा॑।
वि॒पि॒पा॒ना इति॑ वि॒ऽपि॒पा॒नाः। स॒र॒स्व॒ति॒।
इन्द्र॑म्। कर्म॒स्विति॒ कर्म॑ऽसु। आ॒व॒त॒॥ चाम्॥१०॥

---

आ- ग्रहाणां याज्यानुवाक्ये। 'युवꣳ सुरामम्', 'पुत्रमिव पितरौ' इति अनुष्टुप्त्रिष्टुभौ अश्विसरस्वतीन्द्रदेवत्ये॥

ˇयुवं, यूयमिति व्यत्ययः। यूयं हे अश्विसरस्वत्यः, ˇसुरामं सुरामयं ˇनमुचौ ˇआसुरे वर्तमानं (सुरा)पानं ˇसचा सह ˇविपिपानाः विविधं पिबन्त्यः ˇकर्मसु वर्तमानाः ˇइन्द्रम् ˇआवत आरक्षत ॥१०॥

---

अ- कात्यायनः - "ग्रहाणां युवꣳ सुरामं पुत्रमिवेति" (काश्रौ १९·६·२०)। त्रयाणां पयोग्रहाणां सुराग्रहाणां च। 'युवम्' इति पुरोऽनुवाक्या, 'पुत्रमिव' इति याज्येति सूत्रार्थः।

'युवꣳ सुरामम्'। द्वे अश्विसरस्वतीन्द्रदेवत्येऽनुष्टुप्त्रिष्टुभौ। हे ˇअश्विना अश्विनौ, हे ˇसरस्वति, ˇयुवं यूयम्। वचनव्यत्ययः। ˇनमुचौ ˇआसुरे दैत्ये वर्तमानं ˇसुरामम् सुरामयम्। यलोपश्छान्दसः। यद्वा- सुष्ठु रामो रमणं यस्मात् सः, तम्। "उत्तम्भनादीन्यादिसंशयात्" (वाप्रा ५.३८) इति प्रातिशाख्येन सुराममित्यत्र समासत्वेऽपि पदकाले नावग्रहः। ग्रहं ˇसचा सह ˇविपिपानाः विविधं पिबन्तः सन्तः ˇकर्मसु ˇइन्द्रम् ˇआवत। अव रक्षणे। लोट्। रक्षत। यद्वा- अव रक्षणे, अस्माल्लङात्मनेपदम्। आवन्तेति वक्तव्ये आवतेति वचनव्यत्ययः। "आडजादीनाम्" (पा ६·४·७२) इत्याडागमः। अतो नावग्रहः पदपाठे। यद्याङ् स्यात् इदं तर्हि सावग्रहं पदं स्यात्। विपिपानाः। अत्र विकरणव्यत्ययः॥१०॥

---

4. M4 स्वकर्मणा for सुकर्मणा and om. सुकर्माणौ

12. S3 पाठस्तु- युवꣳ सुरामम ... कर्मस्वावत॥ द्वितीयपाठस्तु-पुत्रमिव ... अभिष्णगिति for युवꣳ सुरामम्, पुत्रमिव पितराविति

ग्रहाणां याज्यानुवाक्याः ]

पुत्रमिव पितरावश्विनोभेन्द्रावथुः काव्यैर्दंसनाभिः ।
यत्सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णक् ॥११॥

---

पुत्रमिव ॥ प ॥११॥

---

आ– ' पुत्रमिव पितरौ ' इति । व्याख्यातम् ॥११॥

---

अ– कात्यायनः- " पुत्रमिवेति " ( काश्रौ १९.६.२० ) । हे ˅इन्द्र, ˅पितरौ मातापितरा ˅पुत्रम् ˅इव यथा पुत्रं पालयतः तथा ˅उभा ˅अश्विना उभावप्यश्विनौ ˅त्वा त्वाम् ˅आवथुः । पुरुषव्यत्ययः । आवतुः रक्षितवन्तौ । कैः ? ˅काव्यैः ˅दंसनाभिः च । काव्यैः कवीनां मन्त्रद्रष्टॄणां संबन्धिभिर्मन्त्रैः, दंसनाभिः कर्मभिः च । दंसनेति कर्मनाम । नमुचिवधादिभिः समर्थः सन् । ˅सुरामं सुष्ठु रमणसाधनं सुराग्रहं ˅व्यपिबः विशेषेण पीतवान् असि । अश्वादिप्रयत्नात् तत्प्राप्तिरिति भावः । किं च- हे ˅मघवन् इन्द्र, ˅सरस्वती देवी । कुत एतदित्यत आह- ˅यत् यस्मात् कारणात् हे इन्द्र, ˅शचीभिः कर्मभिः । शचीति कर्मनाम । त्वा त्वाम् ˅अभिष्णक् शुद्धं कृतवती । अभि [ष्ण]गिति शुद्धिकर्मा । अभिपूर्वात् ष्णा शौच इति धातोर्लुङि वैदिकं रूपम् ॥११॥

---

यस्मिन्नश्वास ऋषभास उक्षणो वशा मेषा अवसृष्टास आहुताः ।
कीलालपे सोमपृष्ठाय वेधसे हृदा मतिं जनय चारुमग्नये ॥१२॥

---

यस्मिन् । अश्वासः । ऋषभासः । उक्षणः ।
वशाः । मेषाः । अवसृष्टास इत्यवऽसृष्टासः । आहुता इत्याऽहुताः ।
कीलालप इति कीलालऽपे । सोमपृष्ठायेति सोमऽपृष्ठाय । वेधसे ।
हृदा । मतिम् । जनय । चारुम् ॥ अग्नये ॥ थ्व्थों ॥१२॥

---

आ– ' यस्मिन्नश्वासः ', ' अहाव्यग्ने ' इति द्वे जगतीत्रिष्टुभावाग्नेय्यौ । ˅यस्मिन् अग्नौ ˅अश्वासः अश्वाः ˅ऋषभासः ˅उक्षणः उक्षाणः सेचनसमर्था वृषभाः ˅वशाः वन्ध्यागावः ˅मेषाः ˅अवसृष्टासः । यस्मिन्नवसृष्टाः अवदायावदाय च विसृष्टाः । ˅आहुताः आदायादाय च हुताः । तस्मै ˅अग्नये इदानीं तव कल्पे वर्तमानायाग्नये । श्रीभगवन्नग्ने, अद्य ˅कीलालपे, कीलालमन्नं

---

11. M4 °कर्म for °कर्मा

19. S3 पाठस्तु- यस्मिन्नश्वासः ... अग्नय इति for यस्मिन्नश्वासः अहाव्यग्न इति ।

तत्पिबतीति कीलालपाः, तस्मै कीलालपे । vसोमपृष्ठाय, सोमाहुतयो यस्य हूयन्ते स सोमपृष्ठः, तस्मै । पृष्ठेऽपि सोमवाहिने देवतार्थम् । vवेधसे मेधाविने अग्नये vहृदा त्वद्धृदयेन vचारुं प्रौढां vमतिं vजनय उत्पादय ॥१२॥

---

अ- कात्यायनः- "पशुस्विष्टकृतो यस्मिन्नश्वासोऽहाव्यग्ने" इति ( काश्रौ १९.६.२१ )। पशोः संबन्धिनि स्विष्टकृद्यागे 'यस्मिन्नश्वासः' इति पुरोऽनुवाक्या । 'अहाव्यग्ने' इति याज्येति सूत्रार्थः॥ 'यस्मिन्नश्वासः' द्वे अग्निदेवत्ये जगतीत्रिष्टुभौ । हे अध्वर्यो, तस्मै vअग्नये vहृदा सह मनसा सह । "स्वान्तं हृन्मानसं मनः" ( अको १.४.३१ ) इत्यभिधानात् । vमतिं बुद्धिं vचारुं समीचीनां vजनय । अस्यर्थं मनोबुद्धी शुद्धे कुरु । अन्तःकरणशुद्धिं विना देवताप्रसादाभावात् तच्छुद्धिं कुर्विति भावः । कीदृशायाग्नये ? vकीलालपे । कीलालमन्नरसं पिबतीति कीलालपास्तस्मै तथा । "आतो धातोः" ( पा ६.४.१४० ) इत्याकारलोपः । vसोमपृष्ठाय, सोमः पृष्ठे यस्य तस्मै । यस्य पृष्ठे सोमाहुतयो हूयन्त इत्यर्थः । vवेधसे, विदधाति शुभं करोतीति वेधास्तस्मै, शुभमतिदात्रे । तस्मै कस्मै ? vयस्मिन् अग्नौ vअश्वासः अश्वाः vऋषभासः ऋषभाः vउक्षणः उक्षाणः । "वा षपूर्वस्य निगमे" ( पा ६.४.९ ) इति उपधादीर्घाभावश्छान्दसः । सेचनसमर्थाः वृषाः । सामान्यविशेषभावेन पुनरुक्तिः । vवशाः वन्ध्याः । vमेषाः अजाश्चैते सर्वे vअवसृष्टासः अवसृष्टाः, अवदायावदाय चतुरवत्तेन जुह्वां निक्षिप्ताः सन्तः । vआहुताः आदाय हुताः । तस्मै अग्नये चारुं बुद्धिं कुर्विति होतृवाक्यम् ॥१२॥

---

अहा॑व्यग्ने ह॒विरा॒स्ये॑ ते स्रु॒चीव॑ घृ॒तं च॒म्वी॑व॒ सोम॑ः ।
वा॒ज॒सनि॑ꣳ र॒यिम॒स्मे सु॒वीरं॑ प्रश॒स्तं धे॑हि य॒शसं॑ बृ॒हन्त॑म् ॥१३॥

---

अहा॑वि । अ॒ग्ने॒ । ह॒विः । आ॒स्ये॑ । ते॒ ।
स्रु॒ची॒वेति॑ स्रु॒चिऽइ॑व । घृ॒तम् । च॒म्वी॒वेति॑ च॒म्विऽइव । सोम॑ः ।
वा॒ज॒सनि॒मिति॑ वा॒ज॒ऽसनि॑म् । र॒यिम् । अ॒स्मे इत्य॒स्मे । सु॒वीर॒मिति॑ सु॒ऽवीर॑म् ।
प्र॒श॒स्तमिति॑ प्र॒ऽश॒स्तम् । धे॒हि॒ । य॒शस॑म् । बृ॒हन्त॑म् ॥ खैम् ॥१३॥(७)॥

---

आ- 'अहाव्यग्ने हविरास्ये ते' । हे भगवन् vअग्ने, vते तव vआस्ये मुखे vहविः [ vअहावि ] हुतम् । कथमिव ? vस्रुचीव vघृतं, यथा स्रुचि घृतं स्थितं च । vचम्वीव vसोमः, सोम इव अधिषवणचर्मण्यवस्थितः । तं त्वां ब्रवीमि- 'वाजसनिं रयिम् अस्मे सुवीरम्' । वाजमन्नं संभजत इति वाजसनिः तं vवाजसनिम्, अन्नदानं वा । vरयिं धनम् vअस्मे अस्मासु vसुवीरं शोभनवीरं, vप्रशस्तं श्रेष्ठं vयशसं कीर्तिमन्तं vबृहन्तं पुत्रं vधेहि ॥१४॥

---

4. M4 P4 °कृतयो for ( °कृतो )
22. S3 पाठस्तु- अहाव्यग्ने ... बृहन्तमिति for अहाव्यग्ने हविरास्ये ते ।
26. S3 V2 यशस्यं for यशसं; V2 सुवीरं for बृहन्तं

आश्विनं गायत्रं शस्त्रम् ]

अ– 'अहाव्यग्ने'। हे अग्ने, ते तव आस्ये मुखे मया हविः अहावि हुतम्। जुहोतेः कर्मणि लुङि प्रथमैकवचनम्। होमे दृष्टान्तः – स्रुचि घृतम् इव, यथा स्रुचि घृतं सर्वदा स्थितं, यथा वा चम्वि चम्वाम् अधिषवणचर्मणि सोमः स्थितः सदा, तथा मया तव आस्ये अहावि हविः सर्वदा हुतम्। हे अग्ने, स त्वम् अस्मे अस्मासु वाजसनिं वाजस्यान्नस्य सनिं संभजनं, दानं वा। 'वन षण संभक्तौ', 'षणु दाने' इतिधातोः। धेहि देहि। तथा सुवीरं साधुपुत्रयुतं रयिं धनं धेहि। तथा प्रशस्तं, सर्वलोकस्तुतं बृहन्तं महान्तं यशसं यशश्च धेहि। 'कारकाणां क्रिययैव संबन्धः' इत्युक्तेः प्रत्येकं क्रियासंबन्धः। चम्वीव इत्यत्राडागमाभावः। यशसमित्यत्र पुंस्त्वमार्षम्। यद्वा– "यशो वै सोमो राजा" ( ऐब्रा ३.२ ) इति श्रुतेर्यशसं सोमयागं देहि कारयेति। "अर्शआदिभ्योऽच्" ( पा ५.२.१२७ ) ॥१३॥

इति द्वाविंशे सप्तमोऽनुवाकः।

---

## [ अथ अष्टमोऽनुवाकः। ]

अ॒श्विना॒ तेज॑सा॒ चक्षुः॑ प्रा॒णेन॒ सर॑स्वती वी॒र्य॑म्।
वा॒चेन्द्रो॒ बले॒नेन्द्रा॑य दधुरिन्द्रि॒यम् ॥१॥

---

अ॒श्विना॑। तेज॑सा। चक्षुः॑। प्रा॒णेन॑। सर॑स्वती। वी॒र्य॑म्।
वा॒चा। इन्द्रः॑। बले॑न। इन्द्रा॑य। द॒धुः। इ॒न्द्रि॒यम् ॥ सिम् ॥१॥

---

आ– 'अश्विना तेजसा' इत्याद्यनुवाकमेकादशर्चं शस्त्रम्। तत्राद्याऽनुष्टुप् अश्विसरस्वतीन्द्रदेवत्या। अश्विना तेजसा अश्विनौ तेजसा सह चक्षुः। सरस्वती प्राणेन सह वीर्यम्। वाचा बलेन सह इन्द्रः। एवमेता देवताः तेजःप्रभृतिद्वारेण प्रतिनियतम् इन्द्रियं सामर्थ्यम् इन्द्राय दधुः ॥५५॥

---

अ– कात्यायनः– "प्रतिगरिष्यत्युपविष्टेऽध्वर्यो शोंसावेत्याहूय अश्विना तेजसा इत्यनुवाकं शंसति" ( काश्रौ १९.७.१ )। त्रयस्त्रिंशवसाग्रहसादनानन्तरम् अध्वर्योर्होतुः पुरस्तात् प्रतिगरार्थमुपवेशनमुक्तम्। तदाह– प्रतिगरिष्यत्यध्वर्यौ पुर उपविष्टे सत्यध्वर्यो शोंसावो३ इत्याहूय 'अश्विना तेजसा चक्षुरित्येकादशर्चम्' अनुवाकं शंसति। तत्र प्रथमान्ते ऋचौ त्रिष्कृत्वः शंसनीये। मध्यस्थानां तिसृणामृचामादिष्वाहावः कार्य इति सूत्रार्थः॥

---

2. P2, M4 सुचि for स्रुचि।

**' अश्विना तेजसा '। अश्विसरस्वतीन्द्रदेवत्याऽनुष्टुप्। आद्यः पादोऽष्टवर्णः। द्वितीयो नववर्णः। तृतीयः षड्वर्णः। चतुर्थोऽष्टवर्णः। अश्विना अश्विनौ तेजसा सह चक्षुः इन्द्रियम् इन्द्राय दधुः दधतुः ददतुः। तथा सरस्वती प्राणेन सह वीर्यम् इन्द्राय दधौ ददौ। तथा इन्द्रः कल्पान्तरीणः वाचा वागिन्द्रियेण बलेन च सह इन्द्रायैतत्कल्पस्थाय इन्द्रियं सामर्थ्यं दधौ। एवमश्विसरस्वतीन्द्राः इन्द्राय तेजआदि ददुरित्यर्थः। सर्वापेक्षया दधुरिति बहुवचनं विपरिणम्य योज्यम्॥१॥**

---

गोमदू षु णासत्याऽश्वावद्यातमश्विना।
वर्ती रुद्रा नृपाय्यम् ॥२॥

---

गोमदिति गोऽमत्। ऊँ इत्यूँ। सु। नासत्या।
अश्वावत्। अश्ववदित्यश्वऽवत्। यातम्। अश्विना।
वर्तिः। रुद्रा। नृपाय्यमिति नृऽपाय्यम्॥ तम् ॥२॥

---

आ– ' गोमदू षु णासत्या ' इत्यादि तृचम् आश्विनं गायत्रं, गृत्समदः। गोमद् ऊ षु णासत्या हे नासत्यौ, हे अश्विनौ, गोमत् ऊ सु सुगोमत् एव अश्ववत् नृपाय्यं यज्ञम् अश्विनौ यातं गच्छतम्। केनेति ? वर्तिः। व्यत्ययः। वर्त्या वर्तन्या मार्गेण हे रुद्रा रुद्रौ। रुत् अन्धकारादि द्रणाति विदारयतीति रुद्रौ मार्गप्रदर्शकौ। नृपाय्यम्। " पाय्यसांनाय्यनिकाय्यधाय्यामानहविर्निवाससामिधेनीषु " ( पा ३.१.१२९ )। यद्वा– नरः नराकृतयो देवाः यस्मिन् यज्ञे सोमादिहविः पिबन्तीति नृपाय्यम्। गोमदश्ववद्यज्ञम् अश्विनौ यातमिति संबन्धः ॥५६॥

---

**अ– ' गोमदू षु णासत्या '। गृत्समददृष्टा अश्विसरस्वतीन्द्रदेवत्यास्तिस्रो गायत्र्यः। आद्या पादनिचृद्गायत्री। " त्रयः सप्तकाः पादनिचृत् " ( काछंसू २.४ ) इति वचनात्। ऊ सु द्वौ निपातौ पादपूरणौ।**

**" क्रियावाचकमाख्यातमुपसर्गो विशेषकृत्।**
**सत्त्वाभिधायकं नाम निपातः पादपूरणम् "॥ ( वाप्रा ८.५५ )**

---

1. S3 पाठस्तु– अश्विना ... इन्द्रियमिति for अश्विना तेजसा
2. M4 om. चतुर्थोऽष्टवर्णः
4. M4 तत् for एतत्
11. S3 पाठस्तु – गोमदू ... नृपाय्यमिति for गोमदू षु णासत्या

आश्विनं गायत्रं शस्त्रम् ]

इति प्रमाणात् । "इकः सुञि" (पा ६.३.३४) इति सूत्रेण सु इति निपाते परे उ इत्यस्य संहितायां दीर्घः । पदपाठे तु "उञः" (पा १.१.१७), "ऊँ" (पा १.१.१८) इत्यनेन दीर्घः । "सुञः" (पा ८.३.१०७) इति सूत्रेण सु इत्यस्य षत्वम् । "पूर्वपदात्°" (पा ९.४.३) इति सूत्रेण नासत्यशब्दनकारस्य णत्वमित्यवधेयम् । हे नासत्या नासत्यौ अश्विनौ । हे रुद्रा रुद्रौ, शत्रूणां रोदयितारौ मित्राणां रुजं द्रावयितारौ वा । वर्तिः । विभक्तिव्यत्ययात् वर्त्या मार्गेण युवां नृपाय्यम् । नृभिः पीयते सोमो सः, तं यज्ञं प्रति यातम् आगच्छतम् । "क्रतौ कुण्डपाय्यसंचाय्यौ" (पा ३.१.१३०) इत्यत्र सूत्रे कुण्डशब्दस्योपलक्षणत्वात् नृशब्देऽपि तृतीयान्ते उपपदे सति पिबतेर्धातोरधिकरणे यत्प्रत्ययो युगागमश्च निपात्यते । किं कृत्वा ? गोमत्, गावो विद्यन्ते यस्मिंस्तत्तथा । अश्वावत्, अश्वा विद्यन्ते यस्मिंस्तत्तथा । "मन्त्रे सोमाश्वेन्द्रियविश्वदेवस्य मतौ" (पा ६.३.१३१) इति सूत्रेण अश्वशब्दस्य दीर्घः । गोयुक्तमश्वयुक्तम् । अर्थाद्धनमादाय मद्यज्ञमागच्छतमिति पूर्वेण अन्वयः ॥२॥

---

न यत्परो नान्तर आदधर्षद्वृषण्वसू ।
दुःशंसो मर्त्यो रिपुः ॥३॥

---

न । यत् । परः । न । अन्तरः ।
आदधर्षदित्याऽदधर्षत् । वृषण्वसू इति वृषण्ऽवसू ।
दुःशंस इति दुःऽशंसः । मर्त्यः । रिपुः ॥ ३ ॥

---

आ– 'न यत्परः' इति । हे वृषण्वसू वृषणं वृष्टिः वसु धनं ययोस्तौ वृषण्वसू अश्विनौ । यद्वा वृष्टिद्वारेण सवितारौ हे अश्विनौ । न यत् यद्धनं परः न आदधर्षत् धर्षणमपहरणं नाकरोत् । न अन्तरः आन्तरः अपरः संबन्धो वा नादधर्षत् । दुःशंसः, दुष्टं दोषं शंसतीति दुःशंसः पापशंसनः । मर्त्यः मनुष्यः रिपुः शत्रुः यद्धनं नादधर्षत्, तद्धनमादाय यज्ञं यातमिति पूर्वेण संबन्धः ॥१७॥

---

अ– 'न यत्'। हे वृषण्वसू । णत्वं छान्दसम् । वृषा वृष्टिरेव वसु धनं ययोस्तौ तथा । यद्वा– वृष्णा वृष्ट्या वासयतः लोकं स्थापयतस्तौ तथा । वर्षणशीलं वसु ययोरिति वा । ईदृशौ हे अश्विनौ । दुःशंसः, दुष्टम् अपवादं शंसति कथयतीति दुःशंसः अपवादकर्ता । मर्त्यः रिपुः मनुष्यरूपो वैरी, परः असंबद्धः दूरस्थो वा । अन्तरः संबद्धः दायादः समीपस्थो वा सन् यत् धनं न आदधर्षत् न धृष्णुयात् पैशुन्यादिना न पराभूयात् तादृशं धनमादाय मम यज्ञं यातमिति पूर्वमन्त्रगतेनान्वयः । धृषा प्रागल्भ्ये । अस्माद्धातोर्यङ्लुगन्ताच्छतृप्रत्ययो लुङ् वा ॥३॥

---

7. M4 °पद° for °शब्द°

17. S3 पाठस्तु – न यत्परः ... रिपुरिति for न यत्पर इति; S3 om. हे वृषण्वसू ... वृषण्वसू

ता न आ वोळ्हमश्विना रयिं पिशङ्गसंदृशम् ।
धिष्ण्या वरिवोविदम् ।।४।।

ता । नः । आ । वोळ्हम् । अश्विना ।
रयिम् । पिशङ्गसंदृशमिति पिशङ्गऽसंदृशम् ।
धिष्ण्या । वरिवोविदमिति वरिवःऽविदम् ।।छौं।।४।।

आ– ' ता न आ वोळ्हम् ' इति । Vता तौ उक्तलक्षणौ युवां Vनः अस्माकं Vरयिं धनं Vपिशङ्गसंदृशम् अनेकरूपसदृशम Vआ Vवोळ्हम् आवोढम् आवहतम् । Vधिष्ण्या धिष्ण्यौ अग्निरूपौ धातारौ वा अश्विनौ । Vवरिवोविदं वरिवो धनं [ यल्लब्धं सदन्यस्य ] धनलाभस्य हेतुभूतम्, यज्ञं यातमिति संबन्धः ।।५८।।

अ– ' ता न आ वोळ्हम् '। हे 'धिष्ण्या धिष्ण्यौ धिष्ण्याऽग्निरूपौ जगद्धातारौ वा हे अश्विनौ, 'रयिं युवां 'नः अस्माकम् 'ता तौ । " सुपां सु " ( पा ७·१·३९ ) इति द्विवचनस्यादादेशः । धनम् 'आ 'वोळ्हम् आवोढम् । " सहिवहोरोदवर्णस्य " ( पा ६·३·११२ ) इत्याकारस्यौकारः । आवहतम् आनयतमित्यर्थः । " डढौ ळळ्हावेकेषाम् " ( वाप्रा ४·१४६ ) इति ढस्य ळ्हः । वहतेर्लोटि परस्मैपदे मध्यमद्विवचनम् । कीदृशम् ? 'पिशङ्गसंदृशं, पिशङ्गं पीतं रूपं सम्यग् दृश्यते यत्र तत् पिशङ्गसंदृशं सुवर्णमित्यर्थः । 'वरिवोविदम् । वरिव इति धननाम । वरिवो धनं कलादिरूपं विन्दति प्राप्नोतीति वरिवोविद् तम् । विद्लृ लाभेऽस्मात् " इगुपधा° " ( पा ३·१·१३५ ) इति कप्रत्ययः । धनान्तरहेतुभूतमित्यर्थः ।।४।।

पावका नः सरस्वती वाजेभिर्वाजिनीवती ।
यज्ञं वष्टु धियावसुः ।।५।।

पावका । नः । सरस्वती । वाजेभिः । वाजिनीवतीति वाजिनीऽवती।
यज्ञम् । वष्टु । धियावसुरिति धियाऽवसुः ।।जो।।५।।

14. V2 °सदशम्° for संदशम्

( सौत्रामण्याम् ) आश्विनं शस्त्रम् ]

आ– ' पावका नः ' इत्यादि तृचं गायत्रं सारस्वतं मधुच्छन्दसमार्षम् । पूञ् पवने । पावयति शोधयतीति vपावका पावयित्री । vवाजेभिः अन्नैः vवाजिनीवती अन्नरसवती । vयज्ञं vवष्टु । वश कान्तौ । vधियावसुः, धीरिति कर्मनाम, वस्विति धननाम, कर्मधना ज्ञानधना वा vसरस्वती vनः अस्मदीयं यज्ञं वष्टु कामयतु ॥५९॥

---

अ– 'पावका नः'। मधुच्छन्दोदृष्टाः सरस्वतीदेवत्यास्तिस्रो गायत्र्यः । 'सरस्वती 'नः अस्माकं 'यज्ञं यजनं 'वष्टु कामयताम् । वश कान्तौ । लोट् । मत्पूजाग्रहणेच्छया यज्ञं प्रत्यागच्छत्वित्यर्थः । कीदृशी ? 'पावका पावनकर्त्री । यद्वा– पवनं पावः शोधनम् । घञन्तः । पावं कायतीति पावका । कै शब्दे, अस्मात् "आतोऽनुपसर्गे कः" ( पा ३·२·३ ) । 'वाजेभिः वाजैरन्नैः 'वाजिनीवती वाजा अन्नानि [ विद्यन्ते यासु ताः ] वाजिन्योऽन्नवत्यः, ता विद्यन्ते यस्यां सा तथा । भक्तदत्तैरन्नैः प्रीता तेभ्योऽधिकान्नधात्रीत्यर्थः । धिया बुद्ध्या कर्मणा वा वसु धनं यस्याः सा 'धियावसुः । यद्वा– धिया धियां वसतीति धियावसुः, हृदयस्थितेत्यर्थः । छान्दसत्वात् तृतीयाया अलुक् ॥५॥

---

चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् ।
यज्ञं दधे सरस्वती ॥६॥

---

चोदयित्री । सूनृतानाम् । चेतन्ती । सुमतीनामिति सुऽमतीनाम् ।
यज्ञम् । दधे । सरस्वती ॥ यै ॥ ६ ॥

---

आ– ' चोदयित्री सूनृतानाम् ' इति । vसूनृतानां यथावद्विषयवाचां वैदिकानां vचोदयित्री प्रेरयित्री । vचेतन्ती, 'चिती संज्ञाने', चेतयन्ती vसुमतीनां शुभार्थविषयमतीनाम् । यद्वा– संशयादिशून्यमतीनां चेतन्ती vसरस्वती vयज्ञं vदधे धारयति ॥६०॥

---

अ– ' चोदयित्री सूनृतानाम् ' । 'सरस्वती 'यज्ञं 'दधे धारयति । कालव्यत्ययः । कीदृशी ? 'सूनृतानाम् । " प्रियं सत्यं च सूनृतम् " ( द्र. अको १.६.१९ ) इत्यभिधानात् प्रियसत्यवचनानां वेदरूपशब्दानां vचोदयित्री प्रेरयित्री । चुद प्रेरणेऽस्मात् णिजन्तात् तृच् । " ऋन्नेभ्यः° "

---

1. S3 पाठस्तु पावकाः ... °वसुरिति for पावका न इत्यादि

16. S3 पाठस्तु चोदयित्री ... सरस्वतीति for चोदयित्री सुनृतानामिति

17. V2 श्रुतार्थ° for शुभार्थ°

( पा ४.१.५ ) इति ततो ङीप् । ᵛसुमतीनां शोभनबुद्धीनां शोभनकर्मणां वा ᵛचेतन्ती चेतयन्ती प्रकटयन्ती । मतेः कर्मनामसु पाठात् तदर्थताऽपि, सुमतिदात्रीत्यर्थः । चेतन्तीत्यत्र " छन्दस्युभयथा " ( पा ३.४.११७ ) इति शपोऽप्यार्धधातुकत्वात् णिचो लोपः ॥६॥

---

महो अर्णः सरस्वती प्र चेतयति केतुना ।
धियो विश्वा वि राजति ॥७॥

---

महः । अर्णः । सरस्वती । प्र । चेतयति । केतुना ।
धियः । विश्वाः । वि । राजति ॥ हं ॥७॥

---

आ– ' महो अर्णः ' इति । ᵛमहः महत् ᵛअर्णः उदकं महान्तमुदकसंघातम् । ᵛसरस्वती ᵛकेतुना । कित ज्ञाने । प्रज्ञया ᵛप्रचेतयति प्रज्ञापयति । ' धियः विश्वा वि राजति ' । ᵛविश्वाः सर्वाः ᵛधियः धीः सर्व भूतानामन्तःस्थिता सती सरस्वती ᵛविराजति दीपयति ॥६१॥

---

अ– ' महो अर्णः ' । ᵛसरस्वती ᵛकेतुना कर्मणा प्रज्ञया वा ᵛमहः महतः मेघान् ᵛअर्णः उदकं ᵛप्रचेतयति प्रेरयति । ण्यन्तत्वाद् द्विकर्मकः । मेघेभ्यः सर्वस्यां भूमौ वृष्टिं कारयतीत्यर्थः । महःशब्दोऽयं पुंलिङ्गः सर्वविभक्तौ सरूपः । ' महो अग्नेः, महो देवाय ' इत्यादौ तथा दर्शनात् । नपुंसकत्वे " महो नपुंसके " ( वाप्रा २.३२ ) इति प्रातिशाख्येन, " विश्वं च मे महश्च मे " इत्यादिवदन्तोदात्तत्वं न स्यात् । किं च– ᵛविश्वाः सर्वा ᵛधियः सर्वप्राणिस्था बुद्धीः ᵛवि ᵛराजति विराजयति । अन्तर्भूतण्यर्थत्वात् सर्वजन्तुबुद्धीर्विशदयतीत्यर्थः ॥७॥

---

इन्द्रा याहि चित्रभानो सुता इमे त्वायवः ।
अण्वीभिस्तना पूतासः ॥८॥

---

इन्द्र । आ । याहि । चित्रभानो इति चित्रऽभानो ।
सुताः । इमे । त्वायव इति त्वाऽयवः ।
अण्वीभिः । तना । पूतासः ॥झम्॥८॥

---

8. S3 पाठस्तु महो ... राजतीति for महो अर्ण इति; V2 after महः ins. मह इति अर्णोविशेषणमयुक्तम् । महो नपुंसक इति प्रातिशाख्यस्वरविरोधात् । मह इति सरस्वतीविशेषणं बोध्यम् । तेन महती महनीया । मह पूजायाम् । पूज्येत्यर्थः । इति सामराजः

सौत्रामण्याम् आश्विनं शस्त्रम् ]

आ– 'इन्द्रा याहि' इत्यादि तृचमैन्द्रं गायत्रम् । हे श्रीभगवन् vइन्द्र, हे vचित्रभानो, विचित्रतेजःप्रभासंपन्न । 'सुता इमे त्वायवः' । यु मिश्रणे । त्वया मिश्रीभूताः त्वदीया vइमे vसुताः सोमाः अभिषुताः, अतस्त्वम् vआ vयाहि आगच्छ । कथंभूताः सोमाः ? 'अण्वीभिस्तना पूतासः' । अण्व्य इत्यङ्गुलिनाम, vअण्वीभिः अङ्गुलिभिः । vतना इति धननाम । यद्वा– तना इति दशापवित्रमभिधीयते । अङ्गुलिभिर्दशापवित्रेण च पूताः सोमा इत्यर्थः ॥ अतस्त्वमायाहीति संबन्ध ॥६२॥

---

अ– 'इन्द्रा याहि चित्रभानो' । मधुच्छन्दोदृष्टा इन्द्रदेवत्यास्तिस्रो गायत्र्यः । चित्राः नानाविधा भानवो दीप्तयो नेत्राणि वा यस्य स चित्रभानुः । तत्संबोधनं हे vचित्रभानो, vइन्द्र, त्वम् vआ vयाहि । किमित्यत आह– vइमे सोमाः vसुताः अभिषुताः । कीदृशा इमे ? vत्वायवः, त्वां कामयन्त इति त्वायवः । "सुप आत्मनः क्यच्" (पा ३.१.८) । "क्याच्छन्दसि" (पा ३.२.१७०) इत्युप्रत्ययः । "आ सर्वनाम्नः" (पा ६.३.९१) इत्याकारः । तथा vअण्वीभिः । अण्वीत्यङ्गुलिनाम । अङ्गुलिभिः । vतना तनेन दशापवित्रेण vपूतासः पूताः शोधिताः । तनशब्दो दशापवित्रवाची "वारेण शश्वता तना" इत्यादौ दर्शनात् । तृतीयैकवचनस्य पूर्वसवर्णः । गालिताः सोमाः, इन्द्रोऽस्मान् पिबत्विति यतः कामयन्ते अतोऽत्रायाहीत्यर्थः ॥८॥

---

इन्द्रा याहि धियेषितो विप्रजूतः सुतावतः ।
उप ब्रह्माणि वाघतः ॥९॥

---

[ इन्द्र । आ । याहि । ] धिया । इषितः ।
विप्रजूत इति विप्रऽजूतः । सुतावतः । सुतवत इति सुतऽवतः ।
उप । ब्रह्माणि । वाघतः ॥ ३ ॥९॥

---

आ– 'इन्द्रा याहि धियेषितः' इति । हे श्रीभगवन् vइन्द्र, धियेषितः vधिया स्वकीयया बुद्ध्या vइषितः प्रेरितः अनन्यचोदितः सन्, vविप्रजूतः, जूतिर्गतिः प्रीतिर्वा, मेधावी त्वं vसुतावतः सुतवतः अभिषुतवतः सोमवतो यज्ञम् vआ vयाहि । 'उप ब्रह्माणि वाघतः' । vउप समीपे vब्रह्माणि हवींषि vवाघतः । वाघत इत्यृत्विङ्नामसु पठितम् । यजमानस्य ऋत्विक्समीपे त्वं हवींषि आ याहीति संबन्धः ॥६३॥

---

1. S3 पाठस्तु इन्द्रा याहि ... पूतास इति for इन्द्रा याहीत्यादि
20. S3 पाठस्तु इन्द्रा याहि ... वाघत इति for इन्द्रा याहि धियेषित इति

[ ( सौत्रामण्याम् ) आश्विनं शस्त्रम्

अ– ' इन्द्रा याहि धियेषितः ' । हे इन्द्र, त्वं धिया स्वबुद्ध्या इषितः प्रेरितः सन् आ याहि । अनन्यप्रेरित आगच्छेत्यर्थः । कीदृशस्त्वम् ? विप्रजूतः; जु गतौ, विप्रैर्मेधाविभिरनुगतः, ऋषिभिः सेवितः । किमित्यागन्तव्यमिति चेत्– सुतावतः । छान्दसो दीर्घः । सुतवतः सोमाभिषुतवतो यजमानस्य ब्रह्माणि हवींषि उप हविषां समीपे वाघतः ऋत्विजो वर्तन्त इति शेषः । वाघत इति ऋत्विङ्नामसु पठितम्, ब्रह्मेति हविर्नाम्नि । ऋत्विजो यजमानहविर्धृत्वा तिष्ठन्ति, त्वमायाहीत्यर्थः ॥९॥

इन्द्रा याहि तूतुजान उप ब्रह्माणि हरिवः ।
सुते दधिष्व नश्चनः ॥१०॥

[ इन्द्र । आ । याहि । ] तूतुजानः । उप । ब्रह्माणि । हरिव इति हरिऽवः ।
सुते । दधिष्व । नः । चनः ॥ घो ॥१०॥

आ– ' इन्द्रा याहि तूतुजानः ' इति । तूतुजान इति क्षिप्रनाम । हे हरिवः हरिवर्णाश्ववान्, तूतुजानः क्षिप्रं त्वरमाणः हे इन्द्र, उप ब्रह्माणि उप हवींषि त्वम् आ याहि । ' सुते दधिष्व नश्चनः ' । सुते अभिषुते सोमे सति नः अस्माकं स्वभूतं चनः अन्नं हविः सोमलक्षणं हविः उदरेण दधिष्व धारयस्व ॥६४॥

अ– ' इन्द्रा याहि तुतूजानः ' । हरी अश्वौ विद्येते यस्य स हरिवान्, तत्संबोधनम् हे हरिवः । " मतुवसो रु संबुद्धौ छन्दसि " ( पा ८·३·१ ) इति रुत्वम् । हे अश्वन् इन्द्र, तूतुजानः त्वरमाणः सन् त्वं ब्रह्माणि हवींषि उप आ याहि । तूतुजान इति क्षिप्रनाम । आगत्य च सुते सोमे अभिषुते सति नः अस्माकं चनः । " चन इत्यन्ननाम " ( नि ६.१६ ) । सोमरूपमन्नं दधिष्व जठरे धारय । धि धारणे । व्यत्ययेन शपो लुकि द्वित्वम् । जुहोत्यादित्वात् । अत्वमभ्यासस्य छान्दसम् ॥१०॥

अश्विना पिबतां मधु सरस्वत्या सजोषसा ।
इन्द्रः सुत्रामा वृत्रहा जुषन्तां सोम्यं मधु ॥११॥(८)

1. M4 after second याहि adds किमित्यत आह
5. M4 यजमानः for यजमान°
10. S3 पाठस्तु इन्द्रा याहि ... चन इति for इन्द्रा याहि तूतुजान इति

(सौत्रामण्याम्) आश्विनं शस्त्रम्]

अश्विना । पिबताम् । मधु । सरस्वत्या । सजोषसेति सऽजोषसा ।
इन्द्रः । सुत्रामेति सुऽत्रामा । वृत्रहेति वृत्रऽहा ।
जुषन्ताम् । सोम्यम् । मधु ॥टा॥ ॥११॥छा॥(८)

[ यद्देवा अष्ट ॥८॥ अभ्यादधाम्यष्ट ॥८॥ यो भूतानां चतस्रः ॥४॥ समिद्ध इन्द्र एकादश ॥११॥ आयात्वष्ट ॥८॥ समिद्धो अग्निर्द्वादश ॥१२॥ अश्विना हविस्त्रयोदश ॥१३॥ अश्विना तेजसैकादेश ॥११॥ अष्टानुवाकेषु पञ्चसप्ततिः ॥७५॥ ]

इति शुक्लयजुर्वेदकाण्वसंहितापाठे द्वाविंशतितमोऽध्यायः ॥२२॥

---

आ– 'अश्विना पिबताम्' इति । आश्विसरस्वतीन्द्रदेवत्याऽनुष्टुप् । $^{v}$अश्विना अश्विनौ $^{v}$मधु $^{v}$पिबताम् । $^{v}$सरस्वत्या $^{v}$सजोषसा सजोषसौ $^{v}$वृत्रहा $^{v}$सुत्रामा $^{v}$इन्द्रः च मधु पिबतु, प्रत्येकं पिबतु, सह च पिबतु । सर्वे च सह अश्विसरस्वत्यादयः $^{v}$सोम्यं सोमयुक्तं $^{v}$मधु च $^{v}$जुषन्तां सेवन्तामिति ॥७५॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य-श्रीवासुदेवपुरी-श्रीकृष्णभक्तिसाम्राज्यस्य श्रीमज्जातवेदोपाध्यायस्य सूनुना चतुर्वेदि-श्रीमदानन्दबोधभट्टोपाध्यायेन विरचिते काण्ववेदमन्त्रभाष्यसंग्रहे द्वाविंशोऽध्यायः ॥२२॥

---

अ– 'अश्विना पिबताम्'। अश्विसरस्वतीन्द्रदेवत्याऽनुष्टुप्। $^{v}$अश्विना अश्विनौ $^{v}$मधु मधुरस्वादं सोमं $^{v}$पिबताम् भक्षयताम् । कीदृशौ अश्विनौ ? सरस्वत्या $^{v}$सजोषसा सजोषसौ । जोषणं जोषः प्रीतिः । जुषतेरसुन् । समानो जोषः प्रीतिर्ययोस्तौ तथा, सरस्वत्या सह प्रीतिमन्तावित्यर्थः । किं च– सुष्ठु त्रायते $^{v}$सुत्रामा, वृत्रं हतवान् $^{v}$वृत्रहा, ईदृश $^{v}$इन्द्रः अश्विनौ सरस्वती च, एते $^{v}$मधु मधुरं $^{v}$सोम्यं सोममयं हविः $^{v}$जुषन्ताम् सेवन्ताम् । "मये च" (पा ४.४.१३८) इति सोमशब्दात् मयडर्थे यप्रत्ययः । सोममयं सोम्यम् ॥११॥

इति द्वाविंशेऽध्याये अष्टमोऽनुवाकः ॥८॥

इति श्रीमन्नागदेवभट्टात्मजेनानन्ताचार्येण विरचितायां वेदार्थदीपिकायां द्वाविंशोऽध्यायः समाप्तः ॥२२॥

लक्ष्मीनाथादयो देवाः श्रमं सफलयन्तु मे । विस्तारयन्तु मे ग्रन्थं भक्तकल्पद्रुमाः सदा ॥
अनेन ग्रन्थदीपेन स्वसंदेहात्मकं तमः । निरस्य वेदगाम्भीर्यं विजानन्तु विपश्चितः ॥

---

8. S3 पाठस्तु अश्विना ... मध्विति for अश्विना पिबतामिति
9. V2 पिबतम् for पिबतु
10. V2 प्रत्येकं पिबतां सह च पिबताम् for प्रत्येकं पिबतु, सह च पिबतु
12. V2 S3 om. श्रीमत् .. विरचिते (L. 13)
14. S3 शुक्लयजुःकाण्वसंहिताभाष्ये; V2 काण्ववेदसंहिताभाष्ये for काण्ववेदमन्त्रभाष्यसंग्रहे
15. M4 मधुरसानन्दं for मधुरस्वादं
17. P2 समानं, M4 समान° for समानो

ॐ

## त्रयोविंशोऽध्यायः

[ अथ प्रथमोऽनुवाकः । ]

हरिः ॐ ।।

इ॒मं मे॑ वरुण श्रु॒धी हव॑म॒द्या च॑ मृळय ।
त्वाम॑व॒स्युरा च॑के ।।१।।

इ॒मम् । मे॒ । व॒रु॒ण॒ । श्रु॒धि । हव॑म् । अ॒द्य । च॒ । मृ॒ळ॒य॒ ।
त्वाम् । अ॒व॒स्युः । आ । च॒के॒ ।। शिम् ।।१।।

आ– ' इमं मे ' इति प्रथमेनानुवाकेन हौत्रम् । वरुणस्य हविषः याज्यापुरोऽनुवाक्ये द्वे । सामान्येनास्याध्यायस्य सर्वस्य प्रजापतेरार्षम् । तत्र प्रथमा गायत्री । वारुणी । शुनःशेपः । ' इमं मे वरुण श्रुधी हवम् ' इति । हे ᵛवरुण, ᵛमे मम ᵛइमं ᵛहवम् आह्वानं ᵛश्रुधि शृणु । श्रुत्वा च ' अद्या च मृळय ' । ᵛअद्य अस्मिन् अहनि मां ᵛमृळय, सुखय सुखिनं कुरु । कालविलम्बो माऽस्तु । ' त्वामवस्युः आ चके ' । ᵛअवस्युः, आत्मनोऽवनं पालनमिच्छन् अवस्युरित्युच्यते । अवस्युरहं वरुण, ᵛत्वाम् ᵛआ ᵛचके । आचक इति कान्तिकर्मा । ( द्र· निघण्टु २·६ ) आचके कामये इति संबन्धः ।।१।।

अ– सर्ववेदैकसंवेद्यं विष्णुं देवशिखामणिम् ।
देशतः कालतश्चापि गुणतोऽनन्तमाश्रये ।।१।।

कात्यायनः– " ' इमं मे ' ' तत् त्वा ' इत्येककपालस्य " ( काश्रौ १९.७.१४ ) । अवभृथेष्टौ वरुणस्यैककपालस्य पुरोडाशस्येमे ऋचौ पुरोऽनुवाक्यायाज्ये इति सूत्रार्थः ।।

8. S3 om. इमं मे; V2 om. वरुणस्य ... द्वे ( L 9 ); D3 trans. वरुणस्य ... द्वे । after श्रुधी हवम् [ L 8 ], D3 om. इति

10. V3 इमं मे ... चक इति for इमं मे ... हवमिति

15. P2 before सर्व॰ adds श्रीवेदव्यासाय नमः ।।

अवभृथेष्टौ याज्यापुरोऽनुवाक्याः ]

'इमं मे'। वरुणदेवत्ये गायत्रीत्रिष्टुभौ शुनःशेपदृष्टे। हे वरुण, त्वं मे मम इमं हवम् आह्वानं श्रुधि शृणु। "श्रुशृणुपॄकृवृभ्यश्छन्दसि" ( पा ६.४.१०२ ) इति सूत्रेण श्रुधातोः परस्य हेर्धिः। संहितायां दीर्घश्छान्दसः। आख्यातस्य पादादित्वाभावेऽपि आमन्त्रितपरत्वात् अन्तोदात्तत्वं, न सर्वनिघातत्वम्। च पुनः। अद्य दिने मृळय मृडय अस्मान् सुखय। "डढौळळ्हावेकेषाम्" ( वाप्रा ४.१४६ ) इति डस्य ळः। मृड सुखे इति धातुः चुरादिः। यतोऽहं त्वाम् आ चके कामये। 'आचक इति कान्तिकर्मा' ( द्र. निघण्टु २·६ ) इति यास्कः। कीदृशोऽहम्? अवस्युः। अवनमवः पालनम्। 'अव रक्षणे' अस्मादसुन्। तदिच्छतीति अवस्युः। "सुप आत्मनः क्यच्" ( पा ३·१·८ ), "क्याच्छन्दसि" ( पा ३·२·१७० ) इत्युप्रत्ययः। यद्वा– अवस्युरवसन्नः खिन्नः। अवपूर्वस्य सदेरौणादिके उप्रत्यये टिलोपे च सत्यवसीदतीत्यवस्युरिति रूपं सिद्ध्यति। हे वरुण, स्वार्थरतस्य मम आह्वानम् अवधार्य अविलम्बेन पीडानिवृत्तिकामनया त्वां कामयन्तं मां प्रति शीघ्रमागच्छेति निष्कर्षार्थः। परमात्मपरत्वे तु वारयति निवारयति दैत्यान् वृणोति देवानिति वा वरुणः। तत्संबोधनं हे वरुणेति। अन्यद्यथावस्थितमेव। एवमुत्तरत्रापि द्रष्टव्यम् ॥१॥

---

तत् त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः।
अहेळमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः ॥२॥

---

तत्। त्वा ॥ त ॥ २ ॥

---

आ– 'तत् त्वा यामि'। वारुणी त्रिष्टुप्। शुनःशेपः। व्याख्यातो मन्त्रः ॥२॥

---

अ– 'तत् त्वा यामि'। हे श्रीभगवन् वरुण। यत्तदोर्नित्यसंबन्धात् यदित्यध्याहार्यम्। यत्प्रयोजनमुद्दिश्य अहं त्वा त्वां यामि शरणं व्रजामि। कीदृशोऽहम्? ब्रह्मणा वेदमन्त्रेण त्वां वन्दमानः स्तुवानः, वन्दतेऽसौ वन्दमानः। वदि अभिवादनस्तुत्योः शानच्। तत् एव प्रयोजनं यजमानः हविर्भिः हूयमानैः आशास्ते प्रार्थयते। आङ्पूर्वः शास्तिः प्रार्थनकर्मा। शास् अनुशिष्टौ। प्रार्थनीयेऽर्थे आवयोर्न विसंवाद इत्यर्थः। कीदृशो यजमानः? अहेळमानः, हेळनं देवापराधनम्, तद्विपरीतमहेळनम्, देवोद्देशेन यज्ञादिकरणम्, तच्छीलः अहेळमानः, अत्यास्तिक इत्यर्थः। एवं सति हे उरुशंस, उरुभिर्बहुभिर्वैदैर्दैवैश्च क्रियमाणः शंसः शंसनं यस्य स तथा। हे वरुण, इह यज्ञे त्वमपि तत् एव प्रयोजनं बोधि दातुं बुध्यस्व। बुध अवगमे। लकारव्यत्ययः। अपि च– नः अस्माकम् आयुः मा प्रमोषीः अस्मदायुषोऽवखण्डनं मा कार्षीः ॥२॥

---

1. M4 °शेफ° for °शेप°
16. S3 पाठस्तु तत्त्वा यामि ... प्र मोषीरिति for तत्त्वा यामि
19. M4 om. स्तुवानः
21. M4 हेडनं for हेळनं

[ अवभृथेष्टौ याज्यापुरोऽनुवाक्याः

त्वं नो॑ अग्ने॒ वरु॑णस्य वि॒द्वान् दे॒वस्य॒ हेळो॒ अव॑ यासिसीष्ठाः ।
यजि॑ष्ठो॒ वह्नि॑तमः॒ शोशु॑चानो॒ विश्वा॒ द्वेषां॑ꣳसि॒ प्र मु॑मुग्ध्य॒स्मत् ॥३॥

त्वम् । नः॒ । अ॒ग्ने॒ । वरु॑णस्य । वि॒द्वान् । दे॒वस्य॑ । हेळः॑ । अव॑ । या॒सि॒सी॒ष्ठाः॒ ।
यजि॑ष्ठः । वह्नि॑तम॒ इति॒ वह्नि॑ऽतमः । शोशु॑चानः ।
विश्वा॑ । द्वेषां॑ꣳसि । प्र । मु॒मु॒ग्धि॒ । अ॒स्मत् ॥ क्ष्यैम्र ॥३॥

आ– 'त्वं नो अग्ने' इति, 'स त्वं नो अग्ने' इति च द्वेऽप्यग्निवरुणदेवत्ये त्रिष्टुभौ । वामदेवः । अग्निवरुणयोः स्विष्टकृतोर्याज्यानुवाक्ये ॥

'त्वं नो अग्ने' इति । हे [v]अग्ने, [v]त्वं [v]नः अस्मान् प्रति [v]विद्वान् जानानः [v]वरुणस्य [v]देवस्य यः [v]हेळः क्रोधः तं हेळम् [v]अव [v]यासिसीष्ठाः । यसु उपक्षये । अवपूर्वस्य यसेः ण्यन्तस्य लिङ्येतद्रूपम् । अव यासिसीष्ठाः, हेळस्य अवयासत्वम् अवगमनं मा कृषीष्ठाः । यस्मात् त्वं [v]यजिष्ठः, याजिर्यागः, तत्र तिष्ठतीति यजिष्ठः श्रेष्ठश्च, [v]वह्नितमः वोढृतमः [v]शोशुचानः हविषा दीप्यमानः, अतस्त्वां प्रार्थये-- 'विश्वा द्वेषांꣳसि प्र मुमुग्ध्यस्मत्' । [v]विश्वा विश्वानि [v]द्वेषांꣳसि सर्वाणि द्वेषांसि सर्वाणि दौर्भाग्यानि [v]प्र [v]मुमुग्धि, अस्मत्तो द्वेषांसि प्रमुमुञ्च मोचयेति वा ॥३॥

अ– कात्यायनः– "अग्निवरुणयोस्त्वं नः । स त्वं नः" इति ( काश्रौ १९.७.१५ ) । अवभृथेष्टावेव अग्निवरुणयागे पुरोऽनुवाक्यायाज्ये इति सूत्रार्थः ॥

'त्वं नो अग्ने' इति अग्निवरुणदेवत्ये त्रिष्टुभौ वामदेवदृष्टे । हे [v]अग्ने, [v]त्वं [v]नः अस्मान् प्रति [v]वरुणस्य [v]देवस्य [v]हेळः हेडः असुनन्तः क्रोधम् [v]अव [v]यासिसीष्ठाः निवर्तय । 'यसु उपक्षये' । अस्यावपूर्वस्य णिजन्तस्याशीर्लिङि मध्यमैकवचनम् । किं च– [v]विश्वा विश्वानि सर्वाणि [v]द्वेषांसि दौर्भाग्यानि [v]अस्मत् अस्मत्तः सकाशात् [v]प्रमुमुग्धि मोचय दूरीकुरु । 'मुच्लृ मोक्षणे' । अस्य व्यत्ययेन शपः श्लौ, अभ्यासद्वित्वे लोटि मध्यमैकवचनम् । कीदृशस्त्वम् ? [v]विद्वान् स्वाधिकारं जानन्, [v]यजिष्ठः अतिशयेन यष्टा यजिष्ठः । "तुरिष्ठेमेयःसु" ( पा ६.४.१५४ ) इति तृचो लोपः । [v]वह्नितमः वहतीति वह्निः, अत्यन्तं वह्निर्वह्नितमः, अतिशयेन हविषां वोढा । [v]शोशुचानः अत्यन्तं शोचते दीप्यते इति शोशुचानः । शोचतेर्यङन्ताच्छानच् प्रत्ययः । शोचतिः *ज्वलतिकर्मा ( द्र. निघण्टु १.१६ ) इति यास्कः ॥३॥

6. S3 त्वं नो … अस्मदिति for त्वं नो अग्न इति । स त्वं नो अग्न इति च ।
8. S3 om. त्वं नो अग्न इति; V2 om. हे
17. P2 om. इति
24.* निघण्टुमनुसृत्य संभावितोऽयं पाठः । सर्वेषु लिखितपुस्तकेषु 'कान्तिकर्मा' इति पाठ उपलभ्यते ।

अवभृथेष्टौ याज्यापुरोनुवाक्याः ]

स त्वं नो॑ अग्नेऽवमो भ॑वोती नेदि॑ष्ठो अस्या उषसो व्युष्टौ ।
अव॑ यक्ष्व नो वरु॑णं रराणो वीहि मृ॑ळीकं सुहवो॑ न एधि ॥४॥

---

सः । त्वम् । नः । अग्ने । अवमः । भव । ऊती ।
नेदि॑ष्ठः । अस्याः । उषसः । व्युष्टा इति विऽउष्टौ ।
अव॑ । यक्ष्व । नः । वरु॑णम् । ररा॑णः ।
वीहि । मृळीकम् । सुहव इति सुऽहवः । नः । एधि ॥ इमाः ॥४॥

---

आ– ' स त्वं नो अग्ने ' इति । हे श्रीभगवन्नग्ने, एवं प्रार्थ्यमानो यः $^{v}$सः $^{v}$त्वं $^{v}$नः अस्माकम् $^{v}$अवमः अवितृतमः पालयितृतमः $^{v}$भव । $^{v}$ऊती । व्यत्ययः । ऊत्या अवनेन । $^{v}$नेदिष्ठः च अन्तिकतमश्च निकटतमोऽग्निः । ' अस्या उषसो व्युष्टौ ' । $^{v}$अस्याः $^{v}$उषसः । उष दाहे, वश कान्तौ । उषसः समनन्तरकाले अस्मिन्नेवाहनीत्यभिप्रायः । ' अव यक्ष्व ' । अवपूर्वो यक्षिर्नाशने वर्तते । इह तु धात्वन्तरयोगात् स्वकीयमेवार्थं ब्रवीति । $^{v}$वरुणम् $^{v}$अव, अवगत्य $^{v}$यक्ष्व यजस्व । $^{v}$नः अस्माकं $^{v}$रराणः । रा दाने । हविर्ददानः $^{v}$वीहि $^{v}$मृळीकं सुखकरं पुरोडाशं वीहि । वी गतौ । गच्छ, गत्वा च भक्षय । ' सुहवो न एधि ' । $^{v}$नः अस्माकं $^{v}$सुहवः शोभनाह्वानः ( $^{v}$एधि ) भव ॥४॥

---

अ– ' स त्वं नो अग्ने ' । हे $^{v}$अग्ने, $^{v}$सः $^{v}$त्वम् $^{v}$अस्याः $^{v}$उषसः $^{v}$व्युष्टौ व्युष्टिकाले वर्तमानकाले अस्मिन्नहनीत्यर्थः । $^{v}$ऊती । व्यत्ययः । ऊत्या अवनेन $^{v}$नः अस्माकम् $^{v}$अवमः रक्षकः $^{v}$नेदिष्ठः अन्तिकतमः समीपतमश्च $^{v}$भव । अवतीत्यवमः । अवतेरौणादिको मप्रत्ययः । यद्वा– अवतीत्यवः । पचाद्यच् । अत्यन्तमवः अवतमः । स एव अवमः । तलोपश्छान्दसः । अत्यन्तमन्तिको नेदिष्ठः । " अन्तिकबाढयोर्नेदसाधौ " ( पा ५·३·६३ ) इति इष्टे परे नेदादेशः । किंच– $^{v}$रराणः । रा दाने । हविर्ददत् सन् $^{v}$त्वं $^{v}$नः अस्माकमर्थे $^{v}$वरुणम् $^{v}$अव $^{v}$यक्ष्व सम्यक् यज । अवपूर्वाद्यजतेर्लोटि शपो लुक् । ततः $^{v}$मृळीकं मृडीकम् । मृडयतीति मृडीकम् । सुखकरं हविः $^{v}$वीहि भक्षय । ' वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु ' । अस्माल्लोट् । किं च– $^{v}$नः अस्माकं $^{v}$सुहवः सुष्ठु हवः आह्वानं यस्य सः स्वाह्वानः $^{v}$एधि भव । " ध्वसोरेद्धावभ्यासलोपश्च " ( पा ६·४·११९ ) इत्येकारः ॥४॥

---

7. S3 स त्वं ... एधीति for स त्वं नो अग्ने इति ।

म॒हीमू॒ षु मा॒तर॑ꣳ सु॒व्र॒ताना॑मृ॒तस्य॒ पत्नी॒मव॑से हुवेम ।
तु॒वि॒क्ष॒त्राम॒जर॑न्तीमुरू॒चीꣳ सु॒शर्मा॑ण॒मदि॑तिꣳ सु॒प्रणी॑तिम् ॥५॥

---

म॒हीम् । ऊँ॒ इत्यूँ॑ । सु । मा॒तर॑म् । सु॒व्र॒ताना॒मिति॑ सु॒ऽव्र॒ताना॑म् । ऋ॒तस्य॑ । पत्नी॑म् । अव॑से । हु॒वे॒म । तु॒वि॒क्ष॒त्रामिति॑ तु॒वि॒ऽक्ष॒त्राम् । अ॒जर॑न्तीम् । उ॒रू॒चीम् । सु॒शर्मा॑ण॒मिति॑ सु॒ऽशर्मा॑णम् । अदि॑तिम् । सु॒प्रणी॑तिम् । सु॒ऽप्रनी॑ति॒मिति॑ सु॒ऽप्रनी॑तिम् ॥ क्षुम् ॥५॥

---

आ– ‘महीमू षु मातरम्’, ‘सुत्रामाणम्’ इति च द्वे आदित्यस्य चरोः याज्याऽनुवाक्ये आदितिदेवत्ये त्रिष्टुभौ । ऋषिर्गयप्लातः । ‘अदितिं हुवेम’ इति संबन्धः । कथंभूतामदितिमिति । ᵛमहीं महतीम् । ᵛऊ ᵛसु निपातोपसर्गौ । ᵛमातरं निर्मात्रीम्, ᵛसुव्रतानां सुकर्मणां सुनियमानां च फलस्य निर्मात्रीम् । ᵛऋतस्य ᵛपत्नीम्, यज्ञस्य जायाम्, ऋतस्य सत्यस्य पालयित्रीं वा । ᵛतुविक्षत्राम्, तुवीति बहुनाम, बहुक्षत्राम्, बहुक्षतत्राणां बहुक्षत्रां वा । ᵛअजरन्तीं जरारहिताम्, ᵛउरूचीं बहुधाञ्चनाम्, ᵛसुशर्माणं कल्याणाश्रयां साधुशरणाश्रयां वा, ᵛसुप्रणीतिं सुप्रणेत्रीम्, ᵛअदितिम् अदितिनाम्नीं शोभनतया ᵛहुवेम आह्वयाम ॥५॥

---

अ- कात्यायनः- “आदित्यस्य सुत्रामाणं, महीमू षु मातरम्” ( काश्रौ १९.७.१६ ) इति । ‘आदित्यं यक्ष्यमाणो निर्वपत्यादित्यमीजानः’ इत्यादावन्ते च आदित्यश्चरुरुक्तः, तस्य ‘सुत्रामाणम्’ इति पुरोऽनुवाक्या, ‘महीमू षु’ इति याज्येति सूत्रार्थः ॥

‘महीमू षु’ । अदितिदेवत्या त्रिष्टुप् । ‘ऊ’, ‘सु’ इति निपातौ पादपूरणौ । अत्र “इकः सुञि” (पा ६.३.१३४) इति सु- निपाते परे उ- इत्यस्य दीर्घः । “सुञः” ( पा ८.३.१०७ ) इति सोः षत्वम् । वयम् ᵛअवसे अवितुं रक्षितुम् ᵛअदितिम् ᵛअखण्डितत्वात् अदितिस्तां देवतां ᵛहुवेम आह्वयामः ।

---

7. S3 पाठस्तु- महीमू षु ... सुप्रणीतिमिति for महीमू षु मातरम् । सुत्रामाणमिति च; V2 D3 अदितिदेवत्यस्य for आदित्यस्य
8. V2 °प्लुतः for °प्लातः
13. V2 सुत्रामाणं for सुशर्माणं
14. V2 आह्वयेम for आह्वयाम

अवभृथेष्टौ याज्यापुरोनुवाक्याः ]

तुमर्थे असे प्रत्ययोऽवतेः । कीदृशीमदितिम् ? vमहीं महतीं महनीयत्वात् vसुव्रतानां शोभनव्रतानां vमातरं निर्मात्रीं मातृवत् पोषयित्रीम् । व्रतमिति कर्मनाम । vऋतस्य यज्ञस्य vपत्नीं पालयित्रीं, vतुविक्षत्रां, तुवीति बहुनाम, बहुक्षतात् त्राणशीलाम्, vअजरन्तीं न जरन्तीत्यजरन्ती, तां जरारहिताम् vउरूचीम्, उरु बहु अञ्चतीत्युरूची, बहुगमनशीला, ताम् । vसुशर्माणं शोभनं शर्म सुखमाश्रयो यस्यास्ताम्, vसुप्रणीतिम् शोभना प्रणीतिः प्रणयनं प्रेरणं भजनं वा यस्यास्ताम् । अत्रादितिर्देवमाता स्तूयते । सा च लक्ष्मीः, अखण्डितत्वेनादितिशब्दवाच्यत्वात् ॥५॥

---

सुत्रामा॑णं पृथि॒वीं द्याम॑ने॒हस॑ꣳ सु॒शर्मा॑ण॒मदि॑तिꣳ सु॒प्रणी॑तिम् ।
दैवीं॒ नाव॑ꣳ स्वरि॒त्रामना॑गस॒मस्र॑वन्ती॒मा रु॑हेमा स्व॒स्तये॑ ॥६॥

---

सु॒त्रामा॑ण॒मिति॑ सु॒ऽत्रामा॑णम् । पृ॒थि॒वीम् । द्याम् । अ॒ने॒हस॑म् ।
सु॒शर्मा॑ण॒मिति॑ सु॒ऽशर्मा॑णम् । अदि॑तिम् । सु॒प्रणी॑तिम् । सु॒ऽप्रनी॑ति॒मिति॑ सु॒ऽप्रनी॑तिम् ।
दैवी॑म् । नाव॑म् । स्व॒रि॒त्रामिति॑ सु॒ऽअ॒रि॒त्राम् । अना॑गसम् ।
अस्र॑वन्तीम् । आ । रु॒हे॒म । स्व॒स्तये॑ ॥ वृम् ॥६॥

---

आ– ' सुत्रामाणं पृथिवीम् ' इति । ' अदितिमाहुवेम ' इति संबन्धः । कथंभूतामदितिम् ? vसुत्रामाणं साधुपालयित्रीम्, vपृथिवीं विस्तीर्णां, vद्यां दीप्तिरूपिणीम्, vअनेहसं पापविरोधिनीम् । vसुशर्माणं साधुशरणाम्, vसुप्रणीतिं साधुप्रणेत्रीम् । vदैवीं देवसंबन्धिनीं यज्ञमयीं वा, vनावं तरणीं तरणीभूतां vस्वारित्राम्, अरिभ्यस्त्रायत इत्यरित्रं शस्त्रं, सु अरित्रं यस्याः सा स्वरित्रा ताम्, vअनागसम् अपापाम् अनपराधां वा । vअस्रवन्तीं वृथा स्रवणरहिताम् उदकेनापूर्यमाणामनवच्छिन्नतया साधुफलदायिनीमित्यर्थः, एवंगुणविशिष्टाम् vअदितिम् vआरुहेम आरोहणं कुर्मः । कस्मै ? vस्वस्तये अविनाशाय उत्कृष्टफलाय ॥६॥

---

अ– ' सुत्रामाणं पृथिवीम् ' । अदितिदेवत्या त्रिष्टुप् । गयप्लातदृष्टा । vदैवीं देवसंबन्धिनीं vनावं यज्ञरूपनौकां लक्ष्मीरूपां वा vस्वस्तये कल्याणाय अविनाशाय vवयम् vआ vरुहेम, यज्ञं कृत्वा स्वर्गं गच्छेमेत्यर्थः । कीदृशीं नावम् ? vसुत्रामाणम्, सुष्ठु त्रायते इति सुत्रामा तां, vपृथिवीं विशालां

---

14. S3 पाठस्तु– सुत्रामाणं ... स्वस्तय इति for सुत्रामाणं पृथिवीमिति
17. D3 om. वा
18. D3 om. सु अरित्रं

vद्यां स्वर्गसाधनत्वात् स्वर्गरूपाम् vअनेहसम्, एह इति क्रोधनाम, न विद्यते एहो यस्याः सा, तां क्रोधरहिताम्। सान्त एहशब्दः। यद्वा– लुप्तोपमेयम्, पृथिवीम् इव सुत्रामाणं पालयित्रीं धारयित्रीं च द्याम् इव अनेहसम् अक्रोधाम्। vसुशर्माणम् साधुशरणभूताम् vअदितिम् अखण्डितामदीनां वा। vसुप्रणीतिम् सुष्ठु प्रणयतीति तथा, साधुप्रणेत्रीम्। vस्वरित्राम्, साधुकेन्दुवालाम्। अरित्रशब्दः केन्दुवालवाचकः। "अरित्रं केनिपातकः" (अको १·१०·१३) इत्यभिधानात्। नौकापक्षे दण्डः, देवतापक्षे कन्दुकाः सेवका इति भेदः, यज्ञपक्षे प्रयाजाऽनुयाजाश्चारित्रस्थानीयाः इति। vअनागसं सर्वज्ञत्वादपराधरहिताम्, नौपक्षे लोकान्न मज्जयन्तीम्। vअस्रवन्तीम् अच्छिद्राम्, देवतापक्षे निर्दोषाम्, ईदृशीं नावम् आरोहेम इति संबन्धः। संहितायां दीर्घश्छान्दसः। नौकायां विनियोगः स्मार्तसूत्रे उक्तः– "नावमारोहति सुत्रामाणम्*" इत्यादिना ॥६॥

---

सुनावमा रुहेयमस्रवन्तीमनागसम्।
शतारित्राꣳ स्वस्तये॥७॥

---

सुनावमिति सुऽनावम्। आ। रुहेयम्। अस्रवन्तीम्। अनागसम्।
शतारित्रामिति शतऽअरित्राम्। स्वस्तये॥ रैम्॥७॥

---

आ– 'सुनावमा रुहेयम्' इति। स्वर्ग्या नौर्देवता गायत्री। vअनागसम् अपापाम vअस्रवन्तीम् अन्यथा स्रवणशून्याम् vशतारित्राम् बहुविधाऽरित्रवतीम् vसुनावं यजमानोऽहम् vआ vरुहेयम्, आरोहणं कुर्याम्। vस्वस्तये अविनाशिफलाय संसारसागरोत्तरणाय॥७॥

---

अ– 'सुनावमा रुहेयम्'। स्वर्ग्यनौदेवत्या गायत्री। "तद्वै सर्व एव यज्ञो नौः स्वर्ग्या" (शब्रा ४·२·५·१०) इति श्रुतेः स्वर्ग्या नौर्यज्ञः। vसुनावं शोभनां नावं यज्ञरूपां vस्वस्तये अविनाशाय संसारसागरोत्तरणाय। अहम् vआरुहेयम् आरोहेयम्। गुणाभावश्छान्दसः। यज्ञं कुर्यामित्यर्थः। 'अस्रवन्तीम्' इत्यादि पूर्ववत्॥७॥

---

आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम्।
मध्वा रजाꣳसि सुक्रतू॥८॥

---

6. P2 M4 चरित्र° for चारित्र°
9, *पारस्करगृह्यसूत्रे (३.१५.१०) तु 'उत्तरिष्यन्नभिमन्त्रयते सुत्रामाणम्' इति।
14. S3 पाठस्तु – सुनावमा ... स्वस्तय इति for सुनावमा रुहेयमिति; D3 नौर्देवत्यादि for नौर्देवता
15, V2 श्रवण° for स्रवण°
19. V2 S3 °सागरेण for °सागरो°

**अवभृथेष्टौ याज्यापुरोनुवाक्याः ]**

आ । नः । मित्रावरुणा । घृतैः । गव्यूतिम् । उक्षतम् ।
मध्वा । रजांसि । सुक्रतू इति सुऽक्रतू ॥ खौ ॥ ८ ॥

---

आ– 'आ नः' इति, 'प्र बाहवा' इति । मैत्रावरुण्याः पयस्यायाः याज्याऽनुवाक्ये गायत्रीत्रिष्टुभौ । मित्रावरुणदेवत्या गायत्री पयस्या, आद्याया विश्वामित्रः । 'आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम्' । हे Vमित्रावरुणा हे मित्रावरुणौ, Vनः अस्माकं Vगव्यूतिम् । अत्रैकपदामपि विभज्य पूर्वाचार्या वर्णयन्ति– गव्यूतिं, गवि पृथिव्याम् अवनहेतुभूतं क्षेत्रं, गोप्रचारं वा गव्यूतिम्, न तु क्रोशयुगम् । घृतैः Vआ क्षरोदकैः आ Vउक्षतं सिञ्चतम् । उक्ष सेचने । हे Vसुक्रतू शोभनसंकल्पवन्तौ मित्रावरुणौ, Vरजांसि । त्रयो लोकाः रजांस्युच्यन्ते । अतो रजांसि त्रीन् लोकान् Vमध्वा मधुना मधुरसोदकेन आ उक्षतम् ॥८॥

---

अ– कात्यायनः– "आ नः प्र बाहवेति पयस्यायाः" ( काश्रौ १९·७·१६ ) । अवभृथादुदेत्य मैत्रावरुण्या पयस्यया यजतीति पयस्योक्ता । तद्यागे 'आ नः', 'प्र बाहवा' इति पुरोऽनुवाक्यायाज्ये इत्यर्थः ॥

'आ नो मित्रावरुणा' । मित्रावरुणदेवत्या गायत्री विश्वामित्रदृष्टा । हे Vमित्रावरुणा हे मित्रावरुणौ । "सुपां सु°" ( पा ७.१.३९ ) इति विभक्तेः पूर्वसवर्णदीर्घः । Vन अस्माकं Vगव्यूतिं यज्ञमार्गं Vघृतैः युवाम् Vआ Vउक्षतम्, सर्वतः सिञ्चतम् । उक्ष सेचने । यद्वा– गवि पृथिव्याम् ऊतिम् अवनहेतुत्वात् क्षेत्रभूमिं Vघृतैः क्षरणसाधनैरुदकैः सिञ्चतम् । घृ क्षरणे । अस्मान्निष्ठा । किंच– हे Vसुक्रतू शोभनकर्माणौ, युवां Vमध्वा मधुना । आगमस्यानित्यत्वान्न नुम् । Vरजांसि लोकान् Vआ Vउक्षतम् सिञ्चतम् । रज इति लोकनामसु पठितम् ॥८॥

---

प्र बाहवा सिसृतं जीवसे न आ नो गव्यूतिमुक्षतं घृतेन ।
आ मा जने श्रवयतं युवाना श्रुतं मे मित्रावरुणा हवेमा ॥९॥

---

प्र । बाहवा । सिसृतम् । जीवसे । नः । आ । नः । गव्यूतिम् । उक्षतम् । घृतेन ।
आ । मा । जने । श्रवयतम् । युवाना । श्रुतम् । मे । मित्रावरुणा । हवा । इमा ॥ षः ॥९॥

---

3. S3 पाठस्तु– आ नो ... सुक्रतू इति for आ नः इति; S3 om. प्र बाहवा इति; S3 D3 पयस्या for पयस्यायाः
4. S3 om. आ नो ... उक्षतम् ( L 5 )
7. V2 अक्षारोदकैः घृतैः for घृतैः आ क्षरोदकैः; D3 om. आ क्षरोदकैः; S3 आक्षारोदकैः for आ क्षरोदकैः

[ अवभृथेष्टौ याज्यापुरोनुवाक्याः

आ– ‘ प्र बाहवा ’ इति । मित्रावरुणदेवत्या त्रिष्टुप् । वसिष्ठः । ‘ मित्रावरुणा सिसृतम् जीवसे ’ इति । हे मित्रावरुणौ, V बाहवा । छान्दसं पदम् । बाहू V प्र V सिसृतम्, ‘ सृ गतौ ’, अन्तर्भावितण्यर्थः, बाहू प्रसारयतम् । किमर्थमिति– V जीवसे V नः अस्माकमभि जीवसे जीवनाय बाहुप्रसारणेन जीवनहेतुप्रतिपक्षनिवारणात् । अतः– ‘ आ नो गव्यूतिमुक्षतं घृतेन ’ । V नः अस्माकं V गव्यूतिम् । अस्य योगवृत्त्यर्थोऽभिधीयते । गवि पृथिव्याम् ऊतिः अवनम्, अत्रापि गवीति जीवनहेतुभूतक्षेत्राण्यभिप्रेतानि, तदर्थं हि वृष्टिः प्रार्थ्यमाना दृष्टार्था भवति । गोऽजाविषया ऊतिः, अवनमपि यवसात्तम्, अतस्तदुद्भवस्थानमभिप्रेतं गोप्रचारस्थानमिति यावत् । अतः V आ आभिमुख्येन गव्यूतिं V घृतेन अमृतोदकेन V उक्षतम् । उक्ष सेचने, सिञ्चतम् । ‘ आ मा जने श्रवयतं युवाना ’ । V युवाना, छान्दसं पदम् । हे युवानौ मित्रावरुणौ, V मा एवं यज्ञं कुर्वाणं मां V जने जनपदे सर्वजनपदेषु वा V आ आसमन्तात् V श्रवयतम् कथयतम् । ‘ इत्थंभूतगुणो यजमानस्त्वित्थं यागमकरोत् ’ इति कथयतम् । ‘ श्रुतं मे मित्रावरुणा हवेमा ’ । ( V मित्रावरुणा ) हे मित्रावरुणौ, V मे मम V हवा । व्यत्ययः । हवानि आह्वानानि, तानि V इमा इमानि । यद्वा– इमान् हवान् ( V श्रुतम् ) शृणुतम्, श्रुत्वा चानुतिष्ठतमिति ॥९॥

---

अ– ‘ प्र बाहवा ’ । मित्रावरुणदेवत्या त्रिष्टुप् वसिष्ठदृष्टा । हे V युवाना युवानौ तरुणौ मित्रावरुणौ, V नः अस्माकं V जीवसे चिरं जीवनाय V बाहवा बाहू V प्र V सिसृतम्, अन्तर्भूतण्यर्थः, प्रसारयतम्, अस्मज्जीवनविघ्नविनाशनाय बाहुप्रसारणं कुरुतमित्यर्थः । बाहवेत्यत्र “ आङ्याजयाराम्° ” ( पा ७·१·३९ वा २ ) इति सूत्रेण विभक्तेराङादेशे ङित्वात् “ घेर्ङिति ” ( पा ७·३·१११ ) इति गुणे कृते रूपसिद्धिः । किं च– V नः अस्माकं V गव्यूतिं क्षेत्रं V घृतेन जलेन V आ V उक्षतम् सिञ्चतम् । भवत्सिक्तक्षेत्रनिष्पन्नधान्यैः यज्वानं V मा मां V जने लोके युवाम् V आ V श्रवयतम् आश्रावयतम् ।

---

1. S3 पाठस्तु– प्र बाहवा ... हवेमेति for प्र बाहवा इति
   S3 om. प्र बाहवा ... प्र सिसृतमिति ( L 2 )
7. V2 S3 यवसरूपम् for यवसात्तम्
10. V2 D3 अन्नं for जने
11. V2 S3 om. तु; V2 S3 इत्थंभूत° for इत्थं
12. V2 D8 आह्वानानि हवा for हवानि आह्वानानि ( L 13 )
13. D3 om. शृणुतम्
17. M2 °विनाशाय for °विनाशनाय; P2 M4 आङ् आयज्ञ अयारश्च for आङ् याजयाराम्

'इत्थमदादित्थमयाक्षीदयम्' इति जनपदेषु मां कथयतमित्यर्थः । वृद्ध्यभाव आर्षः । किं च– युवां ᵛमे मम ᵛइमा इमानि ᵛहवा आह्वानानि श्रुतं शृणुतम्, श्रुत्वा पूर्वोक्तं संपादयतमित्यर्थः । श्रुधातोः शपो लुक् । श्रुतमित्याख्यातस्य पादादित्वान्न सर्वनिघातः । "निलोपो बहुलम्" ( द्र. वाप्रा ३·१८ ) इति प्रातिशाख्येन इमानीत्यादिनिकारलोपः ॥९॥

शं नो॑ भवन्तु वा॒जिनो॒ हवे॑षु दे॒वता॑ता मि॒तद्र॑वः स्व॒र्काः ।
ज॒म्भय॒न्तोऽहिं॒ वृक॒ꣳ रक्षा॑ꣳसि सने॑म्य॒स्मद्यु॑यव॒न्नमी॑वाः ॥१०॥

शम् । न॒: । भ॒वन्तु॒ । वा॒जिन॑: । हवे॑षु । दे॒वता॒तेति॑ दे॒वऽता॑ता । अमी॑वाः ॥त॥१०॥

ते नो॒ अर्व॑न्तो हव॒नु॒श्रुतो॒ हवं॒ विश्वे॑ शृण्वन्तु वा॒जिनो॑ मि॒तद्र॑वः ।
स॒ह॒स्र॒सा मे॒धसा॑ता इ॒व त्मना॑ म॒हो ये धन॑ꣳ समि॒थेषु॑ ज॒भ्रिरे ॥११॥

ते । न॒: । ज॒भ्रि॒रे ॥व॥११॥

वाजे॑वाजेऽवत वाजिनो नो॒ धने॑षु विप्रा अमृता ऋतज्ञाः ।
अ॒स्य मध्व॑: पिबत मा॒दय॑ध्वं तृ॒प्ता या॑त प॒थिभि॑र्दे॒व॒यानै॑: ॥१२॥(१)॥

वाजे॑वाजेऽवत । देवयानै॑: ॥ स ॥ १२ ॥ १ ॥

आ– 'शं नः', 'ते नः', 'वाजे वाजेऽवत' इति च याज्यानुवाक्याः व्याख्याताः ॥ १०-१२ ॥

अ– कात्यायनः– "वाजिनस्य शं नो वाजे वाजे । ते न इति वा" ( द्र. काश्रौ १९·७·१८) । पयस्यायां वाजिनयागोऽस्ति । तत्र 'शं नः', 'ते नः' इति वा पुरोऽनुवाक्या । 'वाजे वाजे' इति याज्येति सूत्रार्थः ॥

'शं नो भवन्तु'। वाजिनदेवत्यास्तिस्रस्त्रिष्टुभो वसिष्ठादिदृष्टाः । ᵛवाजिनः अश्वाः अन्नवन्तः प्राणिनो वा ᵛनः अस्माकं ᵛशं सुखरूपाः ᵛभवन्तु । कीदृशाः वाजिनः ? ᵛहवेषु आह्वानेषु सत्सु

1. M4 om. किं च ... संपादयतमित्यर्थः । [ L 2 ]

[ अवभृथेष्टौ याज्यापुरोनुवाक्याः

देवताता देवतातौ देवसभाहेतुभूते यज्ञे मितद्रवः। मितं परिमितं द्रवन्ति गच्छन्तीति मितद्रवः। स्वर्काः शोभनान्नाः शोभनमन्त्रा वा, अहिं सर्पं, वृकम् अरण्यश्वानं, रक्षांसि राक्षसांश्च जम्भयन्तः क्षोभयन्तः हिंसयन्त इत्यर्थः। जभ गात्रविनामे। अस्मात् णिजन्तात् शतृप्रत्यये "रधिजभोरचि" (पा ७.१.६१) इति नुम्। अश्वपक्षे हिंसनं शीघ्रं सर्पादीनामतिक्रमणमेव। किं च- अस्मत् अस्मत्तः अमीवाः रोगान्। अमीवेति रोगनाम। सनेमि क्षिप्रम्। सनेमीति क्षिप्रनाम। युयवन् ये पूर्वं वियोजितवन्तस्तादृशाः नः शं भवन्त्विति संबन्धः! यू पृथग्भावे। अस्माल्लुङ्। द्वित्वं छान्दसम् ॥१०॥

'ते नो अर्वन्तः'। ते वाजिनः नः अस्माकं हवम् आह्वानं शृण्वन्तु। कीदृशास्ते? अर्वन्तः गतिकुटिलाः। "अर्वणस्त्रसावनञः" (पा ६.४.१२७) इति ऋकारान्तत्वम्। हवनश्रुतः हवनमाह्वानं शृण्वन्तीति तथा। मितद्रवः बाह्यचित्तानुकूलतया मितं परिमितं गच्छन्तीति तथा। विश्वे यूथरूपाः सर्वेऽपि। ते के? ये अश्वाः समिथेषु संग्रामेषु त्मना आत्मना स्वकीयबलेन महः महतां शत्रूणां धनं जभ्रिरे जह्रिरे आहृतवन्तः। "महो नपुंसके" (वाप्रा २.३२) इति प्रातिशाख्येन नपुंसकस्य आद्युदात्तत्वनियमनात् अयं पुंलिङ्गोऽकारान्तः। "सुपां सु॰" (पा ७.१.३९) इति षष्ठ्याः सु इत्यादेशः। तत्र दृष्टान्तः- 'सहस्रसा मेधसाता इव'। सहस्रस्य सहस्रसंख्याकस्य धनस्य सनितारो दातारः सहस्रसाः वदान्याः। षणु दाने। अस्मादौणादिको डप्रत्ययः। मेधो यज्ञः, तस्य सातिः समाप्तिः, तस्यां मेधसातौ यज्ञसमाप्तौ त्मना मनसा धनं यथा प्रयच्छन्ति तथेति। षोऽन्तकर्मणीत्यस्मात् स्त्रियां क्तिन्। "आदेच उपदेशेऽशिति" (पा ६.१.४५) इत्याकारे सातिरिति सिद्ध्यति ॥११॥

'वाजेवाजेऽवत'। विप्राः मेधाविनः अमृताः अमरधर्माणः ऋतज्ञाः सत्यज्ञाः। ईदृशाः हे वाजिनः अश्वाः, वाजेवाजे अन्ने अन्ने, संग्रामे संग्रामे वा, वाजशब्दस्य संग्रामार्थत्वात्, उपस्थिते सति, तस्मात् प्राप्येषु धनेषु निमित्तभूतेषु, धननिमित्तमित्यर्थः, नः अस्मान् अवत रक्षत। किं च- यूयम् अस्य मध्वः इदं मधु। कर्मणि षष्ठी। 'आगमानुशासनमनित्यम्' इति वचनात् [न] नुम्। स्वादूदकं पिबत, तेन च मादयध्वं हृष्टा भवथ। अथ तृप्ता यूयं देवयानैः देवगमनयोग्यैः पवित्रैः पथिभिः मार्गैः यात गच्छत। अयं मन्त्रः स्मार्तसूत्रे पितृविसर्जने विनियुक्तत्वात् तत्परत्वेनापि योज्यते। हे विप्राः ज्ञानपूर्णाः अमृताः जीवन्मुक्ताः ऋतज्ञाः सत्यरूपब्रह्मज्ञाः वाजिनः स्वधालक्षणपित्रन्नवन्तः वसुरुद्रादित्यरूपाः भवन्तः हे पितरः, वाजेवाजे अन्नेअन्ने धनेषु च निमित्तेषु नः अस्मान् अवत, तादृशमन्नं धनं च दत्त, याभ्यां भवदीयं श्राद्धं विधिना साङ्गं कुर्म इति भावः। अस्य मध्वः इदानीं दत्तं मधुरमन्नादिरसं पिबत, पीत्वा च मादयध्वम्। एवं तृप्ताः सन्तो यूयं देवयानैः पथिभिर्यात, परममुक्ता भवतेत्यर्थः। 'अथ योऽस्य प्रियः स्यात् तमेतमनुमन्त्रयीत' इति श्रुतेस्तत्परत्वमपि पूर्ववत् द्रष्टव्यम् ॥१२॥

इति श्रीमद्वेदार्थदीपिकायां त्रयोविंशे प्रथमोऽनुवाकः ॥१॥

---

1. M4 om. देवताता
19. P2 °धर्मिणः for °धर्माणः
26. P2 om. भवन्तः

[ अथ द्वितीयोऽनुवाकः । ]

समिद्धो अग्निः समिधा सुसमिद्धो वरेण्यः ।

गायत्री छन्द इन्द्रियं त्र्यविर्गौर्वयो दधुः ॥१॥

---

समिद्ध इति सम् ऽ इद्धः । अग्निः । समिधेति सम्ऽइधा ।

सुसमिद्ध इति सुऽसमिद्धः । वरेण्यः ।

गायत्री । छन्दः । इन्द्रियम् ।

त्र्यविरिति त्रिऽअविः । गौः । वयः । दधुः ॥ ध्रि ॥१॥

---

आ– 'समिद्धो अग्निः' इति एकादशाप्रियोऽनुष्टुभो नाराशंसा इन्द्राय वयोधसः स्वस्त्यात्रेयस्यार्षम् । 'समिद्धो अग्निः समिधा सुसमिद्धो वरेण्यः' । $^{v}$समिधा प्रयाजदेवतया समिन्धनेन $^{v}$समिद्धः, प्रयाजघृतेन $^{v}$सुसमिद्धः सुदीप्तः $^{v}$अग्निः $^{v}$वरेण्यः वरणीयः संभजनीयः । $^{v}$गायत्री $^{v}$छन्दः । चतुर्विंशत्यक्षरा गायत्री । $^{v}$त्र्यविः $^{v}$गौः च $^{v}$इन्द्रियं सामर्थ्यं $^{v}$वयः सत्त्वमन्नं वा आयुर्वा, इन्द्रियं वयश्च द्वयम् एते इन्द्रे $^{v}$दधुः निदध्युः ॥१३॥

---

अ– कात्यायनः – "वयोधस आप्रियः समिद्धो अग्निः समिधेति" ( काश्रौ १९.७.२० ) । वयोधसे पशौ 'समिद्धो अग्निः' इत्याद्या एकादश ऋच आप्रियः प्रयाजानां याज्या इति सूत्रार्थः ॥

'समिद्धो अग्निः' । एकादशाप्रीदेवत्या अनुष्टुभः स्वस्त्यात्रेयदृष्टाः । $^{v}$अग्निः $^{v}$गायत्री $^{v}$छन्दः $^{v}$गौः च एते त्रयः $^{v}$इन्द्रियं वीर्यं $^{v}$वयः बलम् अन्नमायुर्वा, अर्थादिन्द्रे $^{v}$दधुः दधतु प्रयच्छन्तु । कीदृशोऽग्निः ? $^{v}$समिधा प्रयाजदेवतया $^{v}$समिद्धः दीप्तः, $^{v}$सुसमिद्धः प्रयाजघृतेनातिदीप्तः $^{v}$वरेण्यः वरणीयः संभजनीयः । कीदृशो गौः ? $^{v}$त्र्यविः । त्रयो अवयोऽनुचरा यस्य त्र्यविः । यद्वा– षण्मासावधिः कालोऽविः । त्रयोऽवयो यस्य स तथा, सार्धवत्सरो गौरित्यर्थः ॥१॥

---

तनूनपाच्छुचिव्रतस्तनूपाश्च सरस्वती ।

उष्णिहा छन्द इन्द्रियं दित्यवाड् गौर्वयो दधुः ॥२॥

---

8. S3 पाठस्तु – समिद्धो ... दधुरिति for समिद्धो अग्निरिति

12. D3 mo. निदध्युः ।

तनूनपादिति तनूऽनपात् । शुचिंव्रत इति शुचिंऽव्रतः ।
तनूपा इति तनूऽपाः । च । सरस्वती ।
उष्णिहा । छन्दः । इन्द्रियम् ।
दित्यवाळिति दित्यऽवाट् । गौः । वयः । दधुः ॥ त्रि ॥२॥

---

आ– vतनूनपात् तनूनामपां नपात् अपत्यम्, 'अग्निरपः प्रविश्य प्रातर्जायत' इत्यभिप्रायेण । यद्वा– तनूर्गौः तस्याः अपत्यं क्षीरं घृतं च । vशुचिव्रतः । शुचिरित्युज्ज्वलकर्मा अग्निः । vसरस्वती अपि vतनूपाः । vउष्णिहा vछन्दः । अत्र व्यत्ययः । उष्णिक् अष्टाविंशत्यक्षरा उष्णिक् । छादयतीति छन्दः । vदित्यवाट् । दित्यां भवो दित्यम्, तद्वहतीति दित्यवाट् vगौः च । एते चत्वारः vइन्द्रियं vवयः च इन्द्रे vदधुः दध्युः ॥१४॥

---

अ– 'तनूनपाच्छुचिव्रतः' । तनूनामपां नपात् पौत्रः तथा । यद्वा– तनूनां गवां नपात्, पौत्रत्वात् घृतम्, प्रयाजदेवता वा । प्राणितनूरक्षकत्वात् vतनूनपात् । तथा vसरस्वती vउष्णिहा vछन्दः । हलन्तत्वादाप्, उष्णिक् छन्द इत्यर्थः । vगौः च । एते चत्वारः इन्द्रे vइन्द्रियं vवयः च vदधुः दधतु । कीदृशस्तनूनपात् ? vशुचिव्रतः शुचि शुद्धं कर्म यस्य सः । कीदृशी सरस्वती ? vतनूपाः तनुं शरीरं बुद्धिस्वरूपेण पातीति तथा । कीदृशो गौः ? दित्यवाट् । दित्यं हविर्वहतीति दित्यवाट् । दित्येति हविर्नाम ॥२॥

---

इळाभिरग्निरीड्यः सोमो देवो अमर्त्यः ।
अनुष्टुप् छन्द इन्द्रियं पञ्चाविर्गौर्वयो दधुः ॥३॥

---

इळाभिः । अग्निः । ईड्यः । सोमः । देवः । अमर्त्यः ।
अनुष्टुप् । अनुस्तुबित्यनुऽस्तुप् । छन्दः । इन्द्रियम् ।
पञ्चाविरिति पञ्चऽअविः । गौः । वयः । दधुः ॥चुं॥३॥

---

5. S3 पाठस्तु– तनूनपाच्छुचि॰ ... दधुरिति for तनूनपात्; S3 om. अग्निरप ... प्रायेण यद्वा ... तस्याः ( L 6 )

9. D3 om. दध्युः

12. M4 O2 हलन्ताद्वेति टाप् for हलन्तत्वादाप्

वयोधस आग्नियः ]

आ– ' इळाभिरग्निरीड्यः ' इति । Vइळाभिः प्रयाजदेवताभिः सह Vअग्निः सर्वज्ञः Vईड्यः स्तोतव्यः । Vसोमः च Vदेवः Vअमर्त्यः अमरः, Vअनुष्टुप् Vछन्दः । द्वात्रिंशदक्षरा अनुष्टुप् । Vपञ्चाविः च Vगौः । एते Vइन्द्रियं Vवयः च इन्द्रे Vदधुः ॥१५॥

---

अ– ' इळाभिरग्निः ' । Vइळाभिः प्रयाजदेवताभिः सहितः Vअग्निः, Vसोमः Vदेवः, Vअनुष्टुप् Vछन्दः, Vगौः च एते पञ्च Vइन्द्रियं Vवयः चेन्द्रे Vदधुः । कीदृशोऽग्निः ? Vईड्यः, स्तुत्यः । कीदृक् सोमः ? Vअमर्त्यः, अमर्त्यधर्मा । कीदृशी गौः ? Vपञ्चाविः । पञ्च अवयोऽनुचराः कालविशेषा वा यस्य सः । सार्धद्विवर्ष इत्यर्थः ॥३॥

---

सुबर्हिरग्निः पूषण्वान्त्स्तीर्णबर्हिरमर्त्यः ।
बृहती छन्द इन्द्रियं त्रिवत्सो गौर्वयो दधुः ॥४॥

---

सुबर्हिरिति सुऽबर्हिः । अग्निः । पूषण्वानिति पूषण्ऽवान् ।
स्तीर्णबर्हिरिति स्तीर्णऽबर्हिः । अमर्त्यः ।
बृहती । छन्दः । इन्द्रियम् । त्रिवत्स इति त्रिऽवत्सः । गौः । वयः । दधुः ॥ श्रीं ॥४॥

---

आ– ' सुबर्हिरग्निः ' इति । शोभनबर्हिः Vसुबर्हिः । प्रयाजदेवता Vअग्निः । Vपूषण्वान्, पुष्णातीति पूषा, तद्वान् पूषण्वान् । Vस्तीर्णबर्हिः विस्तीर्णबर्हिः । Vअमर्त्यः । Vबृहती Vछन्दः । षट्त्रिंशदक्षरा बृहती । Vत्रिवत्सः च Vगौः, एते Vइन्द्रियं Vवयः च इन्द्रे Vदधुः ॥१६॥

---

अ– ' सुबर्हिरग्निः ' । शोभनं बर्हिः । प्रयाजदेवता पूषा अस्यास्तीति Vपूषण्वान्, पूष्णा युक्तः Vअग्निः । स्तीर्णं बर्हिर्यस्य सः Vस्तीर्णबर्हिः । Vअमर्त्यः देवः । " अमर्त्या अमृतान्धसः " ( अको १.१.८ ) इत्यभिधानात् । Vबृहती Vछन्दः षट्त्रिंशदक्षरात्मकम् । त्रयो वत्साः अनुचरा वत्सरा वा यस्य स Vत्रिवत्सः Vगौः च । लोप आर्षः । एते चत्वारः Vइन्द्रियं Vवयः चेन्द्रे Vदधुः ॥४॥

---

1. S3 इळाभिरग्निरीड्यः ... दधुः for इळाभिरग्निरीड्यः; V2 सर्वशः for सर्वज्ञः
13. S3 सुबर्हिरग्निः ... दधुरिति for सुबर्हिरग्निरिति; S3 प्रयाजे for प्रयाज°
14. S3 om. विस्तीर्णबर्हिः
19. M4 after छन्दः adds तन्नाम

दुरो देवीर्दिशो महीर्ब्रह्मा देवो बृहस्पतिः ।
पङ्क्तिश्छन्द इहेन्द्रियं तुर्यवाड् गौर्वयो दधुः ॥५॥

---

दुरः । देवीः । दिशः । महीः । ब्रह्मा । देवः । बृहस्पतिः ।
पङ्क्तिः । छन्दः । इह । इन्द्रियम् ।
तुर्यवाळिति तुर्यऽवाट् । गौः । वयः । दधुः ॥ कूं ॥५॥

---

आ– 'दुरो देवीः' इति । [v]दुरः । छान्दसं संप्रसारणम् । द्वारः प्रयाजदेवताः । [v]देवीः देव्यः, [v]दिशः दिक्सहिताः [v]महीः च, [v]ब्रह्मा च [v]देवः [v]बृहस्पतिः च, [v]पङ्क्तिः [v]छन्दः । चत्वारिंशदक्षरा पङ्क्तिः । तत्रापि अष्टाक्षरा पञ्चपादा पङ्क्तिश्च इत्यभिनयेन निर्देशः । [v]इह यज्ञावयवे, इह वा इन्द्रशरीरावयवे । [v]तुर्यवाट् । तुर्यं वहतीति तुर्यवाट् । [v]गौः चेत्येते [v]इन्द्रियं [v]वयः च इन्द्रे [v]दधुः ॥५॥

---

अ– 'दुरो देवीः' । द्वारो देव्यः प्रयाजदेवताः । संप्रसारणम् छान्दसम् । विभक्तिव्यत्ययश्च । [v]महीः महत्यः [v]दिशः, [v]ब्रह्मा [v]देवः, [v]बृहस्पतिः ऋषिः, [v]पङ्क्तिः [v]छन्दः चत्वारिंशदक्षरात्मकम् । तुर्यं चतुर्थं वर्षं युग्मं वा वहतीति [v]तुर्यवाट् [v]गौः चैते षट् देवाः [v]इह यज्ञे इन्द्रे [v]इन्द्रियं [v]वयः च [v]दधुः ॥५॥

---

उषे यह्वी सुपेशसा विश्वे देवा अमर्त्याः ।
त्रिष्टुप् छन्द इहेन्द्रियं पष्ठवाड् गौर्वयो दधुः ॥६॥

---

उषे इत्युषे । यह्वी इति यह्वी । सुपेशसेति सुऽपेशसा । विश्वे । देवाः । अमर्त्याः ।
त्रिष्टुप् । त्रिस्तुब्निति त्रिऽस्तुप् । छन्दः । इह । इन्द्रियम् ।
पष्ठवाळिति पष्ठऽवाट् । गौः । वयः । दधुः ॥ प्रुं ॥६॥

---

6. S3 दुरो देवीः ... दधुरिति for दुरो देवीरिति ।

11. P2 M4 trans छान्दसं after विभक्तिव्यत्ययश्च; P2 om. च; M4 छान्दसः for छान्दसम्

12. M4 बृहती for बृहस्पतिः

वयोधस आप्रियः ]

आ– ‘ उषे यह्वी ’ इति । ‘ उषे ’ इति द्विवचनसामर्थ्यात् सहचारित्वात् द्वितीया रात्रिर्गृह्यते, रात्रिश्च। यह्व इति महन्नाम, महत्यौ। vसुपेशसा vयह्वी इति सुपेशसौ साधुरूपे, vविश्वे vदेवाः च, vअमर्त्याः मर्त्यधर्मराहिताः, vत्रिष्टुप्, चतुश्चत्वारिंशदक्षरा त्रिष्टुप्। ‘ इह इन्द्रियम् ’। vइह यज्ञेन्द्रयोः । पष्ठं वहतीति vपष्ठवाट् च । vगौः इत्येते vइन्द्रियं vवयः च इन्द्रे vदधुः ॥१८॥

अ– ‘ उपे यह्वी ’। उषे इति द्विवचनात् उषा च रात्रिश्चे[ति] द्वे । ‘ विश्वे देवाः अमर्त्याः ’ vदेवाः, विश्वेदेवसंज्ञा देवा इत्यर्थः। vत्रिष्टुप् vछन्दः चतुश्चत्वारिंशदक्षरात्मकम् । पष्ठं भारं वहतीति vपष्ठवाट्। vगौः चैते पञ्च vइह इन्द्रे vइन्द्रियं vवयः च vदधुः। ‘ उषे ’ इत्यत्र ‘ शालस्वस्रोरथाग्रहीत् ’- इत्यादौ स्वसा च तत्पति[श्च] स्वसारौ, तयोः स्वस्रोरितिवदसरूपैकशेषः । उषाशब्दस्योषसानक्तेत्यादौ दिवसमात्रपरत्वात्। कीदृश्यौ vउषे ? vयह्वी यह्वयौ महत्यौ । यह्व इति महन्नाम। vसुपेशसा शोभनं पेशो रूपं ययोस्तौ तथा। सुपेशसौ कृष्णरूपे। विभक्तेराकारः ॥६॥

दैव्या होतारा भिषजेन्द्रेण सुयुजा युजा ।
जगती छन्द इन्द्रियमनड्वान् गौर्वयो दधुः ॥७॥

दैव्या । होतारा । भिषजा । इन्द्रेण । सुयुजेति सुऽयुजा । युजा ।
जगती । छन्दः । इन्द्रियम् । अनड्वान् । गौः । वयः । दधुः ॥ ध्नीं ॥७॥

आ– ‘ दैव्या होतारा ’ इति । vदैव्या दैव्यौ देवसंबन्धिनौ vहोतारा होतारौ आङ्गिरसौ च vभिषजा *मध्यमभिषजौ [ vयुजा ] युजौ vइन्द्रेण सयुजौ संयुक्तौ । vजगती vछन्दः। अष्टाचत्वारिंशदक्षरा जगती । vअनड्वान् च vगौः इत्येते इन्द्रे vइन्द्रियं वीर्यं vवयः च vदधुः ॥१९॥

1. S3 उषे यह्वी ... दधुरिति for उषे यह्वीति; D3 तदीया for द्वितीया
2. V2 D3 °पेशस्यौ for °पेशसौ
4. V2 यज्ञादयः D3 यज्ञादयोः for यज्ञेन्द्रयोः
6. M4 रात्रिश्चेयौ for रात्रिश्चे [ ति ] द्वे ।
10. P2 सुश्च, M4 स for सुपेशसौ
16. S3 पाठस्तु – दैव्या ... दधुरिति for दैव्या होतारा इति; V2 om आङ्गिरसौ

*[ ‘ अयमग्निः मध्यमस्थानीयश्च वायुः इति भिषजौ ’ इति पाठः संभाव्यते। ]

17. V2 D3 इन्द्रियेण युजौ for ( इन्द्रेण सयुजौ )
18. S3 om. इन्द्रे

अ- दैव्या होतारा ’ । दैव्यौ होतारौ प्रयाजदेवौ । ‘ अयं वाऽग्निरसौ च मध्यमो वायुः ’, तावित्यर्थः । कीदृशौ होतारौ ? vभिषजा भिषजौ vइन्द्रेण सयुजौ । इन्द्रेण कालान्तरीयेण सह युज्येते इति, तथा । vयुजौ परस्परं मत्यादिना अनुकूलौ । vजगती vछन्दः अष्टाचत्वारिंशदक्षरात्मकम् । अनः शकटं वहतीति vअनड्वान् vगौः । “ अनसो वाहौ सकारो डकारम् ” ( वाप्रा ३.४५ ) इति प्रातिशाख्येन सस्य डः । एते पञ्चेन्द्रे vइन्द्रियं vवयः च vदधुः ॥७॥

---

तिस्र इळा सर॑स्वती भार॑ती म॒रुतो॒ विशः॑ ।
वि॒राट् छन्द॑ इ॒हेन्द्रि॒यं धे॒नुर्गौर्न वयो॑ दधुः ॥८॥

---

ति॒स्रः । इळा॑ । सर॑स्वती । भार॑ती । म॒रुत॑ः । विश॑ः ।
वि॒राळिति॑ वि॒ऽराट् । छन्द॑ः । इ॒ह । इ॒न्द्रि॒यम् ।
धे॒नुः । गौः । न । वय॑ः । द॒धुः ॥ ग्रु ॥ ८ ॥

---

आ– ‘ तिस्र इळा ’ इति । vतिस्रः देव्यः, vइळा vसरस्वती vभारती इति । vमरुतः च देवाः vविशः च । vविराट् vछन्दः । दशाक्षराश्चत्वारः पादा विराट् । vइह इत्यभिनयेन निर्देशः । vधेनुः च vगौः इन्द्रे vइन्द्रियं vवयः च vदधुः ॥॥२०॥

---

अ– ‘ तिस्र इळा ’ । vइळा vसरस्वती vभारती इति vतिस्रः प्रयाजदेव्यः । vमरुतः vविशः । इन्द्रप्रजाभूता मरुतः । vविराट् vछन्दः चत्वारिंशदक्षरम् । vधेनुः vगौः दोग्ध्री गौः चैते षट् vइह इन्द्रे vइन्द्रियं vवयः च vदधुः । अत्र नः चार्थः ॥८॥

---

त्वष्टा॑ तु॒रीपो॒ अद्भु॑त इन्द्रा॒ग्नी पु॑ष्टि॒वर्ध॑ना ।
द्वि॒पदा॒ छन्द॑ इन्द्रि॒यमु॒क्षा गौर्न वयो॑ दधुः ॥९॥

---

त्वष्टा॑ । तु॒रीप॑ः । अद्भु॑तः । इ॒न्द्रा॒ग्नी इतीन्द्रा॒ग्नी । पु॒ष्टि॒वर्ध॒नेति॑ पु॒ष्टि॒ऽवर्ध॑ना ।
द्वि॒पदेति॑ द्वि॒ऽपदा॑ । छन्द॑ः । इ॒न्द्रि॒यम् । उ॒क्षा । गौः । न । वय॑ः । द॒धुः ॥ द्वी ॥९॥

---

11. S3 पाठस्तु – तिस्र ... दधुरिति for तिस्र इळेति ।

वयोधस आप्रियः ]

आ– ' त्वष्टा तुरीपः ' इति । तुरं त्वरं तूर्णम् आपन्नः $^{v}$तुरीपः $^{v}$त्वष्टा $^{v}$अद्भुतः अत्यभिनवः । ' इन्द्राग्नी पुष्टिवर्धना । द्विपदा छन्दः ' । $^{v}$द्विपदा गायत्री $^{v}$छन्दः । ' उक्षा गौः ' । $^{v}$उक्षा च $^{v}$गौः इत्येते $^{v}$इन्द्रियं $^{v}$वयः च इन्द्रे $^{v}$दधुः इति ॥२१॥

---

अ– ' त्वष्टा तुरीपः ' । तूर्णमाप्नोति व्याप्नोतीति $^{v}$तुरीपः । द्वीप इत्यादिवदीकारः । $^{v}$अद्भुतः विचित्ररूपः $^{v}$त्वष्टा प्रयाजदेवः । पुष्टिं धनादिपोषं वर्धयत इति पुष्टिवर्धनौ । आकार आर्षः । $^{v}$इन्द्राग्नी । $^{v}$द्विपदा $^{v}$छन्दः । द्विपदं गायत्रम् । उक्षतीति $^{v}$उक्षा, रेतःसेचनसमर्थः $^{v}$गौः $^{v}$न गौः चैते $^{v}$इन्द्रियं $^{v}$वयः चेन्द्रे $^{v}$दधुः ॥९॥

---

शमिता नो वनस्पतिः सविता प्रसुवन् भर्गम् ।
ककुप् छन्द इहेन्द्रियं वशा वेहद्वयो दधुः ॥१०॥

---

शमिता । नः । वनस्पतिः । सविता । प्रसुवन्निति प्रऽसुवन् । भर्गम् ।
ककुप् । छन्दः । इह । इन्द्रियम् । वशा । वेहत् । वयः । दधुः ॥ इमं ॥१०॥

---

आ– ' शमिता न ' इति । $^{v}$शमिता, छान्दसं पदम् । $^{v}$नः अस्माकं $^{v}$वनस्पतिः वनस्य पतिः $^{v}$सविता प्रसविता $^{v}$प्रसुवन् $^{v}$भर्गम् ऐश्वर्यादिरूपं प्रसुवन् प्रतिप्रसवं कुर्वन्, $^{v}$ककुप् $^{v}$छन्दः । आद्यतृतीयौ पादावष्टाक्षरौ मध्यमो द्वादशाक्षरः ककुन्नामोष्णिक् । $^{v}$इह इत्यभिनयः । $^{v}$वशा वन्ध्या गौः $^{v}$वेहत् इत्येते $^{v}$इन्द्रियं $^{v}$वयः च इन्द्रे $^{v}$दधुः ॥२२॥

---

अ– ' शमिता नः ' । $^{v}$नः अस्माकं $^{v}$शमिता । शमयतीति शमिता । $^{v}$वनस्पतिः प्रयाजदेवः $^{v}$भर्गं भाग्यं $^{v}$प्रसुवन् प्रकर्षेण प्रेरयन् । षू प्रेरणे । $^{v}$सविता सूर्यः $^{v}$ककुप् $^{v}$छन्दः अष्टाविंशत्यक्षरात्मकं $^{v}$वशा वन्ध्या $^{v}$वेहत् गर्भपातिनी गौश्चैते पञ्च $^{v}$इह इन्द्रे $^{v}$इन्द्रियं $^{v}$वयः च $^{v}$दधुः ॥१०॥

---

स्वाहा यज्ञं वरुणः सुक्षत्रो भेषजं करत् ।
अतिच्छन्दा इन्द्रियं बृहदृषभो गौर्वयो दधुः ॥११॥(२)॥

---

1. S3 पाठस्तु – त्वष्टा ... दधुरिति for त्वष्टा तुरीप इति; S3 तुरीयः for तुरीपः
2. D3 om. द्विपदा छन्दः
5. M4 P2 विचित्रविचित्र° for विचित्र°
7. S3 after इन्द्रियं adds च
12. S3 पाठस्तु – शमिता ... दधुरिति for शमिता न इति; D3 om. शमिता ... वयश्च इन्द्रे दधुः ( L 15 )

स्वाहा । यज्ञम् । वरुणः । सुक्षत्र इति सुऽक्षत्रः । भेषजम् । करत् ।
अतिच्छन्दा इत्यतिऽच्छन्दाः । इन्द्रियम् । बृहत् ।
ऋषभः । गौः । वयः । दधुः । ॥ ढ्रीं ॥११॥(२)॥

आ– ‘स्वाहा यज्ञम्’ इति । vसुक्षत्रः शोभनक्षत्रः धर्मयुक्तः vवरुणः vस्वाहा स्वाहाकृतिभिः vयज्ञं vभेषजम् औषधं vकरत् अकरोत् । vअतिच्छन्दाः च vबृहत् vऋषभः उक्षा च vगौः च इत्येते vइन्द्रियं vवयः च इन्द्रे vदधुः ॥२३॥

अ– ‘स्वाहा यज्ञम्’ । शोभनं क्षत्रं क्षतत्राणं यस्य सः vसुक्षत्रः vवरुणः vस्वाहा, नामैकदेशे नाम्नो ग्रहणमित्युक्त्या स्वाहाकृतयो देवास्तैः सहितः सन् vयज्ञं vभेषजं यज्ञलक्षणमौषधं vकरत्, अर्थादिन्द्राय करोतु । लेट् । “ लेटोऽडाटौ ” ( पा ३·४·९४ ), “ इतश्च लोपः परस्मैपदेषु ” ( पा ३.४.९७ ) । किं च — vअतिच्छन्दाः छन्दोलक्षणातिक्रमात् vबृहत् बृहन् । लिङ्गव्यत्ययः । vऋषभः श्रेष्ठो गौः, अर्थाद्वरुणः, स्वाहाकृतयोऽप्येते इन्द्रे vइन्द्रियं vवयः च vदधुः दधतु ॥११॥

इति श्रीवेदार्थदीपिकायां त्रयोविंशे द्वितीयोऽनुवाकः ॥२॥

[ इति द्वितीयोऽनुवाकः । ]

[ अथ तृतीयोऽनुवाकः । ]

वसन्तेन ऋतुना देवा वसवस्त्रिवृता स्तुताः ।
रथन्तरेण तेजसा हविरिन्द्रे वयो दधुः ॥१॥

वसन्तेन । ऋतुना । देवाः । वसवः । त्रिवृतेति त्रिऽवृता । स्तुताः ।
रथन्तरेणेति रथम्ऽतरेण । तेजसा । हविः । इन्द्रे । वयः । दधुः ॥ त्रिं ॥१॥

आ– ‘वसन्तेन ऋतुना’ इति । वपापुरोडाशपशूनां याज्यापुरोऽनुवाक्याः षट् ऋचोऽनुष्टुभः । वयोधसश्च वस्वादयश्च इन्द्रश्च वयोधादेवत्याः, लिङ्गोक्तदेवत्या वा ।

vवसन्तेन vऋतुना सह ये vदेवाः vवसवः । ‘ द्रोणः प्राणो ध्रुवोऽर्कोऽग्निर्दोषो वसु(वास्तु ?)विभावसू ’ इत्यष्टौ वसवः । vत्रिवृता स्तोमेन vस्तुताः vरथन्तरेण च साम्ना च सहायेन vतेजसा स्वतेजसा च vहविः वपाऽऽख्यं हविः vवयः च vइन्द्रे vदधुः ॥२४॥

19. S3 वसन्तेन ... दधुरिति for वसन्तेन ऋतुनेति ।
21. V2 D3 before वसन्तेन adds वसन्तेन ऋतुना देवा वसवस्त्रिवृता स्तुताः ।
23. D3 om. स्वतेजसा

वपापुरोडाशपशूनां याज्यापुरोनुवाक्याः ]

अ– कात्यायनः – " याज्यानुवाक्याश्च वपापुरोडाशपशूनां वसन्तेन ऋतुनेति " ( काश्रौ १९.७.२१ )। चकारात् वयोधसपशावेव । षड्चो यथाक्रमं याज्यानुवाक्याः स्युः । यथा– वपायागे ' वसन्तेन ' इति पुरोऽनुवाक्या । ' ग्रीष्मेण ' इति याज्या । पशुपुरोडाशयागे ' वर्षाभिः ' इति पुरोऽनुवाक्या, ' शारदेन ' इति याज्या । हृदयादियागे ' हेमन्तेन ' इति पुरोऽनुवाक्या, ' शैशिरेण ' इति याज्या इति सूत्रार्थः ॥

' वसन्तेन ऋतुना ' । अनुष्टुभः षट् लिङ्गोक्तदेवत्याः । वयोधा इन्द्रो देवतेत्यर्थः । $^v$वसवः $^v$देवाः $^v$इन्द्रे $^v$तेजसा सह $^v$हविः वपारूपं $^v$वयः शक्तिं च $^v$दधुः दधतु स्थापयन्तु । कीदृशो वसवः ? $^v$वसन्तेन $^v$ऋतुना $^v$त्रिवृता स्तोमेन $^v$रथन्तरेण पृष्ठेन च $^v$स्तुताः ॥१॥

ग्रीष्मेण ऋतुना देवा रुद्राः पञ्चदशे स्तुताः ।
बृहता यशसा बलं हविरिन्द्रे वयो दधुः ॥२॥

ग्रीष्मेण । ऋतुना । देवाः । रुद्राः । पञ्चदश इति पञ्चऽदशे । स्तुताः ।
बृहता । यशसा । बलम् । हविः । इन्द्रे । वयः । दधुः ॥ क्षीं ॥२॥ "

आ– ' ग्रीष्मेण ऋतुना ' [ इति । $^v$ग्रीष्मेण $^v$ऋतुना ] सह $^v$देवाः $^v$रुद्राः ।

" रैवतोऽजो भवो भीमो वाम उग्रो वृषाकपिः ।
अजैकपादोऽहिर्बुध्न्यो बहुरूपो महाशनिः " ॥

इत्येकादश रुद्राः । $^v$पञ्चदशे । व्यत्ययः । पञ्चदशेन स्तोमेन $^v$स्तुताः, $^v$बृहता साम्ना सहायेन $^v$यशसा स्वयशसा $^v$बलं $^v$हविः *$^v$वयः च $^v$इन्द्रे $^v$दधुः ॥२५॥

अ– ' ग्रीष्मेण ऋतुना '। $^v$रुद्राः $^v$देवाः $^v$यशसा सह $^v$बलं $^v$हविः $^v$वयः च $^v$इन्द्रे $^v$दधुः । कीदृशाः ? $^v$ग्रीष्मेण $^v$ऋतुना $^v$पञ्चदशे पञ्चदशेन स्तोमेन । " सुपां सुलुक् " – ( पा ७.१.३९ । $^v$बृहता पृष्ठेन च $^v$स्तुताः ॥२॥

वर्षाभिर्ऋतुनाऽऽदित्या स्तोमे सप्तदशे स्तुताः ।
वैरूपेण विशौजसा हविरिन्द्रे वयो दधुः ॥३॥

1. D2 °पुरोळाश° for °पुरोडाश°
13. S3 ग्रीष्मेण ... दधुरिति for ग्रीष्मेण ऋतुना
14. D3 ऐरावतो for रैवतोऽजो
17. *[ संभावितः पाठः । सर्वेषु लिखितपुस्तकेषु ' यशः ' इति पाठ उपलभ्यते । ].

कासं .... २६

वर्षाभिः । ऋतुना । आदित्याः । स्तोमे । सप्तदश इति सप्तऽदशे । स्तुताः ।
वैरूपेण । विशा । ओजसा । हविः । इन्द्रे । वयः । दधुः ॥ ऋीं ॥३॥

आ– ' वर्षाभिर्ऋतुना ' । [v]वर्षाभिः [v]ऋतुना सह स्तोमेन [v]सप्तदशे सप्तदशेन [v]स्तुताः ।

" विवस्वानर्यमा पूषा त्वष्टा च सविता भगः ।
धाता विधाता वरुणो मित्रः शक्र उरुक्रमः ॥ "

इति द्वादश [v]आदित्याः स्तुताः सन्तः [v]वैरूपेण च साम्ना [v]विशा प्रजया [v]ओजसा बलेन सह [v]हविः [v]इन्द्रे [v]वयः [v]दधुः ॥३॥२६॥

अ– ' वर्षाभिः ऋतुना ' । [v]आदित्याः देवाः [v]विशा प्रजया [v]ओजसा च सह [v]इन्द्रे [v]हविः [v]वयः च [v]दधुः । कीदृशाः ? [v]वर्षाभिः [v]ऋतुना [v]सप्तदशे सप्तदशेन स्तोमेन [v]वैरूपेण पृष्ठेन च [v]स्तुताः ॥३॥

शारदेन ऋतुना देवा एकविंश ऋभवं स्तुताः ।
वैराजेन श्रिया श्रियं हविरिन्द्रे वयो दधुः ॥४॥

शारदेन । ऋतुना । देवाः । एकविंश इत्येकऽविंशे । ऋभवः । स्तुताः ।
वैराजेन । । श्रिया । श्रियम् । हविः । इन्द्रे । वयः । दधुः ॥ ऋीं ॥ ४ ॥

आ– ' शारदेन ऋतुना ' इति । [v]शारदेन [v]ऋतुना सह [v]देवाः [v]एकविंशे । व्यत्ययः । एकविंशेन स्तोमेन [v]वैराजेन साम्ना च [v]स्तुताः सन्तः [v]ऋभवः नाम देवताः [v]श्रिया स्वश्रिया च शोभया संपदा वा [v]श्रियं [v]हविः [v]वयः च [v]इन्द्रे [v]दधुः ॥२७॥

3. S3 om. सप्तदशे
6. D3 तुरंगमः for उरुक्रमः
16. S3 पाठस्तु– शारदेन दधुरिति for शारदेन ऋतुनेति ।
17. V2 om. नाम
18. S3 शोभनया for शोभया

वपापुरोडाशपशूनां याज्यापुरोनुवाक्याः ]

अ– ' शारदेन ऋतुना '। vऋभवः ऋभुसंज्ञा देवाः vइन्द्रे vश्रियं vहविः vवयः च vदधुः । कीदृशाः ? vशारदेन vऋतुना vएकविंशे एकविंशेन स्तोमेन । तृतीयार्थे सप्तमी । vवैराजेन पृष्ठेन vश्रिया लक्ष्म्या च vस्तुताः ॥४॥

---

हेमन्तेन ऋतुना देवास्त्रिणवे मरुतः स्तुताः ।
बलेन शक्वरीः सहो हविरिन्द्रे वयो दधुः ॥५॥

---

हेमन्तेन । ऋतुना । देवाः । त्रिणवे । त्रिनव इति त्रिऽनवे । मरुतः । स्तुताः ।
बलेन । शक्वरीः । सहः । हविः । इन्द्रे । वयः । दधुः ॥ ग्रीं ॥ ५ ॥

---

आ– ' हेमन्तेन ऋतुना ' इति । vहेमन्तेन vऋतुना सह vमरुतः नाम vदेवाः त्रिणवेन सप्तविंशेन स्तोमेन vस्तुताः । " शुक्रज्योतिश्च " (कासं १८.७.१) इत्यादयः एकोनपञ्चाशन्मरुतः । ' बलेन शक्वरीः '। शक्वर्या युक्तेन शाक्वरेण साम्ना स्तुताः सन्तो मरुतो देवाः, vबलेन स्वबलेन vसहः बलं vहविः vवयः च vइन्द्रे vदधुः ॥२५॥

---

अ– ' हेमन्तेन ऋतुना '। vमरुतः vदेवाः vइन्द्रे vबलेन सह vसहः इन्द्रियसामर्थ्यं vहविः vवयः च vदधुः । कीदृशा मरुतः ? vहेमन्तेन vऋतुना vत्रिणवे त्रिणवेन स्तोमेन । vशक्वरीः इति शाक्वरस्य योनिनिर्देशः । विभक्तिव्यत्ययः । शाक्वरेण पृष्ठेन च vस्तुताः ॥५॥

---

शैशिरेण ऋतुना देवास्त्रयस्त्रिंशेऽमृताः स्तुताः ।
सत्येन रेवतीः क्षत्रं हविरिन्द्रे वयो दधुः ॥ ग्रीं ॥६॥(३)

---

शैशिरेण । ऋतुना । देवाः । त्रयस्त्रिंश इति त्रयःऽत्रिंशे । अमृताः । स्तुताः ।
सत्येन । रेवतीः । क्षत्रम् । हविः । इन्द्रे । वयः । दधुः ॥६॥ ग्रीं ॥ (३)

---

आ– ' शैशिरेण ऋतुना ' इति । vशैशिरेण vऋतुना सह त्रयस्त्रिंशेन स्तोमेन vस्तुताः vअमृताः नाम vदेवाः, vसत्येन vरेवतीः । व्यत्ययः । रेवत्यः । बहूपलक्षितेन रैवतेन साम्ना ऋतेन च सह स्तुता देवाः सत्येन स्वसत्येन च vक्षत्रं vहविः च vवयः च vइन्द्रे vदधुः ॥२९॥

---

8. S3 पाठस्तु– हेमन्तेन ... दधुरिति for हेमन्तेन ऋतुनेति
19. S3 शैशिरेण ... दधुरिति for शैशिरेण ऋतुनेति
20. V2 वाम° for नाम

अ- 'शैशिरेण ऋतुना'। अमृताः नाम्ना देवाः सत्येन सह क्षत्रं क्षतत्राणं हविः वयः शक्तिं च इन्द्रे दधुः। कीदृशाः ? शैशिरेण ऋतुना त्रयस्त्रिंशे त्रयस्त्रिंशेन स्तोमेन, रेवतीः इति रैवतस्य योनिः, रैवतेन पृष्ठेन च स्तुताः। विभक्तिव्यत्ययः। 'रथन्तरेण, वैरूपेण' इत्यादितृतीयान्तप्रक्रमात् न द्वितीयान्तता ॥६॥

इति श्रीवेदार्थदीपिकायां त्रयोविंशे तृतीयोऽनुवाकः ॥३॥

[ अथ चतुर्थोऽनुवाकः । ]

होता यक्षत् समिधाऽग्निमिळस्पदेऽश्विनेन्द्रं
सरस्वतीमजो धूम्रो न गोधूमैः कुवलैर्भेषजं मधु ।
शष्पैर्न तेज इन्द्रियं पयः सोमः परिस्रुता
घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥१॥

होता । यक्षत् । समिधेति सम्ऽइधा । अग्निम् । इळः । पदे । अश्विना । इन्द्रम् ।
सरस्वतीम् । अजः । धूम्रः । न । गोधूमैः । कुवलैः । भेषजम् । मधु ।
शष्पैः । न । तेजः । इन्द्रियम् । पयः । सोमः । परिस्रुतेति परिऽस्रुता ।
घृतम् । मधु । व्यन्तु । आज्यस्य । होतः । यज ॥ ३ ॥ ॥१॥

आ- 'होता यक्षत्'। एकादशाप्रीप्रैषाः अश्विसरस्वतीन्द्रदेवत्याः यजूंषि अथवा बार्हतप्रगाथाः। 'होता यक्षत् समिधाऽग्निमिळस्पदे'। इळा गौः, तस्याः पदे स्थाने आहवनीयेऽवस्थितं समिधा प्रयाजदेवतया सह स्थितम् अग्निं होता यक्षत् अयक्षत्। अश्विना अश्विनौ इन्द्रं सरस्वतीं च होता यक्षत्। अन्यदुपरिष्टादुपचारः। 'अजो धूम्रो न'। अत्र समुच्चयार्थो नकारः। नकार उपमार्थीयः प्रायशः। अजः गोधूमैः सहितः धूम्रः च भवति। कुवलैः बदरैश्च सहितः भेषजम् अत्र संपद्यते। 'मधु शष्पैः न।' शष्पैः बालतृणैश्च सहितः अजः मधु च संपद्यते। 'तेज इन्द्रियम्'। यजमानस्येन्द्रस्य वा तेजः इन्द्रियं च संपद्यते। अतः अश्विसरस्वतीन्द्राश्च दैव्येन होत्रा इज्यमानाः सन्तः, पयः च सोमः च। अत्र व्यत्ययः। सोमं च परिस्रुता च, सह घृतं च मधु च व्यन्तु व्याप्नुवन्तु। 'आज्यस्य होतर्यज'। हे दैव्य होतः, त्वमपि आज्यस्य आज्येन यज ॥१०॥

2. M4 om. च
15. S3 पाठस्तु- होता ... यक्षेति for होता यक्षदिति
16. S3 om. होता यक्षत्समिधाग्निमिळस्पदे।
21. D3 om. च

त्रिपशोः प्रयाजप्रैषाः ]

अ– कात्यायनः– " होता यक्षत् समिधाऽग्निमिति प्रयाजप्रैषास्त्रिपशोः" ( काश्रौ १९·६·१४ )। ' होता यक्षत्समिधाऽग्निमिळस्पदे ' इत्यादयो द्वादश कण्डिकास्त्रिपशोः प्रयाजप्रैषाः स्युरिति सूत्रार्थः ॥

' होता यक्षत् समिधाऽग्निम् ' । द्वादशाप्रीणां प्रयाजयाज्यानां प्रैषा अश्विसरस्वतीन्द्रदेवत्याः । आद्या अष्टिः । ᵛहोता दैव्यो होता, ᵛसमिधा प्रयाजदेवतया सह ᵛअग्निम् ᵛअश्विना अश्विनौ ᵛइन्द्रं ᵛसरस्वतीं च ᵛइळः ᵛपदे इडस्पदे गोः पदे आहवनीये ᵛयक्षत् यजतु । गोपदे स्थाप्यत इत्यभिप्रायेण वचनम् । यज देवपूजासङ्गतिकरणदानेषु । अस्माल्लेट् । " सिब्बहुलं लेटि " ( पा ३·१·३४ )। " लेटोऽडाटौ " ( पा ३·४·९४ ), " इतश्च लोपः परस्मैपदेषु " ( पा ३·४·९७ ) । यक्षदिति रूपसिद्धिः । तत्र यागे ᵛअजः ᵛधूम्रः मेषः ᵛन । मेषश्च ᵛगोधूमैः ᵛकुवलैः बदरैः ᵛशष्पैः अङ्कुरितव्रीहिभिश्च सहितः ᵛभेषजम् औषधं भवति । नकारद्वयं चार्थे । इन्द्रायेति शेषः । कीदृशं भेषजम् ? ᵛमधु मधुरं, ᵛतेजः तेजस्करम्, ᵛइन्द्रियम् इन्द्रियसामर्थ्यप्रदम् । किं च– ते अश्विसरस्वतीन्द्राः, दैव्येन होत्रेज्यमानाः सन्तः ᵛपयः ᵛपरिस्रुता परिस्रवणशीलया सुरया सह ᵛसोमः सोमं ᵛघृतं ᵛमधु च ᵛव्यन्तु पिबन्तु । " वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु" इति धातुः। ' सोमः ' इत्यत्र द्वितीयायां प्रथमा । ᵛहोतः हे मनुष्यहोतः, त्वमपि ᵛआज्यस्य आज्येन । " यजेश्च करणे " (पा२·३·६३ ) इति षष्ठी । अश्व्यादीन् देवान् ᵛयज । ' व्यन्तु ' इत्यत्र वाक्यादित्वान्न सर्वनिघातः । त्वमपि स्वव्यापारं कुरु इति तात्पर्यम् । एवमुत्तरत्रापि ॥१॥

होता यक्षत् तनूनपात् सरस्वतीमविर्मेषो न भेषजं
पथा मधुमता भरन्नश्विनेन्द्राय वीर्यम् ।
बदरैरुपवाकाभिर्भेषजं तोक्मभिः पयः सोमः
परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ।।२।।

तनूनपादिति तनूऽनपात् । सरस्वतीम् । अविः । मेषः । न । भेषजम् । पथा । मधुमतेति मधुऽमता । भरन् । अश्विना । इन्द्राय । वीर्यम् । बदरैः । उपवाकाभिरित्युपऽवाकाभिः । भेषजम् । तोक्मभिरिति तोक्मऽभिः । पयः ॥ त्र्यैं ॥ २ ॥

2. M4 कुण्डिकाः for कण्डिकाः

5. M4 om. गोः पदे

6. M4 P2 लोट् for लेट्

[ त्रिपशोः प्रयाजप्रैषाः

आ— ' होता यक्षत् तनूनपात् ' इति । बार्हतप्रगाथः । Vपथा Vमधुमता मधुररसवता पथा यज्ञमार्गेण, Vभरन् आत्मनि हवींषि हरन् । छान्दसो भकारः । भरन् । Vतनूनपात् तनूनपातमग्निं Vसरस्वतीं च Vयक्षत् अयजत् । ' अविर्मेषो न ' । Vअविः Vमेषः च Vबदरैः Vभेषजं संपद्यते । ' अश्विना इन्द्राय वीर्यम् ' । अश्विनौ सरस्वती च Vइन्द्राय यजमानाय च Vवीर्यं कुर्वन्त्विति शेषः । बदरैः Vभेषजं करोत्विति शेषः । Vउपवाकाभिः यवैः वीर्यं करोतु । Vतोक्मभिः तत्तत्संजातसस्याङ्कुरैश्च वीर्यं भेषजं करोतु । एवं होत्रा इज्यमाना अश्विसरस्वतीन्द्राश्च Vपयः Vसोमः सोमं च Vपरिस्रुता सह Vघृतं Vमधु Vव्यन्तु । ' आज्यस्य होतर्यज ' । हे मनुष्यहोतः, त्वमपि Vआज्यस्य आज्येन Vयज ॥३१॥

~~~~~~~~~~~~~~~~~~~~~~~~~~

अ- ' होता यक्षत् तनूनपात् सरस्वतीम् ' । एकाधिका अत्यष्टिः । Vतनूनपात् इति प्रथमा द्वितीयार्थे । Vइन्द्राय इति चतुर्थ्यपि । नकारश्चार्थः । दैव्यः Vहोता तनूनपातं प्रयाजदेवं Vसरस्वतीम् Vअश्विनौ इन्द्रं च यजतु । तत्र यागे Vअविः अजः Vमेषः च । नश्चार्थे । Vमधुमता रसवता Vपथा यज्ञमार्गेण Vभरन् आत्मानं हरन् सन् । " हृग्रहोर्भश्छन्दसि " (पा ८०२-३२ वा १) । Vबदरैः बदरीफलैः Vउपवाकाभिः इन्द्रयवैः Vतोक्मभिः अङ्कुरितव्रीहिभिर्यवैर्वा सहितः Vवीर्यं ( वीर्य )करं Vभेषजं भवति । अन्यत् सर्वं पूर्ववद् व्याख्येयम् ॥२॥

~~~~~~~~~~~~~~~~~~~~~~~~~~

होता यक्षन्नराशंसं न नग्नहुं पतिं सुरया भेषजं मेषः सरस्वती
भिषग्रथो न चन्द्र्यश्विनोर्वपा इन्द्रस्य वीर्यम् ।
बदरैरुपवाकाभिर्भेषजं तोक्मभिः पयः सोमः परिस्रुता
घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥३॥

~~~~~~~~~~~~~~~~~~~~~~~~~~

नराशंसम् । न । नग्नहुम् । पतिम् । सुरया । भेषजम् । मेषः । सरस्वती ।
भिषक् । रथः । न । चन्द्री । अश्विनोः । वपाः । इन्द्रस्य । वीर्यम् ।
बदरैः । उपवाकाभिरित्युपऽवाकाभिः । भेषजम् । तोक्मभिरिति तोक्मऽभिः । पयः ॥
ऩ्राः ॥३॥

~~~~~~~~~~~~~~~~~~~~~~~~~~

1.) S3 पाठस्तु- होता ... यजेति for होता यक्षत्तनूनपादिति ।

2. D3 V2 °नपातः for °नपात्

6. D3 °संजातैरङ्कुरैश्च for °संजातसस्याङ्कुरैः

7. D3 after °स्रुता adds च

त्रिपशोः प्रयाजप्रैषाः ]

आ– ' होता यक्षन्नराशꣳसम् ' इति । दैव्यः Vहोता यजतु । ' नराशꣳसं न नग्नहुं पतिम् ' । व्यवहित [ पद ] कल्पना । Vनराशꣳसं च, Vपतिं जगतः पतिं च Vनग्नहुं, Vसुरया सहितं च, होता यजत्वित्यनुवर्तते । " यज्ञो वै नराशंसः " । नरैराशंस्यते, नराः शंसन्तीति वा नराशंसः । स आहुतिपरिणामद्वारेण जगद् बिभर्तीति नग्नहुः । नग्नहुरिति छान्दसं पदम् । नग्नहुं पतिं जगतः पतिं सुरया सहितं होता यक्षत् इति संबन्धः। 'भेषजं मेषः सरस्वती' इति । अश्विनौ च इन्द्रस्य Vभेषजं करोत्विति शेषः । ' रथो न चन्द्र्यश्विनोर्वपा इन्द्रस्य वीर्यम् ' । Vअश्विनोः Vरथः च कथंभूतः ? Vचन्द्री । चन्द्रमिति हिरण्यनाम, तदस्यास्तीति चन्द्री । सुवर्णखचितो रथः इन्द्रस्य Vभिषक् भवतु इन्द्रस्य भेषजस्य कर्ता, इष्टानिष्टप्राप्तिपरिहारहेतुत्वात् । ' वपा इन्द्रस्य वीर्यम् ' । वपालक्षणा आहुतयः Vइन्द्रस्य यजमानस्य च Vवीर्यं कुर्वन्तु । अन्यद् व्याख्यातम् ॥३२॥

~~~~~~~~~~~~~~~~~~~~~~~~~~

अ– ' होता यक्षन्नराशꣳसं न ' । दैव्यः 'होता 'नराशंसं प्रयाजदेवं 'सरस्वती सरस्वतीं, 'भिषक् भिषजोः 'रथः 'न रथं च । सर्वत्र प्रथमा द्वितीयार्थे । यजतु । कीदृशो रथः ? Vचन्द्री, चन्द्रं सुवर्णमस्मिन्नस्तीति चन्द्री, सुवर्णमयः । रथस्य यागः 'अश्विनोः एव । तदुक्तम् —

" आयुधं वाहनं वाऽपि स्तुतौ यस्येह दृश्यते ।
तमेव तत्स्तुतं विद्यात् तस्यात्मा बहुधा हि सः ॥ " इति ।

तत्र यागे 'सुरया सह Vनग्नहुं । नग्नहुः द्वितीया *प्रथमार्थे । किण्वः । 'मेषः 'वपाः बहुत्वात् त्रिपशुसंबन्धिन्यो वपाः । 'बदरैः 'उपवाकाभिः 'तोक्मभिः च सहिताः सत्यः 'इन्द्रस्य 'वीर्यं Vभेषजं भवति । अन्यद् व्याख्यातम् । कीदृशं नराशंसम् ? 'पतिं पालकम् । नग्नहुः सुराकन्दः । नकारौ चार्थौ । द्वितीयो भेषजशब्द आदरार्थः ॥३॥

~~~~~~~~~~~~~~~~~~~~~~~~~~

होता यक्षदिडेडित आजुह्वानः सरस्वतीमिन्द्रं
बलेन वर्धयन्नृषभेण गवेन्द्रियमश्विनेन्द्राय भेषजम् ।
यवैः कर्कन्धुभिर्मधु लाजैर्न मासरं पयः सोमः परिस्रुता
घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥४॥

---

1. S3 पाठस्तु– होता ... यजेति for होता यक्षन्नराशꣳसमिति; D3 om. दैव्यः ... नराशंसः ( L 3 )
4. S3 om. सः; V2 om. नग्नहुरिति ... सहितं ( L 5 )
16. * संभावितः पाठ । सर्वेषुलिखितपुस्तकेषु ' द्वितीयार्थे । ' इत्युपलभ्यते ।

इळा । ईळितः । आजुह्वान इत्याऽजुह्वानः । सरस्वतीम् । इन्द्रम् ।
बलेन । वर्धयन् । ऋषभेण । गवा । इन्द्रियम् । अश्विना । इन्द्राय । भेषजम् ।
यवैः । कर्कन्धुभिरिति कर्कन्धुऽभिः । मधु । लाजैः । न । मासरम् । पयः ॥ च्यः ॥४॥

आ– 'होता यक्षदिळेळितः' इति । इळा प्रयाजदेवता, तया ईळितः । ईळ स्तुतौ । स्तुतः सन् । 'आजुह्वानः सरस्वतीम्' । सरस्वतीम् आह्वयन् होता सरस्वतीं यक्षत् अयजत् । लुप्ताडागमपदम् । 'इन्द्रं बलेन वर्धयन्नृषभेण गवेन्द्रियमश्विना' । अश्विनौ इन्द्रं बलेन वर्धयन् ऋषभेण गवा इन्द्रस्य च इन्द्रियम् ऋषभेण गवा च वर्धयन्, होता यक्षत् इति संबन्धः । इन्द्राय भेषजं यवैः कर्कन्धुभिः बदरैः इन्द्राय भेषजं वर्धयन् । 'मधु लाजैर्न' । लाजैः च मधु मासरं ओदननिस्रावं मासरं वर्धयन्, होता यक्षत् इति संबन्धः । अश्विसरस्वतीन्द्राश्च दैव्येन होत्रा इज्यमानाः पयः सोमं परिस्रुता च सह घृतं मधु च व्यन्तु । वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु । प्राप्नुवन्तु । 'आज्यस्य होतर्यज' । हे होतः, त्वमपि आज्यस्य । व्यत्ययः । आज्येन यज ॥२३॥

अ– 'होता यक्षदिळेळितः' । दैव्यः होता इळा इळां प्रयाजदेवतां सरस्वतीम् इन्द्रम् अश्विना अश्विनौ च यक्षत् यजतु । किं कुर्वन् ? ऋषभेण गवा च धेन्वा बलेन बलहेतुना हविषा वर्धयन् इळादीन् समर्धयन्, ईळितः ऋत्विग्भिः स्तुतः, इळादीन् देवान् आजुह्वानः आहूयमानः सन् । तत्र यागे यवैः कर्कन्धुभिः स्थूलबदरीफलैः लाजैः च सहितं मधु मासरम् ओदननिस्रावं च । नश्चार्थः । इन्द्राय वीर्यं वीर्यकरं भेषजं भवति । अन्यत् पूर्ववत् ॥४॥

होता यक्षद्बर्हिरूर्णम्रदा भिषङ् नासत्या भिषजाऽश्विनाऽश्वा
शिशुमती भिषग्धेनुः सरस्वती भिषक् ।
दुह इन्द्राय भेषजं पयः सोमः परिस्रुता
घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥५॥

4. S3 पाठस्तु– होता ... यजेति for होता यक्षदिळेळितः इति ।

5. D3 after अयजत् adds अयजत

6. D3 om. इन्द्रं बलेन ... अश्विनौ

बर्हिः । ऊर्णम्रदा इत्यूर्णऽम्रदाः । भिषक् । नासत्या । भिषजा ।
अश्विना । अश्वा । शिशुमतीति शिशुऽमती । भिषक् । धेनुः । सरस्वती । भिषक् ।
दुहे । इन्द्राय । भेषजम् । पयः ॥ ५ ॥

आ– ' होता यक्षद्बर्हिरूर्णम्रदाः ' इति । प्रकृता देवताः । vबर्हिः च प्रयाजदेवता । vहोता vयक्षत्, vऊर्णम्रदाः इति ऊर्णेव मृदुभूता मृदुवाणी । vभिषक् इन्द्रस्य वैद्यः । vनासत्या नासत्यौ श्रीभगवतो नासिकाप्रभवौ vभिषजा भिषजौ vअश्विना अश्विनौ भिषजौ भवतः । vअश्वा इन्द्रस्याश्वौ vशिशुमती vधेनुः च vभिषक् इन्द्रस्य, vसरस्वती स्वयमेव vभिषक् vइन्द्राय vभेषजं vदुहे दोहनं कृतवती । vपयः vसोमः इत्यादि व्याख्यातम् ॥२४॥

अ– ' होता यक्षद्बर्हिरूर्णम्रदाः ' । दैव्यः vहोता vभिषक् भूत्वा vऊर्णम्रदाः । ऊर्णमिवातिशयेन मृदु इत्यूर्णम्रदाः । पुंस्त्वमार्षम् । vबर्हिः प्रयाजदैवतम् । vभिषजा भिषजौ vनासत्या नासत्यौ नामतः नासिकाप्रभवौ vअश्विना अश्विनौ देवौ vसरस्वती च vयक्षत् यजतु । तत्र यागे vशिशुमती बालकोपेता vअश्वा वडवा vभिषक्, vधेनुः च vभिषक्, vइन्द्राय vभेषजम् औषधं vदुहे दुग्धे पूरयति । " लोपस्त आत्मनेपदेषु " ( पा ७·१·४१ ) इति तलोपः । यत्राश्वादयो दक्षिणा दीयन्त इत्यर्थः । अश्वेत्यत्र " जातेरस्त्रीविषयादयोपधात् " ( पा ४·१·६३ ) इति ङीष्भावः अजादित्वात् । अन्यद् व्याकृतम् । कीदृशो दैव्यो होता ? भिषक् वैद्यरूपः ॥५॥

होता यक्षद्दुरो दिशः कवष्यो न व्यचस्वतीरश्विभ्यां न दुरो दिश
इन्द्रो न रोदसी दुघे दुहे धेनुः सरस्वत्याश्विनेन्द्राय भेषजम् ।
शुक्रं न ज्योतिरिन्द्रियं पयः सोमः परिस्रुता
घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥६॥

4. S3 पाठस्तु– होता यक्षद् ... यजेति for होता यक्षद्बर्हिरूर्णम्रदा इति; V2 S3 om. प्रकृता ... मृदुभूता [ L 5 ]
9. M4 दैव्या होतारा for देव्यो होता
15. M4 before भिषक् adds भिषक् वैद्यः

दुरः । दिशः । कवष्यः । न । व्यचस्वतीः ।
अश्विभ्यामित्यश्विऽभ्याम् । न । दुरः । दिशः । इन्द्रः । न । रोदसी इति रोदसी ।
दुघे इति दुघे । दुहे । धेनुः । सरस्वती । अश्विना । इन्द्राय । भेषजम् ।
शुक्रम् । न । ज्योतिः । इन्द्रियम् । पयः । शुः ॥६॥

---

आ– 'होता यक्षद्दुरो दिशः' इति । छान्दसं संप्रसारणम् । Vदुरः द्वारः यज्ञगृहद्वारः । कथंभूताः ? Vदिशः दिगात्मकाः । 'कवष्यो न व्यचस्वतीः' । लुप्तोपममेतत् । दिशः Vकवष्यः Vन सुषिरा इव Vव्यचस्वतीः व्यञ्जनवत्यः गमनवत्यः । 'अश्विभ्यां न दुरो दिशः' । Vअश्विभ्यां सह अधिष्ठानदेवताभ्यां सह यज्ञगृहद्वारो बभूवुः । एता देवताः Vहोता Vयक्षत् । 'इन्द्रो न रोदसी' । Vइन्द्रः च Vरोदसी द्यावापृथिव्यौ Vदुघे । हकारस्य घकारः । दुघे दुहे दुग्धवानिन्द्रः । 'दुहे धेनुः सरस्वती' । Vसरस्वती च Vधेनुः भूत्वा दोग्धि । अश्विनौ च दुग्धः । कस्मै किमिति । Vइन्द्राय Vभेषजं च Vशुक्रं Vज्योतिः । च Vइन्द्रियं च Vदुहे । Vपयः Vसोमः इत्यादि व्याख्यातं समानार्थम् ॥२८॥

---

अ– 'होता यक्षद्दुरो दिशः' । दैव्यः Vहोता Vदुरः द्वारः प्रयाजदेवीः । Vइन्द्रः इन्द्रं Vसरस्वती सरस्वतीम् । विभक्तिव्यत्ययः । Vअश्विना अश्विनौ च Vयक्षत् यजतु । नकाराश्चार्थाः । द्वारशब्दस्य संप्रसारणम् । कीदृशीः द्वारः ? Vदिशः दिश इव सावकाशाः, Vकवष्यः ससुषिराः, अत एव Vव्यचस्वतीः । व्यचो व्यञ्जनं विविधं गमनं विद्यते यासु ताः । तथा तत्र यागे Vदिशः Vन दिश इव स्थिताः Vदुरः द्वारो देव्यः Vअश्विभ्यां सहिताः सत्यः Vरोदसी द्यावापृथिव्यौ एतयोः सकाशात् Vइन्द्राय Vभेषजम् औषधम् Vदुहे दुहते । वचनव्यत्ययस्तलोपश्च । अश्विशब्दस्यावृत्तिः । रोदसीभ्यां सकाशात् इन्द्राय औषधं पूरयन्तीत्यर्थः । "अकथितं च" ( पा. १·४·५१ ) इति द्विकर्मकत्वम् । कीदृश्यौ रोदसी ? Vदुघे कामदुघे । "दुहः कब्घश्च" ( पा ३·२·७० ) इति कप्प्रत्ययघकारादेशौ । तत्र Vसरस्वती च Vधेनुः भूत्वा Vइन्द्राय Vशुक्रं शुद्धं Vज्योतिः इव Vइन्द्रियं वीर्यं च दुहे । व्याख्यातं शेषम् ॥६॥

---

होता यक्षत् सुपेशसोषे नक्तं दिवाश्विना समञ्जाते सरस्वत्या त्विषिमिन्द्रे न भेषजम् । श्येनो न रजसा हृदा श्रिया न मासरं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥७॥

---

8. S3 देवाभ्यां for देवताभ्यां

11. V2 दोग्धि for दुग्धः

त्रिपशोः प्रयाजप्रैषाः ]

सुपेशसेति सुऽपेशसा । उषे इत्युषे । नक्तम् । दिवा । अश्विना ।
सम् । अञ्जाते इत्यञ्जाते । सरस्वत्या । त्विषिम् । इन्द्रे । न । भेषजम् ।
श्येनः । न । रजसा । हृदा । श्रिया । न । मासरम् । पयः ॥ढः॥७॥

---

आ– ' होता यक्षत् सुपेशसोषे नक्तम् ' इति । [v]सुपेशसा सुरूपेण [v]उषे । द्विवचनोपदेशात् रात्रिश्चोषा च गृह्येते । [v]नक्तं [v]दिवा रात्रावहनि च यावश्विनौ सुपेशसा [v]समञ्जाते संश्लेषयतः, [v]सरस्वत्या च सहितौ [v]त्विषिं दीप्तिम् [v]इन्द्रे [v]न त्विषिं च यावाश्विनौ संश्लेषयतः तौ च [v]होता [v]यक्षत् । [v]श्येनः [v]न [v]रजसा ज्योतिषा [v]हृदा हृदयेन च । नकारः समुच्चयार्थः । [v]श्रिया [v]न श्रिया च सहितं [v]मासरम् ओदननिस्रावम् । मासरमुपादाय [v]अश्विना इन्द्रे समञ्जाते संश्लेषयतः तमिन्द्रं होता यक्षत् इति संबन्धः । [v]पयः [v]सोम इति समानं व्याख्यानम् ॥६॥

---

अ– ' होता यक्षत् सुपेशसोषे ' । दैव्यः [v]होता [v]सुपेशसा सुपेशसे सुरूपे [v]उषे, द्विवचनात् दिवारात्र्याख्ये प्रयाजदेवते । [v]सरस्वत्या सहितौ [v]अश्विना अश्विनौ च [v]यक्षत् यजतु । तत्र यागे तावश्विनौ [v]नक्तं रात्रौ, [v]दिवा दिने, [v]रजसा ज्योतिषा । रजःशब्दोऽत्र ज्योतिर्वचनः । [v]हृदा चित्तेन [v]श्रिया च सह [v]मासरं [v]भेषजं मासररूपमौषधम् [v]श्येनः श्येनपत्रम् । प्रथमा द्वितीयार्थे । संबन्धिनि लक्षणा । [v]त्विषिं [v]न कान्तिं च [v]इन्द्रे [v]समञ्जाते संश्लेषयतः । अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । अन्यत् पूर्ववत् ॥७॥

---

होता यक्षद्दैव्या होतारा भिषजाश्विनेन्द्रं न जागृवि दिवा नक्तं न भेषजैः । शूषꣳ सरस्वती भिषक् सीसेन दुह इन्द्रियं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥८॥

---

दैव्या । होतारा । भिषजा । अश्विना । इन्द्रम् । न । जागृवि ।
दिवा । नक्तम् । न । भेषजैः । शूषम् । सरस्वती । भिषक् । सीसेन । दुहे ।
इन्द्रियम् । पयः ॥ षों ॥८॥

---

4. S3 होता यक्षत् ... यजेति for होता यक्षत्सुपेशसोषे नक्तामिति

5. S3 after नक्तं adds न

आ– ' होता यक्षद्दैव्या होतारा ' इति । $^{v}$दैव्या दैव्यौ $^{v}$होतारा होतारौ, अयं चाग्निरसौ च मध्यमः । $^{v}$भिषजा भिषजौ अश्विनौ $^{v}$इन्द्रं $^{v}$न च $^{v}$होता $^{v}$यक्षत् अयजत् । ' जागृवि दिवा नक्तं न भेषजैः ' । $^{v}$दिवा अहनि $^{v}$नक्तं रात्रौ च । नः चार्थः । $^{v}$भेषजैः $^{v}$शूषम् इति बलनाम । बलम् अश्विसरस्वत्य इन्द्रे दधुः । $^{v}$सरस्वती $^{v}$भिषक् $^{v}$सीसेन पात्रेण इन्द्रार्थम् $^{v}$इन्द्रियं $^{v}$दुहे । $^{v}$पयः $^{v}$सोमः इति समानार्थः ॥३८॥

---

अ– ' होता यक्षद्दैव्या होतारा ' । देवसंबन्धी $^{v}$होता । $^{v}$दैव्या $^{v}$होतारा दैव्यौ होतारौ, अयमग्निरसौ च मध्यमो वायुरित्येतौ प्रयाजदेवौ । $^{v}$भिषजा भिषजौ $^{v}$अश्विना अश्विनौ $^{v}$इन्द्रं च $^{v}$यक्षत् । नौ चार्थौ । तत्र यागे $^{v}$सरस्वती $^{v}$भिषक् भूत्वा $^{v}$भेषजैः सह $^{v}$शूषं बलम् । बलनामपाठात् । $^{v}$इन्द्रियं वीर्यं च $^{v}$सीसेन कृत्वा $^{v}$दुहे दुग्धे इन्द्रार्थम् । कीदृशी सरस्वती ? $^{v}$दिवा दिने $^{v}$नक्तं $^{v}$न रात्रौ च $^{v}$जागृवि जागृविः जागरणशीला । स्वकार्यसिद्धावप्रमत्ता । " सुपां सुलुक् " ( पा. ७.१.३९ ) इति सोर्लोपः । जागृ निद्राक्षये । अस्माद्विच् । अन्यद्व्याकृतम् ॥८॥

---

होता यक्षत् तिस्रो देवीर्न भेषजं त्रयस्त्रिधातवोऽपसो
रूपमिन्द्रे हिरण्ययमश्विनेळा न भारती ।
वाचा सरस्वती मह इन्द्राय दुह इन्द्रियं
पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥९॥

---

तिस्रः । देवीः । न । भेषजम् । त्रयः । त्रिधातव इति त्रिऽधातवः । अपसः । रूपम् । इन्द्रे । हिरण्ययम् । अश्विना । इळा । न । भारती । वाचा । सरस्वती । महः । इन्द्राय । दुहे । इन्द्रियम् । पयः । स्वाः ॥ ॥९॥

---

आ– ' होता यक्षत् तिस्रो देवीः ' इति । $^{v}$तिस्रः देव्यः । ताश्च वक्ष्यमाणाः । $^{v}$होता दैव्यो होता $^{v}$यक्षत् । ' भेषजं त्रयस्त्रिधातवोऽपसो रूपमिन्द्रे ' । $^{v}$त्रयः पशवः $^{v}$त्रिधातवः च

---

1. S3 पाठस्तु– होता यक्षद् ... यजेति for होता यक्षद्दैव्या होतारा इति ।
4. D3 om. बलम्
10. P2 om. जागृवि
19. S3 पाठस्तु– होता यक्षत्तिस्रो ... यजेति for होता यक्षत्तिस्रो देवीः इति

त्रिपशोः प्रयाजप्रैषाः ]

प्रधानान्यङ्गानि । [V]अपसः । अप इति कर्म[ नाम । तत् ]संबन्धिनः पशवः अपसः । एते सर्वे [V]इन्द्रे [V]हिरण्ययं [V]रूपं विदधुः । ताः स होता यक्षत् । ' अश्विनेळा न भारती । वाचा सरस्वती ' । नकारः समुच्चयार्थः । [V]अश्विना अश्विनौ [V]इळा च [V]भारती च [V]वाचा [V]सरस्वती च [V]महः ओजः [V]इन्द्रियं च [V]इन्द्राय [V]दुहे दोग्धि । [V]पयः [V]सोमः इत्यादिसमानार्थः ॥३८॥

---

अ– ' होता यक्षत् तिस्रो देवीः ' । नौ चार्थौ । दैव्यः [V]होता [V]इळा [V]भारती [V]सरस्वती चेति [V]तिस्रः [V]देवीः प्रयाजदेवताः । [V]इन्द्रे [V]न इन्द्रं च । [V]अश्विना [V]न अश्विनौ च [V]यक्षत् यजतु । तत्र यागे [V]सरस्वती [V]वाचा त्रयीलक्षणया [V]भेषजम् औषधम्, [V]हिरण्ययं हिरण्यवद् द्योतमानं [V]रूपं [V]महः तेजश्च [V]इन्द्रियं च [V]इन्द्राय [V]दुहे दुग्धे । कैः कृत्वा ? [V]त्रयः [V]त्रिधातवः त्रिभिः पशुभिः । तृतीयार्थे प्रथमा । त्रयो धातवः प्रधानोपाङ्गलक्षणाः प्रकारा येषां ते त्रिधातवः । ते च त्रयः– आश्विनो धूम्रः, सारस्वतो मेषः, ऐन्द्र ऋषभः इति । कीदृशास्ते ? [V]अपसः । अप इति कर्मनाम । विनो लोपः । अपस्विनः कर्मवन्तः । शेषं स्पष्टम् ॥६॥

---

होता यक्षत् सुरेतसमृषभं नर्यापसं त्वष्टारमिन्द्रमश्विना भिषजं न सरस्वतीमोजो न जूतिरिन्द्रियं वृको न रभसो भिषक् । यशः सुरया भेषजꣳ श्रिया न मासरं पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥१०॥

---

सुरेतसमिति सुऽरेतसम् । ऋषभम् । नर्यापसमिति नर्यऽअपसम् । त्वष्टारम् । इन्द्रम् । अश्विना । भिषजम् । न । सरस्वतीम् । ओजः । न । जूतिः । इन्द्रियम् । वृकः । न । रभसः । भिषक् । यशः । सुरया । भेषजम् । श्रिया । न । मासरम् । पयः ॥ त्रुः ॥१०॥

---

आ– ' होता यक्षत् सुरेतसमृषभं नर्यापसम् ' इति । [V]सुरेतसं शोभनवीर्यं [V]ऋषभं श्रेष्ठं [V]नर्यापसं नराणां हितप्रापकं, [V]त्वष्टारं दोषस्य तनूकर्तारम् । ' इन्द्रमश्विना भिषजं न सरस्वतीम् ' । दैव्या होतारा [V]यक्षत् अयजत् । ' ओजो न जूतिरिन्द्रियम् ' । [V]ओजः च बलं च

---

1. V2 D3 S3 अपशः पश ( S3 अपसः पस ) इति कर्मसंबन्धः । न पसः अपसः ( D3 न पशः अपशः ) for अप इति कर्म– [ नाम । तत् –] संबन्धिनः पशवः अपसः
2. V2 D3 हिरण्मयं for हिरण्ययं

vजूतिः प्रज्ञा च vइन्द्रियं सामर्थ्यं vवृकः ओजसो रूपं वृक इति । vन vरभसः सोद्यमो vभिषक् इन्द्रस्य भेषजं करोति । vसुरया vयशः vश्रिया vन श्रिया च vभेषजं vमासरं च भिषक् इन्द्राय करोति । vपयः vसोमः vपरिस्रुता इति व्याख्यातः समानार्थः ॥३९॥

---

अ– 'होता यक्षत् सुरेतसमृषभम्' । नाश्वार्थाः । दैव्यः vहोता vसुरेतसं शोभनं रेतो वीर्यं वृष्टिलक्षणं पुंस्त्वलक्षणं वा यस्मात् तं सुरेतसम् । vऋषभं वर्षितारम् । वकारलोपश्छान्दसः । श्रेष्ठं वा । vनर्यापसम् । नरेभ्यो हितं नर्यम् अपः कर्म यस्य तं नर्यापसम् । ईदृशं vत्वष्टारं प्रयाजदेवम् vइन्द्रम् vअश्विना अश्विनौ vसरस्वतीं vभिषजं भिषग्भूतां च vयक्षत् यजतु । केनेत्यत आह— vरभसः सोद्यमः vभिषक् वैद्यभूतो यः vवृकः तेन । प्रथमा तृतीयार्थे । सुरायां वृकलोमानि क्षिप्यन्तेऽतो वृकस्य साधनत्वम् । vसुरया च vभेषजं यत् vमासरं, तेन च यजतु इति पूर्वेण संबन्धः । एवं यागनिष्पत्तौ सत्याम् vओजः तेजः vजूतिः वेगः vइन्द्रियं वीर्यं vश्रिया सह vयशः चेन्द्रे भवन्तु इति शेषः । शेषं स्पष्टम् ॥१०॥

---

होता॑ यक्ष॒द्व॒न॒स्पतिँ॑ शमि॒तार॑ꣳ श॒तक्र॑तुं भी॒मं न म॒न्युꣳ॑ राजा॑नं व्या॒घ्रं नम॑सा॒ऽश्विना॑ । भाम॒ꣳ सर॑स्वती भि॒षगिन्द्रा॑य दुह इ॒न्द्रि॒यं पय॒ः सोम॑ः परि॒स्रुता॑ घृ॒तं मधु॒ व्यन्त्वाज्य॑स्य॒ होत॒र्यज॑ ॥११॥

---

व॒न॒स्पति॑म् । श॒मि॒तार॑म् । श॒तक्र॑तु॒मिति॑ श॒तऽक्र॑तुम् । भी॒मम् ।
न । म॒न्युम् । राजा॑नम् । व्या॒घ्रम् । नम॑सा । अ॒श्विना॑ ।
भाम॑म् । सर॑स्वती । भि॒षक् । इन्द्रा॑य । दु॒हे । इ॒न्द्रि॒यम् । पय॑ः ॥ कैं ॥११॥

---

आ– 'होता यक्षद्वनस्पतिम्' इति । जगतीगायत्र्यौ । ते च मिलिते सजागतः प्रगाथः । अष्टिनस्त्रयः, स्वौ च द्वौ महासतो बृहती नाम, ( काछंसू २.५९, कायस ५.८.१,२ ) जगती वा नानापङ्क्तिः । vवनस्पतिं, vशमितारं शमयितारं vशतक्रतुं बहुकर्माणं vभीमं शत्रूणां भयहेतुं भीमम् । नश्वार्थः । vमन्युं शत्रून् प्रति क्रोधात्मकं, vराजानं सर्वेषां मनोरञ्जकं, व्याघ्रं श्रेष्ठं, शतक्रतुम् इन्द्रं vहोता vयक्षत् अयजत् । 'नमसाऽश्विना' । vनमसा इषा अश्विनौ यक्षत् ।

---

18. S3 पाठस्तु– होता यक्षद् ... यजेति for होता यक्षद्वनस्पतिमिति;
D3 जगती गायत्री for जगतीगायत्र्यौ
19. D3 बृहन्नाम for बृहती नाम
22. V2 D3 om. अयजत्

त्रिपशोः प्रयाजप्रैषाः ]

भामं सरस्वती भिषक् इन्द्राय दुहे इन्द्रियं सामर्थ्यं च दुहे । तां सरस्वतीं चेति होता यक्षत् । अश्विसरस्वतीन्द्राश्च दैव्येन होत्रा इज्यमानाः पयः सोमः परिस्रुता कुम्भादुद्धृत्य परितः सरन्त्या सुरया च सह घृतं मधु चेत्यादीनि हवींषि व्यन्तु प्राप्नुवन्तु । ‘ होतर्यज ’। त्वमपि हे मानुषहोतः आज्यस्य पयसा आज्यस्य संबन्धिनीं याज्यामनुब्रूहीत्यर्थः ॥४०॥

---

अ– ‘ होता यक्षद्वनस्पतिम् ’। दैव्यः होता वनस्पतिं प्रयाजदेवं व्याघ्रम् । विशेषेण जिघ्रतीति [ व्याघ्रस्तं ] व्याघ्रमिव राजानं शतक्रतुम् इन्द्रम् अश्विना अश्विनौ सरस्वती सरस्वतीं च नमसा अन्नेन मन्त्रेण च यक्षत् यजतु । कीदृशं वनस्पतिम् ? शमितारं सुखयितारं । अन्तर्भूतण्यर्थत्वात् । यद्वा– पशूनां यूपरूपेण संस्कर्तारम् । भीमम् । बिभेत्यस्मादिति [ भीमस्तं ] भीमं भयंकरम् । मन्युं क्रोधात्मानम् । यत्र यागे भिषक् वैद्यभूता सरस्वती भामं क्रोधं, ज्ञानं वा इन्द्रियं वीर्यं चेन्द्राय दुहे दुग्धे । स्पष्टमन्यत् ॥११॥

---

होता यक्षदग्निꣳ स्वाहाऽऽज्यस्य स्तोकानाꣳ स्वाहा मेदसां पृथक्
स्वाहा छागमश्विभ्याꣳ स्वाहा मेषꣳ सरस्वत्यै ।
स्वाह ऋषभमिन्द्राय सिꣳहाय सहस इन्द्रियꣳ स्वाहाग्निं
न भेषजꣳ स्वाहा सोममिन्द्रियम् ।
स्वाहेन्द्रꣳ सुत्रामाणꣳ सवितारं वरुणं भिषजां पतिꣳ स्वाहा
वनस्पतिं प्रियं पाथो न भेषजम् ।
स्वाहा देवा आज्यपा जुषाणो अग्निर्भेषजं
पयः सोमः परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥१२॥४॥

---

अग्निम् । स्वाहा । आज्यस्य । स्तोकानाम् । मेदसाम् ।
पृथक् । छागम् । अश्विभ्यामित्यश्विऽभ्याम् । मेषम् । सरस्वत्यै ।
ऋषभम् । इन्द्राय । सिꣳहाय । सहसे । इन्द्रियम् । अग्निम् । न ।
भेषजम् । सोमम् । इन्द्रियम् । इन्द्रम् । सुत्रामाणमिति सुऽत्रामाणम् । सवितारम् ।
वरुणम् । भिषजाम् । पतिम् । वनस्पतिम् । प्रियम् । पाथः । न । भेषजम् ।
देवाः । आज्यपा इत्याज्यऽपाः । जुषाणः । अग्निः । भेषजम् । पयः । सोमः ।
परिस्रुतेति परिऽस्रुता । घृतम् । मधु । व्यन्तु । आज्यस्य । होतः । यज ॥डूं॥१२॥४॥

---

आ– ‘ होता यक्षदग्निꣳ स्वाहा ’ इति । दैव्यः [V]होता [V]अग्निं प्रयाजदेवत्यं तम् आहवनीयं वा [V]यक्षत् । ‘ स्वाहाऽऽज्यस्य स्तोकानाम् ’ इति । [V]आज्यस्य विप्रुषाम् आज्यांशानां वा [V]स्वाहा इति आह यजमानः । [V]मेदसाम् । “ मेदस्तु वपा वसा ” ( अको २·६·६४ ) इत्यमरसिंहः । मेदसां वपानां [V]पृथक् पृथगंशः श्रप्यमाणः आज्येनाभिघार्यते । तदभिप्रायोऽयं [V]स्वाहा इत्याह यजमानः । ‘ छागमश्विभ्यां स्वाहा ’ इति शोभनमाह यजमानः । ‘ मेषं सरस्वत्यै स्वाहा ’ इत्याह यजमानः । ‘ ऋषभमिन्द्राय स्वाहा ’ इत्याह यजमानः । [V]सिंहाय अभिभवित्रे इन्द्राय [V]सहसे । ‘ सोममिन्द्रियम् ऋषभं स्वाहा ’ इत्याह यजमानः । ‘ स्वाहाग्निं न भेषजम् ’ । स्वाहायोगादत्र [ अग्निशब्दः ] चतुर्थ्यां परिणम्यते । ‘ अग्नये स्वाहा ’ इत्याह यजमानः । अग्नये [V]भेषजं [V]स्वाहा इत्याह यजमानः । [V]स्वाहा [V]सोमम् [V]इन्द्रियम् । ‘ इन्द्रियं स्वाहा ’ इत्याह यजमानः । [V]स्वाहा [V]इन्द्रम् इन्द्राय [V]सुत्रामाणं सुत्राम्णे [V]सवितारं सवित्रे [V]वरुणं वरुणाय स्वाहा । [V]भिषजां [V]पतिं भिषजां पतये स्वाहा । ‘ वनस्पतिं प्रियं पाथो न ’ । अन्नं च । पाथशब्देन अन्नं च । [V]भेषजं पशुदेवतं च । ‘ वनस्पतये स्वाहा ’ इत्याह यजमानः । ‘ स्वाहा देवा आज्यपाः ’ । ‘ आज्यपेभ्यो देवेभ्यः स्वाहा ’ इत्याह । स्वाहाकारो न समाप्तिवचनः । होमार्थो वा । सुहुतमस्तु । यद्वा– अग्निं होता यक्षत् । [V]सोमं यक्षत् । [V]इन्द्रं यक्षत् । सुत्रामाणं सवितारं वरुणं [V]भिषजां वैद्यानां [V]पतिं दैव्या होतारा यक्षत् । ‘ वनस्पतिं प्रियं पाथो न ’ । प्रियमन्नं तद्रसं च देवते च [V]भेषजं पशुदैवतं [V]वनस्पतिं स्वाहा । देवा देवेभ्यः स्वाहा । [V]आज्यपाः प्रयाजानुयाजा वै देवताः आज्यपाः । ‘ आज्यपेभ्यो देवेभ्यः स्वाहा ’ इत्याह यजमानः । एवं हविः [V]जुषाणः सेवमानोऽग्निः इन्द्राय भेषजं करोतु । एवं दैव्येन होत्रा इज्यमानाः अश्विसरस्वतीन्द्राः [V]पयः सोमः [V]परिस्रुता, स्थापितात् सुराकुम्भात् या सुरा उद्गच्छति सा परिस्रुत्, तया परिस्रुता सह [V]घृतं [V]मधुं च [V]व्यन्तु प्राप्नुवन्तु । ‘ आज्यस्य होतर्यज ’ इति । हे [V]होतः मानुषहोतः, आज्यस्य यज आज्यहविष्कं यागं कुरु । यद्वा– आज्यस्य संबन्धिनीं याज्यामनुब्रूहीत्यर्थः ॥४१॥

---

1. S3 पाठस्तु– होता यक्षदग्निं ... यजेति for होता यक्षदग्निꣳ स्वाहा इति
4. V2 D3 स्राप्यमाणं for श्रप्यमाणः
6. वृषभ° for ऋषभ°
8. V2 D3 स्वाहाशब्दाद् for स्वाहायोगाद्
15. S3 होता for होतारा

वपादीनां प्रैषाः ]

अ– ‘ होता यक्षदग्निꣳ स्वाहा ’। दैव्यः ᵛहोता ᵛअग्निं प्रयाजदेवम् आहवनीयं वा ᵛयक्षत् यजतु। किं च– ᵛआज्यस्य घृतस्य ᵛस्तोकानां विप्रुषां ᵛस्वाहा सुष्ठु आह, शोभनं ब्रूते। ब्रुवो रूपम्। “ द्व्यचोऽतस्तिङः ” ( पा ६.३.१३५ ) इति दीर्घः। कर्मणि षष्ठी। यजमानो घृतबिन्दून् शोभनान् वदतीत्यर्थः। ᵛमेदसां वपासंबन्धिनां ᵛपृथक् ᵛस्वाहा वपासंबन्धिमेदांसि समीचीनानीति यजमानः पृथग् ब्रूत इत्यर्थः। ᵛअश्विभ्याम् अश्व्यर्थे ᵛछागं शोभनमाह। ᵛसरस्वत्यै ᵛमेषं शोभनमाह। ᵛइन्द्राय ᵛइन्द्रियं वीर्यप्रदम् ᵛऋषभं स्वाहा। कीदृशायेन्द्राय ? ᵛसिंहाय सिंहतुल्याय, शत्रूणामभिभवित्रे। तथा ᵛसहसे बलरूपाय। गुणगुणिनोस्तादात्म्याद् व्यपदेशः। तथा ᵛभेषजं हितकारिणम् ᵛअग्निं ᵛन आग्निं च प्रति ᵛस्वाहा। ᵛइन्द्रियं वीर्यप्रदं ᵛसोमं प्रति ᵛस्वाहा। एतावग्नीषोमौ प्रति सु आहेत्यर्थः। सुष्ठु त्रायते सुत्रामा। तं ᵛसुत्रामाणं ᵛइन्द्रं ᵛसवितारं ᵛभिषजां वैद्यानां ᵛपतिं ᵛवरुणं च ᵛस्वाहा। पशुपुरोडाशदेवताः सु आहेत्यर्थः। ᵛप्रियम् इष्टं ᵛपाथः अन्नरसम् अन्नभूतं ᵛभेषजं च। पशुदेवतानां ᵛवनस्पतिं प्रयाजदेवं प्रति ᵛस्वाहा। नश्चार्थः। तथा ᵛआज्यपाः ᵛदेवाः। विभक्तिव्यत्ययः। आज्यपान् देवान् प्रति सु आह। ‘ प्रयाजानुयाजा वै देवा आज्यपाः ’। अत्र सर्वत्र स्वाहेति क्रियायाः यजमानः कर्ता। “ देवा ह वा ऊचुर्हन्त विजितमेवानु सर्वं यज्ञꣳ संस्थापय ” इत्युपक्रम्य तत उत्तमे प्रयाजे “ स्वाहाकारेणैव यज्ञꣳ समस्थापयन्नित्याह ” इति श्रुतेः। समाप्तिवचनाः सर्वे स्वाहाकाराः। एवं सर्वदेवार्थं हुतं ᵛभेषजम् औषधरूपं हविः जुषाणः सेवमानोऽग्निरर्थादश्विसरस्वतीन्द्राश्च दैव्येन होत्रा इज्यमानाः ᵛपयः ᵛसोमः सोमं ᵛपरिस्रुता सुरया सहितं ᵛघृतं ᵛमधु च ᵛव्यन्तु पिबन्तु। हे मनुष्यहोतः, त्वमपि ᵛआज्यस्य आज्येन अश्विसरस्वतीन्द्रान् ᵛयज पूजयेत्यर्थः ॥१२॥

इति श्रीवेदार्थदीपिकायां त्रयोविंशे चतुर्थोऽनुवाकः ॥४॥

---

[ अथ पञ्चमोऽनुवाकः । ]

होता॑ यक्षद॒श्विनौ॑ छाग॑स्य व॒पाया॒ मेद॑सो जु॒षेता॒ꣳ ह॒विर्हो॑त॒र्यज॑ ।

होता॑ यक्ष॒त् सर॑स्वतीं मे॒षस्य॑ व॒पाया॒ मेद॑सो जु॒षता॒ꣳ ह॒विर्हो॑त॒र्यज॑ ।

होता॑ यक्ष॒दिन्द्र॑मृ॒ष॒भस्य॑ व॒पाया॒ मेद॑सो जु॒षता॒ꣳ ह॒विर्हो॑त॒र्यज॑ ॥१॥

---

अ॒श्विनौ॑ । छाग॑स्य । व॒पाया॑ः । मेद॑सः । जु॒षेता॑म् । ह॒विः । होत॑ः । यज॑ ।

सर॑स्वतीम् । मे॒षस्य॑ । व॒पाया॑ः । मेद॑सः । जु॒षता॑म् । ह॒विः । होत॑ः । यज॑ ।

इन्द्र॑म् । ऋ॒ष॒भस्य॑ । व॒पाया॑ः । मेद॑सः । जु॒षता॑म् । ह॒विः । होत॑ः । यज॑ । षुः ॥१॥

---

आ– ' होता यक्षदश्विनौ छागस्य ' इति । पञ्चलिङ्गोक्तदेवत्यानि यजूंषि प्रैषाश्च । दैव्यः vहोता vअश्विनौ vयक्षत् । छागस्य वपानां त्रयः प्रैषाः । vछागस्य vवपायाः vमेदसः vहविः अश्विनौ vजुषेताम् । त्वमपि हे vहोतः, vयज । दैव्यः vहोता vसरस्वतीं vयक्षत् । सरस्वत्याः vमेषस्य vवपायाः vमेदसः vहविः vजुषताम् । त्वमपि मानुषहोतः, vयज । दैव्यः vहोता vइन्द्रं यक्षत् । इन्द्रस्य vऋषभस्य vवपायाः vमेदसः vहविः vजुषताम् । अतस्त्वमपि मानुषहोतः, vयज ॥४२॥

---

अ- कात्यायनः– " होता यक्षदश्विनाविति त्रयो वपानां प्रैषा यथालिङ्गम् " ( काश्रौ १९.६.२२ ) । ' होता यक्षदश्विना ' इत्यादि त्रयो मन्त्रा वपात्रयस्य क्रमात् प्रैषा एककण्डिकायामित्यर्थः । ' होता यक्षदश्विनौ छागस्य ' । सप्तलिङ्गोक्तदेवत्याः प्रैषाः । आद्यास्त्रयो वपानां प्रैषाः । त्रयाणां प्राजापत्या पङ्क्तिः । द्वितीयस्य द्व्यधिका । प्रथमतृतीययोरेकाधिका । दैव्यः vहोता vअश्विनौ vयक्षत् यजतु । तेनेज्यमानावश्विनौ vछागस्य vवपायाः vमेदसः संबन्धि vहविः vजुषेताम् सेवेताम् । हे मानुषहोतः, त्वमपि vयज । vहोता vसरस्वतीं vयक्षत् । सा vमेषस्य vवपायाः vमेदसः vहविः vजुषताम् । हे vहोतः, त्वं vयज । vहोता vइन्द्रम् vयक्षत् । स इन्द्रः vऋषभस्य vवपायाः vमेदसः vहविः vजुषताम् । हे vहोतः, त्वं vयज ॥१॥

---

होता यक्षदश्विनौ सरस्वतीमिन्द्रꣳ सुत्रामाणमिमे सोमाः ।
सुरामाणश्छागैर्न मेषैर्ऋषभैः सुताः ।
शष्पैर्न तोक्मभिर्लाजैर्महस्वन्तो मदा मासरेण परिष्कृताः ।
शुक्राः पयस्वन्तोऽमृताः प्रस्थिता वो मधुश्चुतस्तानश्विना
सरस्वतीन्द्रः सुत्रामा वृत्रहा जुषन्ताꣳ सोम्यं मधु ।
पिबन्तु मदन्तु व्यन्तु होतर्यज ।।२।।

---

अश्विनौ । सरस्वतीम् । इन्द्रम् । सुत्रामाणमिति सुऽत्रामाणम् ।
इमे । सोमाः । सुरामाणः । छागैः । न । मेषैः । ऋषभैः । सुताः । शष्पैः ।
न । तोक्मभिरिति तोक्मऽभिः । लाजैः । महस्वन्तः । मदाः । मासरेण ।
परिष्कृता । परिष्कृताः इति परिःऽकृताः । शुक्राः । पयस्वन्तः । अमृताः ।

---

1. S3 पाठस्तु– होता यक्षद् ... यजेति for होता यक्षदश्विनौ छागस्येति ।

3. D3 after यक्षत् adds प्रह्वाणां प्रैषः; D3 सरस्वती°, S3 सरस्वतीं for सरस्वत्याः

वपादीनां प्रैषाः ]

प्रस्थिता इति प्रऽस्थिताः । वः । मधुश्च्युत इति मधुऽश्च्युतः । तान् । अश्विना । सरस्वती । इन्द्रः । सुत्रामेति सुऽत्रामा । वृत्रहेति वृत्रऽहा । जुषन्ताम् । सोम्यम् । मधु । पिबन्तु । मदन्तु । व्यन्तु । होतः । यज । इत्र ॥२॥

---

आ– ' होता यक्षदश्विनौ सरस्वतीम् ' इति । ग्रहाणां प्रैषाः । दैव्यः Vहोता Vअश्विनौ Vसरस्वतीं Vसुत्रामाणम् Vइन्द्रं च Vयक्षत् । एवं होतारमुच्चार्याथेदानीमध्वर्यूनाह– हे अध्वर्यवः, ये Vइमे Vसोमाः Vसुरामाणः सुरमणीयाः सुरावन्तो वा । ' छागैर्न मेषैः ऋषभैः सुताः ' । अत्र व्यत्ययः । सर्वे नकाराः समुच्चयार्थाः । Vछागैः च Vमेषैः च Vऋषभैः च Vसुताः अभिषुताः सोमाः । ' शष्पैर्न तोक्मभिर्लाजैः ' । Vशष्पैः आस्तृतबालतृणैः दर्भैः Vतोक्मभिः यवादिशून्य( ? )सस्यैः Vलाजैः च Vमहस्वन्तः महाभाग्ययुक्ताः Vमदाः मदहेतुभूताः Vमासरेण अन्नाग्ररसेन सह Vपरिष्कृताः अलंकृताः Vशुक्राः शोचिष्मन्तः Vपयस्वन्तः पयसा संयुक्ताः Vअमृताः अमृतकल्पाः Vप्रस्थिताः होमाभिमुखीभूताः । Vवः युष्मत्संबन्धिनः Vमधुश्च्युतः मधुस्रवाः मधुक्षरणाः । एवंगुणविशिष्टाः ये सोमाः Vतान् सोमान् Vअश्विना अश्विनौ Vसरस्वती च Vइन्द्रः Vसुत्रामा अपि Vवृत्रहा वृत्रहन्ता Vजुषन्ताम् सेवन्ताम् । इदं Vसोम्यं सोममयं [ मधु ] च Vपिबन्तु । पीत्वा च Vमदन्तु हर्षं कुर्वन्तु । एवं दैव्येन होत्रा अध्वर्युभिश्च इज्यमानाः एते देवाः सोम्यं Vमधु हविः Vव्यन्तु प्राप्नुवन्तु । हे मानुषहोतः, त्वमपि Vयज अत्र युक्तां याज्यामनुब्रूहि ॥४३॥

---

**अ– कात्यायनः– " ग्रहाणां चतुर्थः । होता यक्षदश्विनौ सरस्वतीमिन्द्रमिति " ( काश्रौ १९.६.२३ ) । चतुर्थो मन्त्रः ग्रहाणां प्रैषः इति सूत्रार्थः ॥**

**' होता यक्षत् ' । दैव्यः Vहोता Vअश्विनौ Vसरस्वतीं, सुष्ठु त्रायते तं Vसुत्रामाणम् Vइन्द्रं च Vयक्षत् यजतु । एवं होतारमुक्त्वा अध्वर्यूनाह । हे अध्वर्यवः, Vइमे Vसोमाः वः युष्माकं युष्माभिः Vसुताः अभिषुताः । कीदृशाः सोमाः ? Vछागैः Vमेषैः Vऋषभैः च Vसुरामाणः, सुष्ठु रमयन्ति ते सुरामाणाः, रमणीयाः । रमु क्रीडायामित्यस्मादनण् प्रत्ययः । नौ चार्थौ । तथा Vशष्पैः Vतोक्मभिः यवाङ्कुरैः Vलाजैः च Vमहस्वन्तः तेजोयुताः । मादयन्ति तर्पयन्तीति Vमदाः । Vमासरेण पूर्वोक्तेन Vपरिष्कृताः अलंकृताः ।**

---

4. S3 पाठस्तु– होता यक्षद् ... यजेति for होता यक्षदश्विनौ सरस्वतीमिति ।
10. V2 D3 यशस्वन्तः यशसा for पयस्वन्तः पयसा
11. V2 D3 मधुश्रुतः for मधुश्च्युतः; V2 D3 °करणाः for °क्षरणाः
13. D3 सोमायजुषि, V2 सोमं यजुषि for सोम्यं सोममयं
22. M4 °युक्ताः for °युताः

"संपरिभ्यां करोतौ भूषणे" (पा ६·१·१३७) इति सुडागमः । शुक्राः शोचिष्मन्तः शुद्धा वा पयस्वन्तः पयसा युक्ताः अमृताः अमृततुल्याः । प्रस्थिताः होमाभिमुखं चलिताः । मधुश्चुतः । मधु श्च्योतन्ति ते मधुश्चुतः मधुस्राविणः । श्चुतिर् क्षरणे, क्विप् । अश्विनौ सरस्वती सुत्रामा इन्द्रः च तान् सुतान् सोमान् जुषन्ताम्, सोम्यं मधु पिबन्तु, पीत्वा च मदन्तु । व्यन्तु हविर्भक्षयन्तु, गच्छन्तु वा । हे होतः, त्वं यज ॥२॥

---

होता यक्षदश्विनौ छागस्य हविष आत्तामद्य मध्यतो मेद उद्भृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभः । घस्तां नूनं घासेअज्राणां यवसप्रथमानाꣳ सुमत्क्षराणाꣳ शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानाम् । पार्श्वतः श्रोणितः शितामत उत्सादतोऽङ्गादङ्गादवत्तानां करत एवाश्विना जुषेताꣳ हविर्होतर्यज । होता यक्षत्सरस्वतीं मेषस्य हविष आवयदद्य मध्यतो मेद उद्भृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभः । घसन्नूनं घासेअज्राणां यवसप्रथमानाꣳ सुमत्क्षराणाꣳ शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानाम् । पार्श्वतः श्रोणितः शितामत उत्सादतोऽङ्गादङ्गादवत्तानां करदेवꣳ सरस्वती जुषताꣳ हविर्होतर्यज । होता यक्षदिन्द्रमृषभस्य हविष आवयदद्य मध्यतो मेद उद्भृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभः । घसन्नूनं घासेअज्राणां यवसप्रथमानाꣳ सुमत्क्षराणाꣳ शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानाम् । पार्श्वतः श्रोणितः शितामत उत्सादतोऽङ्गादङ्गादवत्तानां करदेवमिन्द्रो जुषताꣳ हविर्होतर्यज ॥३॥

---

अश्विना । छागस्य । हविषः । आत्ताम् । अद्य । मध्यतः । मेदः । उद्भृतमित्युत्ऽभृतम् । पुरा । द्वेषोभ्य इति द्वेषःऽभ्यः । पुरा । पौरुषेय्याः । गृभः । घस्ताम् । नूनम् । घासेअज्राणामिति घासेऽअज्राणाम् । यवसप्रथमानामिति यवसऽप्रथमानाम् । सुमत्क्षराणामिति सुमत्ऽक्षराणाम् । शतरुद्रियाणामिति शतऽरुद्रियाणाम् । अग्निष्वात्तानाम् । अग्निस्वात्तानामित्यग्निऽस्वात्तानाम् । पीवोपवसनानामिति पीवःऽउपवसनानाम् । पार्श्वतः । श्रोणितः ।

---

1. M4 P2 संपर्युपेभ्यः for संपरिभ्यां

शितामतः । उत्सादत इत्युत्ऽसादतः । अङ्गादङ्गादित्यङ्गात्ऽअङ्गात् । अवत्तानाम् । करतः । एव । अश्विना । जुषेताम् । हविः । होतः । यज । सरस्वतीम् । मेषस्य । हविषः । आवयत् । घसत् । करत् । एवम् । सरस्वती । जुषताम् । हविः । होतः । यज । इन्द्रम् । ऋषभस्य । हविषः । आवयत् । घसत् । करत् । एवम् । इन्द्रः । जुषताम् । हविः । होतः । यज । फौः ॥३॥

---

आ– ' होता यक्षत् ' इति । दैव्यः $^{v}$होता $^{v}$अश्विनौ $^{v}$यक्षत् अयक्षत् । तौ अश्विनौ $^{v}$छागस्य $^{v}$हविषः $^{v}$आत्ताम् । अद भक्षणे । भक्षयतां भक्षितवन्तौ । $^{v}$अद्य अस्मिन्नहनि $^{v}$मध्यतः उदरमध्यतः वपालक्षणं $^{v}$मेदः $^{v}$उद्भृतम् । छान्दसो हकारस्य भकारः । " हृग्रहोर्भश्छन्दसि " ( पा ८.२.३५ वा १ ) इति हस्य भकारः । उद्भृतम् उद्धृतम् । ' पुरा द्वेषोभ्यः ' । $^{v}$पुरा पूर्वं दुर्भाग्यरूपेभ्यः असुररक्षोभ्यः यज्ञद्वेष्टृभ्यो वा पूर्वः । ' पुरा पौरुषेय्या गृभः ' । पुरुषार्थं गृह्यत इति पौरुषेयी गृभः ( ? गृभ् ) ग्रहः । तस्याः पौरुषेय्याः गृभः इडाया इत्यर्थः । तस्याः पुरा पूर्वं न हि वपायागे इडा वर्तते । ' घस्तां नूनं घासेअज्राणाम् ' । यावेव वपां हविष आत्तां ताविदानीं $^{v}$घस्तां भक्षयताम् । अङ्गानां स्वमंशभूतम् [ इति शेषः । $^{v}$नूनं ] निश्चयेन $^{v}$घासेअज्राणाम् अवदानानाम् । घासे यैरर्जितं स्वेच्छया घासे वा सति यान्यजिराणि स्युः । $^{v}$यवसप्रथमानाम् । यवसानामन्नानां यानि प्रथमानि । मन्त्रैः संस्कृतत्वात् । " एतद्वै परममन्नाद्यं यन्मांसम् " ( शब्रा ११.७.१.३ ) इति श्रुतेः । $^{v}$सुमत्क्षराणाम् । सुमत् स्वयमित्यर्थः । स्वयमेव यानि क्षरन्ति प्रतिदिनं तानि सुमत्क्षराणि, तेषां सुमत्क्षराणाम् । $^{v}$शतरुद्रियाणाम् बहुस्तुतीनाम् । रुद्र इति स्तोतृनामसु पठितम् । बहुशो वा रुद्राणाम् । $^{v}$अग्निष्वात्तानाम् । अग्निना सु साधु पाकार्थमात्तानां प्राप्तानाम् । अग्निना सुशृतानामित्यर्थः । $^{v}$पीवोपवसनानाम् । पीवशब्दः स्थूलवचनः ।

---

6. S3 पाठस्तु– होता यक्षद् ... यजेति for होता यक्षदिति ।
9. S3 om. हृग्रहो ... भकारः; S3 om. उद्धृतम्
11. V2 पौरुषेयीं for पौरुषेयी
12. D3 पूर्वे for पूर्वं; D3 विद्यते for वर्तते
14. D3 om. अवदानानां ... श्रुतेः । ( L 17 )
20. V2 D3 सुश्रितानाम् for सुशृतानाम्

स्थूलैरवदानैरुपवसनम् उपवसः । उपोषितमवदानैर्यैस्तेषां पीवोपवसनानाम् । किं च– ' पार्श्वतः श्रोणितः शितामत उत्सादतोऽङ्गादङ्गादवत्तानाम् ' । [V]पार्श्वतः पार्श्वप्रदेशतः [V]अवत्तानां अवदानभावमापन्नानाम् । [V]श्रोणितः अवत्तानाम् [V]शितामतः अवत्तानाम् । शितामतः अवत्तानां दोः [ प्रदेशः ] शिताम । वक्षो मेढ्रो वा शिताम । तस्मात् शितामतः अवत्तानाम् । [V]उत्सादतः [ उत्सादतः उत्सादन- ] प्रदेशात् । एवम् [V]अङ्गादङ्गाद् अवत्तानाम् [V]अश्विनौ [V]करतः [V]एव [V]हविः [V]जुषेताम् । तृप्तिं जुषेतामिति शेषः । हे मनुष्यहोतः, त्वमपि [V]यज । ' होता यक्षत् ' इति । दैव्यः [V]होता [V]सरस्वतीं [V]यक्षत् सरस्वतीं [V]मेषस्य [V]हविषः [V]आवयत्, आस्वादयत् । आङ्पूर्वस्य वयतेः स्वादनार्थत्वात् तस्यैतद्रूपमावयदिति । [V]अद्य [V]मध्यतः उदरमध्यतः वपालक्षणं [V]मेदः [V]उद्भृतम् उद्धृतं [V]पुरा [V]द्वेषोभ्यः असुररक्षोभ्यः । [V]पुरा पूर्वम् । [V]पुरा [V]पौरुषेय्या [V]गृभः । इळायाः पूर्वम् । ' घसन्नूनं घासेअज्राणाम् ' । अवदानानां [V]घासे विषये [V]नूनं निश्चयेन [V]घसत् हविर्लक्षणं कृतवती । तथा च– [V]यवसप्रथमानां सुमत्क्षराणां [V]शतरुद्रियाणाम् [V]अग्निष्वात्तानां [V]पीवोपवसनानाम् अवदानानाम् । कथंभूतानाम् ? ' पार्श्वतः श्रोणितः शितामतः उत्सादतोऽङ्गादङ्गादवत्तानाम '। [V]पार्श्वतः अवत्तानाम् । [V]श्रोणितः अवत्तानाम् । [V]शितामतः दोः प्रभृत्यङ्गादङ्गात् [V]अवत्तानां अवदानानाम् अवदानभावं प्राप्तानाम् । ' एवं सरस्वती करत् ' । तृप्तिं [V]करत् अकरोत् । एवं सरस्वती [V]हविः [V]जुषताम् । ' होतर्यज ' । हे मानुषहोतः, त्वमपि [V]यज ॥

' होता यक्षदिन्द्रम् ' इति । दैव्यः [V]होता [V]इन्द्रं [V]यक्षत । ऋषभस्येत्यादि समानार्थत्वेन व्याख्यातम् ॥४४॥

---

अ- कात्यायनः- " हविषामुत्तरे यथालिङ्गम् " ( काश्रौ १९.६.२४ ) । चतुर्थात् प्रैषादग्रे पठ्यमानाः ' होता यक्षदश्विनौ छागस्य हविषः ' इत्याद्यास्त्रयः प्रैषमन्त्राः यथालिङ्गमाश्विनादि- हविर्यागानां प्रैषा इत्यर्थः ॥

---

1. V2 उपोषितैः for उपोषितम्
7. D3 यक्ष, V2 यक्षत् for यज
9. S3 om. उदरमध्यतः
14. S3 om. शितामतः
17. S3 om. होता यक्षदिन्द्रमिति; V2 D3 वृषस्य for ऋषभस्य

वपादीनां प्रैषाः ]

‘ होता यक्षत् ’। दैव्यः होता अश्विनौ यक्षत् यजतु। तौ इज्यमानावश्विनौ छागस्य हविषः छागसंबन्धि हविः आत्ताम् अभक्षयताम्। अद भक्षणे। कर्मणि षष्ठी। किं च- अद्य अस्मिन् दिने मध्यतः उदरमध्यात्। उद्भृतम् उद्धृतं मेदः वपारूपं च आत्ताम्। “हृग्रहोर्भश्छन्दसि” ( पा ८.२.३५ वा १ )। कथमुद्धृतम् ? तत्राह- द्वेषोभ्यः। द्विषन्तीति द्वेषांसि। असुन्प्रत्ययः। यज्ञद्वेष्टृणि असुररक्षांसि तेभ्यः पुरा उद्धृतम्। यावत्तानि न पराभावायागच्छन्ति ततः पुरैवोद्धृतमित्यर्थः। तथा गृभः। गृह्यते भक्ष्यार्थमिडायामिति गृभ्। तस्या गृभः। इडायाः पुरा प्रथममुद्धृतम्। वपायामिडा-प्रयोजनाभावात्। ग्रह उपादाने। अस्मात् क्विप्। “ ग्रहिज्या ” ( पा ६.१.१६ ) इति संप्रसारणम्। “ एकाचो बशो भष् झषन्तस्य स्ध्वोः ” (पा. ८.२.३७) इति भष्भावः। कीदृश्याः गृभः ? पौरुषेय्याः। पुरुषार्थमियं पौरुषेयी ऋत्विगर्था, तस्याः। तावश्विनौ नूनं निश्चितम् अङ्गादङ्गात् अवत्तानाम् मांसरूपहविषाम्। अङ्गादङ्गादित्येकं पदम्। “ नित्यवीप्सयोः ” ( पा ८.१.४) इति द्वित्वम्। प्रत्यङ्गादव-दानधर्मेण गृहीतानाम्, गृहीतानि हवींषि घस्ताम् भक्षयताम्। कर्मणि षष्ठी। घस्लृ अदने। कीदृशानामवत्तानाम् ? घासेअज्राणाम्। एकं पदम्। सप्तम्या अलुक्। घासे ग्रासे अज्राणामजराणाम्। अकारलोपश्छान्दसः। रुचिजनकानाम्। अन्यानि ग्रासेषूत्तरोत्तरमरुचिं जनयन्ति नेमानि तथेति भावः। यवसप्रथमानाम्। यवसानामन्नानां मध्ये प्रथमानां मुख्यानाम्, मांसरूपत्वात्। “ एतद्वै परममन्नाद्यं यन्मांसम् ” ( शब्रा ११.७.१.३ ) इति श्रुतेः। सुमत्क्षराणाम्। सुमदिति स्वयंनाम। स्वयं क्षरन्तीति सुमत्क्षराणि, तेषां सुमत्क्षराणाम्। शतरुद्रियाणाम्। रुद्र इति स्तोतृनामसु पठितम्। रुद्रस्य स्तोतुरिमाः रुद्रियाः स्तुतयः। शतं संख्या रुद्रियाः येषां तेषाम्। बहुमन्त्रैः स्तुतानाम्। यद्वा– “ ( रुद्रः ) पशूनामीष्टे ” ( शब्रा १.७.३.१ ) इति श्रुतेः। रुद्रदैवतपशुसंबन्धिनाम् अग्निष्वात्तानाम् अग्निना आस्वादितानाम्। पाककाले पूर्वमग्निना सुशृतानामित्यर्थः। पीवोपवसनानाम्। पीवस्-शब्दोऽसुन्नन्तः स्थौल्यवाची। पीवसां स्थूलानामङ्गानामुप समीपे वसनं स्थितिर्येषां तानि पीवोपवसनानि, तेषाम्। स्थूलाङ्गसमीपे स्थितानां सूक्ष्माणामित्यर्थः। “ उपवसने पीवः ” ( वाप्रा ३.१४ ) इति प्रातिशाख्येन उपवसने परे पीवसो विसर्गलोपो गुणश्च। कीदृशादङ्गात् ? पार्श्वतः पार्श्वप्रदेशरूपात्। श्रोणितः कटिप्रदेशात्। शितामतः बाहुप्रदेशात्। शिता विद्यते यस्यासौ शितावान्। तस्मात्तथा। शितेति बलनाम। यद्वा– वक्षो मेढ्रं वा शितामत्। तस्मात् शितामतः। उत्सादतः। उत्सादनमुत्सादः। छेदनप्रदेशः। तस्मात् एवं भक्षितावदानावश्विनौ करतः कुरुतः तृप्तिमिति शेषः। विकरणव्यत्ययः। पुनर्वाक्यमादरार्थम्। हे मनुष्यहोतः, त्वमपि यज।

‘ होता यक्षत् सरस्वतीं मेषस्य हविषः ’। होता सरस्वतीं यक्षत्। या सरस्वती मेषस्य हविषः हविषा आवयत् अभक्षयत्। आङ्पूर्वस्य वेतेर्धातोर्लङि रूपम्। यद्वा– भक्षयतु। लेटि वा अडागमे रूपम्। ‘ अद्य मध्यतः मेदः ’ इत्यादेर्व्याख्या पूर्ववत्। सरस्वती एवंप्रकारेण अवत्तानि हवींषि जुषताम्। तृप्तिं च करत् करोतु। इति विशेषः॥

एवमेव ‘ होता यक्षदिन्द्रमृषभस्य ’ इति व्याख्येयम् ॥३॥

---

12. M4 P2 ग्रासे ग्रासे for ग्रासे.

होता यक्षद्वनस्पतिमभि हि पिष्टतमया रभिष्ठया रशनयाऽधित । यत्राश्विनोश्छागस्य हविषः प्रिया धामानि यत्र सरस्वत्या मेषस्य हविषः प्रिया धामानि यत्रेन्द्रस्य ऋषभस्य हविषः प्रिया धामानि । यत्राग्नेः प्रिया धामानि यत्र सोमस्य प्रिया धामानि यत्रेन्द्रस्य सुत्राम्णः प्रिया धामानि । यत्र सवितुः प्रिया धामानि यत्र वरुणस्य प्रिया धामानि यत्र वनस्पतेः प्रिया पाथांऽसि ॥ यत्र देवानामाज्यपानां प्रिया धामानि यत्राग्नेर्होतुः प्रिया धामानि । तत्रैतान् प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षद्रभीयसइव कृत्वी करदेवं देवो वनस्पतिर्जुषतांऽ हविर्होतर्यज ॥४॥

---

वनस्पतिम् । अभि । हि । पिष्टतमयेति पिष्टऽतमया । रभिष्ठया । रशनया । अधित । यत्र । अश्विनोः । छागस्य । हविषः । प्रिया । धामानि । सरस्वत्याः । मेषस्य । इन्द्रस्य । ऋषभस्य । अग्नेः । सोमस्य । इन्द्रस्य । सुत्राम्ण इति सुऽत्राम्णः । सवितुः । वरुणस्य । वनस्पतेः । प्रिया । पाथांऽसि । देवानाम् । आज्यपानामित्याज्यऽपानाम् । यत्र । अग्नेः । होतुः । प्रिया । धामानि । तत्र । एतान् । प्रस्तुत्येवेति प्रस्तुत्यऽइव । उपस्तुत्येवेत्युपस्तुत्यऽइव । उपावस्रक्षदित्युपऽअवस्रक्षत् । रभीयसइवेति रभीयसःऽइव । कृत्वी । करत् । एवम् । देवः । वनस्पतिः । जुषताम् । हविः । होतः । यज । ॥ इयौं ॥४॥

---

आ— ' होता यक्षद्वनस्पतिम् ' इति । वनस्पतिप्रैषः यूपदेवत्यं यजुः । दैव्यः ᵛहोता ᵛवनस्पतिं यूपं ᵛयक्षत् । वनस्पतिर्यूपः । ' अभि हि पिष्टतमया रभिष्टया रशनयाधित ' । कस्मात् वनस्पतिं यक्षत् ? हिशब्दो यस्मादर्थे । यस्माद्वनस्पतिम् ᵛअभ्यधित । " स्थाघ्वोरिच्च " ( पा १·२·१७ ) इति धाधातोर्लुङि रूपम् । अभ्यधित अभिधारितवान् यूपे । कया

वपादीनां प्रैषाः ]

[V]रशनया। कथंभूतया ? [V]पिष्टतमया इति सुरूपया इति। पिष्टशब्दः सुरूपवाची। [V]रभिष्ठया राभस्ययुक्तया। अतिशयेन नियमनकारिण्या रशनया वनस्पतिमभ्यधित। [V]यत्र यस्मिन् देशे अभियाचितवान्। यत्र यस्मिन् देशे [V]अश्विनोः संबन्धिनः [V]छागस्य छागात्मकस्य [V]हविषः [V]प्रिया प्रियाणि [V]धामानि स्थानानि। [V]यत्र [V]सरस्वत्याः पशुदेवतायाः संबन्धिनः [V]मेषस्य मेषात्मकस्य [V]हविषः [V]प्रिया [V]धामानि। [V]यत्र [V]इन्द्रस्य संबन्धिनः [V]ऋषभस्य [V]हविषः [V]प्रिया प्रियाणि [V]धामानि। [V]यत्र प्रदेशे [V]अग्नेः [V]प्रिया प्रियाणि [V]धामानि। [V]यत्र [V]सोमस्य [V]प्रिया प्रियाणि [V]धामानि ॥

अथ पुरोडाशदेवताः। [V]यत्र [V]इन्द्रस्य [V]सुत्राम्णः [V]प्रिया प्रियाणि [V]धामानि। [V]यत्र [V]सवितुः, [V]वरुणस्य। [V]यत्र [V]वनस्पतेः प्रियाणि [V]पाथाꣳसि। पाथःशब्दोऽन्नवचनः ॥

अथ प्रयाजानुयाजाः। [V]यत्र [V]देवानाम् [V]आज्यपानां [V]प्रिया प्रियाणि ॥

अथ स्विष्टकृत्। [V]यत्र [V]अग्नेः [V]होतुः [V]प्रिया प्रियाणि [V]धामानि स्थानानि। एतेषु स्थानेषु [V]एतान् पशून् [V]प्रस्तुत्येव [V]उपस्तुत्येव। अतिशयार्थं पुनर्वचनम्। [V]उपावस्रक्षत् उपावसर्जनं कृतवान्। [V]देवः [V]वनस्पतिः प्रयाजदेवता वनस्पतिः [V]हविः [V]जुषतां सेवताम्। त्वमपि हे मानुषहोतः, [V]यज ॥४५॥

---

अ– कात्यायनः– " उत्तमौ वनस्पति-स्विष्टकृतोः " ( काश्रौ १९.६.२५ )। उत्तमौ अन्ते पठ्यमानौ। 'होता यक्षद्वनस्पतिम्' इति, 'होता यक्षदग्निꣳ स्विष्टकृतम्' इति द्वौ मन्त्रौ वनस्पतिस्विष्टकृद्यागयोः प्रैषाविति सूत्रार्थः।

'होता यक्षद्वनस्पतिमभि'। यूपदेवत्यं यजुः। दैव्यः [V]होता [V]वनस्पतिं यूपदेवम् [V]अभि [V]यक्षत् अभियजतु। [V]हि यस्मात् वनस्पतिः [V]रशनया रज्ज्वा कृत्वा [V]अधित धृतवान्। पशूनिति शेषः। दधातेर्लुङि " स्थाघ्वोरिच्च " ( पा १.२.१७ ) इतीकारः। कीदृश्या रज्ज्वा ? [V]पिष्टतमया। अतिशयेन पिष्टा पिष्टतमा, तया। सुवृत्तत्वेन सुरूपया इत्यर्थः। तथा [V]रभिष्ठया। रभते पशून्नियच्छतीति रब्ध्री। तृच्, ङीप्। अत्यन्तं रब्ध्री रभिष्ठा, तया। " तुश्छन्दसि " ( पा ५.३.५९ ) इति इष्ठनि तृचो लोपः। समर्थयेत्यर्थः। रभ राभस्ये इति धातुः। इदानीं वनस्पतिः

---

1. V2 D3 °नाम for °वाची
2. S3 नियमेन for नियमन°
10. V2 °याज्या for °याजाः
13. V2 D3 उपावर्जनं for उपावसर्जनम्

प्रार्थ्यते । यत्र वनस्पतौ अश्विनोः संबन्धिनः छागस्य हविषः छागरूपस्य हविषः प्रिया प्रियाणि इष्टानि धामानि स्थानानि । वर्तन्त इति शेषः । एवमग्रेऽपि । ‘ यत्र सरस्वत्या मेषस्य हविषः प्रिया धामानि’ । ‘ यत्र इन्द्रस्य ’ इत्यादि ‘ यत्र वरुणस्य प्रिया धामानि ’ इत्यन्तं व्याख्येयम् । यत्र वनस्पतेः देवस्य प्रिया प्रियाणि पाथांसि अन्नानि वर्तन्ते । यत्र देवानाम् आज्यपानां प्रयाजानुयाजानां प्रिया धामानि । यत्र होतुः हविरादानकर्तुः अग्नेः स्विष्टकृतः प्रिया धामानि च वर्तन्ते । ‘हु दानादानयोः’ इति धातुः । तृजन्तः । तत्र तेषु स्थानेषु एतान् छागादीन् पशून् । ‘रभीयस इव कृत्वी ’ । रभन्त इति रभधारः । अत्यन्तं रभधारो रभीयांसः । अतिशयार्थे ईयसुन् । तृचो लोपः । तान् रभीयसः अतिरभसांश्च कृत्वा । इवशब्दश्चार्थः । प्रस्तुत्येव प्रकर्षेण स्तुत्वा च उपस्तुत्येव उप समीपे स्तुत्वा च । इवौ चार्थौ । वनस्पतिः देवः उपावस्रक्षत् उपावसृजतु स्थापयतु । सृजेर्लुङि रूपम् । लेटि वा । “ सिब्बहुलं लेटि ” ( पा ३·१·३४ ) सिप् प्रत्ययेऽडागमे च रूपम् । कृत्वी इत्यत्र “ स्नात्व्यादयश्च ” ( पा ७·१·४९ ) इतीकारः । स एव वनस्पतिर्देवः एवं करत् तृप्तिं करोतु । हविः च जुषताम् । हे मनुष्यहोतः, त्वमपि यज ॥४॥

---

होता यक्षदग्निꣳ स्विष्टकृतमयाळग्निरश्विनोश्छागस्य हविषः प्रिया धामान्ययाट् सरस्वत्या मेषस्य हविषः प्रिया धामान्ययाळिन्द्रस्य ऋषभस्य हविषः प्रिया धामानि । अयाळग्नेः प्रिया धामान्ययाट् सोमस्य प्रिया धामान्ययाळिन्द्रस्य सुत्राम्णः प्रिया धामानि ।

अयाट् सवितुः प्रिया धामान्ययाड् वरुणस्य प्रिया धामान्ययाड् वनस्पतेः प्रिया पाथाꣳसि ।

अयाड् देवानामाज्यपानां प्रिया धामानि यक्षदग्नेर्होतुः प्रिया धामानि ।

यक्षत् स्वं महिमानमा यजतामेज्या इषः कृणोतु सो अध्वरा जातवेदा जुषताꣳ हविर्होतर्यज ॥५॥ ॥५॥

---

अग्निम् । स्विष्टकृतमिति स्विष्टऽकृतम् । अयाट् । अग्निः ।

यक्षत् । स्वम् । महिमानम् । आ । यजताम् । एज्या इत्याऽइज्याः । इषः । कृणोतु ।

सः । अध्वरा । जातवेदा इति जातऽवेदाः । जुषताम् । हविः ।

होतः । यज । द्रौम् ॥५॥

---

वपादीनां प्रैषाः ]

आ– 'होता यक्षदग्निं स्विष्टकृतम्' इति। स्विष्टकृदित्यग्निः। स्विष्टकृत् प्रैषः। दैव्यः Vहोता Vअग्निं Vस्विष्टकृतं Vयक्षत्। कस्मादिति। Vअयाट् अयाक्षीत् इष्टवान् Vअग्निः Vअश्विनोः संबन्धि-[नः] Vछागस्य Vहविषः Vप्रिया प्रियाणि Vधामानि। Vअयाट् सरस्वतीमयाक्षीत्, Vसरस्वत्याः। Vअयाट् इन्द्रमयाक्षीत्, Vइन्द्रस्य, प्रधानदेवता। Vअयाट् Vअग्नेः। Vअयाट् Vसोमस्य, आज्यभागौ। Vअयाट् सरस्वतीमयाक्षीत्। Vइन्द्रस्य प्रधानदेवतायाः Vसुत्राम्णः। Vअयाट् Vसवितुः। Vअयाट् Vवरुणस्य पुरोडाशदेवतायाः। Vअयाट् Vवनस्पतेः Vप्रिया प्रियाणि Vपाथांसि अन्नानि, वनस्पतिं प्रधानम्। Vअयाट् Vदेवानाम् Vआज्यपानाम्, प्रयाजानुयाजा आज्यपाः, तेषां Vप्रिया प्रियाणि। 'यक्षदग्नेर्होतुः प्रिया धामानि'। स्विष्टकृतः स्वयमेव प्रियाणि Vधामानि Vयक्षत्। Vस्वं Vमहिमानं स्वकीयां विभूतिं Vयक्षत्। किं च– 'आ यजतामेज्या इषः'। अत्र व्यत्ययः। Vइज्याः Vआ इज्याः, अभियष्टव्याः यागार्हाः Vइषः Vकृणोतु करोतु। (इषः) प्रजाः। अन्नेन तासां स्थितिरुत्पत्तिश्चेति इषः प्रजा उक्ताः। यागशीला भवन्तु। 'सो अध्वरा जातवेदाः'। अध्वरसंज्ञान् Vजातवेदाः Vजुषतां Vहविः सेवताम्। त्वमपि हे मानुषहोतः, Vयज याज्यामनुब्रूहि ॥४६॥

---

अ– 'होता यक्षदग्निं स्विष्टकृतम्'। स्विष्टकृद्देवत्यं यजुः। दैव्यः Vहोता Vस्विष्टकृतम् Vअग्निं Vयक्षत् यजतु। योऽग्निः स्विष्टकृत् Vअश्विनोः Vछागस्य Vहविषः संबन्धीनि Vप्रिया Vधामानि अवदानानि Vअयाट् अयाक्षीत्, इष्टवान्। लुङ्। "वदव्रज°" (पा ७.२.३) इति वृद्धिः। सिजभावश्छान्दसः। एवमग्रेऽपि। यः स्विष्टकृदग्निः 'सरस्वत्या मेषस्य हविषः प्रिया धामानि अयाट्' इत्यादि व्याख्येयम्। 'अग्नेः प्रिया धामान्ययाट्', 'सोमस्य प्रिया धामान्ययाट्' एतावाज्यभागौ। Vसुत्राम्णः Vइन्द्रस्य Vप्रिया Vधामानि, Vसवितुः Vप्रिया Vधामानि, Vवरुणस्य Vप्रिया प्रियाणि धामानि। एताः पशुपुरोडाशदेवताः। Vवनस्पतेः Vप्रिया Vपाथांसि Vअयाट्। एतत्प्रधानाङ्गम्। Vआज्यापानां Vदेवानां Vप्रिया Vधामानि', एते प्रयाजानुयाजाः। Vहोतुः Vअग्नेः स्विष्टकृतः स्वस्यैव स्वयं प्रियाणि Vधामानि Vयक्षत् इष्टवान्। Vस्वं Vमहिमानं स्वां विभूतिं चाग्निः स्विष्टकृत् Vयक्षत्। किं च– Vआ Vइज्याः समन्ताद् यष्टुं योग्याः एज्याः यागार्हाः Vइषः। 'इषु इच्छायाम्'। अस्मात् कर्तरि क्विप्। इच्छन्तीतीषः। सकामाः प्रजाः Vआ Vयजतां सम्यग्यजन्तु। वचनव्यत्ययः। प्रजा अपि यागशीला भवन्त्वित्यर्थः। "सावेकाचस्तृतीयादिर्विभक्तिः" (पा ६.१.१६८) उदात्ता इति नियमादिष इति प्रथमाबहुवचनम्, आद्युदात्तत्वात्।

---

1. S3 पाठस्तु– होता यक्षत् ... यजेति। for होता ... °कृतमिति।
4. D3 °देवते for °देवता
5. D3 °भागं for °भागौ
7. V2 D3 वनस्पति° for वनस्पतिं
9. S3 भूतिं for विभूतिं
11. D3 om. करोतु; V2 D3 स्थितौ स्थितिरिति उक्ता इष्टा for स्थितिरुत्पत्तिश्चेति इषः प्रजा उक्ताः
21. M4 तस्य for स्वस्य

किं च- Vसः Vजातवेदाः स्विष्टकृदग्निः Vअध्वरा। "सुपां सु°" ( पा ७.१.३९ ) इति विभक्तेराकारः। यज्ञान् Vकृणोतु करोतु। विकरणव्यत्ययः। Vहविः च Vजुषताम्। हे मनुष्यहोतः, त्वं Vयज ॥५॥

इति श्रीमद्वेदार्थदीपिकायां त्रयोविंशे पञ्चमोऽनुवाकः ॥५॥

---

### [ अथ षष्ठोऽनुवाकः। ]

दे॒वं ब॒र्हिः सर॑स्वती सु॒दे॒वमिन्द्रे॑ अ॒श्विना॑ ।
तेजो॒ न चक्षु॑र॒क्ष्यो॑र्ब॒र्हिषा॑ दधुरिन्द्रि॒यं व॑सु॒वने॑ वसु॒धेय॑स्य व्यन्तु॒ यज॑ ॥१॥

---

दे॒वम्। ब॒र्हिः। सर॑स्वती। सु॒दे॒वमिति॑ सु॒ऽदे॒वम्। इन्द्रे॑। अ॒श्विना॑।
तेज॑ः। न। चक्षु॑ः। अ॒क्ष्यो॑ः। ब॒र्हिषा॑। द॒धुः। इ॒न्द्रि॒यम्।
व॒सु॒व॒न इति॑ व॒सु॒ऽव॒ने॑। व॒सु॒धेय॒स्येति॑ व॒सु॒ऽधेय॑स्य। व्य॒न्तु॒। यज॑ ॥ णैम् ॥१॥

---

आ- एकादशानुयाजप्रैषाः अग्निसरस्वतीन्द्रदेवत्याश्च व्यवहितपदप्रायाः। 'देवं बर्हिः' इति। अग्निसरस्वतीन्द्रदेवत्या महाबृहती नाम त्रिष्टुप् भूरिगुपपदा। चत्वारोऽष्टका जागतश्च महाबृहती नाम त्रिष्टुप्। यत् Vदेवं देवनात्मकं Vबर्हिः Vसुदेवम्। सुशोभना देवा यस्येति तत् सुदेवं बर्हिः। Vसरस्वती Vअश्विना अश्विनौ च Vइन्द्रे तेजः Vन Vतेजः च Vचक्षुः च Vइन्द्रियं Vदधुः। Vअक्ष्योः अक्ष्णोः इन्द्रस्याक्ष्णोश्च दधुः। Vबर्हिषा इन्द्रियं दधुः। Vवसुवने वसु धनं वनं वननं संभजनं तस्मिन् वसुवने। व्यत्ययः। वसुवनाय वसुलाभाय। [ Vवसुधेयस्य ] वसुनिधानाय च। सरस्वती अश्विनौ च Vव्यन्तु तेजः प्राप्नुवन्तु। त्वमपि होतः Vयज अनुयाजमनुब्रूहि ॥४७॥

---

अ- कात्यायनः- "अनुयाजप्रैषा देवं बर्हिरिति" ( काश्रौ १९.७.९ )। 'देवं बर्हिः' इत्याद्या एकादशकण्डिकास्त्रिरशोरनुयाजानां प्रैषा याज्याश्च भवन्तीत्यर्थः॥ Vदेवं Vबर्हिः। एकादशानुयाजप्रैषाः अश्विसरस्वतीन्द्रदेवत्याश्चतस्र आर्षास्त्रिष्टुभः। व्यवहितपदप्रायाः। शोभना देवा यस्य तत्

---

10. V2 after देवत्याश्च adds: एतानि यजूंषि; S3 पाठस्तु- देवं ... यजेति for देवं बर्हिः इति [ L 11 ]
11. D3 om. रस्वतीन्द्र ... देवं ( L 12 )
14. D3 om. अक्ष्योः V2 अक्षाः; अक्ष्णश्च for अक्ष्णोश्च
19. P2 M4 याजाश्च for याज्याश्च

अनुयाजानां प्रैषाः ]

$^v$सुदेवं यद् बर्हिः देवम् अनुयाजदेवता तेन $^v$बर्हिषा सह $^v$सरस्वती $^v$अश्विना अश्विनौ चैते $^v$इन्द्रे $^v$तेजः $^v$दधुः दधतु । नश्चार्थः । $^v$अक्ष्योः इन्द्रनेत्रयोः $^v$चक्षुः च $^v$इन्द्रियं दधुः । एवमग्रेऽपि योजना । किं च– $^v$वसुवने । सप्तमी चतुर्थ्यर्थे । वसुवनाय धनलाभाय । $^v$वसुधेयस्य । वसुनो धेयं वसुधेयं, तस्य । षष्ठी चतुर्थ्यर्थे । वसुनिधानाय च अश्व्यादयो $^v$व्यन्तु हविर्भक्षयन्तु । हे मनुष्यहोतः, त्वमपि $^v$यज । वसुवने इत्यत्र ' वनु षणु संभक्तौ ' इत्यस्मादच् ॥१॥

---

देवीर्द्वारो अश्विना भिषजेन्द्रे सरस्वती ।
प्राणं न वीर्यं नसि द्वारो दधुरिन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज ॥२॥

---

देवीः । द्वारः । अश्विना । भिषजा । इन्द्रे । सरस्वती ।
प्राणम् । न । वीर्यम् । नसि । द्वारः । दधुः । इन्द्रियम् ।
वसुवन इति वसुऽवने । घुम् ॥२॥

---

आ– ' देवीर्द्वारः ' इति । अश्विसरस्वतीन्द्रदेवत्या महाबृहती वा त्रिष्टुप् । निचृदुपपदा । या $^v$देवीः देव्यः वाचः यज्ञगृहद्वारः, ताभिर्द्वार्भिः $^v$भिषजा भिषजौ $^v$अश्विना अश्विनौ $^v$सरस्वती च, $^v$प्राणं $^v$न $^v$वीर्यं $^v$नसि प्राणे च वीर्यं च $^v$इन्द्रे $^v$दधुः स्थापनं चक्रुः । ' नसि द्वारो दधुरिन्द्रियम् ' । तस्येन्द्रस्य $^v$नसि नासिकायामपि $^v$द्वारः द्वार्भिरेताः देवताः $^v$इन्द्रियं दधुः । $^v$वसुवने इत्यादि व्याख्यातम् । ॥४८॥

---

अ– ' देवीर्द्वारः ' । उत्तरार्धे द्वार इति प्रथमा तृतीयार्था । या $^v$द्वारः $^v$देवीः यज्ञगृहद्वारो देव्यः अनुयाजदेवताः ताभिर्द्वार्भिः सह $^v$भिषजा $^v$अश्विना वैद्यावश्विनौ $^v$सरस्वती च $^v$इन्द्रे $^v$वीर्यं $^v$दधुः । $^v$नसि इन्द्रनासिकायां $^v$प्राणम् $^v$इन्द्रियं प्राणेन्द्रियं च दधुः । शेषं पूर्ववत् ॥२॥

---

देवी उषासा अश्विना सुत्रामेन्द्रे सरस्वती ।
बलं न वाचमास्य उषाभ्यां दधुरिन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज ॥३॥

---

5. P2 M4 वसनं for वनु षणु

10. S3 पाठस्तु– देवीर्द्वारो ... यजेति for देवीर्द्वारः इति

दे॒वी इति॑ दे॒वी । उ॒षासौ॑ । उ॒षसा॒ इत्यु॑षसौ॑ । आ॒श्विना॑ । सु॒त्रामेति॑ सु॒ऽत्रामा॑ । इन्द्रे॑ । सर॑स्वती ।
बल॑म् । न । वाच॑म् । आ॒स्ये॑ । उ॒षाभ्या॑म् । द॒धुः॒ । इ॒न्द्रि॒यम् ।
व॒सु॒वन॒ इति॑ व॒सु॒ऽवने॑ । तुम् ॥३॥

---

आ– ' देवी उषासौ ' इति । अश्विसरस्वतीन्द्रदेवत्या महाबृहती । $^{V}$उषासौ नक्तोषासाविति प्राप्ते छान्दसः आदिपदलोपः । द्विवचनसामर्थ्याद्देवंविधाऽर्थप्रतिपत्तिर्भवति । ये देव्यौ नक्तोषसौ, ताभ्याम् $^{V}$आश्विना $^{V}$सुत्रामा च शोभनत्राणधर्मयुक्तः (क्ता ?) $^{V}$सरस्वती च $^{V}$बलं च $^{V}$आस्ये इन्द्रस्य मुखे $^{V}$वाचम् $^{V}$उषाभ्यां नक्तोषासाभ्याम् $^{V}$इन्द्रियं सामर्थ्यं च $^{V}$दधुः । $^{V}$वसुवने ' वन संभजने '। तस्मै धनसंभजनाय $^{V}$वसुधेयस्य वसुनिधानाय च । एवं व्यत्ययः । एता देवता यथोक्तं हविः $^{V}$व्यन्तु हविर्भक्षयन्तु । त्वमपि $^{V}$यज ॥४६॥

---

अ– 'देवी उषासौ ' । नक्तोषासाविति प्राप्ते छान्दस आदिपदलोपः । $^{V}$उषासौ $^{V}$देवी नक्तोषासौ अनुयाजदेव्यौ । ताभ्याम् $^{V}$उषाभ्यां सह $^{V}$अश्विनौ $^{V}$सुत्रामा सुष्ठु रक्षणकर्त्री $^{V}$सरस्वती चैते $^{V}$इन्द्रे $^{V}$बलं $^{V}$दधुः । $^{V}$आस्ये इन्द्रमुखे $^{V}$वाचम् $^{V}$इन्द्रियं वागिन्द्रियं च दधुः । नश्चार्थः । $^{V}$सुत्रामा इत्यस्य भिन्नत्वे कल्पान्तरीण इन्द्रो ज्ञेयः ॥३॥

---

दे॒वी जोष्ट्री॒ सर॑स्वत्य॒श्विनेन्द्र॑मवर्द्धयन् ।
श्रोत्रं॒ न कर्ण॑यो॒र्यशो॒ जोष्ट्री॑भ्यां दधुरिन्द्रि॒यं
वसु॒वने॑ वसु॒धेय॑स्य व्यन्तु॒ यज॑ ॥४॥

---

दे॒वी इति॑ दे॒वी । जोष्ट्री॒ इति॒ जोष्ट्री॑ । सर॑स्वती । आ॒श्विना॑ । इन्द्र॑म् । अ॒व॒र्ध॒य॒न् ।
श्रोत्र॑म् । न । कर्ण॑योः । यश॑ः । जोष्ट्री॑भ्याम् । द॒धुः॒ । इ॒न्द्रि॒यम् ।
व॒सु॒वन॒ इति॑ व॒सु॒ऽवने॑ । ड्युम् ॥४॥

---

4. S3 पाठस्तु– देवी उषासा ... यजेति for देवी उषासा इति
5. V2 D3 S3 प्रातिपदिकलोपः for आदिपदलोपः ...

अनुयाजानां प्रैषाः ]

आ– ‘ देवी जोष्ट्री ’ इति । अश्विसरस्वतीन्द्रदेवत्या महाबृहती । देव्यौ जोषयित्र्यौ द्यावापृथिव्याविति वा अहोरात्र इति वा । ये देव्यौ जोष्ट्र्यौ, ताभ्यां Vजोष्ट्रीभ्याम् Vसरस्वती Vअश्विना अश्विनौ च Vइन्द्रम् Vअवर्धयन् उन्नतिं प्रापयन् । ‘ श्रोत्रं न कर्णयोः ’ । अस्येन्द्रस्य Vकर्णयोः स्थानविशेषयोः Vश्रोत्रं च इन्द्रियरूपं सामर्थ्यं Vयशः जोष्ट्रीभ्यां यथोक्ताभ्यां जोषयित्रीभ्याम् Vइन्द्रियं च Vदधुः । Vवसुवने इत्यादि समानार्थम् ॥५०॥

अ– ‘ देवी जोष्ट्री ’ । ये Vजोष्ट्री जोषयित्र्यौ सुखस्य सेवयित्र्यौ Vदेवी देव्यौ द्यावापृथिव्यौ अहोरात्रे वा । “ सस्यं च समा चेति कात्थक्यः ” (निरु ९.४१,४२) । ताभ्यां जोष्ट्रीभ्यां सह Vसरस्वती Vअश्विनौ चैते Vइन्द्रम् Vअवर्धयन् । कथमित्यत आह– इन्द्रे Vयशः Vदधुः, Vकर्णयोः च Vश्रोत्रम् Vइन्द्रियं दधुः ॥४॥

देवी ऊर्जाहुती दुघे सुदुघेन्द्रे सरस्वत्यश्विना भिषजावतः ।
शुक्रं न ज्योति स्तनयोराहुती धत्त इन्द्रियं
वसुवने वसुधेयस्य व्यन्तु यज ॥५॥

देवी इति देवी । ऊर्जाहुती इत्यूर्जाऽआहुती । दुघे इति दुघे । सुदुघेति सुऽदुघा ।
इन्द्रे । सरस्वती । अश्विना । भिषजा । अवतः ।
शुक्रम् । न । ज्योतिः । स्तनयोः । आहुती इत्याऽहुती । धत्तः । इन्द्रियम् ।
वसुवन इति वसुऽवने । वैं ॥५॥

आ– ‘ देवी ऊर्जाहुती ’ इति । अश्विसरस्वतीन्द्रदेवत्या पञ्चपदा पङ्क्तिः यजुरन्ता । अत्र व्यत्ययः । ये देव्यौ Vऊर्जाहुती । जोष्ट्रीतुल्यदेवताविकल्पो वा । ऊर्जाहुत्यौ विशिष्टान्नरसाहुत्यौ Vदुघे दुहे दोग्ध्र्यौ । Vसुदुघा शोभनदोहना Vसरस्वती Vअश्विना अश्विनौ Vभिषजा भिषजौ एताभ्याम् ऊर्जाहुतिभ्यां सरस्वती अश्विनौ भिषजौ च Vइन्द्रे, इन्द्रम् इति व्यत्ययः, Vअवतः पालयतः, सरस्वती च पालयतु । Vशुक्रं Vन Vज्योतिः Vस्तनयोः अश्विनौ च धत्तम् । Vइन्द्रियं च धत्तम् । Vआहुती च Vधत्त । Vवसुवने इति व्याख्यातम् ॥ ५० ॥

1. S3 पाठस्तु– देवी ... यजेति for देवी जोष्ट्री; V2 D3 जोषयितर्यौ for जोषयित्र्यौ
5. D3 इत्यादिः समानार्थः for इत्यादि समानार्थम्
17. M4 om. ये

[ अनुयाजानां प्रैषाः

अ– 'देवी ऊर्जाहुती'। उत्तरार्धे आहुतीशब्दस्तृतीयार्थः । जोष्ट्र्योरेव देवताविकल्पः । ये vऊर्जाहुती । ऊर्जा रसवती आहुतिराह्वानं होमो वा ययोस्ते ऊर्जाहुती। vदुघे कामदुघे vसुदुघे सुदोहने वर्तेते ताभ्यामूर्जाहुतिभ्यां सह vसरस्वती vभिषजा अश्विनौ च vइन्द्रे इन्द्रम् vअवतः अवन्ति । वचनव्यत्ययः । कथमित्यत आह– vज्योतिः तेज इन्द्रे vधत्तः दधति । vस्तनयोः vशुक्रम् vइन्द्रियं च धत्तः दधति । व्याख्यातमन्यत् ॥ ५ ॥

---

देवा देवानां भिषजा होतारा इन्द्रमश्विना वषट्कारैः सरस्वती

त्विषिं न हृदये मतिम् ।

होतृभ्यां दधुरिन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज ।।६।।

---

देवा । देवानाम् । भिषजा । होतारा । इन्द्रम् । अश्विना । वषट्कारैरिति

वषट्ऽकारैः । सरस्वती । त्विषिम् । न । हृदये । मतिम् ।

होतृभ्यामिति होतृऽभ्याम् । दधुः । इन्द्रियम् । वसुवन इति वसुऽवने । ठें ॥ ॥ ६ ॥

---

आ– 'देवा देवानाम्' इति । अग्निसरस्वतीन्द्रदेवत्या जगती यजुरन्ता । vदेवानां vभिषजा भिषजौ vदेवा देवौ vहोतारा होतारौ vअश्विना अश्विनौ vसरस्वती च vवषट्कारैः इन्द्रे दधुः । इन्द्रस्य पोषणं कुर्युः । 'त्विषिं न हृदये'। vत्विषिं च दधुः, vहृदये vमतिं च । vहोतृभ्यां vदधुः विदधुः vइन्द्रियं च दधुः । vवसुवने इत्यादिः समानार्थः ॥ ५१ ॥

---

अ– 'देवा देवानाम्'। vदेवानां vदेवा देवौ यौ होतारौ अनुयाजदेवौ स्तः ताभ्यां vहोतृभ्यां सह vवषट्कारैः च सह vभिषजा vअश्विना वैद्यावश्विनौ vसरस्वती चैते vइन्द्रम् इन्द्रे vत्विषिं कान्तिं vदधुः । vहृदये vमतिम् vइन्द्रियं च दधुः ॥ ६ ॥

---

2. P2 M4 before रसवती ins. आवन्तोऽयं निशावत्

12. S3 पाठस्तु- देवो ... यजेति for देवा देवानामिति ।; V2 S3 after यजुरन्ता add द्वौ जागतौ यस्याः सा जागते जगतीति; D3 द्वौ जगत्यौ यस्याः सा जगतीति

16. M6 befor अनु॰ adds: य

देवीस्तिस्रस्तिस्रो देवीरश्विनेळा सरस्वती ।
शूषं न मध्ये नाभ्यामिन्द्राय दधुरिन्द्रियं
वसुवने वसुधेयस्य व्यन्तु यज ।।७।।

देवीः । तिस्रः । तिस्रः । देवीः । अश्विना । इळा । सरस्वती ।
शूषम् । न । मध्ये । नाभ्याम् । इन्द्राय । दधुः । इन्द्रियम् ।
वसुवन इति वसुऽवने । ङुम् ॥ ७ ॥

आ– ' देवीस्तिस्रः ' इति । अश्विसरस्वतीन्द्रदेवत्या महाबृहती । सरस्वतीळाभारत्यः [V]तिस्रः [V]देवीः । [ [V]तिस्रः [V]देवीः ] इत्यत्र विभक्तिव्यत्ययोऽध्याहारश्च । वाक्यवशात् । तिसृभिर्देवीभिः सरस्वतीळाभारतीभिः सह [V]आश्विना अश्विनौ [[V]इळा] [V]सरस्वती च । ' शूषं न मध्ये नाभ्याम् ' । [V]शूषम् इति बलनाम इति वाक्यार्थः । [V]इन्द्राय इत्यत्र व्यत्ययः । इन्द्रिय(?) विषये ( इन्द्रे विषये ) । तत्रापि [V]नाभ्यां [V]मध्ये च अश्विनौ सरस्वती च बलम् , [V]इन्द्रियं सामर्थ्यं च [V]दधुः स्थापितवन्तः । [V]वसुवने इति व्याख्यातः समानार्थः ॥ ५२ ॥

अ– ' देवीः तिस्रः ' । यास्तिस्रो देव्यः भारती इळा सरस्वतीति "तिस्रः "देवीः । विभक्तिव्यत्ययः । सन्ति, ताभिः तिसृभिर्देवीभिः सह "अश्विना अश्विनौ "इळा "सरस्वती चैते "इन्द्राय इन्द्रस्य "नाभ्यां "मध्ये च "शूषं बलम् "इन्द्रियं च "दधुः । सर्वत्र नकाराश्चार्थाः ॥ ७ ॥

देव इन्द्रो नराशंसस्त्रिवरूथः सरस्वत्याश्विभ्यामीयते रथः ।
रेतो न रूपममृतं जनित्रमिन्द्राय त्वष्टा दधदिन्द्रियाणि
वसुवने वसुधेयस्य व्यन्तु यज ।।८।।

देवः । इन्द्रः । नराशंसः । त्रिवरूथ इति त्रिऽवरूथः । सरस्वत्या ।
अश्विभ्यामित्यश्विऽभ्याम् । ईयते । रथः ।
रेतः । न । रूपम् । अमृतम् । जनित्रम् । इन्द्राय । त्वष्टा । दधत् । इन्द्रियाणि ।
वसुवन इति वसुऽवने ॥ ढ्रोम् ॥ ८ ॥

8. V2 देव्यः, D3 देवत्यः for देवीः

[ अनुयाजानां प्रैषाः

आ– ' देव इन्द्रो नराशꣳसः ' इति । आश्विसरस्वतीन्द्रदेवत्या महाबृहती यजुरन्ता । देवनादिहेतुत्वात् $^{v}$देवः ऐश्वर्ययुक्तत्वात् $^{v}$इन्द्रः । $^{v}$नराशꣳसः, नराः अस्मिन्नासीनाः शंसन्तीति नराशꣳसो यज्ञः ( द्र. निरु ८.६ ) । $^{v}$त्रिवरूथः त्रिगृहः । सदोहविर्धानाग्नीध्रा गृहा यस्य सः त्रिवरूथो यज्ञः । [ $^{v}$रथः ] रथधर्मयुक्तः यज्ञः । $^{v}$सरस्वत्या $^{v}$आश्विभ्यां च $^{v}$ईयते गम्यते नीयते $^{v}$रथः । $^{v}$रेतः $^{v}$न रेतश्च रेतोरूपं वा $^{v}$अमृतं च [ $^{v}$जनित्रं ] जन्म च जन्मफलं च $^{v}$त्वष्टा । त्वक्षतिः करोत्यर्थः । जगतः कर्ता $^{v}$इन्द्राय $^{v}$दधत् इन्द्राय इन्द्रार्थं दधत् स्थापयतु । $^{v}$इन्द्रियाणि दधातु । $^{v}$वसुवने इत्यादि व्याख्यातम् ॥ ५२ ॥

अ– ' देवः इन्द्रः ' । " नरा अस्मिन्नासीनाः शंसन्ति " ( निरु ८.६ ) इति यास्कोक्तेः $^{v}$नराशंसः $^{v}$देवः अनुयाजरूपो यज्ञः । $^{v}$इन्द्राय $^{v}$रेतः वीर्यं $^{v}$रूपं सौन्दर्यम् $^{v}$अमृतं $^{v}$जनित्रम् उत्तमं जन्म । जन जनने । अस्मात् स्वार्थे इत्रप्रत्ययः । $^{v}$इन्द्रियाणि $^{v}$दधत् दधातु । कीदृशः नराशंसः ? $^{v}$इन्द्रः । इन्दतीति इन्द्रः, ऐश्वर्यवान् । इदि परमैश्वर्ये । $^{v}$त्रिवरूथः । त्रीणि वरुथानि गृहाणि सदोहविर्धानाग्नीध्राणि यस्य सः तथा । $^{v}$त्वष्टा । त्वक्षतिः करोतिकर्मैत्युक्तेर्जगतः कर्ता । यज्ञादेव जगदुत्पत्तेः । यस्य नराशंसस्य $^{v}$रथः $^{v}$सरस्वत्या $^{v}$अश्विभ्यां च$^{v}$ ईयते नीयते उह्यते ॥ ८ ॥

देवो देवैर्वनस्पतिर्हिरण्यपर्णो अश्विभ्याꣳ सरस्वत्या सुपिप्पल
इन्द्राय पच्यते मधु ।
ओजो न जूतिर्ऋषभो न भामं वनस्पतिर्नो दधदिन्द्रियाणि
वसुवने वसुधेयस्य व्यन्तु यज ॥९॥

देवः । देवैः । वनस्पतिः । हिरण्यपर्ण इति हिरण्यऽपर्णः ।
अश्विभ्यामित्यश्विऽभ्याम् । सरस्वत्या । सुपिप्पल इति सुऽपिप्पलः ।
इन्द्राय । पच्यते । मधु ।
ओजः । न । जूतिः । ऋषभः । न । भामम् । वनस्पतिः । नः । दधत् । इन्द्रियाणि ।
वसुवन इति वसुऽवने ॥ आः ॥ ९ ॥

1. S3 पाठस्तु– देव इन्द्रो ... यजेति for देव इन्द्रो नराशꣳस इति ।
2. V2 before नराः adds यज्ञं, S3 यज्ञः; V2 यस्मिन् for अस्मिन्
3. V2 D3 S3 °ग्रहः for °गृहः; V2 D3 S3° °ग्रहाः for °गृहाः
6. V2 तक्षति for त्वक्षतिः
13. P2 M4 ऊह्यते for उह्यते

अनुयाजानां प्रैषाः ]

आ– 'देवो देवैः' इति। लिङ्गोक्तदेवत्या अनुष्टुप् प्रगाथः । यः vदेवःvवनस्पतिः यूपदेवता-[ रूपः ] प्रयाजदेवतालक्षणो वा vहिरण्यपर्णः सुपर्णः vदेवैः vअश्विभ्यां vसरस्वत्या च vसुपिप्पलः सुकर्मफलः । vइन्द्राय इन्द्रार्थं vपच्यते संपाद्यते vमधु । vओजः vन ओजः च । vजूतिः जूतेः । व्यत्ययः । गतिकर्मणो जवतेः रूपं जूतिरिति । vऋषभः vन ऋषभः च । vवनस्पतिः vनः अस्माकम् ओजःप्रभृतिकं vदधत् दधातु स्थापयतु । vभामं vन । भामशब्दः क्रोधवचनः । क्रोधं दधत् vइन्द्रियाणि च दधातु ॥ ५४ ॥

---

अ– 'देवो देवैः' । सः vवनस्पतिः vदेवः vनः अस्माकम् vओजः तेजः vजूतिः जूतिं जवम् vभामं क्रोधम् vइन्द्रियाणि च vदधत् दधातु । यः vवनस्पतिः vइन्द्राय vमधु मधुरं फलं vपच्यते पचति फलति। नौ चार्थौ । कीदृशो वनस्पतिः ? vदेवैः vहिरण्यपर्णः । हिरण्यरूपाणि पर्णानि यस्य । देवा यस्य यूपरूपवनस्पतेर्हिरण्मयानि पर्णानीत्यर्थः । vअश्विभ्यां vसरस्वत्या च vसुपिप्पलः । शोभनं पिप्पलं फलं यस्य सः । अश्व्यादयो यस्य फलरूपाणीत्यर्थः । vऋषभः पूज्यः । ऋषभशब्दः पूजावचनः ॥ ९ ॥

---

देवं बर्हिर्वारितीनामध्वरे स्तीर्णमश्विभ्यामूर्णम्रदाः सरस्वत्या
स्योनमिन्द्र ते सदः ।
ईशायै मन्युꣳ राजानं बर्हिषा दधुरिन्द्रियं
वसुवने वसुधेयस्य व्यन्तु यज ॥१०॥

---

देवम् । बर्हिः । वारितीनाम् । अध्वरे । स्तीर्णम् । अश्विभ्यामित्यश्विऽभ्याम् ।
ऊर्णम्रदा इत्यूर्णऽम्रदाः । सरस्वत्या । स्योनम् ।
इन्द्र । ते । सदः ।
ईशायै । मन्युम् । राजानम् । बर्हिषा । दधुः । इन्द्रियम् ।
वसुवन इति वसुऽवने । ढौम् ॥१०॥

---

1. S3 पाठस्तु - देवो देवैः ... यजेति for देवो देवैरिति;
   V2 D3 S3 वनस्पतिजातेश्च for वनस्पतिः
3. V2 सपिप्पलं सुकर्मफलं for सुपिप्पलः सुकर्मफलः V2 संपचयते संपाद्यते for पच्यते संपाद्यते; D3 संपद्ये संपाद्यते for पच्यते संपाद्यते
7. M4 om. जूतिः

आ– 'देवं बर्हिर्वारितीनाम्' इति । लिङ्गोक्तदेवत्या आनुष्टुभः प्रगाथः । यस्माद् Vदेवं Vबर्हिः Vवारितीनाम् उदकवतां वारिप्रभवानामोषधीनां संबन्धि बर्हिः Vअध्वरे Vस्तीर्णम् Vअश्विभ्याम् अध्वर्युभ्याम् अध्वरे यज्ञे स्तीर्णम् आस्तीर्णम् । Vऊर्णम्रदाः ऊर्णवत् मृदु च बर्हिः तव Vसरस्वत्या च । स्तीर्णमित्यनुवर्तते । यत एव तस्मात्– 'स्योनमिन्द्र ते सदः' । हे श्रीभगवन् Vइन्द्र, Vते तव Vसदः स्थानम् आस्तम् । किं च– 'ईशायै मन्युꣳ राजानम्' इति । तस्मिन् सदसि Vईशायै ईशितायै ऐश्वर्याय Vमन्युं क्रोधं पापिनं प्रति क्रोधाविष्टं Vराजानम् इन्द्रियं त्वामश्विनौ सरस्वती च Vदधुः । Vवसुवने इत्यादि व्याख्यातसमानार्थः ॥५५॥

अ– 'देवं बर्हिर्वारितीनाम्' । वारि जले इतिः गतिर्यासां तासां जलोद्भवानामोषधीनां संबन्धि बर्हिः । Vते तव Vसदः सदसि । विभक्तिव्यत्ययः । Vअध्वरे यज्ञे Vअश्विभ्यां Vसरस्वत्या च Vस्तीर्णम् आस्तृतम् । कीदृशं बर्हिः ? Vदेवं दीप्यमानम् । Vऊर्णम्रदाः ऊर्णमिव म्रदीयः । छान्दस ईयो-लोपः । अत एव Vस्योनं सुखरूपम् । किं च– अश्विसरस्वत्यः Vबर्हिषा सह Vराजानं राजमानं Vमन्युं क्रोधम् Vइन्द्रियं च त्वयि Vदधुः । किमर्थम् ? Vईशायै ऐश्वर्याय । ईशानमीशा, तस्यै । "गुरोश्च हलः" (पा ३.३.१०३) इति स्त्र्यधिकारे ईशतेरप्रत्ययः । स्त्रीत्वात् टाप् ॥ १० ॥

देवो अग्निः स्विष्टकृद्देवान् यक्षद्यथायथꣳ होतारा इन्द्रमश्विना
वाचा वाचꣳ सरस्वतीमग्निꣳ सोमꣳ स्विष्टकृत् ।
स्विष्ट इन्द्रः सुत्रामा सविता वरुणो भिषगिष्टो देवो
वनस्पतिः स्विष्टा देवा आज्यपाः ।
स्विष्टो अग्निरग्निना होता होत्रे स्विष्टकृद्यशो न
दधदिन्द्रियमूर्जमपचितिꣳ स्वधां
वसुवने वसुधेयस्य व्यन्तु यज ॥११॥

देवः । अग्निः । स्विष्टकृदिति स्विष्टऽकृत् । देवान् । यक्षत् ।
यथायथमिति यथाऽयथम् । होतारौ । इन्द्रम् । अश्विना । वाचा । वाचम् ।
सरस्वतीम् । अग्निम् । सोमम् । स्विष्टकृदिति स्विष्टऽकृत् ।
स्विष्ट इति सुऽइष्टः । इन्द्रः । सुत्रामेति सुऽत्रामा ।

1. V2 D3 अनुष्टुभः for आनुष्टुभः
7. V2 इत्यादि व्याख्यातं for इत्यादि व्याख्यात°

अनुयाजानां प्रैषाः ]

सविता । वरुणः । भिषक् । इष्टः । देवः । वनस्पतिः ।
स्विष्टा इति सुऽइष्टाः । देवाः । आज्यपा इत्याज्यऽपाः ।
स्विष्ट इति सुऽइष्टः । अग्निः । अग्निना । होता । होत्रे । स्विष्टकृदिति स्विष्टऽकृत् ।
यशः । न । दधत् । इन्द्रियम् । ऊर्जम् ।
अपचितिमित्यपऽचितिम् । स्वधाम् । वसुवन इति वसुऽवने ।
वसुधेयस्येति वसुऽधेयस्य । व्यन्तु । यज ॥ इयं ॥११॥

~~~~~~~~~~~~~~

आ – ' देवो अग्निः स्विष्टकृत् ' इति । यः [v]देवः सः [v]अग्निः [v]स्विष्टकृत् । शोभनमिष्टं कर्तव्यं करोतीति स्विष्टकृत् । [v]देवान् स्वेनेज्यान् [v]यक्षत् अयक्षत् इष्टवान् । देवान् [v]यथायथम् । येन प्रकारेण यो यो देवो यष्टव्यस्तं तं तथैवेत्यर्थः । एवं सामान्यतः उक्त्वा अथेदानीं विशेषतः आह– ' होतारा इन्द्रमश्विना ' । होतारौ अयं चाग्निरसौ च मध्यमो वायुश्च । होतृमैत्रावरुणौ वा । अश्विनौ च [v]वाचा सरस्वत्या सह देवान् यक्षत् । तथा च [v]स्विष्टकृत् अग्निः [v]वाचं [v]सरस्वतीम् [v]अग्निं [v]सोमं च यक्षत् । ' स्विष्ट इन्द्रः सुत्रामा ' । एवं [v]सुत्रामा [v]इन्द्रः [v]स्विष्टः [v]सविता च स्विष्टः [v]वरुणः च [v]भिषक् [v]इष्टः [v]देवः [v]वनस्पतिः च इष्टः, [v]स्विष्टाः [v]देवाः [v]आज्यपाः। आज्यं हविः पिबन्तीति [v]आज्यपाः । [v]स्विष्टः [v]अग्निः । अश्विनौ स्विष्टौ । आज्योऽग्निश्च स्विष्टः । ' होता होत्रे ' । [v]होता च [v]होत्रे इष्टः । ' स्विष्टकृद्यशो न दधदिन्द्रियमूर्जमपचितिꣳ स्वधाम् ' । यतश्च [v]इन्द्रियम् [v]ऊर्जं विशिष्टमन्नं रसं च [v]अपचितिं पूजां च [v]स्वधां, स्वान् स्वकीयान् दधाति पोषयतीति स्वधा, ताम् । देवतातृप्तिकरमन्नं [v]दधत् । दानार्थोऽयम् । [v]वसुवने इत्यादिः व्याख्यातसमानार्थः ॥५६॥

~~~~~~~~~~~~~~

**अ– ' देवो अग्निः स्विष्टकृत् ' । शोभनमिष्टं यागं करोति [v]स्विष्टकृत [v]अग्निः [v]देवः [v]यथायथं यथास्वं यो यथा यष्टव्यस्तथा, [v]देवान् वक्ष्यमाणान् [v]यक्षत् इष्टवान् । कानित्यत आह – होतारौ । अयं चाग्निरसौ च मध्यमो वायुरित्येतौ । [v]इन्द्रम् [v]अश्विना अश्विनौ च । [v]वाचं**

~~~~~~~~~~~~~~

7. S3 पाठस्तु– देवो अग्निः ... यजेति for देवो अग्निः स्विष्टकृदिति
10. S3 om. अथ; D3 अयं for असौ
11. D3 S3 V2 होता for वायुः
12. D3 V2 before इन्द्रः om. स्विष्ट
15. S3 after इष्टः adds स्विष्टः
20. M4 यक्ष्यमाणान् for वक्ष्यमाणान्
~~~~~~~~~~~~~~

Vसरस्वतीम् Vअश्विं Vसोमं च Vवाचा मन्त्रेण यक्षत् यजतु । किं च– Vस्विष्टकृत् शोभनयज्ञकारी Vसुत्रामा सुरक्षकः Vइन्द्रः Vस्विष्टः सुष्ठु इष्टः, Vसविता Vवरुणः Vभिषक् च Vइष्टः । Vवनस्पतिः Vदेवः च इष्टः । Vआज्यपाः Vदेवाः प्रयाजानुयाजाः Vस्विष्टाः । Vअग्निः अधिष्ठाता Vअग्निना भौमेन हविर्द्वारा इष्टः । किं च– Vहोता दैव्यः Vस्विष्टकृत् Vहोत्रे मानुषाय Vयशः Vइन्द्रियम् Vऊर्जम् अन्नम् Vअपचितिं पूजां Vस्वधां पित्रर्थमन्नं च Vदधत् ददातु । नकारश्चकारार्थः । वसुवननाय वसु[ नि ]धानाय च देवाः Vव्यन्तु हविरदन्तु । हे मनुष्यहोतः, त्वमपि यज ॥ ११ ॥

---

अग्निमद्य होतारमवृणीतायं यजमानः पचन् पक्तीः पचन् पुरोळाशान्

बध्नन्नश्विभ्यां छागꣳ सरस्वत्यै मेषमिन्द्राय ऋषभम् ।

सुन्वन्नश्विभ्याꣳ सरस्वत्या इन्द्राय सुत्राम्णे सुरासोमान् ॥१२॥

---

अग्निम् । अद्य । होतारम । अवृणीत । अयम् । यजमानः । पचन् । पक्तीः ।

पचन् । पुरोळाशान् । बध्नन् । अश्विभ्यामित्यश्विऽभ्याम् । छागम् ।

सरस्वत्यै । मेषम । इन्द्राय । ऋषभम् ।

सुन्वन् । अश्विभ्यामित्यश्विऽभ्याम् । सरस्वत्यै । इन्द्राय ।

सुत्राम्ण इति सुऽत्राम्णे । सुरासोमानिति सुराऽसोमान् ॥ श्रीः ॥१२॥

---

आ– ' अग्निमद्य ' इति । सूक्तवाकप्रैषः । Vअद्य अस्मिन्नहनि Vहोतारम् Vअग्निम् Vअयं च Vयजमानः Vअवृणीत वरणं कृतवान् । किं कुर्वन् ? ' पचन् पक्तीः पचन् पुरोळाशान् ' । Vपक्तीः पचनीयानि वस्तूनि Vपचन् पुरोडाशांश्च Vपचन् । ' बध्नन्नश्विभ्यां छागम् '। अश्विनोरर्थे Vछागं Vबध्नन् बन्धनं कुर्वन् । Vसरस्वत्यै Vमेषं बध्नन्, Vइन्द्राय Vऋषभं बध्नन् । ' सुन्वन्नश्विभ्याम् [ सरस्वत्या ] इन्द्राय सुत्राम्णे '। Vअश्विभ्यां Vसरस्वत्यै च Vइन्द्राय Vसुत्राम्णे च Vसुरासोमान् Vसुन्वन् अभिषवं कुर्वन् । यजमानोऽग्निं होतारमावृणीतेति संबन्धः ॥५७॥

---

16. D3 om. किं कुर्वन्

17. D3 om. च पचन् ... मेषं ( L 18 )

18. V2 वृषं, D3 S3 वृषभं for ऋषभं

20. S3 सुरां for सुरा°

अ– ' अग्निमद्य ' । लिङ्गोक्तदैवत्यः प्रैषः । प्रथमा अष्टिः । द्वितीया धृतिः । तृतीया विकृतिः । ᵛअयं ᵛयजमानः ᵛअद्य ᵛअग्निं ᵛहोतारम् ᵛअवृणीत वृतवान् । वृणोतेर्लङ् । किं कुर्वन् ? ᵛपक्तीः पक्तव्यानि हवींषि ᵛपचन् । सामान्येनोक्त्वा विशेषमाह– ᵛपुरोळाशान् ᵛपचन्, ᵛअश्विभ्याम् अर्थे ᵛछागं ᵛबध्नन् । यूपे इति शेषः । ᵛसरस्वत्यै ᵛमेषं बध्नन्, ᵛइन्द्राय ᵛऋषभं बध्नन्, तथा ᵛअश्विभ्यां ᵛसरस्वत्यै ᵛसुत्राम्णे रक्षकाय ᵛइन्द्राय च ᵛसुरासोमान् ᵛसुन्वन् ॥ १२ ॥

---

सूपस्था अद्य देवो वनस्पतिरभवदश्विभ्यां छागेन सरस्वत्यै
मेषेणेन्द्राय ऋषभेण ।
अक्षꣳस्तान् मेदस्तः प्रति पचताग्रभीषतावीवृधन्त
पुरोळाशैरपुरश्विना सरस्वतीन्द्रः सुत्रामा सुरासोमान् ॥१३॥

---

सूपस्था इति सुऽउपस्थाः । अद्य । देवः । वनस्पतिः । अभवत् ।
अश्विभ्यामित्यश्विऽभ्याम् । छागेन । सरस्वत्यै । मेषेण । इन्द्राय । ऋषभेण ।
अक्षन् । तान् । मेदस्तः । प्रति । पचत । अग्रभीषत । अवीवृधन्त ।
पुरोळाशैः । अपुः । अश्विना । सरस्वती । इन्द्रः । सुत्रामेति सुऽत्रामा ।
सुरासोमानिति सुराऽसोमान् । ध्वद्धः ॥१३॥

---

आ– ' सूपस्था अद्य ' इति । साधु यज्ञमुपतिष्ठते ᵛअद्य अस्मिन्नहनि । ᵛदेवः ᵛवनस्पतिः ᵛसूपस्थाः ᵛअभवत् शोभनोपस्थानोऽभवत् । ᵛअश्विभ्यां ᵛछागेन ᵛसरस्वत्यै ᵛमेषेण ᵛइन्द्राय ᵛऋषभेण च । कथमवगम्यते एवमित्यत आह– ' अक्षꣳस्तान् ' इति । ये छागमेषऋषभाः पशवः ᵛतान् अजप्रभृतीन् पशून् अग्निप्रभृतयो देवास्ते ᵛअक्षन् । अद भक्षणे । भक्षितवन्तः । कुत आरभ्येति । ᵛमेदस्तः ᵛप्रति ᵛपचत वपामारभ्य प्रति पचत प्रतिपाकं कुरुत । ततः ᵛअगृभीषत गृहीतवन्तः अग्निपक्वान्यवदानानि । ᵛअवीवृधन्त ᵛपुरोळाशैः पुराडाशैः अवीवृधन्त अभिवृद्धिं गच्छत । किं च– ' अपुरश्विना सरस्वतीन्द्रः सुत्रामा सुरासोमान् ' । सुरा च सोमाः च । सुरामयान् सोमान् अश्विनौ ᵛसरस्वती ᵛइन्द्रः ᵛसुत्रामा चेत्येते ᵛअपुः । आद्यवर्णलोपश्छन्दसः । पपुः पीतवन्तः ॥५८॥

---

15. V2 D3 साधि for साधु
19. S3 om. प्रति; S3 पचता पश्यन्ते तानि पचता । पचतानि पक्वानि अवदानानि for पचत वपामारभ्य; S3 प्रत्यगृभीषत for प्रतिपचत
20. V2 गृभीषत for गृहीतवन्तः

अ– 'सूपस्था अद्य'। अद्य वनस्पतिः देवः छागेन कृत्वा अश्विभ्यां सूपस्थाः अभवत्। सुष्ठु उपतिष्ठते सेवते इति सूपस्थाः। सोमपाशब्दवदाकारान्तः पुंलिङ्गः। छागेनाश्विनोः सेवां चकारेत्यर्थः। तथा मेषेण सरस्वत्यै सूपस्था अभवत्। ऋषभेण इन्द्राय सूपस्था अभवत्। वनस्पतिना छागमेषर्षभैरश्वादीनामुपस्थानं कृतम्। तत्कथं जायते तत्राह–यतोऽश्व्यादयः मेदस्तः, मेदो वपा तामारभ्येति मेदस्तः। ल्यब्लोपे पञ्चमी। तान् छागादीन् अक्षन् अभक्षयन्। घसॢ अदने। तथा *पचता। पच्यन्ते इति पचतानि। पचतान्येव पचता। "निलोपो बहुलम्" (द्र. वाप्रा ३.१८) इति प्रातिशाख्येन निलोपः। पक्वानि अवदानानि प्रति अगृभीषत प्रत्यगृह्णन्। पुरोळाशैः ते अवीवृधन्त ऐधन्त। किं च– अश्विना अश्विनौ सरस्वती सुत्रामा इन्द्रः चैते सुरासोमान् अपुः अपिबन्। पातेर्लुङ्। पिबादेशाभावश्छान्दसः। यद्वा– अपुः ररक्षुः। सुराश्च सोमाश्च तान्। सुरामयान् सोमानिति वा। पचतेत्यत्र पचतेः "भूमृदृशियजिपर्विपच्यमितमिनमिहर्यिभ्योऽतच्" (उ. ३.११०) इति अतच् प्रत्ययः। 'भूतेऽपि दृश्यते' (पा ३.३.२) इति वचनाद् भूतार्थो द्रष्टव्यः ॥१३॥

त्वामद्य ऋष आर्षेय ऋषीणां नपादवृणीतायं यजमानो बहुभ्य आ
संगतेभ्य एष मे देवेषु वसु वार्यायक्ष्यत इति ।
ता या देवा देव दानान्यदुस्तान्यस्मा आ च शास्वा च
गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः
सूक्तवाकाय सूक्ता ब्रूहि ॥१४॥ (६) ॥

त्वाम् । अद्य । ऋषे । आर्षेय । ऋषीणाम् । नपात् । अवृणीत । अयम् । यजमानः ।
बहुभ्य इति बहुऽभ्यः । आ । संगतेभ्य इति सम्ऽगतेभ्यः ।
एषः । मे । देवेषु । वसु । वारि । आ । यक्ष्यते । इति ।
ता । या । देवाः । देव । दानानि । अदुः ।
तानि । अस्मै । आ । च । शास्व । आ । च । गुरस्व । इषितः । च ।
होतः । असि । भद्रवाच्यायेति भद्रऽवाच्याय । प्रेषित इति प्रऽइषितः ।
मानुषः । सूक्तवाकायेति सूक्तऽवाकाय । सूक्तेति सुऽउक्ता । ब्रूहि ॥
डुम् ॥ १४ ॥(६)॥

* [ व्याख्यानामिदं पदपाठविरुद्धं प्रतिभाति। पदे– 'पचत' इति पाठः दृश्यते। ]

इमं मे द्वादश ॥१२॥ समिद्धो अग्निरेकादश ॥ ११ ॥ वसन्तेन षट् ॥ ६॥ होता यक्षद् द्वादश ॥१२॥ अश्विनौ छागस्य पञ्च ॥५॥ देवं बर्हिश्चतुर्दश ॥१४॥ षळनुवाकेषु षष्ठि ॥६०॥ कृष्ण इमं मे षष्ठि ॥६०॥६॥

[ इति शुक्लयजुःकाण्वसंहितायां त्रयोविंशोऽध्यायः ॥२३॥ ॥६॥ ]

आ– 'त्वामद्य' इति। दैव्यो होताऽग्निरुच्यते। हे ᵛऋषे मन्त्राणां द्रष्टः, ᵛआर्षेय ऋषीणां संबन्धिन् ᵛऋषीणां मन्त्रद्रष्टॄणाम् ऋत्विजां ᵛनपात् पुत्रः। हे ऋषिपुत्र, एवंगुणविशिष्टमग्निं ᵛत्वाम् ᵛअद्य अस्मिन्नहनि ᵛअयं ᵛयजमानः ᵛअवृणीत वृतवान्। ᵛबहुभ्यः देवेभ्यः ᵛआ ᵛसंगतेभ्यः अत्र युक्तेभ्यः देवेभ्यः अर्थाय युक्त्वा त्वामेव अवृणीतेत्यभिप्रायः। किमर्थमिति। 'एष मे देवेषु वसु वार्या यक्ष्यते' इति। ᵛमे मह्यं ᵛवसु धनं च वरणीयं ᵛदेवेषु वरणाय धनं प्रति

3. A after षष्ठि ॥ adds कृष्ण इमं मे षष्ठि ॥ समिद्धोऽग्निर्गायत्री त्र्यविस्तनूनपोष्णिहाम्। इळाभिरनुष्टुप् पञ्चाविः सुबर्हिर्बृहत्यथ ॥१॥ त्रिवत्सो हि दुरः पङ्क्तिश्छन्दो वै तुर्यवाट् तथा। उषे त्रिष्टुप् पष्ठवाट् च दैव्या वै जगत्यथ ॥२॥ अनड्वाँस्तिस्र इळा विराड् धेनुस्ततः परम्। त्वष्टानु द्विपदामुक्षा शमिता च ककुब्वशा ॥३॥ स्वाहा यज्ञमतिच्छन्दा बृहद्गौश्च वयो दधुः। वसन्तेन च वसवो रथन्तरमिति स्मृताः ॥४॥ ग्रीष्मेण रुद्रा बृहता वर्षादित्याः क्रमेण हि। वैरूपेण पुनर्नोऽभ्याः शारदेनैकविंशः ॥५॥ वैराजेनाथ हेमन्तस्त्रिणवो हि बलेन च। शैशिरेण त्रयस्त्रिंशो सत्येन रेवतीस्तथा ॥६॥ होता यक्षत् समिच्छष्पैस्तनूनपाद्बदरैरुप। नराशंसबदरैरिळेळितश्च तु यवैस्ततः ॥७॥ कर्कन्धुभिर्बर्हिर्दुहे वै हि दुरः शुक्रं सुपेश्यनः। दैव्या शूषश्च तिस्रश्च वाचा सरस्वती महः ॥८॥ सुरेतसं यशो वै च वनस्पतिं हि भामिताः। अग्निं तु ऋषभमिन्द्रं स्वाहा देवा वदेत्क्रमम् ॥९॥ होता यक्षदश्विनौ छागस्याश्विनौ सरस्वतीम्। होता यक्षदश्विनौ च छागस्याथ वनस्पतिम् ॥१०॥ अग्निं स्विष्टकृतं देवं बर्हिस्तेजो न चक्षुः। देवी द्वारः प्राणं देवी उषासा बलमतः परम् ॥११॥ देवी जोष्ट्री श्रोत्रं देवी ऊर्जाहुती दुघे तथा। शुक्रं च देवा देवानां होता देवीस्तु तिस्रः ॥१२॥ शूषं च देव इन्द्रश्च रेतो देवश्च देवः। ओजो न जूतिर्देवं च बर्हिरीशा क्रमेण तु ॥१३॥ देवोऽग्निस्विष्टकृद्देवानग्निमद्य सुन्वन्यथा। सूपस्था अद्य देवोऽथाक्षंस्तान्मेद एव हि ॥१४॥ त्वामद्य ऋष आर्षेय इति नित्यं पठन् नरः। स वाङ्निपुणो भूत्वा मोदते हि सदा बुधः ॥१५॥; D1 कृष्ण इमं मे षष्टि ॥६०॥ समित्तन्। इळा बर्हिदुर उषे देव्यास्तिस्रः। त्वष्टा शमिता स्वाहा यज्ञम्। गायत्री उष्णिहानुष्टुब्बृहती पङ्क्तिः। त्रिष्टुब्जगतीविराट् द्विपदा ककुबिति छन्दसः। वसन्तग्रीष्मबर्हिशरत्सहेमन्तशैशिरौ। समित्तनुनरेळा च बर्हिर्दुरासुपेशसा। देव्यास्तिस्रः सुरेतसं वनस्पतिमग्निमश्विना छागस्य अश्विनौ सरस्वतीम्। अश्विनौ छागस्य वनस्पतिमग्निम्। देवं बर्हिर्द्वारः। देवी उषासौ। देवी जोष्ट्री। देवी ऊर्जाहुती। देवा देवानाम्। देवीस्तिस्रो देव इन्द्रं देव देवैर्देवं बर्हिर्देवो अग्निरग्निमद्य सूपस्था अद्य त्वामद्य। ते प्राणबलश्रोत्रं शुक्रो होतुः। शूषा। रेतमोजमीशायैस्त्विष्टं सुन्वन्नक्षंस्ता ॥

इति शुक्लयजुःकाण्वपदसंहितायां त्रैविंशोऽध्यायः ॥२३॥६॥

5. S3 पाठस्तु– त्वामद्य . सूक्ता ब्रूहीति for 'त्वामद्य' इति

vएषः अग्निः vआ vयक्ष्यते इति। यस्मादेवं च vता तानि vया यानि vदानानि दातव्यानि ये vदेवाः vअदुः दत्तवन्तः, तेषु देवेषु स्थितं vवारि वसु विशिष्टं वसु धनम् vअस्मै यजमानाय हे vदेव, vआ vच vशास्व इति संबन्धः। आशास्व च। vआ vगुरस्व vच। गुरी उद्यमने। उद्गच्छ च। vइषितः इष्टस्त्वं हे vहोतः, त्वमिष्टः vअसि। vभद्रवाच्याय भन्दनीयार्थ-वचनाय vप्रेषितः त्वमाशास्वेति संबन्धः। अथेदानीं प्रेषितः vमानुषः होता vसूक्तवाकाय सूक्तवचनाय प्रेषितो होता vसूक्ता सूक्तानि vब्रूहि ॥६०॥

इति श्री[ मत् परमहंसपरिव्राजकाचार्यश्रीवासुदेवपुरी श्रीकृष्णभक्तिसाम्राज्यस्य श्रीमज्जात-वेदोपाध्यायस्य सूनुना चतुर्वेदिश्रीमदानन्दबोधभट्टोपाध्यायेन विरचिते ] काण्ववेदमन्त्रभाष्यसंग्रहे त्रयोविंशोऽध्यायः ॥२३॥

---

अ- 'त्वामद्य'। दैव्यो होताऽत्र संबोध्यते। हे vऋषे मन्त्रद्रष्टः हे vआर्षेय यजमान। आर्षेयै-र्व्रियते यतः। - ऋषिर्होतेति वा। हे vऋषीणां vनपात् पुत्र। नपाच्छब्दः पुत्रनामसु पठितः। vअयं vयजमानः vबहुभ्यः vसंगतेभ्यः मिलितेभ्यो देवेभ्योऽर्थं इति हेतोः vअद्य vत्वाम् एव vआ vअवृणीत सम्यग्वृतवान् vइति इति किम्? vएषः अग्निः vमे मह्यं vदेवेषु vवारि। वरीतुं योग्यं वारि। वरणीयं vवसु धनम् vआ vयक्ष्यते आदास्यते। यजतेर्दानार्थाल्लृट्। देवेभ्यो गृहीत्वा यजमानाय दास्यतीत्यर्थः॥

किं च- हे vदेव अग्ने, vया यानि vदानानि vदेवाः यष्टृभ्यः पूर्वम् vअदुः vता तानि दानानि vअस्मै यजमानाय vआशास्व vच इच्छ च vआगुरस्व vच। गुरी उद्यमने। तुदादिः। एतदर्थे उद्युक्तो भवेत्यर्थः। आकारद्वयं चकारद्वयं च भिन्नक्रमे। किं च— हे दैव्य vहोतः, त्वम् vइषितः प्रेषितः vअसि। प्रेषणे प्रेरितोऽसि। तदेवाह - vभद्रवाच्याय वक्तुं योग्यं वाच्यम्। भद्रं शुभं च तत् वाच्यं चेति भद्रवाच्यम्, तस्मै भद्रवाच्याय। यजमाने भद्रं vब्रूहि इति vप्रेषितः असीत्यर्थः॥ किं च- vमानुष मानुषो होतापि vसूक्ता सूक्तानि त्वं ब्रूहीति vसूक्तवाकाय सूक्तवचनाय vप्रेषितः असि।

यद्वा- वेदपुरुषः एकान्तिभक्तमुद्दिश्य परमात्मानं याचते। 'त्वामद्य' इति। तथा हि- हे ऋषे, नरनारायणादिरूपं हे आर्षेय, रामाद्यवतारेण पीडापरिहारकत्वेन ऋषिहित, हे ऋषीणां नपात्, वामनाद्यवतारे काश्यपादेर्जातत्वात् ऋषिपुत्र हरे, अयं यजमानः अद्य त्वद्यागदिने यागाङ्गत्वेन संगतेभ्यः बहुभ्यः देवेभ्यः सकाशात् फलार्थं प्रार्थयित्वा (?) एष परमात्मा देवेषु विद्यमानं वारि वसु वरणीयं द्रव्यं स्वर्गादिकं मे मह्यम् आयक्ष्यते सम्यग्दास्यतीति स्वतन्त्रं त्वामेव अवृणीत।

---

2. V2 D3 अदितवन्तः for दत्तवन्तः

3. V2 after च। adds गॄ निगरणे। वदस्व; D3 om. आ

8. S3 शुक्लयजुःकाण्वसंहिताभाष्यसंग्रहे for काण्व ... संग्रहे

आ सत्यमेव । अतः कारणात् हे देव, क्रीडादिगुणसंपन्नः त्वं या यानि दानानि देवाः स्वभक्तेभ्यः अदुः दत्तवन्तः ता तानि अभीष्टदानानि अस्मै यजमानाय आशास्व च देहि । धातूनामनेकार्थत्वात् । दातुमिच्छेति वा । आगुरस्व च । अवधायोद्युक्तो भव । किं च – हे होतः सर्वयज्ञभोक्तः । हु दानादानयोरिति धातुः । त्वं मत्प्रार्थितविषये भद्रवाच्याय अङ्गीकारवचनाय इषितः प्रार्थितोऽसि । न केवलमिषितः । किं तर्हि ? प्रेषितः 'अहो देहि' इति प्रकर्षेणार्थितःऽसि । न केवलं भद्रमित्यङ्गीकारमात्रं भ्रूविक्षेपादिना । किं तर्हि ? सूक्तवाकाय । हे वेदपुरुष, यत् त्वयोक्तं तत्सूक्तम् सुष्ठूक्तम् इति वाकाय ज्ञापनाय सूक्ता शोभनवचनानि च ब्रूहि । कीदृशः त्वम् ? मानुषः मनुष्यहितकारी ।

"यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति ।" ( भगी ११.२८ )
"तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी" ॥ ( भगी २.७२ )
"अकामः सर्वकामो वा मोक्षकाम उदारधीः ।" ( भापु २.३.१० )
"मां यजेत विधानेन मत्तः सर्वं प्रपत्स्यते ॥"

इति भगवद्वचनात् प्रमाणसिद्ध एषोऽर्थ इत्युपगम्यते इति त्रयोविंशे षष्ठोऽनुवाकः ॥६॥

इति श्रीमन्नागदेवभट्टात्मजश्रीमदनन्ताचार्येण विरचितायां श्रीमद्वेदभावार्थदीपिकायां त्रयोविंशोऽध्यायः समाप्तः ॥ २३ ॥ श्रीकृष्णः प्रीतोऽस्तु ॥

अनेन वेददीपेन मया नीराजितो हरिः । मच्छ्रमं सफलं कृत्वा मद्वंशं सर्वदाऽवतु ॥१॥
सर्ववेदैकसंवेद्यं विष्णुं देवशिखामणिम् । देशतः कालतश्चैव गुणतोऽनन्तमाश्रये ॥२॥



14. M4 om.. श्रीकृष्णः प्रीतोऽस्तु ॥

# ॐ चतुर्विंशोऽध्यायः ॥

## [ अथ प्रथमोऽनुवाकः । ]

तेजोऽसि शुक्रममृतमायुष्पा आयुर्मे पाहि ।
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामा ददे ॥१॥

तेजः । असि । शुक्रम् । अमृतम् । आयुष्पाः । आयुःपा इत्यायुःऽपाः । आयुः । मे । पाहि । आ । ददे ॥ घं ॥१॥

आ– अथाश्वमेधश्चतुर्भिरध्यायैः प्रकाश्यते। तत्र चतुरोऽध्यायान् प्रजापतिरपश्यत् । अतस्तत्र प्रजापतेरार्षम्। अथ यत्र ऋषिविशेषः स्मर्यते सोऽपि ऋषिः । अन्यथा सामान्यतः प्रजापतिरेव ॥

तत्रादौ आदानकाले च यजमानं निष्कं प्रतियुञ्जन् वाचयति – 'तेजोऽसि' इति । सौवर्णनिष्कदेवत्यं यजुः । सुवर्णस्य तेजोरूपत्वात् त्वं [v]तेजः [v]असि । सुवर्णस्य तेजोरूपत्वं प्रसिद्धम् । अमृतत्वादिसाधनत्वात् [v]अमृतम् असि । [v]आयुष्पाः आयुषः पाता पालकः । अतः [v]आयुः [v]मे [v]पाहि ममायुष्यं पालय । यज्ञसमाप्त्यर्थमायुः प्रार्थ्यते । अत्र अथास्मा अध्वर्युर्निष्कं प्रतिमुञ्चन् वाचयति 'तेजोऽसि शुक्रममृतम्' इत्यादि श्रुतेः । रशनामादत्ते 'देवस्य त्वा' इति । व्याख्यातम् । [v]आ [v]ददे इति गृह्णाति ॥१॥

अ– सर्ववेदैकसंवेद्यं विष्णुं देवशिखामणिम् ।
देशतः कालतश्चैव गुणतोऽनन्तमाश्रये ॥ १ ॥
ब्रह्मादिकान् सुरान्नत्वा विघ्नराजं सुरद्रुमम् ।
आश्वमेधिकमन्त्राणां भावार्थः समुदीर्यते ॥ २ ॥

सर्वान् कामान् कामयतो राजन्यस्य अश्वमेधो विहितः । तस्य फाल्गुनशुक्लाष्टम्यामारम्भः । कात्यायनः– "निष्कं प्रतिमुञ्चन् वाचयति तेजोऽसि" इति ( काश्रौ २०·१·९ ) । चतुःसुवर्णनिमित्त आभरणविशेषो निष्कः । तं यजमानकण्ठे प्रबध्नन् अध्वर्युः 'तेजोऽसि' इति मन्त्रं 'पाहि' इत्यन्तं यजमानं वाचयति । तं च निष्कं प्रातर्होमान्ते पूर्णाहुतिं हुत्वा अध्वर्यवे दद्यादिति सूत्रार्थः ॥

7. V2 D3 before अथ adds ॐ तेजोऽसि शुक्रमिति
8. S3 om. अथ
9. S3 पाठस्तु– देवस्य ... आ दद इति for तेजोऽसि इति
10. V2 °रूपं for रूपत्वं
11. V2 before अमृतम् adds इदम्
15. P2 before सर्वं° adds श्रीवेदव्यासाय नमः । श्रीगुरुभ्यो नमः ।

ॐ । 'तेजोऽसि शुक्रममृतमायुष्पा आयुर्मे पाहि' इति । इत ऊर्ध्वं चत्वारोऽध्याया अश्वमेधमन्त्राः। 'तेजोऽसि' 'हिरण्यगर्भः' 'अश्वस्तूपरः' 'शादं दद्भिः' इत्यन्ताः। तथा ह्यनुक्रमण्यामुक्तम्। " अथाश्वमेधश्चतुरोऽध्यायान् प्रजापतिरपश्यत् " ( ससू २२.१ ) इति सर्वानुक्रमण्यामुक्तम्। अतश्चतुर्णां प्रजापतिः ऋषिः । तत्र 'तेजोऽसि' इत्यस्य सौवर्णं निष्कं देवता। प्राजापत्याऽनुष्टुप्। हे निष्कनिर्मिताभरण, त्वं तेजः असि । अग्नेर्जातत्वात्। तथा शुक्रम् अग्नेर्वीर्यं चासि । " अग्निर्ह वा अपोऽभिदध्यौ । मिथुनान्येनाः स्यामिति ताः संबभूव । तासु रेतः प्रसिषेच तद्धिरण्यम्। तस्माद्धिरण्यमग्निसंकाशम् " (द्र. शब्रा २.१.१.५ ) इत्याधानकाण्डोक्तेः। एनाः एताभिरद्भिः सह मिथुनीस्यामित्यग्निर्विचार्य तासु रेतः प्रसिषेचेत्यर्थः। तृतीयार्थे द्वितीया । तथा अमृतम् । अमृतं च त्वमसि । वह्नितापेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वात् । दानेन अमृतत्वप्रदानाच्च । " हिरण्यदा अमृतत्वं भजन्ते " ( ऋ १०.१०७.२ ) इत्याश्वलायनश्रुतेः । तथा आयुष्पाः चासि। असीत्यस्य सर्वत्रानुषङ्गः। आयुः पातीत्यायुष्पाः। भान्युपधत्वाद्विसर्जनीयस्य " भान्युपधः षकारम् " (वाप्रा ३.२२) इति प्रातिशाख्यसूत्रेण षकारः । अतो हेतोः मे मम आयुः पाहि रक्ष । बहुकालीनस्यास्य यज्ञस्य समाप्तिपर्यन्तं ममायुः पालयेत्यर्थः । एषोऽर्थो ब्राह्मणेऽभिहितः- " प्रजापतिरकामयत। सर्वान् कामानाप्नुयाम्। सर्वा व्युष्टीर्व्यश्नुवीयेति । स एतमश्वमेधमपश्यत् " इत्युपक्रम्य " अथास्मा अध्वर्युर्निष्कं प्रतिमुञ्चन् वाचयति । तेजोऽसि शुक्रममृतम् इति । तेजो वै शुक्रममृतꣳ हिरण्यं तेज एवास्मिञ्छुक्रममृतं दधाति 'आयुष्पा आयुर्मे पाहि' इत्यायुरेवास्मिन् दधाति" (द्र शब्रा १३.४.१.७) इति॥

कात्यायनः- " देवस्य त्वा इति रशनामादाय ब्रह्मन्नश्वं भन्त्स्यामि इत्याह " ( काश्रौ २०.१.२५ ) इति । 'देवस्य त्वा' इत्यादि 'सरमारपन्ती' इत्यन्तेन मन्त्रेण त्रयोदशारत्निं दर्भमयीं द्विगुणाम् अश्वबन्धनार्थं रशनां रज्जुमादाय 'ब्रह्मन्नश्वम्' इत्यादि 'तेन राध्यासम्' इत्यन्तं मन्त्रं ब्रह्माणं प्रत्याहेति सूत्रार्थः। 'देवस्य त्वा' इति व्याख्यातम्। आ ददे अश्वबन्धनार्थं रज्जुमहं गृह्णामीत्यर्थः ॥ १ ॥

इमामगृभ्णन् रशनामृतस्य पूर्व आयुषि विदथेषु कव्या ।
सा नो अस्मिन्त्सुत आ बभूव ऋतस्य सामन्त्सरमारपन्ती ॥२॥

इमाम् । अगृभ्णन् । रशनाम् । ऋतस्य । पूर्वे । आयुषि । विदथेषु । कव्या ।
सा । नः । अस्मिन् । सुते । आ । बभूव । ऋतस्य । सामन् । सरम् ।
आरपन्तीत्याऽरपन्ती । कलौं ॥२॥

आ- अश्वाभिधानीमादत्ते- 'इमामगृभ्णन्' इति । रशनादेवत्या त्रिष्टुप्। इमां द्वादशारत्निं त्रयोदशारत्निं वा रशनाम् ऋतस्य यज्ञसंबन्धिनीं दर्भमयीं रशनां पूर्वे आयुषि। आयुर्यज्ञः। तस्मिन् यज्ञे, पूर्वे प्रथमे यज्ञ इत्यर्थः। यज्ञारम्भे रशनाम् अगृभ्णन् अगृह्णन्निति, गृहीतवन्तः।

26. S3 इमामगृभ्णन् ... आरपन्तीति for 'इमामगृभ्णन्' इति
27. S3 om. त्रयोदशारत्निं वा

के रशनामगृह्णन्नित्यत आह– ‘ विदथेषु कव्या ’। Vविदथेषु यज्ञेषु Vकव्या कविषु क्रान्तदर्शिषु साधवः। कव्या छान्दसं पदम्। कव्येति विश्वसृक्-प्रजापतिप्रभृतयः। एते हि प्रथमं यज्ञमारभन्त। ‘ सा नो अस्मिन्त्सुत आ बभूव ऋतस्य सामन्त्सरमारपन्ती ’। Vसा रशना Vनः अस्माकं Vसुते Vअस्मिन् यज्ञे Vआ Vबभूव उत्पन्ना। Vऋतस्य यज्ञस्य Vसामन् सामनि सम्यञ्चि यज्ञप्रारम्भे। सरन्तीति सरस्तं Vसरं यज्ञम् ( ? यज्ञप्रसारम् ) Vआरपन्ती। रप लप व्यक्तायां वाचि। आरपन्ती आलपन्ती संशब्दायमाना। एवंगुणा या रशना आबभूव तामिमामगृभ्णन्निति संबन्धः ॥२॥

अ– ‘ इमामगृभ्णन् ’। यज्ञपुरुषद्रष्टा रशनादेवत्या त्रिष्टुप्। सवनं सुतं यज्ञः। भावे क्तः। Vनः अस्माकम् Vअस्मिन् Vसुते यज्ञे रशना Vआबभूव समुत्पन्ना। कीदृशी ? Vऋतस्य यज्ञस्य Vसामन् साम्नि समारम्भे Vसरं प्रसरं यज्ञप्रसारम् Vआरपन्ती। रप उक्तौ। उच्चारयन्ती। यज्ञप्रसारो भवत्विति वदन्तीत्यर्थः। सा का ? विद्यते लभ्यते स्वर्गो यैस्ते विदथाः यज्ञास्तेषु Vविदथेषु। विदेरथः* ( द्र. उ ३·११५ ) इति अथ-प्रत्ययः। Vकव्या कवयः। विभक्तेर्ड्यादेशः “ सुपां सुलुक्° ” ( पा. ७.१.३९ ) इत्यादिना। यज्ञेतिकर्तव्यताकुशलाः प्रजापत्यादयो यामिमां रशनाम् Vऋतस्य यज्ञस्य Vपूर्वे प्रथमे Vआयुषि प्रारम्भे इत्यर्थः। Vअगृभ्णन् अगृह्णन्। या पूर्वं गृहीता Vसा रशना आबभूव उद्भूतेत्यर्थः। एषोऽर्थो ब्राह्मणे अभिहितः – “ व्यृद्धमु वा एतद्यज्ञस्य– यदयजुष्केण क्रियत इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते यजुष्कृत्यै यज्ञस्य समृद्ध्यै द्वादशारत्निर्भवति। द्वादश मासाः संवत्सरः संवत्सरमेव यज्ञमाप्नोति। त्रयोदशारत्निर्वा ” ( शब्रा १३·१·२·१ ) इति ॥२॥

अ॒भि॒धा अ॑सि॒ भुव॑नमसि य॒न्तासि॑ ध॒र्ता।
स त्वम॒ग्निं वै॑श्वान॒रꣳ सप्र॑थसं गच्छ॒ स्वाहा॑कृतः स्व॒गा त्वा॑ दे॒वेभ्यः॑ ॥३॥

अ॒भि॒धा इत्य॑भि॒ऽधाः। अ॒सि॒। भुव॑नम्। य॒न्ता। ध॒र्ता।
सः। त्वम्। अ॒ग्निम्। वै॒श्वान॒रम्। सप्र॑थस॒मिति॒ सऽप्र॑थसम्। ग॒च्छ॒।
स्वाहा॑कृत॒ इ॒ति॒ स्वाहा॑ऽकृतः। स्व॒गेति॑ स्व॒ऽगा। त्वा॒। दे॒वेभ्यः॑। घुम् ॥३॥

2. V2 प्रथम° for प्रथमं
3. V2 D3 S3 आरभन्ते for आरमन्त
5. V2 यज्ञं प्रारमन्ते for यज्ञप्रारम्भे
10. M4 om. रप उक्तौ। उच्चारयन्ती।
11. *[ शुद्धतामापादितः पाठः। लिखितपुस्तकेषु– ‘ विदेरथक् ’ इत्युपलभ्यते। ]
12. P2 with marking above कव्या ins. in the margin कव्यध्वरपृतनस्यर्चि लोपः।

आ– ब्रह्मानुज्ञातोऽश्वं बध्नाति– ‘ अभिधा असि ’ इति । लिङ्गोक्तदेवत्यानि यजूंषि । हे अग्ने, यस्त्वम् vअभिधा vअसि अभिधातव्योऽसि । vभुवनम् आश्रयं, vयन्ता vअसि यजमानस्य कर्ता चासि । vधर्ता चासि । ‘ स त्वमग्निं वैश्वानरं सप्रथसं गच्छ ’ । vसप्रथसं सर्वतः पृथुम् । तिर्यगूर्ध्वमधश्चैव महता ऐश्वर्येण प्रथो विस्तारस्तत्सहितम् । vवैश्वानरं विश्वनरात्मकं श्रीभगवन्तम् vअग्निं हे अश्व, vत्वं vस्वाहाकृतः स्वाहाकारेण कृतः साधुकृतस्त्वं vगच्छ । ‘ स्वगा त्वा देवेभ्यः ’ इति । vदेवेभ्यः एव vस्वगा करोतीति । डाजन्तः स्वगाशब्दः । लिङ्गमविवक्षितम् । स्वयमेव गच्छतीति स्वगा । स्वयमेव गामी चेत्यर्थः ।

---

अ– कात्यायनः– “ ‘ तं बधान ’ इति ब्रह्मानुज्ञातः ‘ अभिधा असि ’ इति बध्नात्यश्वम् ” ( काश्रौ २०·१·२६ ) ‘ तं बधान देवेभ्यः प्रजापतये तेन राध्नुहि ’ इति मन्त्रेण ब्रह्मणानुज्ञातः अध्वर्युः ‘ अभिधा असि ’ इत्यादि ‘ स्वगा त्वा देवेभ्यः प्रजापतये ’ इत्यन्तेन मन्त्रेण रशनयाश्वं बध्नातीति सूत्रार्थः ॥

‘ अभिधा असि ’ । लिङ्गोक्तदेवत्यानि यजूंषि । अश्वदेवत्यानि वा । हे अश्व, यस्त्वम् vअभिधा vअसि अभिधीयते स्तूयत इत्यभिधाः । दधातेः क्विप् । तथा vभुवनं सर्वेषामाश्रयोऽसि । भवनं भूरिति व्युत्पत्तिः । तथा vयन्ता नियमनकर्ता च vअसि । यमयतीति यन्ता । तथा vधर्ता जगद्धारयिता चासीत्यनुषङ्गः । अत्राश्वाभिमानी देव उच्यते । गुणयोगात् । “ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ” ( ब्रसू २.१.५ ) इति व्याससूत्राच्च । स एवंविधस्त्वं vस्वाहाकृतः स्वाहाकारेण हुतः सन् vवैश्वानरं विश्वेभ्यः सर्वेभ्यो नरेभ्यो हितम् vअग्निं vगच्छ प्राप्नुहि । कीदृशं तम् ? vसप्रथसम् । प्रथतेरसुन् प्रत्ययः । प्रथनं प्रथो विस्तारस्तत्सहितम् । यद्वा– सह सर्वतस्तिर्यगूर्ध्वमधश्च प्रथते वर्धत इति सप्रथाः, तम् । सहशब्दस्य सादेशः । तथा हे अश्व, vत्वा त्वां vदेवेभ्यः प्रजापतये च देवार्थं प्रजापत्यर्थं च vस्वगा स्वगाम् । करोमीति शेषः । स्वेनैव गच्छतीति स्वगा । डान्तः । विभक्ते-र्डादेशो वा । स्वयं गामिनमित्यर्थः । ‘ अभिधा असि ’ इति । “ तस्मादश्वमेधयाजी सर्वा दिशोऽभिजयति भुवनमसीति vभुवनं तज्जयति vयन्तासि धर्तेति यन्तारमेवैनं धर्तारं करोति स त्वमग्निं वैश्वानरमित्यग्निमेवैनं वैश्वानरं गमयति सप्रथसं गच्छेति प्रजयैवैनं पशुभिः प्रथयति स्वाहाकृत इति वषट्कार एवास्यैष स्वगा त्वा देवेभ्य इति देवेभ्य एवैनं स्वगा करोति प्रजापतय इति प्राजापत्योऽश्वः स्वयैवैनं देवतया समर्द्धयति ” ( शब्रा १३·१·२·३ ) इति ब्राह्मणे एषोऽर्थः अभिहितः ॥३॥

---

1. S3 पाठस्तु- अभिधा असि ... देवेभ्य इति for ‘ अभिधा असि ’ इति
3. V2 D3 after यजमानस्य add च; V2 D3 om. च
4. V2 पृथुं विस्तारं, D3 प्रथं विस्तारं for प्रथो विस्तारस्तत्सहितम्
7. D3 after इत्यर्थः adds देवेभ्यः देवतार्थं त्वां स्वगाकरोति एषो गमनसामर्थ्यं करोति
16. M4 एव विधिस्त्वं for एवंविधस्त्वं
17. P2 om. अग्निं गच्छ ... सहितम् ( L 18 )

प्रजापतये ब्रह्मन्नश्वं भन्त्स्यामि देवेभ्यः प्रजापतये तेन राध्यासम् ।
तं बधान देवेभ्यः प्रजापतये तेन राध्नुहि ।
प्रजापतये त्वा जुष्टं प्रोक्षामीन्द्राग्निभ्यां त्वा जुष्टं प्रोक्षामि वायवे
त्वा जुष्टं प्रोक्षामि विश्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामि सर्वेभ्यस्त्वा
देवेभ्यो जुष्टं प्रोक्षामि ॥४॥

---

प्रजापतय इति प्रजाऽपतये । ब्रह्मन् । अश्वम् । भन्त्स्यामि । देवेभ्यः ।
प्रजापतय इति प्रजाऽपतये । तेन । राध्यासम् ।
तम् । बधान । देवेभ्यः । प्रजापतय इति प्रजाऽपतये । तेन । राध्नुहि ।
प्रजापतय इति प्रजाऽपतये । त्वा । जुष्टम् । प्र । उक्षामि ।
इन्द्राग्निभ्यामितीन्द्राग्निऽभ्याम् । । वायवे । विश्वेभ्यः ।
सर्वेभ्यः । त्वा । देवेभ्यः । जुष्टम् । प्र । उक्षामि ॥ म्योः ॥४॥

---

आ—अश्वमलंकृत्य बध्नाति । ‘ प्रजापतये ब्रह्मन् ’ इति । लिङ्गोक्तदेवत्यानि यजूंषि । हे [v]ब्रह्मन्, [v]अश्वं [v]भन्त्स्यामि [v]देवेभ्यः अर्थाय [v]प्रजापतये अर्थाय । भदि कल्याणे । अश्वम् अलंकृत्य बन्धनं करोति । ‘तेन राध्यासम्’ इति ब्रह्माणमनुमन्त्रयते । [v]तेन बद्धेनाश्वेन [v]राध्यासम् कर्मप्राप्तिफलं प्राप्नुयाम् । ब्रह्मा प्रस्तौति ‘ तं बधान ’ इति । यमश्वमिच्छसि तस्य बन्धनं कुरु । [v]देवेभ्यः अर्थाय [v]प्रजापतये च [v]तेन बद्धेन [v]राध्नुहि । राध साध संसिद्धौ । राद्धं सिद्धिं प्राप्नुहि । यज्ञसमाप्तिं प्राप्नुहीत्यर्थः ॥

अश्वं प्रोक्षति । ‘ प्रजापतये त्वा जुष्टं प्रोक्षामि ’ इति । [v]प्रजापतये [v]जुष्टम् अभिरुचितम् अश्वं त्वां [v]प्रोक्षामि । ‘ प्रजापतये ’ इत्यादयः पञ्च प्रोक्षणमन्त्राः । [v]इन्द्राग्निभ्यां [v]जुष्टम् अभिरुचितम् अश्वं त्वां, [v]वायवे [v]जुष्टम् अश्वं त्वां, [v]विश्वेभ्यः [v]देवेभ्यः [v]जुष्टं त्वां, [v]सर्वेभ्यः [v]देवेभ्यः [v]जुष्टम् अश्वं [v]प्रोक्षामि ॥४॥

---

12. S3 पाठस्तु- प्रजापतये ... राध्नुहीति for ‘ प्रजापतये ब्रह्मन् ’ इति ।

18. S3 पाठस्तु- प्रजापतये...देवेभ्यो जुष्टं प्रोक्षामीति for ‘ प्रजापतये त्वा जुष्टं प्रोक्षामि ’ इति

अ– 'प्रजापतये ब्रह्मन्'। यजूंषि लिङ्गोक्तदेवत्यानि। ब्रह्माणमामन्त्रयते – हे ब्रह्मन्, अहम् अश्वं भन्त्स्यामि बन्धनं करिष्यामि। बध्नातेर्लृटि *मिपि। "एकाचो बशो भष् झषन्तस्य°" (पा ८.२.३७) इति सूत्रेण भष्त्वम्। किमर्थम्? देवेभ्यः प्रजापतये च। आवृत्तिरादरार्था। तेन अश्वबन्धनेन अहं राध्यासम्। राध संसिद्धौ। सिद्धिं कर्मसमाप्तिरूपां प्राप्नुयामित्यर्थः। आशीर्लिङ्। अथ ब्रह्मा प्रसौति – हे अध्वर्यो, त्वं यमश्वं बद्धुमिच्छसि तं बधान बद्धं कुरु। किमर्थम्? देवेभ्यः प्रजापतये च। तेन चाश्वबन्धनेन त्वं राध्नुहि यज्ञसमाप्तिलक्षणां सिद्धिं प्राप्नुहि। राध संसिद्धावित्यतः स्वादेर्लोटि मध्यमैकवचनम्। एषोऽर्थो ब्राह्मणे– "प्रतिप्रोच्याश्वं बध्नाति। ब्रह्मन्नश्वं भन्त्स्यामि देवेभ्यः प्रजापतये तेन राध्यासमिति ब्रह्माणमामन्त्रयते ब्रह्मण एवैनं प्रतिप्रोच्य बध्नाति नार्तिमार्छति तं बधान देवेभ्यः प्रजापतये तेन राध्नुहीति ब्रह्मा प्रसौति। स्वयैवैनं देवतया समर्धयति" (शब्रा १३.१.२.४) इति॥

कात्यायनः – "स्थावरा अपो गत्वा प्रजापतये त्वा इति प्रोक्षत्यश्वं प्रतिमन्त्रम्" (काश्रौ २०.१.३५) इति। अथाध्वर्युः स्थावरास्तडागादिस्था अपो गत्वा ताभिरद्भिः पञ्चभिर्मन्त्रैः प्रतिमन्त्रमश्वं प्रोक्षतीति सूत्रार्थः॥

'प्रजापतये त्वा'। लिङ्गोक्तदेवत्यानि पञ्च यजूंषि। हे अश्व, प्रजापतये देवतायै जुष्टं प्रियम् त्वा त्वां प्रोक्षामि सिञ्चामि। अनेन प्रोक्षणेन प्रजापतेरिवाश्वे वीर्यं दधाति। "वीर्यमेवास्मिन् दधाति" (शब्रा १३.१.२.५) इति श्रुतेः। तथा 'इन्द्राग्निभ्यां त्वा जुष्टं प्रोक्षामि'। 'वायवे त्वा जुष्टं प्रोक्षामि'। 'विश्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामि'। 'सर्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामि'। अत्र विश्वसर्वशब्दयोः पर्यायत्वेऽपि शब्दान्तरत्वात् भिन्नमन्त्रत्वम्। अत्र पञ्चसु प्रोक्षणेषु वीर्यौजोवेगयशो देवतासंनिधानमश्वे क्रियत इत्यवगन्तव्यम्। तथा हि ब्राह्मणम् – "स प्रोक्षति। प्रजापतये त्वा जुष्टं प्रोक्षामीति प्रजापतिर्वै देवानां वीर्यवत्तमो वीर्यमेवास्मिन् दधाति तस्मादश्वः पशूनां वीर्यवत्तमः। इन्द्राग्निभ्यां त्वा जुष्टं प्रोक्षामीति। इन्द्राग्नी वै देवानामोजस्वितमाऽ ओज एवास्मिन् दधाति तस्मादश्वः पशूनामोजस्वितमः। वायवे त्वा जुष्टं प्रोक्षामीति। वायुर्वै देवानामाशिष्ठो जवमेवास्मिन् दधाति तस्मादश्वः पशूनामाशिष्ठः। विश्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामीति। विश्वे वै दवा देवानां यशस्वितमा यश एवास्मिन् दधाति तस्मादश्वः पशूनां यशस्वितमः सर्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामीति। सर्वा एवास्मिन् देवता अन्वायातयति" (शब्रा १३.१.२.५–८,९) इति ॥४॥

**यो अर्वन्तं जिघांसति तमभ्यमीति वरुणः।**
**परो मर्तः परः श्वा ॥५॥(१)॥**

1. M4 after ब्रह्मन् adds वाक्यादित्वाभावेऽपि सर्वनिघाताभावः प्रजापतये ब्रह्मन्निति प्रातिशाख्यसूत्रादित्यवगन्तव्यम्।
2. * संभावितः पाठः। लिखितपुस्तकेषु 'स्वपि' इति, अथवा 'स्यपि' इत्येवंप्रकारौ पाठौ दृश्येते।

यः । अर्वन्तम् । जिघांसति । तम् । अभि । अमीति । वरुणः ।
परः । मर्तः । परः । श्वा ॥ ळाम् ॥ ५ ॥ (१) ॥

आ – 'यो अर्वन्तम्' इति । गायत्री । पूर्वार्धोऽश्वस्तुतिः । अपरो लिङ्गोक्तदेवत्यः । $^{v}$यः पुरुषः । अर्वशब्दोऽश्ववचनः । $^{v}$अर्वन्तम् अश्वं $^{v}$जिघांसति हन्तुमिच्छति $^{v}$तं पुरुषं $^{v}$वरुणः $^{v}$अभि $^{v}$अमीति । अम रोगे । मीञ् हिंसायाम् । हिनस्ति । अभि अभितः सर्वतः हिनस्ति । " श्वानं चतुरक्षं हत्वाधस्पदमश्वस्योपप्लावयति " ( शब्रा १३.१.२.९ ) इति ॥ वेतसकटेनाधः संप्लावयति 'परो मर्तः' इति । 'परो मर्तः परः श्वा' । $^{v}$परः अन्यः $^{v}$मर्तः । मर्तः मनुष्यः । $^{v}$परः $^{v}$श्वा सारमेयः । श्वा यः अश्वं जिघांसति तं वरुणो हन्तीति संबन्धः ॥५॥

अ– कात्यायनः – " यो अर्वन्तम् इति वाचयति " ( काश्रौ २०.२.१ ) इति । शूद्राद्वैश्यायां जातेन *पुंसाध्वर्युप्रेरितेन चतुर्नेत्रे शुनि खादिरमुसलेन हते सति 'यो अर्वन्तम्' इति 'वरुणः' इत्यन्तं मन्त्रं यजमानं वाचयत्यध्वर्युरित्यर्थः ।

'यो अर्वन्तम्' । गायत्री । अत्र पूर्वार्धोऽश्वस्तुतिः परोऽर्धो लिङ्गोक्तदेवत्यः । $^{v}$यः $^{v}$अर्वन्तम् अश्वं $^{v}$जिघांसति हन्तुमिच्छति । " अर्वणस्त्रसावनञः " ( पा ६.४.१२७ ) इति तृ इत्यन्तादेशः । जिघांसति इत्यत्र हन्तेः सन्नन्ताल्लट् । $^{v}$तं पुरुषं $^{v}$वरुणः देवः $^{v}$अभि $^{v}$अमीति आभिमुख्येन हिनस्ति । अमु रोगे, एतस्य लटि " तुरुस्तुशम्यमः सार्वधातुके " ( पा ७.३.९५ ) इती प्रत्ययः । यद्वा– मीञ् हिंसायामित्यस्य रूपम् । अडागम आर्षः ॥

कात्यायनः– " वेतसकटेनाधोऽश्वं प्लावयति परो मर्त इति " (काश्रौ २०.२.२ ) । वेतसतरुकृतेन कटेन मृतं श्वानमश्वाधो जले तारयतीति सूत्रार्थः ।

अश्वं जिघांसुः $^{v}$मर्तः मर्त्यो मनुष्यः । उपधायकारलोपश्छान्दसः । $^{v}$परः दूरस्थकृतः अधस्पदं नीतः । तथा $^{v}$श्वा च $^{v}$परः कृतः निराकृतः । श्वरूपेणाश्वहन्तैव पराकृत इत्यर्थः । एषोऽर्थो ब्राह्मणे– " परो मर्तः परः श्वेति श्वानं चतुरक्षं हत्वाधस्पदमश्वस्योपप्लावयति वज्रेणैवैनमव क्रामति नैनं पाप्मा भ्रातृव्य आप्नोति " ( शब्रा १३.१.२.९ ) इति ॥ ५ ॥

इति वेदार्थदीपिकायां चतुर्विंशे प्रथमोऽनुवाकः ॥६॥

3. S3 पाठस्तु– यो अर्वन्तं ... श्वेति for यो अर्वन्तम् इति
5. P2 M4 मीङ् for मीञ्
7. S3 om. परो मर्त इति
10. * वासं २२.५ महीधरभाष्यमादृत्य शुद्धीकृतोऽयं पाठः । लिखितपुस्तकेषु– '°ध्वर्योरितेन' अथवा '°ध्वर्य्योरितेन' इत्येवं पाठौ उपलभ्येते ।
19. M4 मानुषः for मनुष्यः
20. M4 स्वरूपेण for श्वरूपेण

[ अथ द्वितीयोऽनुवाकः । ]

अग्नये स्वाहा सोमाय स्वाहापां मोदाय स्वाहा सवित्रे स्वाहा

वायवे स्वाहा विष्णवे स्वाहा ।

इन्द्राय स्वाहा बृहस्पतये स्वाहा मित्राय स्वाहा वरुणाय स्वाहा ॥१॥

अग्नये । स्वाहा । सोमाय । अपाम् । मोदाय । सवित्रे । वायवे ।

विष्णवे । इन्द्राय । बृहस्पतये । मित्राय । वरुणाय ॥ इं ॥१॥

आ– ' अग्नये स्वाहा ' इति । लिङ्गोक्तदेवत्यानि यजूंषि । ' अग्नये, सोमाय, अपां मोदाय, सवित्रे, वायवे, विष्णवे, इन्द्राय, बृहस्पतये, मित्राय, वरुणाय स्वाहा ' इत्येते दश होममन्त्राः ॥६॥

अ- कात्यायनः- " अग्निसमीपमानीय अग्नये स्वाहेति जुहोत्यनुवाकेन प्रतिमन्त्रं[७] । सहस्रं वाऽऽवर्तम् " ( काश्रौ २०.२.३,४ ) इति । ततः स्थावराभ्योऽद्भ्यः सकाशादश्वमग्निपार्श्वमानीय 'अग्नये स्वाहा ' इत्येककण्डिकात्मकेनानुवाकेन प्रतिमन्त्रं सकृत्सकृत् गृहीतेनाज्येन जुह्वा स्तोकीयसंज्ञा दशाज्याहुतीर्जुहोतीति । यद्वा- अनुवाकमावर्त्यावर्त्य सहस्रमाज्याहुतीर्जुहोतीति सूत्रार्थः ।

' अग्नये स्वाहा ' । दश यजूंषि लिङ्गोक्तदेवत्यानि । अङ्गतीत्यग्निः । तस्मै 'स्वाहा सुहुतमस्तु । एवमुत्तरत्र ॥१॥ सुनोतीति सोमस्तस्मै 'सोमाय ॥२॥ 'अपां जलानां 'मोदाय । मोदयतीति मोदस्तस्मै, जलानां जलैर्वा हर्षकर्त्रे इत्यर्थः ॥३॥ सूते असौ सविता । तस्मै 'सवित्रे ॥४॥ वातीति वायुस्तस्मै 'वायवे ॥५॥ वेवेष्टि व्याप्नोतीति विष्णुस्तस्मै 'विष्णवे ॥६॥ इन्दतीतीन्द्रस्तस्मै 'इन्द्राय ॥७॥ बृहतां वेदानां पतिर्बृहस्पतिस्तस्मै 'बृहस्पतये ॥८॥ मेद्यति स्निह्यतीति मित्रस्तस्मै 'मित्राय ॥९॥ वृणोति भक्तं, रक्षो वारयतीति वरुणस्तस्मै 'वरुणाय 'स्वाहा ॥१०॥

एषोऽर्थो ब्राह्मणे- " यस्तोकीया जुहोति सर्वहुतमेवैनं जुहोति अस्कन्दाय " इत्युपक्रम्य " अग्नये स्वाहा इत्यग्नय एवैनं जुहोति, सोमाय स्वाहा " (द्र. शब्रा १३.१.३.१,३) इत्यादिनोक्तः ॥२॥

इति चतुर्विंशे द्वितीयोऽनुवाकः ।

7. S3 पाठस्तु- अग्नये ... वरुणाय स्वाहेति for अग्नये स्वाहा इति ।

[ अथ तृतीयोऽनुवाकः । ]

हिङ्काराय स्वाहा हिङ्कृताय स्वाहा क्रन्दते स्वाहावक्रन्दाय स्वाहा ।
प्रोथते स्वाहा प्रप्रोथाय स्वाहा गन्धाय स्वाहा घ्राताय स्वाहा ॥१॥

---

हिङ्कारायेति हिम्ऽकाराय । हिङ्कृतायेति हिम्ऽकृताय । क्रन्दते ।
अवक्रन्दायेत्यवऽक्रन्दाय ।
प्रोथते । प्रप्रोथायेति प्रऽप्रोथाय । गन्धाय । घ्राताय ॥ वो ॥१॥

---

आ– अश्वस्य रूपाणि जुहोति– ' हिङ्काराय स्वाहा ' इति । अश्वस्य भिन्नचेष्टया एकोनपञ्चाशद्रूपाणि अभिधीयन्ते । लिङ्गोक्तदेवत्यानि यजूंषि । [v]हिंकाराय हेषितशब्दं कुर्वते । [v]हिंकृताय शब्दविशेषं कुर्वते । [v]क्रन्दते । क्रन्दि गतिशोषणयोः । क्रन्दनं कुर्वते [v]स्वाहा । [v]अवक्रन्दाय अवक्रन्दनं कुर्वते । [v]प्रोथते । प्रोथतिः ष्ठीवनकर्मा । प्रोथते ष्ठीवनं कुर्वते । [v]प्रप्रोथाय प्रकर्षेण प्रोथन्वते । [v]गन्धाय गन्धयतीति गन्धगुणयुक्ताय । [v]घ्राताय आघ्रातवते ॥७॥

---

अ– कात्यायनः– " दक्षिणाग्नौ जुहोति हिंकाराय स्वाहेति प्रक्रमान् " (काश्रौ २०.३.३) इति । एतदर्थमेवोद्धृते दक्षिणाग्नौ प्रतिमन्त्रं ' हिंकाराय ' इत्यादीन् प्रक्रमसंज्ञान् होमानेकोनपञ्चाशत्संख्यान् जुहोतीति सूत्रार्थः । ' हिंकाराय स्वाहा ' । सर्वाणि यजूंषि लिङ्गोक्तदेवत्यानि । हिंकारादीनि भिन्नान्यश्वस्य चेष्टितानि ज्ञेयानि कण्डिकाषट्के । हिंकरोति हिंकारस्तस्मै अश्वहिंकाराय [v]स्वाहा ॥१॥ [v]हिंकृताय । अश्वकृतं यद्धिंकृतं तस्मै । अनुकरणशब्दत्वान्न पौनरुक्त्यम् । एवमग्रेऽपि ॥२॥ क्रन्दतीति क्रन्दन् तस्मै [v]क्रन्दते ॥३॥ अव नीचैः क्रन्दतीत्यवक्रन्दस्तस्मै [v]अवक्रन्दाय ॥४॥ प्रोथतीति प्रोथन् तस्मै [v]प्रोथते । प्रोथृ पर्याप्तौ* ॥५॥ प्रकृष्टः प्रोथो घोणा यस्येति प्रप्रोथस्तस्मै [v]प्रप्रोथाय । " घोणा तु प्रोथमस्त्रियाम् " (अको २.८.४९ ) इति कोशः ॥६॥ गन्धोऽस्यास्तीति गन्धस्तस्मै [v]गन्धाय ॥७॥ घ्रातमाघ्राणमस्यास्तीति घ्रातस्तस्मै [v]घ्राताय ॥८॥१॥

---

निविष्टाय स्वाहोपविष्टाय स्वाहा संदिताय स्वाहा वल्गते स्वाहा ।
आसीनाय स्वाहा शयानाय स्वाहा स्वपते स्वाहा जाग्रते स्वाहा ॥२॥

---

निविष्टायेति निऽविष्टाय । उपविष्टायेत्युपऽविष्टाय ।
संदितायेति समऽदिताय । वल्गते ।
आसीनाय । शयानाय । स्वपते । जाग्रते ॥ क्रो ॥२॥

---

7. S3 पाठस्तु– हिंकाराय ... घ्राताय स्वाहेति for हिंकाराय स्वाहा इति

19. * [ धातुपाठे तु ' प्रोथृ पर्याप्तौ ' इति । ]

अश्वमेधमन्त्राः ]

आ– [V]निविष्टाय नितरां विष्टाय प्रविष्टाय [V]स्वाहा । [V]उपविष्टाय समीपं विष्टाय । [V]संदिताय अवखण्डिताय स्वाहा । [V]वल्गते वल्गनं नर्तनं कुर्वते । [V]आसीनाय, [V]शयानाय शयनं कुर्वाणाय । [V]स्वपते स्वपनं कुर्वते । [V]जाग्रते जागरणं कुर्वते ॥८॥

---

अ– निविशतेऽसौ निविष्टस्तस्मै [V]निविष्टाय ॥९॥ उपविशतीत्युपविष्टस्तस्मै [V]उपविष्टाय ॥१०॥ सम्यग्दितं *भूखण्डनं यस्य स संदितस्तस्मै [V]संदिताय ॥११॥ वल्गतीति वल्गन् तस्मै [V]वल्गते ॥१२॥ आस्तेऽसावासीनस्तस्मै [V]आसीनाय ॥१३॥ शेतेऽसौ शयानस्तस्मै [V]शयानाय ॥१४॥ स्वपितीति स्वपन् तस्मै [V]स्वपते ॥१५॥ जागर्तीति जाग्रत् तस्मै [V]जाग्रते ॥१६॥२॥

---

**कूजते स्वाहा प्रबुद्धाय स्वाहा विजृम्भमाणाय स्वाहा विचृत्ताय स्वाहा ।**

**सꣳहानाय स्वाहोपस्थिताय स्वाहायनाय स्वाहा प्रायणाय स्वाहा ॥३॥**

---

कूजते । प्रबुद्धायेति प्रऽबुद्धाय । विजृम्भमाणायेति विऽजृम्भमाणाय ।

विचृत्तायेति विऽचृत्ताय ।

सꣳहानायेति सम्ऽहानाय । उपस्थितायेत्युपऽस्थिताय ।

आयनायेत्याऽअयनाय । प्रायणाय । प्रायनायेति प्रऽअयनाय ॥ ओम् ॥३॥

---

आ– [V]कूजते । कूज अव्यक्ते शब्दे । अव्यक्तशब्दं कुर्वते । [V]प्रबुद्धाय स्वव्यापार-विषयज्ञानवते । [V]विजृम्भमाणाय विजृम्भणं कुर्वाणाय । [V]विचृत्ताय पृथग्भागयुक्ताय । [V]संहानाय संहननधर्मयुक्ताय । [V]उपस्थिताय अप्राप्तार्थप्रार्थिताय, प्रत्यर्थं प्रस्थिताय । [V]आयनाय मार्गरूपाय । [V]प्रायणाय गमनयुक्ताय ॥९॥

---

1. S3 पाठस्तु – निविष्टाय ... जाग्रते स्वाहेति for निविष्टाय; V2 समीपमुपविष्टाय for समीपं विष्टाय
2. V2 om. नर्तनं
3. V2 स्वापनं for स्वपनं
5. * 'लूनं खण्डनं' इति पाठः संभाव्यते । द्र. वासं २२.७– महीधरभाष्यम् ।
15. S3 पाठस्तु– कूजते ... प्रायणाय स्वाहेति for कूजते; S3 अव्यक्तं for अव्यक्ते ।
17. S3 °मुक्ताय for °युक्ताय

अ- कूजतीति कूजन्, तस्मै कूजते ॥१७॥ प्रकर्षेण बुध्यतेऽसौ प्रबुद्धः तस्मै [ प्रबुद्धाय ] ॥१८॥ विजृम्भतेऽसौ विजृम्भमाणस्तस्मै [ विजृम्भमाणाय ] ॥१९॥ चृति दीप्तौ । विशेषेण चर्ततीति विचृत्तः तस्मै विचृत्ताय ॥२०॥ संहानाय संहतशरीराय संनहनयुक्ताय वा ॥२१॥ उपतिष्ठतेऽसौ उपस्थितस्तस्मै उपस्थिताय ॥२२॥ आयते गच्छतीत्यायनस्तस्मै आयनाय ॥२३॥ प्रकृष्टमयतेऽसौ प्रायणस्तस्मै प्रायणाय ॥२४॥३॥

यते स्वाहा धावते स्वाहोद्द्रावाय स्वाहोद्द्रुताय स्वाहा ।
शूकाराय स्वाहा शूकृताय स्वाहा निषण्णाय स्वाहोत्थिताय स्वाहा ॥४॥

यते । धावते । उद्द्रावायेत्युत्ऽद्रावाय । उद्द्रुतायेत्युत्ऽद्रुताय ।
शूकाराय । शूकृताय । निषण्णाय । निसन्नायेति निऽसन्नाय ।
उत्थिताय ॥ कौ ॥४॥

आ- यते गमनं कुर्वते । धावते । धावु गतिशुद्धयोः । धावनं कुर्वते । उद्द्रावाय उत्कृष्टद्रवणधर्मयुक्ताय । उद्द्रुताय उपर्युपरि गमनयुक्ताय । शूकाराय वेगधर्मयुक्ताय । शूकृताय बहुवेगं कुर्वते । निषण्णाय स्वस्थाने एव स्थिताय । उत्थिताय उत्थानवते ॥१०॥

अ- 'यते स्वाहा' । एतीति यन् तस्मै यते । इण् गतौ । "यतो गतौ" ( वाप्रा २.५८ ) इति प्रातिशाख्येनान्तोदात्तः ॥२५॥ धावतीति धावन् तस्मै धावते ॥२६॥ उत् ऊर्ध्वं द्रवो गतिर्यस्य उद्द्रवस्तस्मै उद्द्रावाय ॥२७॥ उत् अधिकं द्रुतं यस्य सः तस्मै उद्द्रुताय ॥२८॥ शू इति शब्दं करोतीति शूकारस्तस्मै शूकाराय ॥२८॥ शूकृतमस्यास्तीति शूकृतस्तस्मै शूकृताय ॥३०॥ निषदतीति निषण्णस्तस्मै निषण्णाय ॥३१॥ उत्तिष्ठतीत्युत्थितस्तस्मै उत्थिताय ॥३२॥४॥

जवाय स्वाहा बलाय स्वाहा विवर्तमानाय स्वाहा विवृत्ताय स्वाहा ।
विधून्वानाय स्वाहा विधूताय स्वाहा शुश्रूषमाणाय स्वाहा शृण्वते
स्वाहा ॥५॥

3. M4 विचृत् for विचृत्तः

11. S3 पाठस्तु- यते ... उत्थिताय स्वाहेति for यते

14. M4 P2 यत् for यन्

जवाय । बलाय । विवर्तमानायेति विऽवर्तमानाय ।
विवृत्तायेति विऽवृत्ताय ।
विधून्वानायेति विऽधून्वानाय । विधूतायेति विऽधूताय । शुश्रूषमाणाय ।
शृण्वते ॥ सि ॥५॥

---

आ– [V]जवाय वेगवते [V]बलाय बलवते । [V]स्वाहा । [V]विवर्तमानाय विशिष्टावर्तनं कुर्वाणाय । [V]विवृत्ताय त्रिविधमण्डलाकारावर्तनवते । [V]विधून्वानाय । धुञ् कम्पने । धूननं कुर्वते । [V]विधूताय विधूय स्थिताय । [V]शुश्रूषमाणाय श्रोतुमिच्छां कुर्वाणाय । [V]शृण्वते श्रवणं कुर्वते ॥११॥

---

अ– 'जवाय स्वाहा'। जवोऽस्यास्तीति जवस्तस्मै [V]जवाय ॥३३॥ बलमस्यास्तीति बलस्तस्मै [V]बलाय ॥ अत्रापि "अर्शआदिभ्योऽच्" (पा ५·२·१२७) इत्यस्त्यर्थेऽच् प्रत्ययः ॥३४॥ विवर्ततेऽसौ विवर्तमानस्तस्मै [V]विवर्तमानाय ॥३५॥ विवर्तते स विवृत्तस्तस्मै [V]विवृत्ताय ॥३६॥ विधूनुते कम्पतेऽसौ विधून्वानस्तस्मै [V]विधून्वानाय ॥३७॥ विधूयते विधूतस्तस्मै [V]विधूताय ॥३८॥ श्रुतमिच्छतीति शुश्रूषमाणस्तस्मै [V]शुश्रूषमाणाय ॥३९॥ शृणोतीति शृण्वंस्तस्मै [V]शृण्वते ॥४०॥५॥

---

ईक्षमाणाय स्वाहेक्षिताय स्वाहा वीक्षिताय स्वाहा निमेषाय स्वाहा ।
यदत्ति तस्मै स्वाहा यत् पिबति तस्मै स्वाहा यन्मूत्रं करोति तस्मै स्वाहा
कुर्वते स्वाहा कृताय स्वाहा ।।६।।(३)।।

---

ईक्षमाणाय । ईक्षिताय । वीक्षितायेति विऽईक्षिताय ।
निमेषायेति निऽमेषाय ।
यत् । अत्ति । तस्मै । पिबति ।
मूत्रम् । करोति । कुर्वते । कृताय । ।।रिं।।६।।

---

5. S3 पाठस्तु– जवाय ... शृण्वते स्वाहेति for जवाय ।
6. S3 विवृताय for विवृत्ताय
7. V2 विधुत्वा for विधूय

आ– $^{v}$ईक्षमाणाय ईक्षणं कुर्वाणाय । $^{v}$ईक्षिताय ईक्षितं कृतवते । $^{v}$वीक्षिताय विशिष्टेक्षणं कृतवते $^{v}$स्वाहा । $^{v}$निमेषाय निमेषधर्माय निमेषधर्मयुक्ताय वा । $^{v}$यत् $^{v}$अत्ति । अद भक्षणे । $^{v}$यत् $^{v}$पिबति, $^{v}$यत् तेन $^{v}$मूत्रं $^{v}$करोति $^{v}$तस्मै $^{v}$स्वाहा । $^{v}$कुर्वते $^{v}$स्वाहा । $^{v}$कृताय $^{v}$स्वाहा इति ॥१२॥

अ–'ईक्षमाणाय स्वाहा'। ईक्षतेऽसौ ईक्षमाणस्तस्मै $^{v}$ईक्षमाणाय ॥४१॥ ईक्ष्यते लोकैरीक्षितस्तस्मै $^{v}$ईक्षिताय ॥४२॥ विशेषेण ऋत्विग्भिरीक्षितो वीक्षितस्तस्मै $^{v}$वीक्षिताय ॥४३॥ निमिषत्यसौ निमेषस्तस्मै $^{v}$निमेषाय ॥४४॥ $^{v}$यत् किंचिद् $^{v}$अत्ति $^{v}$तस्मै भक्षयित्रे स्वाहा ॥४५॥ $^{v}$यत् जलादिकं $^{v}$पिबति $^{v}$तस्मै पानकर्त्रे ॥४६॥ $^{v}$यत् $^{v}$मूत्रं $^{v}$करोति $^{v}$तस्मै मूत्रयते ॥४७॥ करोति पूर्वोक्तकर्माण्यदिति कुर्वन् । तस्मै $^{v}$कुर्वते ॥४८॥ कृतो देवेन निर्मितस्तस्मै $^{v}$कृताय $^{v}$स्वाहा इति सर्वशेषः ॥४९॥ "अपरं स्वाहाकारं करोति परां देवताम्" इति श्रुतेः ॥ इति एकोनपञ्चाशत्प्रक्रमसंज्ञा होमाः । तथा च ब्राह्मणम् – "तदाहुः यद्यज्ञमुखे यज्ञमुखे जुहुयात् पशुभिर्व्यृध्येत पापीयान् स्यात् सकृदेव होतव्या न पशुभिर्व्यृध्यते न पापीयान् भवत्यष्टाचत्वारिंशतं जुहोत्यष्टाचत्वारिंशदक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनवरुन्द्ध एकमतिरिक्तं जुहोति तस्मादेकः प्रजास्वर्धुकः" ( शब्रा १३.१.३.८ ) इति । यदि प्रतियज्ञं जुहुयात् तर्हि पशुभिर्व्यृध्यते हीनो भवति पापीयांश्च । तस्मात् सकृदेव होतव्या इति ब्राह्मणार्थः ॥६॥

इति श्रीवेदार्थदीपिकायां चतुर्विंशे तृतीयोऽनुवाकः ॥४॥

## [ अथ चतुर्थोऽनुवाकः । ]

### तत् स॒वि॒तुर्वरे॑ण्यं॒ भर्गो॑ दे॒वस्य॑ धीमहि । धियो॒ यो नः॑ प्रचो॒दया॑त् ।।१।।

तत् । स॒वि॒तुः ॥ इ ॥१॥

आ– अथ सावित्रीणामिष्टीनां 'तत्सवितुर्वरेण्यम्' इत्यादिका याज्यानुवाक्याः । 'तत्सवितुः' इत्यादयः षट् सावित्र्यो गायत्र्यः । मेधातिथिः । आद्या व्याख्याता ॥१३॥

अ– अथ 'तत्सवितुः' इत्याद्याः षट् ऋचः सवितृदेवत्या गायत्र्यः । सावित्रीणामिष्टीनां याज्यापुरोऽनुवाक्याः । तत्र आद्या विश्वामित्रदृष्टा । 'तत्सवितुः' । $^{v}$तत् तस्य । "सुपां सुलुक्" ( पा ७·१·३९ ) इति षष्ठीलोपः । $^{v}$सवितुः सर्वप्रेरकस्य $^{v}$देवस्य क्रीडादिगुणयुक्तस्य सूर्यमण्डलस्थस्य परमात्मनः $^{v}$वरेण्यं सर्वैर्वरणीयं $^{v}$भर्गः तेजः $^{v}$धीमहि वयं ध्यायेम । सः कः ? $^{v}$यः $^{v}$नः अस्माकं $^{v}$धियः ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च $^{v}$प्रचोदयात् प्रकर्षेण प्रेरयति । 'उदात्तवता तिङा गतेः

1. S3 पाठस्तु– ईक्षमाणाय ... कृताय स्वाहेति for ईक्षमाणाय ।
20. S3 after मेधातिथिः । adds पाठस्तु – तत्सवितुर् ... प्रचोदयात्
22. M4 om. तस्य

समासवचनम्' इति समासः। चुद प्रेरणे। अस्मात् ण्यन्तात् लेटि, "लेटोऽडाटौ" (पा ३.४.९४) इत्याडागमे "इतश्च लोपः परस्मैपदेषु" (पा ३.४.९७) इति तिप इकारलोपे प्रचोदयादिति रूपसिद्धिः। महानस्य महिमा वरीवर्ति। ग्रन्थगुरुत्वभयान्नोक्तः ॥१॥

हिर॑ण्यपाणिमूतये॑ सवि॒तार॒मुप॑ ह्वये । स चेत्ता॑ दे॒वता॑ प॒दम् ॥२॥

हिर॑ण्यपा॒णि॒मिति॒ हिर॑ण्यऽपाणिम् । ऊ॒तये॑ । स॒वि॒तार॑म् । उप॑ । ह्व॒ये॒ । सः । चेत्ता॑ । दे॒वता॑ । प॒दम् ॥कौ॥२॥

आ– 'हिरण्यपाणिमूतये'। हिरण्मयौ पाणी यस्य सः हिरण्यपाणिस्तं Vहिरण्यपाणिं Vसवितारं सर्वप्राणिनां प्रतिप्रसवकर्तारम् Vउप Vह्वये आह्वयामि । किमर्थम् ? Vऊतये अवनाय रक्षणाय । 'स चेत्ता देवता पदम्'। सविता Vदेवता महती देवता Vपदं ब्रह्मपदम् । स्वस्वरूपं सम्यगनुभविता Vचेत्ता । चिती संज्ञाने । Vसः सूर्य उपश्रुतिवागनुभविता (?) ॥१४॥

अ– 'हिरण्यपाणिमूतये'। मेधातिथिर्दृष्टा। अहं Vसवितारम् Vउप Vह्वये आह्वयामि। किमर्थम् ? Vऊतये अवनाय। कीदृशम् तम् ? Vहिरण्यपाणिं, हिरण्मयौ पाणी यस्य तम्। यतः Vसः सविता Vचेत्ता चेतयिता सर्वज्ञः Vदेवता Vपदं स्थानम् । ज्ञानिनामिति शेषः। यद्वा— स सविता देवतानां पदं स्थानं चेत्ता चेतयिता। तां तां देवतां तत्र तत्र स्थाने चेष्टयितेत्यर्थः। "भीषाऽस्माद्वातः पवते। भीषोदेति सूर्यः।" (तैआ ८.८.१) इत्यादिश्रुतेः ॥२॥

दे॒वस्य॒ चेत॑तो म॒हीं प्र स॑वि॒तुर्ह॑वामहे । सु॒म॒तिꣳ स॒त्यरा॑धसम् ॥३॥

दे॒वस्य॑ । चेत॑तः । म॒हीम् । प्र । स॒वि॒तुः । ह॒वा॒म॒हे॒ । सु॒म॒तिमिति॑ सु॒ऽम॒तिम् । स॒त्यरा॑धसा॒मिति॑ स॒त्यऽरा॑धसम् ॥३॥

आ– Vदेवस्य देवनादिगुणयुक्तस्य Vचेततः विजानतः Vसवितुः संबन्धिनीं Vमहीं महतीं Vसुमतिं शुद्धमतिम् । पुनः कथंभूताम् ? Vसत्यराधसम् । सत्यं ब्रह्मात्मत्वेन राधयति साधयतीति सत्यराधसस्तं सत्यराधसं, सुमतिं प्रणयेन Vहवामहे आह्वयामः ॥१५॥

7. S3 पाठस्तु– हिरण्यपाणिम् ... पदामिति for हिरण्यपाणिमूतये
10. V2 स्वसूर्य for सः सूर्यः
19. S3 पाठस्तु– देवस्य ... °राधसमिति for देवस्य

अ– ' देवस्य चेततः ' । वयं सवितुः देवस्य सुमतिं शोभनां बुद्धिं प्र हवामहे प्रकर्षेण हवामहे प्रार्थयामहे । कीदृशस्य सवितुः ? चेततः । चेततीति चेतन्, तस्य चेततः, सर्वज्ञस्य । चिती संज्ञाने । कीदृशीं सुमतिम् ? महीं महतीम् । सत्यराधसम् । सत्यमनश्वरं राधो धनं सर्वसिद्धिर्वा यस्यास्ताम् । यद्वा– सत्यं सत्यस्वरूपं ब्रह्म राधयति साधयतीति सध्यराधास्ताम् ॥३॥

---

सुष्टुतिं॑ सुमतीवृधो॑ रातिं॑ सवितुरीमहे । प्र देवाय॑ मतीविदे॑ ॥४॥

---

सुष्टुतिम् । सुस्तुतिमिति॑ सुऽस्तुतिम् । सुमतीवृधः॑ । सुमतिवृध इति॑ सुमतिऽवृधः॑ । रातिम् । सवितुः । ईमहे । प्र । देवाय॑ । मतीविदे॑ । मतिविद् इति॑ मतिऽविदे॑ ॥ टां ॥४॥

---

आ– ' सुष्टुतिं सुमतीवृधः ' । सुमतिं वर्धयतीति सुमतीवृत् । तस्य सुमतीवृधः सवितुः सवितृविषयां सुष्टुतिं कल्याणस्तुतिं, सवितुः संबन्धिनीं रातिं दानं च ईमहे याचामहे । ' प्र देवाय मतीविदे ' । मतिं वेत्ति वेदयतीति मतीवित् तस्मै मतीविदे । देवाय देवतार्थं प्र ईमहे इति संबन्धः ॥१६॥

---

अ– ' सुष्टुतिं सुमतीवृधः ' । प्रजापतिदृष्टा । देवाय मतीविदे इति चतुर्थ्यौ षष्ठ्यर्थे । वयं सवितुः देवस्य सुष्टुतिं शोभनां स्तुतिं रातिं दानं च प्र ईमहे प्रकर्षेण याचामहे । ईतिर्याचनार्थः । " छन्दसि परेऽपि " (पा १·४·८१) इति क्रियापदात् परः प्रशब्दः । कीदृशस्य सवितुः ? सुमतीवृधः । दीर्घश्छान्दसः । शोभनां मतिं वर्धयतीति सुमतीवृध्, तस्य । पुनः कीदृशस्य ? मतीविदः । सर्वेषां मतिं ज्ञानं कर्म च वेत्तीति मतिवित् तस्य ॥४॥

---

रातिं॑ सत्पतिं॑ महे सवितारमुप॑ ह्वये । आसवं देववीतये ॥५॥

---

रातिम् । सत्पतिमिति॑ सत्ऽपतिम् । महे । सवितार॑म् । उप॑ । ह्वये । आसवमित्या॑ऽसवम् । देववीतय इति॑ देवऽवीतये ॥ लों ॥५॥

---

9. S3 पाठस्तु– सुष्टुति ... मतीविद इति for सुष्टुतिम्
13. M4 चतुर्थी for चतुर्थ्यौ

आ– ‘ रातिं सत्पतिम् ’ । रा दाने । रातिशब्देनात्र सवितैवोक्तः । [V]रातिं दातारं [V]सत्पतिं सतां पालकं [V]सवितारं [V]महे पूजयामि । ‘ सवितारमुप ह्वये ’ । पूजार्थमाह्वयामि च । ‘ आसवं देववीतये ’ । आभिमुख्येन कर्म प्रसौतीति आसवः सविता । तं सवितारम् [V]उप [V]ह्वये । किमर्थं पूजयामि आह्वयामि चेति– [V]देववीतये, देवतर्पणाय । ॥१७॥

---

अ– ‘ रातिं सत्पतिम् ’ । अहं [V]सवितारम् [V]उप [V]ह्वये आह्वयामि । किमर्थम् ? [V]महे पूजार्थम् । मह पूजायाम् । क्विबन्तोऽयम् । तदपि किमर्थमत आह– [V]देववीतये देवानां तर्पणाय । तं विना तेषां तृप्त्यभावात् । कीदृशं सवितारम् ? [V]रातिम् । राति ददातीति रातिस्तम् । “ऊतियूतिजूति॰” (पा ३.३.९७) इत्यादिना कर्तरि क्तिप्रत्ययान्तो निपातः । [V]सत्पतिम् । सतां सदाचारवतां पालकम् । [V]आसवम्, आभिमुख्येन सौति कर्माणि कर्तुमभ्यनुजानातीत्यासवस्तम् ॥५॥

---

दे॒वस्य॑ स॒वि॒तुर्म॒तिमा॑स॒वं वि॒श्वदे॑व्यम् । धि॒या भग॑ं मनामहे ॥६॥

---

दे॒वस्य॑ । स॒वि॒तुः । म॒तिम् । आ॒स॒वमित्या॑ऽस॒वम् । वि॒श्वदे॑व्य॒मिति॑ वि॒श्वऽदे॑व्यम् । धि॒या । भग॑म् । म॒ना॒म॒हे॒ ॥ चों ॥६॥

---

आ– ‘ देवस्य सवितुर्मतिमासवं विश्वदेव्यम् ’ इति । [V]सवितुः [V]देवस्य [V]मतिम् [V]आसवं प्रतिप्रसवरूपं, [V]विश्वदेव्यं विश्वेभ्यो देवेभ्यो हितं प्रतिप्रसवं त्वां त्वदीयया [V]धिया निश्चयात्मिकया बुद्ध्या च सह [V]भगं भजनीयं त्वदीयं भाग्यरूपं च [V]मनामहे याचामहे । द्विकर्मकोऽयं धातुः ॥१८॥

---

अ– ‘ देवस्य सवितुः ’ । [V]सवितुः [V]देवस्य [V]मतिं बुद्धिं वयं [V]धिया बुद्ध्या सह [V]भगं भाग्यं [V]मनामहे याचामहे । मन्यतिर्याचनकर्मा । सवितुर्देवस्य बुद्धिरस्मासु दानतत्परा भवत्वित्यर्थः । कीदृशं भगम् ? [V]आसवम् । आ सम्यक् सौत्यनुजानाति सर्वान् येनेत्यासवस्तम् । सर्वेषामाज्ञादाने समर्थमित्यर्थः । [V]विश्वदेव्यं विश्वेभ्यो देवेभ्यो हितम् । धनेन मुख्यतो देवतर्पणादिति भावः ॥६॥

---

1. V2 पाठस्तु– रातिं ... देववीतय इति for रातिं सत्पतिम्
13. S3 पाठस्तु– देवस्य ... मनामह इति for देवस्य ... देव्यमिति
14. V2 त्वदीयं for त्वदीयया
18. M4 P2 after अस्मासु add बुद्ध्यादि॰

अग्निꣳ स्तोमेन बोधय समिधानो अमर्त्यम् ।
हव्या देवेषु नो दधत् ॥७॥

अग्निम् । स्तोमेन । बोधय । समिधान इति सम्ऽइधानः । अमर्त्यम् ।
हव्या । देवेषु । नः । दधत् ॥खौ॥७॥

आ– 'अग्निं स्तोमेन' इति । चतस्र आग्नेय्यः गायत्र्यः । ऋषिः सुतंभरः । हे अध्वर्यो, [v]स्तोमेन स्तुत्या [v]अग्निम् [v]अमर्त्यं मर्त्यधर्मविरोधिनमग्निं [v]बोधय अवगतार्थं कुरु । [v]समिधानः संदीप्यमानोऽग्निः। 'हव्या देवेषु नो दधत्' । [v]नः अस्माकं संबन्धीनि [v]हव्या हव्यानि हवींषि [v]देवेषु [v]दधत् दधातु धारयतु स्थापयतु ॥१९॥

अ– 'अग्निꣳ स्तोमेन' । तिस्रः स्विष्टकृति पुरोऽनुवाक्या अग्निदेवत्या गायत्र्यो यथाक्रमं सुतंभरविश्वामित्रविरूपद्रष्टाः। हे अध्वर्यो, त्वं [v]स्तोमेन स्तुत्या [v]अग्निं [v]बोधय अवगतार्थं कुरु । किं कुर्वन्? [v]समिधानः, समिन्धेऽसौ समिधानः, संदीपयन् । कीदृशमग्निम्? [v]अमर्त्यम् मरणधर्मरहितम् । एवं त्वद्बोधितः सः वह्निः [v]नः अस्माकं [v]हव्या हवींषि [v]देवेषु [v]दधत् धारयतु । यतोऽस्य सोऽधिकारोऽस्ति । "इतश्च लोपः" ( पा ३.४.९७ ) इतीकारलोपः ॥७॥

स हव्यवाळमर्त्य उशिग्दूतश्चनोहितः ।
अग्निर्धिया समृण्वति ॥८॥

सः । हव्यवाळिति हव्यऽवाट् । अमर्त्यः । उशिक् । दूतः । चनोहित इति चनःऽहितः ।
अग्निः । धिया । सम् । ऋण्वति ॥त्रम्॥८॥

आ– 'स हव्यवाट्' इति । आग्नेयी गायत्री विश्वामित्रः । [v]सः [v]हव्यवाट् [v]अमर्त्यः अमरणधर्मा [v]उशिक् मेधावी [v]दूतः देवानां दूतः [v]चनोहितः । चन इत्यन्ननाम । हविर्भूतस्यान्नस्य भक्षणार्थं हितः विहितः स्थितः सः [v]अग्निः हविषो वोढा [v]धिया प्रज्ञया [v]समृण्वति संगच्छति देवैः सह हविषा तर्पणार्थम् ॥२०॥

9. S3 पाठस्तु– अग्निं ... दधदिति .. for अग्निं स्तोमेनेति ।
18. S3 स हव्यवाळ् ... समृण्वतीति for स हव्यवाट्' इति
18. S3 om. गायत्री

अ– ' स हव्यवाट् ' । vसः vहव्यवाट् सोऽग्निः vधिया बुद्ध्या vसमृण्वति संगच्छते देवैः सह हविर्दातुम् । कीदृशोऽग्निः ? हव्यं देवान्नं वहतीति हव्यवाट् । vअमर्त्यः मनुष्यधर्मरहितः । vउशिक्, वष्टि उश्यते वा सर्वैरित्युशिक्, कमनीयः मेधावी वा । vदूतः देवानां दौत्यकर्ता । vचनोहितः । चन इत्यन्ननाम । चनसेऽन्नाय हितः । हवीरूपान्नस्य आदानाय स्थापितः ॥८॥

---

तं त्वा॑ घृतस्न ईमहे॒ चित्र॑भानो स्व॒र्विद॑म् ।
दे॒वाँ२ आ वी॒तये॑ वह ॥९॥

---

तम् । त्वा॒ । घृ॒तस्नो॒ इति॑ घृतऽस्नो । ई॒म॒हे॒ ।
चित्र॑भा॒नो॒ इ॒ति॒ चित्र॑ऽभानो । स्व॒र्वि॑द॒मिति॑ स्व॒:ऽविदम् ।
दे॒वान् । आ । वी॒तये॑ । व॒ह॒ ॥घम॥९॥

---

आ– ' तं त्वा घृतस्न ईमहे ' । आग्नेयी गायत्री विश्वामित्रः । श्रीभगवन्, vचित्रभानो । चित्रा विचित्रा रमणीया भानवो दीप्तयः ज्वालारूपाः जिह्वाः यस्य सः चित्रभानुः । तत्संबोधनं चित्रभानो । स्नु प्रस्रवणे । [ घृतं स्नवनं ] यस्याग्नेः स घृतस्नुः । तत्संबोधनं vघृतस्नो । vस्वार्विदं स्वर्गस्य लम्भयितारं वेत्तारं वा, vतम् अग्निं त्वां स्वर्विदम् vईमहे याचामहे इति यावत् । यद्वा– कर्मसु पठितं स्वर्गस्य साधनं स्वर्गफलप्रदमग्निं त्वाम् ईमहे याचामहे । किमिति– ' देवान् ' इति । हविर्भाजः । vआ vवह । vवीतये तर्पणाय । संतर्पणाय यजमाना वयम् ईमहे इति संबन्धः ॥२१॥

---

अ– ' तं त्वा ' । हे श्रीभगवन् vचित्रभानो, चित्रा विचित्रा रमणीया भानवो दीप्तयो ज्वालारूपा यस्य सः चित्रभानुः, तत्संबोधनम् । हे vघृतस्नो । घृतं स्नौति प्रस्नौति येन सः घृतस्नुः तत्संबोधनम् । vतं प्रसिद्धं vत्वा त्वाम् vईमहे याचामहे । कीदृशं त्वाम् ? vस्वर्विदम् । स्वर्गस्य लोकस्य परमसुखस्य वा विदं वेत्तारम् । को याचनाविषय इत्यत आह– vदेवान् हविर्भाजः vवीतये संतर्पणाय । वी तृप्तौ । vआ vवह देवसंतर्पणाय हवींष्यावहेत्यर्थः ॥९॥

---

10. S3 पाठस्तु– तं त्वा ... वहेति for तं ... ईमहे ।
11. V2 चरणीया for रमणीया
13. V3 स्वर्गस्थलद्वार॰ for स्वर्गस्य लम्भयितार॰
14. V2 इळते for याचामहे
14. V2 यां वा for यद्वा
18. M4 om. प्रस्नौति

अ॒ग्निं दू॒तं पु॒रो द॑धे हव्य॒वाह॒मुप॑ ब्रुवे ।
दे॒वाँ२ आ सा॑दयादि॒ह ।।१०।।(४)।।

---

अ॒ग्निम् । दू॒तम् । पु॒रः । द॒धे । ह॒व्य॒वाह॒मिति॑ ह॒व्य॒ऽवाह॑म् । उप॑ । ब्रु॒वे ।
दे॒वान् । आ । सा॒द॒या॒त् । इ॒ह ॥क्यां॥१०॥ (४) ॥

---

आ– ' अग्निं दूतम् ' इति । आग्नेयी गायत्री विश्वरूपः । देवानां V दूतम् V अग्निं त्वां V पुरः अग्रतः अहं V दधे स्थापयामि । ' हव्यवाहमुप ब्रुवे ' । हविषो वोढारमग्निं त्वाम् उपगम्य V ब्रुवे ब्रवीमि । किमिति ? ' देवाँ आ सादयादिह ' इति । V इह यज्ञगृहे V देवान् V आ V सादयात् आसादय ॥२२॥

---

अ– ' आग्निं दूतम् ' । मेधातिथिदृष्टाऽऽग्नेयी गायत्री । यम् V अग्निं V पुरः V दधे पुरतः स्थापयामि तं प्रति V उप V ब्रुवे कथयामि । किं तदाह– हे अग्ने, V इह यज्ञे सः भवान् V देवान् हविर्भाजः V आसादयात् आसादयतु स्थापयतु । कीदृशमग्निम् ? V हव्यवाहं हविषां वोढारम् । ण्यन्तात् सदेर्लेटि आडागमे इलोपे रूपसिद्धिः ॥१०॥

इति चतुर्विंशे चतुर्थोऽनुवाकः ॥४॥

---

[ अथ पञ्चमोऽनुवाकः । ]

अजी॑जनो॒ हि प॑वमान॒ सूर्यं॑ वि॒धारे॒ शक्म॑ना॒ पयः॑ ।
गोजी॑रया॒ रꣳह॑माणः॒ पुर॑न्ध्या ।।१।।(५) ।।

---

अजी॑जनः । हि । प॒व॒मा॒न॒ । सूर्य॑म् । वि॒धा॒र॒ इति॑ वि॒ऽधा॒रे॑ । शक्म॑ना । पयः॑ ।
गोजी॑र॒येति॒ गोऽजी॑रया । रꣳह॑माणः । पुर॑न्ध्ये॒ति॒ पुर॑म्ऽध्या ॥ ङि ॥१॥ (५) ॥

---

5. S3 पाठस्तु– अग्निं ... इहेति for अग्निं दूतमिति; V2 °रूप° for रूपः
7. S3 om. first इति
9. M4 अयम् for यम्

आ– ' अजीजनो हि ' । पात्रमानी सौमी ऋगनुष्टुप्– ' अजीजनो हि ' । हे vपवमान शुद्धिहेतो, यत् vसूर्यम् vअजीजनः जनितवानसि जनयसि वा । vहि यस्मात् दर्शनप्रयुक्तात् ) जन्मोपचारः, तस्य नित्यत्वात् । ' विधारे शक्मना पयः ' । vशक्मना । शक्मेति कर्मनाम । तेन शक्मना कर्मणा vपयः vविधारे धारयसि । छान्दसं पदम् । केन हेतुना विधारयसि ? vगोजीरया । जीवतेरेतद् रूपम् । गोजीरया गोजीविकया । कथं नु नाम गावो जीवेयुरिति । गोभिर्हि यज्ञः त्रायते, प्राणिनश्च जीवन्ति । किं कुर्वन् ? vरंहमाणः गच्छन् vपुरंध्या द्रोणकलशं प्रति पूरणे पुरंध्या बहुधारयित्र्या। धारयति ततस्तस्मात् त्वां स्तुम इति शेषः ॥२३॥

अ– ' अजीजनो हि ' । पवमानस्तुतिरेषा । अरुणत्रसदस्युभ्यां दृष्टा पवमानदेवत्या पिपीलिकामध्याकृतिरनुष्टुप् । यस्याः आद्यतृतीयौ पादौ द्वादशार्णौ । द्वितीयोऽष्टार्णः । सा पिपीलिकामध्याकृतिरनुष्टुप् । " जागतावष्टकश्च कृतिर्मध्ये चेदष्टकः पिपीलिकामध्या* " इति वचनात् । हे vपवमान वायो, त्वं vसूर्यम् vअजीजनः उत्पादितवानसि । हिः प्रसिद्धार्थः । " यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति " ( शब्रा १४.४.३.३४ ) इति श्रुतेः । जनेर्णिजन्ताल्लुङ् । तथा– vशक्मना । शकनं शक्म । शक्लृ शक्तौ । मनिन् प्रत्ययः । स्वसामर्थ्येन vपयः जलं vविधारे विशेषेण धारयसि वृष्ट्ये । पादादित्वान्न सर्वनिघातः । केन हेतुना ? vगोजीरया । जीवनं जीरा । वस्य रेफश्छान्दसः । गवां जीरा गोजीरा, तया गोजीरया । गवां जीवनहेतुना जलं वर्षसीत्यर्थः । तासां हविषा यज्ञनिष्पत्तेः । प्राणिनां जीवनाच्च । जीव प्राणधारणे, अस्य रूपम् । कीदृशस्त्वम् ? vपुरंध्या vरंहमाणः । पुराणि दधाति धारयतीति पुरंधिर्धरा, तया । रंहतेऽसौ रंहमाणः गच्छन् । दशापवित्राद्द्रोणकलशं प्रति गच्छन्नित्यर्थः । vविधारे इत्यत्र विधारयसीति पुरुषव्यत्ययः । धारयतेस्तङि लटि उत्तमैकवचने धारये इति प्राप्ते " छन्दस्युभयथा " ( पा ३.४.११७ ) इति शितोऽप्यार्धधातुकत्वे सति " णेरनिटि " ( पा ६.४.५१ ) इति णिचो लोपे च कृते धारे इति रूपम् ॥१॥

इति चतुर्विंशे पञ्चमोऽनुवाकः ।

[ अथ षष्ठोऽनुवाकः । ]

**विभूर्मात्रा प्रभूः पित्राऽश्वोऽसि हयोऽस्यत्योऽसि मयोऽस्यर्वाऽसि सप्तिरसि वाज्यसि वृषाऽसि नृमणा असि ।**

**ययुर्नामाऽसि शिशुर्नामाऽस्यादित्यानां पत्वान्विहि ॥१॥**

विभूरिति वि॒ऽभूः । मात्रा । प्रभूरिति प्र॒ऽभूः । पित्रा । अश्वः । असि ।
हयः । अत्यः । मयः । अर्वा । सप्तिः । वाजी । वृषा ।
नृमणाः । नृमना इति नृऽमनाः ।
ययुः । शिशुः । नाम । असि । आदित्यानाम् । पत्वं । अनु । इहि ॥ णिः ॥१॥

3. V2 शक्मत् for शक्मना; V2 °नामा for °नाम

10. *[ द्र. का-सर्वा ५.४.३–४ ]

19. M4 णि° for णिचो

आ– अध्वर्युयजमानावश्वस्य दक्षिणे कर्णे जपतः – ' विभूर्मात्रा प्रभूः पित्रा ' इति। अश्वदेवत्यं यजुः । जगती वा । [V]मात्रा । पृथिव्या मात्रा [V]विभूः असि । [V]पित्रा द्यावा पित्रा [V]प्रभूः असि। " इयं वै माताऽसौ पिताः " ( शब्रा १३.१.६ ) इति श्रुतेः । अथेदानीमश्वं नामक्रियाभिः स्तौति । " प्रजापतेरक्ष्यश्वयत् तत् पराऽपतत् ततोऽश्वः समभवत् यदश्वयत् " ( जै २.२६८ तैसं ५.३.१२ ) इत्यादि श्रुतेः । [V]अश्वः [V]हयः । हि गतौ इत्यस्य रूपं हय इति । [V]अत्यः [V]असि । अत सातत्यगमन इत्यस्य रूपमत्य इति । [V]मयः [V]असि । मय इति सुखनाम । [V]अर्वा [V]असि । ऋ गतौ, अस्यार्वा । [V]सप्तिः [V]असि वेगवानसि । [V]वाजी [V]असि अन्नवानसि । [V]वृषा [V]असि । वृष सेचने, सेक्ताऽसि । [V]नृमणाः [V]असि । नृणां मनुष्याणां मनो यत्र स नृमणाः । [V]ययुः यानशीलो ययुः । [V]शिशुः शिशुवत् शंसनीयो भवति । यस्त्वेवंप्रभावस्त्वां ब्रवीमि । ' आदित्यानां पत्वा अनु इहि ' । [V]पत्वा इति छान्दसं पदम् । पतनमार्गेण येन पथा आदित्याः पतन्ति गच्छन्ति तम् [V]अन्विहि अनुगच्छ ॥२४॥

---

अ– कात्यायनः – " अध्वर्युयजमानौ दक्षिणेऽश्वकर्णे जपतो विभूर्मात्रेति " ( काश्रौ २०.२.१९ )। तृतीयायां साविञ्यामिष्टौ समाप्तायां सत्यामध्वर्युयजमानौ दक्षिणेऽश्वकर्णे जपतः । स्वरेणेत्यर्थः ॥

' विभूर्मात्रा ' । अश्वदैवतं यजुः अतिजगतीछन्दस्कम् । [V]मात्रा [V]पित्रा इति तृतीये पञ्चम्यर्थे । हे अश्व, त्वं [V]मात्रा मातुः पृथिव्याः सकाशात् [V]विभूः [V]असि समर्थोऽसि । तथा [V]पित्रा, द्युलोकादपि [V]प्रभूः समर्थोऽसि । अथ नामभिरश्वं स्तौति । त्वम् [V]अश्वः [V]असि । अश्नुते व्याप्नोति मार्गमित्यर्थः । " अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन् " ( उ १.१५७ ) इति अशेः क्वन् प्रत्ययः, नित्त्वादाद्युदात्तः । अश्नातीति वा अश्वः । [V]हयः [V]असि । हयति यातीति हयः । हय गतौ । पचाद्यच् । [V]अत्यः [V]असि । अत सातत्यगमने । अततीत्यत्यः । संततगामी । औणादिको यप्रत्ययः । [V]मयः [V]असि । मयते गच्छतीति मयः । मय गतौ । पचाद्यच् । यद्वा– मय इति सुखनाम सुखरूपोऽसि । [V]अर्वा [V]असि । इयर्ति गच्छतीत्यर्वा । ' स्नामदिपद्यर्तिपॄशकिभ्यो वनिप् ' ( उ ३.५६२ ) इति वनिप्प्रत्ययः । यद्वा– अर्व वधे । अर्वति हिनस्ति रिपूनित्यर्वा । तदा कनिन्प्रत्ययः । [V]सप्तिः [V]असि । सपति सैन्येन समवैतीति सप्तिः । सप संबन्धे, अस्मात् क्तिन्प्रत्ययः । [V]वाजी [V]असि । व्रजनशीलो वाजी । वज गतौ । अस्मात् ताच्छील्ये णिनिः । अनेकप्रकारगतिसूचनाय पुनः पुनर्गत्युक्तिः । यद्वा– वाजाः पक्षाः सन्त्यस्येति वाजी । पूर्वयुगेऽश्वस्य तत्सद्भावात् । [V]वृषा [V]असि । वर्षति सिञ्चतीति वृषा । " कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः " (उ १.१६२) इति कनिन्प्रत्ययः । [V]नृमणाः [V]असि । नृषु मनो यस्य स नृमणाः । नृवत् मनो यस्येति वा तथा । [V]नाम । नाम्ना [V]ययुः [V]असि, अतिशयेन यातीति ययुः । " ययुरश्वोऽश्वमेधीयः " ( अको २.८.४५ ) इत्यभिधानात् । यातेर्द्वित्वे सत्युप्रत्ययः । किं च– [V]नाम

---

1. S3 पाठस्तु– विभूर्मात्रा ... अन्विहीति for विभूर् ... पित्रेति
4. V2 om. नाम°
7. V2 अर्वासि for अस्यार्वा

नाम्ना vशिशुः vअसि। श्यति कृशं करोति स्तनमिति शिशुः । "शः कित् सन्वच्च" ( उ १.२० ) इत्युप्रत्ययः । सन्वद्भावात् द्वित्वमभ्यासस्येकारश्च । एवं विविधनामा त्वम् । vआदित्यानाम् अदितेरपत्यानां देवानाम् । vपत्व । नान्तोऽयम् । मार्गम् vअनु vइहि । पतन्ति गच्छन्ति यत्रेति पत्व । "स्नामदि" ( उ ४.११४ ) इत्यादिना वनिप् प्रत्ययः । आदित्या येन पथा गच्छन्ति तमनुगच्छेरयर्थः । एषोऽर्थो ब्राह्मणेऽभिहितः – "विभूर्मात्रा प्रभूः पित्रेतीयं वै माताऽसौ पिताऽऽभ्यामेवैनं परिदधाति अश्वोऽसि हयोऽसीति शास्त्येवैनं तत्तस्माच्छिष्टाः प्रजा जायन्तेऽत्योऽसि मयोऽसीत्य त्येवैनं नयति तस्मादश्वः पशूनत्येति तस्मादश्वः पशूनां श्रैष्ठ्यं गच्छत्यर्वाऽसि सप्तिरसि वाज्यसीति यथा यजुरेवैतद्वृषाऽसि नृमणा असीति मिथुनत्वाय ययुर्नामाऽसि शिशुर्नामाऽसीत्येतद्वा अश्वस्य प्रियं नामधेयं प्रियेणैवैनं नाम्नाऽभि वदति तस्मादप्यमित्रौ संगत्य नाम्ना चेदभिवदतोऽन्योन्यꣳ समेव जानाते । आदित्यानां पत्वाऽन्विहीत्यादित्यानेवैनं गमयति" ( शब्रा १३.१.६.१,२ ) इति ॥१॥

---

देवा॑ आशापाला ए॒तं दे॒वेभ्योऽश्वं॒ मेधा॑य॒ प्रोक्षि॑तꣳ रक्षत ।

इ॒ह रन्ति॒रि॒ह र॑मता॒मि॒ह धृति॒रि॒ह स्वधृ॑ति॒ः स्वाहा॑ ॥२॥ (६) ॥

---

देवा॑ः । आ॒शा॒पा॒ला॒ इत्या॑शाऽपालाः । ए॒तम् । दे॒वेभ्य॑ः ।

अश्व॑म् । मेधा॑य । प्रोक्षि॑त॒मिति॒ प्रऽउ॑क्षितम् । र॒क्ष॒त ।

इ॒ह । रान्ति॑ः । इ॒ह । र॒म॒ता॒म् । इ॒ह । धृति॑ः ।

इ॒ह । स्वधृ॑ति॒रिति॒ स्वऽधृ॑तिः । स्वाहा॑ ॥ ट्रूं ॥२॥(६)॥

---

आ– रक्षिणोऽस्यादिशति– ' देवा आशापालाः ' [ इति ] । vमेधाय शुद्ध्यर्थं त्वां vप्रोक्षितम् vअश्वम् vआशापालाः दिक्पालाः इन्द्रादयः vदेवाः मनुष्याश्च, vदेवेभ्यः अर्थाय अश्वं vरक्षत पालयत ।

' इह रन्तिः ' इति । आग्नेयानि चत्वारि यजूंषि प्रतिमन्त्रं जुहोति । vइह अश्वः vरन्तिः रतिः रमणम् । vइह vरमताम् । vइह vधृतिः धारणम् । vइह vस्वधृतिः साधुधृतिः । vस्वाहा सुहुतमस्तु ॥२५॥

---

4. P2 om. वनिप् ; P2 M4 वनिन् for वनिप्

17. S3 पाठस्तु– देवा ... स्वाहेति for देवा आशापालाः; V2 यज्ञाय for मेधाय

अ- कात्यायनः – "देवा आशापाला इति रक्षिणोऽश्वाऽदिशत्यनुचरीजातीयांस्तावतस्तावतः कवचिनिषङ्गिकलापिदण्डिनो यथासंख्यम्" ( काश्रौ २०.२.११ ) इति । चतुर्विंशतिवार्षिकाश्वशतमध्यस्थस्यैशान्यामुत्सृष्टस्य रक्षकान् नरानादिशति । कीदृशान् ? अनुचरीसजातास्तावतः अनुचरीसंख्यान् । तेन शतं राजपुत्रान् । शतं क्षत्रियपुत्रान् । शतं सूतग्रामणीपुत्रान् । सूता अश्वपोषकास्तेषां मध्ये ग्रामण्यो मुख्यास्तेषां सुतानित्यर्थः । शतं क्षात्रसंगृहीतॄणां पुत्रान् । क्षत्तार आयव्ययाध्यक्षास्तत्समूहः, क्षात्रं तत्राधिकृताः क्षात्रसंगृहीतारस्तेषां सुतान्, क्रमात् कवचिनिषङ्गिकलापिदण्डिनः । तेन राजपुत्राः संनाहवन्तः । क्षत्रियपुत्राः निषङ्गिणः खड्गवन्तः । सूतग्रामणीपुत्राः इषुधिमन्तः । क्षात्रसंगृहीतृपुत्राः वंशादिदण्डधरा इत्यर्थः । वडवाभ्यो जलस्नानाच्चाश्ववारणमश्वरक्षणम् । तावद्यजमानो वावातोर्वीः शेते । सावित्रीः कारयति वीणागानं पारिप्लवशस्त्रपाठं धृतिहोमं चेत्यादि ज्ञेयमिति सूत्रार्थः ॥

'देवा आशापालाः' । देवदेवत्यं यजुः । ऋगुष्णिक् । आशाः दिशः पालयन्तीत्याशापालाः । "दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" ( अको १.१.१ ) इत्यभिधानात् । हे [v]देवाः, यूयम् उत्सृष्टम् [v]अश्वं रक्षत । कीदृशम् ? [v]देवेभ्यः [v]मेधाय [v]प्रोक्षितं प्रोक्षणेन संस्कृतम् । अत्र राजपुत्रादयः प्रोच्यन्ते देवा इति । "देवा आशापाला एतं देवेभ्योऽश्वं मेधाय प्रोक्षितꣳ रक्षतेति शतं वै तल्प्या राजपुत्रा आशापालास्तेभ्य एवैनं परिददाति" ( शब्रा १३.१.६.२ ) इति ब्राह्मणोक्तेः ।

कात्यायनः – "आहवनीयेऽस्तमिते चतस्रो धृतीरिह रन्तिरिति" ( काश्रौ २०.३.४ ) इति । अस्तमितेऽर्के अग्निहोत्रहोमात् प्रागग्निहोत्रहोमार्थमुद्धृते आहवनीयेऽग्नौ चतस्रो धृतिसंज्ञा आहुतीः प्रतिमन्त्रं जुहोति । वर्षपर्यन्तं प्रत्यहम् । एवं सति चत्वारिंशदधिकाहुतीनां चतुर्दशशती भवति । तथा हि ब्राह्मणम् – "इह रन्तिरिह रमतामिह धृतिरिह स्वधृतिः स्वाहा" इति । संवत्सरमाहुतीर्जुहोति षोडश नवतीरेता वा अश्वस्य बन्धनम् । ताभिरेवैनं बध्नाति । तस्मादश्वः प्रमुक्तो बन्धनमागच्छति" ( शब्रा १३.१.६.२ ) इति ॥

'इह रन्तिः' । चत्वारि यजूंषि अग्निदेवत्यानि । चतुर्थमन्त्रान्ते स्वाहाकारश्रवणात् त्रिष्वपि स्वाहाकारः प्रयोज्यः । अश्वं प्रत्युच्यते– हे अश्व, [v]इह [v]रन्तिः रमणं तवास्तु । स भवान् [v]इह [v]रमताम् । [v]इह [v]धृतिः तव संतोषोऽस्तु । [v]इह यज्ञे [v]स्वधृतिः । स्वा निजा धृतिर्धारणं तवास्तु । [v]स्वाहा सुहुतं चास्तु ॥२॥

इति चतुर्विंशे षष्ठोऽनुवाकः ।

[ सप्तमोऽनुवाकः ]

**काय॒ स्वाहा॒ कस्मै॒ स्वाहा॑ कत॒मस्मै॒ स्वाहा॑ ।**

**स्वाहा॒ऽऽधिमाधी॑ताय॒ स्वाहा॒ मनः॑ प्र॒जाप॑तये॒ स्वाहा॑ चि॒त्तं विज्ञा॑ताय ॥१॥**

काय॑ । कस्मै॑ । क॒तमस्मै॑ ।

आ॒धिमित्या॒ऽधिम् । आधी॑ता॒येत्या॒ऽधी॑ताय ।

मनः॑ । प्र॒जाप॑तय॒ इति॑ प्र॒जाऽप॑तये । चि॒त्तम्

विज्ञा॑ता॒येति॒ विऽज्ञा॑ताय ॥तौ॑॥१॥

21. M4 °कारस्य भवणात् for °कारश्रवणात्

आ– जुहोति– ' काय स्वाहा ' इति । एतानि औदुग्रभणानि लिङ्गोक्तदेवत्यानि । कः प्रजापतिस्तस्मै $^{v}$काय $^{v}$स्वाहा । $^{v}$कस्मै प्रजापतये । $^{v}$कतमस्मै प्राजापत्याय स्वाहा । $^{v}$आधिम् आध्यानम् । अत्र स्वाहाशब्दं ब्रूयात् । अत्र चतुर्थी वा कार्या । $^{v}$आधीताय आध्याताय $^{v}$स्वाहा । $^{v}$मनः मनसे $^{v}$प्रजापतये $^{v}$स्वाहा । $^{v}$चित्तं चित्ताय स्वाहा । $^{v}$विज्ञाताय स्वाहा । ॥२६॥

---

अ– कात्यायनः – " काय स्वाहेति चाश्वमेधिकानि त्रीणि । कृष्णाजिनदीक्षातः अध्वरदीक्षणीयायाश्चत्वारि त्रीणि त्रीणि चाश्वमेधिकानि " ( काश्रौ २०.४.३-५ ) । चत्वार्याध्वरिकाणि औदुग्रभणानि हुत्वा ' काय स्वाहा ' इत्याश्वमेधिकानि त्रीण्यौदुग्रभणानि जुहुयात् । अत औदुग्रभणहोमानन्तरं दीक्षणीयाशेषं समाप्य कृष्णाजिनदीक्षा [ तत्रो–]पवेशनान्ता कर्तव्या । " सप्ताहं प्रचरन्ति " ( शब्रा १३.१.७.२ ) इति श्रुतेः, सप्ताहं दीक्षणीया कार्या । तत्र प्रत्यहं कर्तव्यमाह– अध्वरदीक्षणीयायाश्चत्वारि औदुग्रभणानि ' आकूत्यै प्रयुजे ' ( कासं ४.३.१ ) इत्यादीनि ' पूष्णेऽग्नये स्वाहा ' इत्यन्तानि त्रीणि त्रीणि चाश्वमेधिकानि ' काय स्वाहा ' इति कण्डिकायां पठितानि । प्रत्यहमन्यान्यानि पाठक्रमेण । एवं सप्त सप्त प्रत्यहं हूयन्ते । ' काय स्वाहा ' इति कण्डिकासु सप्तत्रिकानि पठितानि । तन्मध्ये सप्तस्वहःसु क्रमेणैकैकं त्रिकं हूयते । तत्र द्वितीयत्रिके स्वाहाकाराद्यं मन्त्रत्रयं ' स्वाहाऽऽधिमाधीताय ' इत्यादि । इति सूत्रार्थः ॥

' काय स्वाहा ' । औदुग्रभणसंज्ञानि यजूंषि लिङ्गोक्तदेवत्यानि । $^{v}$काय प्रजापतये $^{v}$स्वाहा । सुहुतमस्तु ॥१॥ तथा– $^{v}$कस्मै प्रजापतये ॥२॥ $^{v}$कतमस्मै प्रजापतिश्रेष्ठाय ॥३॥ $^{v}$आधिम् आधानम् $^{v}$आधीताय आध्याताय प्राप्ताय ॥४-५॥ $^{v}$मनः मनसि वर्तमानाय $^{v}$प्रजापतये ॥६॥ $^{v}$चित्तं $^{v}$विज्ञाताय सर्वेषां चित्तसाक्षिणे ॥७॥ एते प्रजापतिविशेषाः ॥१॥

---

अदि॑त्यै स्वाहाऽदि॑त्यै म॒ह्यै स्वाहाऽदि॑त्यै सुमृ॒ळी॒काय॒ै स्वाहा॑ ।
सर॑स्वत्यै॒ स्वाहा॒ सर॑स्वत्यै पाव॒काय॒ै स्वाहा॒
सर॑स्वत्यै बृह॒त्यै स्वाहा॑ ॥२॥

---

अदि॑त्यै । म॒ह्यै । सु॒मृ॒ळी॒काया॒ इति॑ सु॒ऽमृ॒ळी॒काय॑ै ।
सर॑स्वत्यै । पा॒व॒काय॑ै । बृ॒ह॒त्यै ॥ ये ॥२॥

---

1. S3 पाठस्तु – काय ... विज्ञातायेति for ' काय स्वाहा ' इति
4. V2 विक्लृप्ताय for विज्ञाताय

आ– ' अदित्यै स्वाहा ' । [V]अदित्यै अखण्डितरूपायै [V]स्वाहा । ' अदित्यै मह्यै स्वाहा ' । [V]मह्यै । मह पूजायाम् । पूज्यायै [V]अदित्यै । [V]सुमृळीकायै । मृड सुखने । सुखात्मिकायै [V]स्वाहा । [V]सरस्वत्यै ज्ञानात्मिकायै [V]स्वाहा । [V]सरस्वत्यै [V]पावकायै पावकतात्मिकायै । [V]सरस्वत्यै [V]बृहत्यै परब्रह्मात्मिकायै स्वाहा ॥२७॥

---

अ– [V]अदित्यै अखण्डितायै ॥७॥ [V]मह्यै पूज्यायै [V]अदित्यै ॥८॥ [V]सुमृळीकायै सुखयित्र्यै [V]अदित्यै ॥९॥ [V]सरस्वत्यै वागधिष्ठात्र्यै ॥१०॥ पावयतीति पावकाः, तस्यै [V]पावकायै शोधयित्र्यै सरस्वत्यै ॥११॥ [V]बृहत्यै [V]सरस्वत्यै ॥१२॥ एता देवपत्न्यः ॥२॥

---

पूष्णे स्वाहा पूष्णे प्रपथ्याय स्वाहा पूष्णे नरन्धिषाय स्वाहा ।
त्वष्ट्रे स्वाहा त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहा ।
विष्णवे स्वाहा विष्णवे निभूयपाय स्वाहा
विष्णवे शिपिविष्टाय स्वाहा ॥३॥

---

पूष्णे । प्रपथ्यायेति प्रऽपथ्याय । नरान्धिषाय ।
त्वष्ट्रे । तुरीपाय । पुरुरूपायेति पुरुऽरूपाय ।
विष्णवे । निभूयपायेति निभूयऽपाय ।
शिपिविष्टायेति शिपिऽविष्टाय । ॥ वौ ॥३॥

---

आ – ' पूष्णे ' । पुष्णाति पूषा तस्मै [V]पूष्णे [V]स्वाहा । [V]पूष्णे [V]प्रपथ्याय । पथिभवः पथ्यः । प्रकर्षेण पथ्यः प्रपथ्यः, तस्मै । पूष्णे [V]नरान्धिषाय । धिष् यत्ने खे सुखने गतौ वा । नरं धिषत इति नरंधिषः, तस्मै । [V]त्वष्ट्रे [V]स्वाहा । [V]त्वष्ट्रे [V]तुरीपाय । तूर्णं पाति रक्षतीति तुरीपः, तस्मै तुरीपाय त्वष्ट्रे । [V]पुरुरूपाय बहुरूपाय । [V]विष्णवे [V]स्वाहा । स्नु प्रस्रवणे । विशिष्टफलप्रदात्रे । [V]विष्णवे [V]निभूयपाय । नीचैर्भूत्वा पातीति निभूयपाः, तस्मै निभूयपाय [V]स्वाहा । [V]विष्णवे [V]शिपिविष्टाय । शिपिं विनष्टं यज्ञं विष्टरं सत्रं वा यज्ञं वेष्टयति साधु करोतीति शिपिविष्टः, तस्मै शिपिविष्टाय । स्वाहेति होमार्थः ॥२८॥

---

1. S3 पाठस्तु – आदित्यै ... बृहत्यै स्वाहेति for अदित्यै स्वाहा
3. V2 पावका° for पावकता°

अश्वमेधमन्त्राः ]

अ– पूष्णे स्वाहा ॥१३॥ प्रपथ्याय प्रगतः पन्थाः प्रपथः । तत्र भवः प्रपथ्यः, तस्मै । प्रकृष्टं पथ्यं हितं यस्मादिति वा । तादृशाय पूष्णे ॥१४॥ नरंधिषाय । धिष् शब्दे । नरं दिधष्टि शब्दयति स्वोदयेन सः नरंधिषः । तस्मै पूष्णे । "इगुपध°" ( पा ३.१.१३५ ) इति कप्रत्ययः । कित्वात् न गुणः ॥१५॥ त्वष्ट्रे । त्वक्षति तनूकरोतीति त्वष्टा, तस्मै ॥१६॥ तुरीपाय । तुर वेगे । तुरी वेगः । तं पाति रक्षतीति तुरीपस्तस्मै त्वष्ट्रे ॥१७॥ पुरुरूपाय । पुरूणि बहूनि रूपाणि यस्य तस्मै त्वष्ट्रे ॥१८॥ विष्णवे । विष्लृ व्याप्तौ ॥ वेवेष्टि व्याप्नोति सर्वमिति विष्णुः, तस्मै ॥१९॥ निभूयपाय । नितरां भूत्वा मत्स्याद्यवतारं कृत्वा जगत् पातीति निभूयपाः, तस्मै विष्णवे ॥२०॥ शिपिविष्टाय । शिपिषु पशुषु अज्ञानिषु विष्टः प्रविष्टः अन्तर्यामिरूपेणेति शिपिविष्टस्तस्मै विष्णवे ॥२१॥ एते औद्ग्रभणसंज्ञका मन्त्राः । "औद्ग्रभणानि जुहोति" ( शब्रा ३.१.४.१ ) इति श्रुतेः ॥३॥

विश्वो॑ दे॒वस्य॑ ने॒तुर्मर्तो॑ वुरीत स॒ख्यम् ।
विश्वो॑ रा॒य इ॑षुध्यति द्यु॒म्नं वृ॑णीत पु॒ष्यसे॒ स्वाहा॑ ॥४॥(७)॥

विश्वो० ॥ व ॥४॥(७)॥

आ– पूर्णाहुतिं जुहोति– 'विश्वो देवस्य' इति । व्याख्यातो मन्त्रः ॥२८॥

अ– कात्यायनः – "षडाग्निकानि चतुःस्थाने । दशमं विश्वो देवस्येति" (काश्रौ २०.४.९-१०) सप्तम्यां दीक्षणीयायामयं विशेषः । प्रत्यहं चत्वार्यौद्ग्रभणानि आध्वरिकाणि हूयन्ते । तेषां चतुर्णां स्थाने षडाग्निकानि औद्ग्रभणानि 'आकूतिमग्निं प्रयुजं स्वाहा' इत्यादीनि हुत्वा आश्वमेधिकानि च त्रीणि 'विष्णवे स्वाहा' इत्यादीनि च हुत्वा 'विश्वो देवस्य' इत्यनुष्टुभा दशममौद्ग्रभणं जुहोतीति सूत्रार्थः ॥

'विश्वो देवस्य' । वैश्वदेव्यनुष्टुप्, स्वस्त्यात्रेयदृष्टा । मर्त इति मनुष्यनाम । विश्वः मर्तः सर्वो मर्त्यः । नयति सर्वं नियमयतीति नेता । तस्य देवस्य परमेश्वरस्य सख्यं सखिभावं वुरीत वृणुते प्रार्थयते । वृ वरण इति धातुः । सर्वजगन्नायकस्येश्वरस्य प्रीतिं सर्वोऽपीच्छतीत्यर्थः । तथा विश्वो मर्तः । वि विशेषस्यापि ग्राहकम् । आकाङ्क्षासद्भावात् । राये धनाय इषुध्यति प्रार्थयते । इषुध्यतिर्याचनार्थः । ईश्वरादेव द्रव्यमिच्छतीत्यर्थः । तथा– ईश्वरादेव द्युम्नं विश्वो मर्तः वृणीत । द्युम्नं यशोऽन्नं सुखं वा । तत्र पाठात् । हे अग्ने, स त्वमीश्वरः भक्तेप्सितं तत् तवं पुष्यसे पोषयसि । पूर्णं कृत्वा ददासीत्यर्थः । स्वाहा । तुभ्यं सुहुतमस्तु । एषोऽर्थो ब्राह्मणे आध्वरिकेऽभिहितः — "तद्ध्रुवायामाज्यं भवति तत्सर्वमेव जुह्वामानयत्यथ द्विः स्रुवेण स्थाल्यां गृहीत्वाऽग्रेव स्रुवं यत् स्थाल्यां परिशिष्टं भवति तदानयति।

13. S3 पाठस्तु– विश्वो ... स्वाहेति for विश्वो देवस्येति

तज्जुहोति विश्वो देवस्येति । तदस्या वैश्वदेवं नेतुरिति सावित्रं मर्त इति तन्मैत्रं विश्वो द्युम्नमिति तद्बार्हस्पत्यं द्युम्नं हि बृहस्पतिः पुष्यस इति तत् पौष्णमनुष्टुभो वै जुहोति " ( काशब्रा ४.१.५.१४-१५ ) इति । अत्र तु- "विश्वो देवस्य नेतुः इति पूर्णाहुतिमुत्तमां जुहोति । इयं वै पूर्णाहुतिरस्यामेवान्ततः प्रतितिष्ठति " ( शब्रा १३.१.८.८ ) इत्यश्वमेध उक्तम् ॥४॥

इति चतुर्विंशे सप्तमोऽनुवाकः ॥७॥

[ अथ अष्टमोऽनुवाकः । ]

आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः ।
शूर इषव्योऽतिव्याधी महारथो जायताम् ॥१॥

आ । ब्रह्मन् । ब्राह्मणः । ब्रह्मवर्चसीति ब्रह्मऽवर्चसी । जायताम् ।
आ । राष्ट्रे । राजन्यः ।
शूरः । इषव्यः । अतिव्याधीत्यतिऽव्याधी ।
महारथ इति महाऽरथः । जायताम् ॥ तीं ॥१॥

आ- 'आ ब्रह्मन्' इति । लिङ्गोक्तदेवत्यास्तिस्रः । द्वे बृहत्यौ । तृतीया अनुष्टुप् । 'आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम्' । हे ब्रह्मन्, ब्राह्मणः ब्रह्मवर्चसी यज्ञाध्ययनादिशीलो ब्रह्मवर्चसी । आ जायताम् । 'आ राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायताम्' । अस्मिन् राष्ट्रे राजन्यः राजकुलोद्भवः आ आसमन्तात् शूरः । शृ हिंसायाम् । शूरः, विक्रान्तः आ जायताम् । सोऽपि इषव्यः । इषुषु साधुः प्रवीणः इषव्यः । इषुना विध्यतीति वा इषव्यः । अतिव्याधी पूजिमतिविध्यति अतिशयेन विध्यति तच्छीलश्च । अति द्विषन्तं विध्यतीति वा अतिव्याधी । जायताम् । सोऽपि महारथः च जायताम् ॥३०॥

अ- कात्यायनः - " कृष्णाजिनाद्या समिदाधानात् कृत्वा आ ब्रह्मन्निति जपत्युत्सर्गकाल एके " ( काश्रौ २०.४.११ ) इति । कृष्णाजिनदीक्षात आरभ्योखायां त्रयोदशसमिदाधानान्तं कृत्वा अध्वर्युरेव 'आ ब्रह्मन्' इति जपति । उत्सर्गैरुपतिष्ठत इत्युत्सर्गोपस्थानकाले एके 'आ ब्रह्मन्' इति जपमिच्छन्ति । यद्वा- अश्वस्योत्सर्गकाले विभूर्मात्रेति जपानन्तरमिति सूत्रार्थः ॥

13. S3 पाठस्तु - आ ब्रह्मन् ... जायतामिति for आ ब्रह्मन्निति ।
13. M4 om. आ ब्रह्मन् ... जायताम् [ L 14 ]
16. S3 om. आ

'आ ब्रह्मन्'। लिङ्गोक्तदेवता उत्कृतिः। हे ब्रह्मन्, राष्ट्रे अस्मद्देशे ब्राह्मणः ब्रह्मवर्चसी अध्ययनयज्ञादिशीलसंपन्नः आजायताम् उत्पद्यताम्। नान्ये इति प्रार्थना। यद्वा– ब्राह्मणो ब्रह्मजातिः ब्रह्मन्। सप्तम्या लुक्। वेदे परे ब्रह्मणि च ब्रह्मवर्चसी अध्ययनज्ञानसंपन्न आजायताम्। आमन्त्रितत्वे सर्वनिघातापत्तिः। तथा– राजन्यः क्षत्रियोऽस्मद्राष्ट्रे ईदृश आजायताम्। कीदृशः? शूरः पराक्रमी। शूर विक्रान्तौ। शूरयतीति शूरः। इषव्यः इषुभिर्विध्यतीति इषव्यः। यद्वा– इषौ कुशल इषव्यः। अतिव्याधी, अत्यन्तं विध्यतीत्यतिव्याधी। व्यध ताडने। शत्रुभेदनशीलः। महारथः एकः सहस्रं जेता। एषोऽर्थो ब्राह्मणे– "आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामिति ब्राह्मण एव ब्रह्मवर्चसं दधाति। तस्मात् पुरा ब्राह्मणो ब्रह्मवर्चसी जज्ञे। आ राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी ... महारथो जज्ञे" (शत्रा १३.१.९.१-२) इति॥१॥

दोग्ध्री धेनुर्वोळ्हाऽनड्वानाशुः सप्तिः पुरन्धिर्योषा।
जिष्णू रथेष्ठाः सभेयो युवाऽस्य यजमानस्य वीरो जायताम्॥२॥

दोग्ध्री। धेनुः। वोळ्हा। अनड्वान्। आशुः। सप्तिः।
पुरन्धिरिति पुरम्ऽधिः। योषा।
जिष्णुः। रथेष्ठाः। रथेस्था इति रथेऽस्थाः। सभेयः। युवा।
आ। अस्य। यजमानस्य। वीरः। जायताम्॥ ज्ये॥२॥

आ– 'दोग्ध्री धेनुः'। धेनुः नवप्रसूता गौर्धेनुः। दोग्ध्री। दुह प्रपूरणे। समग्र-दोहनवती आजायताम्। वोढा अनड्वान्। वोढा अतीव वहनदक्षः आ जायताम्। 'आशुः सप्तिः'। सपतीति सप्तिः अश्वः आशुः अतिवेगवान् आजायताम् उत्पद्यताम्। 'पुरंधिः योषा'। पुरं शरीरं रूपादिगुणसमन्वितं धारयतीति पुरंधिः। योषा स्त्री। पुरंधिः पतिव्रता धर्मवती जायताम्। जिष्णू रथेष्ठाः। रथस्थः जयशीलो जायताम्। 'सभेयो युवाऽस्य यजमानस्य वीरो जायताम्'। अस्य यजमानस्य वीरः पुत्रः जायताम्। सोऽपि सभेयः सभायाः संबन्धी सभायोग्यः सभेयः जायताम्। युवा सोऽपि पुत्रोत्पादनसमर्थोऽपीति। जायतां, सर्वत्र जात्यभिप्रायेणैकवचनम्॥३१॥

16. S3 पाठस्तु - दोग्ध्री ... जायतामिति for दोग्ध्री धेनुः

20. S3 trans पुरं शरीरं– धारयतीति पुरंधिः after धर्मवती जायताम्;
V2 after युवा adds सभामर्हति गुणचारित्रैः

अ– 'दोग्ध्री धेनुः'। लिङ्गोक्तदेवत्या बृहती। दोग्ध्री दुग्धपूरयत्री। धेनुः गौः आजायताम् इति अनुषङ्गः। अनड्वान् वृषभः वोळ्हा वोढा। ढस्य ळहत्वम्। "डढौ ळळ्हावेकेषाम्" (वाप्रा ४.१४६) इति प्रातिशाख्यसूत्रेण, काण्वमते इति ज्ञेयम्। सप्तिः अश्वः। आशुः शीघ्रगामी जायताम्। योषा स्त्री। पुरंधिः। पुरं शीलादिसर्वगुणसंपन्नं शरीरं गृहं वा दधातीति पुरंधिः। दधातेः किप्रत्ययः। द्वितीयाया अलुक्। रथे तिष्ठतीति रथेष्ठाः। तिष्ठतेः क्विप्। सप्तम्या अलुक्। रथस्थितो युयुत्सुर्नरो जिष्णुः जयनशीला आजायताम्। आ अस्य इति पदच्छेदः। अस्य यजमानस्य युवा सर्वकार्यसमर्थः। सभेयः सभायोग्यः वीरः पुत्र आजायताम्। सभायां साधुः सभेयः। "ढश्छन्दसि" (पा ४.४.१०६) इति सभाशब्दात् तत्र साधुरित्यर्थे ढप्रत्ययः, तस्य इयादेशः। ब्राह्मणेऽपि— "दोग्ध्री धेनुरिति धेन्वामेव पयो दधाति। तस्मात् पुरा धेनुर्दोग्ध्री जज्ञे। वोळ्हा अनड्वानिति अनळुह्येव बलं दधाति। तस्मात् पुराऽनड्वान् वोळ्हा जज्ञे। आशुः सप्तिरित्यश्व एव जवं दधाति। तस्मात् पुरा अश्वः सती (सप्तिः) जज्ञे। पुरंधिर्योषेति योषित्येव रूपं दधाति तस्माद्रूपिणी युवतीः प्रिया भावुकाः जिष्णू रथेष्ठा इति राजन्य एव जैत्रं महिमानं दधाति। तस्मात् पुरा राजन्यो जिष्णुर्जज्ञे। सभेयो युवेत्येष वै सभेयो युवा यः प्रथमवयसी। तस्मात् प्रथमवयसी स्त्रीणां प्रियो भावुकः। आऽस्य यजमानस्य वीरो जायतामिति यजमानस्यैव प्रजायां वीर्यं दधाति तस्मात् पुरेजानस्य वीरो जज्ञे" (शब्रा १३.१.९.३-९) इति ॥२॥

---

**नि॒का॒मेनि॑कामे नः प॒र्जन्यो॑ वर्षतु॒ फल॑वत्यो न॒ ओष॑धयः पच्यन्ताम्।**
**यो॒ग॒क्षे॒मो नः॑ कल्पताम् ॥३॥(८)॥**

---

नि॒का॒मेनि॑का॒म इति॑ नि॒का॒मेऽनि॑कामे। न॒ः। प॒र्जन्यः॑। व॒र्ष॒तु॒।
फल॑वत्य॒ इति॒ फल॑ऽवत्यः। न॒ः। ओष॑धयः। प॒च्य॒न्ता॒म्।
यो॒ग॒क्षे॒म इति॒ यो॒ग॒ऽक्षे॒मः। न॒ः। क॒ल्प॒ता॒म् ॥ ढ्वं ॥

---

आ– 'निकामे निकामे नः पर्जन्यो वर्षतु'। प्रार्थनायामवश्यंभावी निकामः अभिलाषविशेषः। अभ्यासो वीप्सार्थः। नः अस्माकं राष्ट्रे पर्जन्यः वृष्टिप्रदाता अस्मत्कामानुकूलतया अभिवर्षतु। ओषधयः फलपाकान्ताः। फलवत्यः विशिष्टफलयुक्ताः ओषधयः पच्यन्ताम् फलपाकयुक्ता भवन्तु। योगक्षेमः नः कल्पतां द्रव्यादिना संयोगः अप्राप्यप्रापणं योग इत्यर्थः। स्थितस्य परिपालनं क्षेमः। योगश्च क्षेमश्च। नः अस्माकं योगक्षेमश्च क्लृप्तो भवतु। योगक्षेम इति छान्दसं पदम् ॥३२॥

---

20. S3 निकामे ... कल्पतामिति for 'निकामे निकामे ... वर्षतु'।

अ– ' निकामेनिकामे नः ' । लिङ्गोक्तदेवत्या संकृतिः । नः अस्माकम् । ' राष्ट्रे ' इत्यनुवर्तते । पर्जन्यः निकामेनिकामे कामनायां कामनायाम् । वीप्सायामभ्यासः । वर्षतु । नः अस्माकं राष्ट्रे ओषधयः यवाद्याः फलवत्यः फलयुक्ताः पच्यन्तां स्वयमेव पक्वा भवन्तु । कर्मकर्तरि लोट् । नः अस्माकं योगक्षेमः कल्पताम् । योगेन युक्तः क्षेमः । स क्लृप्तो भवतु । अलब्धलाभो योगः । लब्धस्य परिपालनं क्षेम इति भेदः । एषोऽर्थो ब्राह्मणे – " निकामेनिकामे नः पर्जन्यो वर्षत्विति निकामेनिकामे वै तत्र पर्जन्यो वर्षति यत्रैतेन यज्ञेन यजन्ते । फलवत्यो न ओषधयः पच्यन्तामिति फलवत्यो वै तत्रौषधयः पच्यन्ते यत्रैतेन यज्ञेन यजन्ते । योगक्षेमो नः कल्पताम् इति । योगक्षेमो वै तत्र कल्पते यत्रैतेन यज्ञेन यजन्ते तस्माद्यत्रैतेन यज्ञेन यजन्ते क्लृप्तः प्रजानां योगक्षेमो भवति " ( शब्रा १३.१.९.१० ) इति ॥३॥

इति चतुर्विंशे अष्टमोऽनुवाकः ।

[ अथ नवमोऽनुवाकः । ]

प्राणाय स्वाहाऽपानाय स्वाहा व्यानाय स्वाहा ।
चक्षुषे स्वाहा श्रोत्राय स्वाहा वाचे स्वाहा मनसे स्वाहा ॥१॥(९)॥

प्राणाय । अपानायेत्यपऽआनाय । व्यानायेति विऽआनाय ।
चक्षुषे । श्रोत्राय । वाचे । मनसे ॥ रैं ॥१॥(९)॥

आ– आज्यसक्तुधानालाजानामेकैकं जुहोति– ' प्राणाय स्वाहा ' इत्यारभ्य चतुर्दशकण्डिकास्थितैः सप्तविंशदुत्तरैकशतप्रतिमन्त्रैः तत्तद्देवताभ्यः । ' प्राणाय स्वाहा ' इत्यत्र सप्त देवताः ॥३३॥

3. M4 om. पच्यन्ताम्

15. S3 after जुहोति adds – प्राणाय स्वाहा ... मनसे स्वाहा ॥ प्राच्यै दिशे ... अर्वाच्यै दिशे स्वाहा ॥ अद्भ्यः ... शरिराय स्वाहा ॥ वाताय ... नीहाराय स्वाहा ॥ अग्नये ... अर्वाच्यै दिशे स्वाहा ॥ नक्षत्रेभ्यः द्यावापृथिवीभ्यां स्वाहा ॥ चन्द्राय ... देवेभ्यः स्वाहा ॥ मूलेभ्यः ओषधीभ्यः स्वाहा । पृथिव्यै ... सरीसृपेभ्यः स्वाहा ॥ असवे ... अधिपतये स्वाहा ॥ शूष्माय ... पतयते स्वाहा ॥ मघवे ... अं॑हसस्पतये स्वाहा ॥ वाजाय ... प्रजापतये स्वाहा ॥ आयुर्यज्ञेन कल्पतां स्वाहा ॥ एकस्मै ... स्वर्गाय स्वाहेति ॥

17. S3 after देवताः adds दशाग्न्यादिदेवताः ।

अ– कात्यायनः – “ आज्यसक्तुधानालाजानामेकैकं जुहोति । प्राणाय स्वाहेति प्रतिमन्त्रं सर्वरात्रमावर्तम् ” ( काश्रौ २०.४.३२ ) इति । आज्यादिचतुर्णां प्रतिप्रहरमेकैकं क्रमेण सर्वरात्रमुत्तरवेदिस्थाग्नौ जुहोति ‘ प्राणाय स्वाहा ’ इत्यादि ‘ स्वर्गाय स्वाहा ’ इत्यन्ताभिश्चतुर्दशकण्डिकाभिः । किं कृत्वा ? आवर्तम् । णमुलन्तोऽयम् । ‘ प्राणाय स्वाहा ’ इत्यादिकम् ‘ एकशताय स्वाहा ’ इत्यन्तं मन्त्रगणमावर्त्यावर्त्य । सर्वरात्रमिति द्वितीयाश्रवणात्, होमक्रियया रात्रेः कात्स्न्येन संयोगः कार्यः । ततश्च प्रथमयामे घृतेन होमः । द्वितीये सक्तुभिः, तृतीये धानादिभिः, चतुर्थे लाजैः ‘ एकस्मै स्वाहा ’ इत्यन्त्यानुवाके – “ एकस्मै स्वाहा द्वाभ्यां स्वाहा ” इत्यत्र ‘ त्रिभ्यः स्वाहा । चतुर्भ्यः स्वाहा । पञ्चभ्यः स्वाहा । षड्भ्यः स्वाहा । सप्तभ्यः स्वाहा । अष्टभ्यः स्वाहा । नवभ्यः स्वाहा ’ इत्यैवमादयो मन्त्रा अपठिता अपि एकैकोच्चयेन शतपर्यन्ताः प्रयोज्याः, “ एकोत्तरा जुहोति ” ( शब्रा १३.२.१.५ ) इति ब्राह्मणात् । प्राणादयोऽश्वमेधस्यावयविनोऽवयवाः । स च प्रजापतेरवयवः । ‘ स आत्मन ’ इत्यात्मैव स्तूयत इति भावः । ततो व्युष्टायां समाप्तायां रात्रौ ‘ व्युष्ट्यै स्वाहा ’ इति घृताऽऽहुतिमेकाम् । ‘ उदिते सूर्ये स्वर्गाय स्वाहा ’ इति द्वितीयां जुहोतीति सूत्रार्थः ॥

प्राणाय स्वाहा । लिङ्गोक्तदेवत्यानि यजूंषि । प्राणादय इन्द्रियदेवताः सप्त । प्राणाय अपानाय व्यानाय चक्षुषे श्रोत्राय वाचे मनसे इति प्रतिमन्त्रं स्वाहाकारपाठः ॥१॥

इति चतुर्विंशे नवमोऽनुवाकः ॥९॥

---

[ अथ दशमोऽनुवाकः । ]

प्राच्यै दिशे स्वाहाऽर्वाच्यै दिशे स्वाहा
दक्षिणायै दिशे स्वाहाऽर्वाच्यै दिशे स्वाहा ।
प्रतीच्यै दिशे स्वाहाऽर्वाच्यै दिशे स्वाहोदीच्यै दिशे
स्वाहाऽर्वाच्यै दिशे स्वाहा ।
ऊर्ध्वायै दिशे स्वाहाऽर्वाच्यै दिशे स्वाहाऽवाच्यै दिशे
स्वाहाऽर्वाच्यै दिशे स्वाहा ॥१॥(१०)॥

---

प्राच्यै । दिशे । अर्वाच्यै । दक्षिणायै ।
प्रतीच्यै । उदीच्यै ।
ऊर्ध्वायै । अवाच्यै । अर्वाच्यै । दिशे ॥ अं ॥१॥(१०)॥

---

आ– ‘ प्राच्यै दिशे ’ इत्यत्र द्वादश दिग्देवताः ॥१॥३४॥

---

अश्वमेधमन्त्राः ]

अ– ' प्राच्यै दिशे स्वाहा '। लिङ्गोक्तदेवत्यानि यजूंषि। ' प्राच्यै ' इत्यनुवाके दिग्देवताप्रकाशका द्वादशमन्त्राः ॥

इति चतुर्विंशे दशमोऽनुवाकः ॥६॥

[ अथ एकादशोऽनुवाकः । ]

अद्भ्यः स्वाहा वार्भ्यः स्वाहोदकाय स्वाहा तिष्ठन्तीभ्यः स्वाहा
स्रवन्तीभ्यः स्वाहा स्यन्दमानाभ्यः स्वाहा ।
कूप्याभ्यः स्वाहा सूद्याभ्यः स्वाहा धार्याभ्यः स्वाहाऽर्णवाय स्वाहा
समुद्राय स्वाहा सरिराय स्वाहा ॥१॥(११)॥

अद्भ्य इत्यत्ऽभ्यः । वार्भ्य इति वाःऽभ्यः । उदकाय । तिष्ठन्तीभ्यः ।
स्रवन्तीभ्यः । स्यन्दमानाभ्यः । कूप्याभ्यः । सूद्याभ्यः । धार्याभ्यः । अर्णवाय ।
समुद्राय । सरिराय ॥झिं॥१॥(११)॥

आ– अद्भ्यः ' स्वाहा ' इत्यत्र समुद्राद्युदकदेवताः ॥३५॥

अ– अद्भ्यः स्वाहा । लिङ्गोक्तदेवत्यानि यजूंषि । अत्रानुवाके जलदेवताप्रकाशका मन्त्रा द्वादश ॥१॥

इति चतुर्विंशे एकादशोऽनुवाकः ॥११॥

[ अथ द्वादशोऽनुवाकः । ]

वाताय स्वाहा धूमाय स्वाहाऽभ्राय स्वाहा मेघाय स्वाहा
विद्योतमानाय स्वाहा स्तनयते स्वाहा ।
अवस्फूर्जते स्वाहा वर्षते स्वाहाऽववर्षते स्वाहोग्रं वर्षते स्वाहा
शीघ्रं वर्षते स्वाहोद्गृह्णते स्वाहोद्गृहीताय स्वाहा ।
प्रुष्णते स्वाहा शीकायते स्वाहा प्रुष्वाभ्यः स्वाहा
ह्रादुनीभ्यः स्वाहा नीहाराय स्वाहा ॥१॥(१२)॥

13–15 M4 om. अत्र ... एकादशोऽनुवाकः ॥

वाताय । धूमाय । अभ्राय । मेघाय । विद्योतमानायेति विऽद्योतमानाय । स्तनयते ।
अवस्फूर्जत इत्यवऽस्फूर्जते । वर्षते । अववर्षत इत्यवऽवर्षते । उग्रम् ।
शीघ्रम् । उद्गृह्णत इत्युत्ऽगृह्णते । उद्गृहीतायेत्युत्ऽगृहीताय ।
पृष्णते । शीकायते । प्रुष्वाभ्यः । ह्रादुनीभ्यः । नीहाराय ॥ फों ॥१॥(१२)॥

---

आ– ' वाताय ' इत्यत्र अष्टादश देवताः ॥३६॥

---

अ- ' वाताय स्वाहा ' । लिङ्गोक्तदेवत्यानि यजूंषि । अस्मिन्ननुवाके मेघोपयुक्तदेवताप्रकाशका अष्टादश मन्त्राः ॥१॥

इति चतुर्विंशे द्वादशोऽनुवाकः ॥१२॥

---

## [ अथ त्रयोदशोऽनुवाकः । ]

अग्नये स्वाहा सोमाय स्वाहेन्द्राय स्वाहा पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा ।
दिवे स्वाहा दिग्भ्यः स्वाहाऽऽशाभ्यः स्वाहोर्व्यै दिशे
स्वाहाऽर्वाच्यै दिशे स्वाहा ॥१॥(१३) ॥

---

अग्नये । सोमाय । इन्द्राय । पृथिव्यै । अन्तरिक्षाय ।
दिवे । दिग्भ्य इति दिक्ऽभ्यः । आशाभ्यः ।
उर्व्यै । अर्वाच्यै । दिशे ॥खां॥१॥(१३)॥

---

आ– ' अग्नये स्वाहा ' इत्यत्र अष्टादशाग्न्यादिदेवताः ॥३७॥

---

अ- ' अग्नये स्वाहा ' । लिङ्गोक्तदेवत्यानि यजूंषि । इहानुवाके अग्न्यादिप्रकाशका द्वादशमन्त्राः ॥१॥

इति चतुर्विंशे त्रयोदशोऽनुवाकः ॥१३॥

---

[ अथ चतुर्दशोऽनुवाकः । ]

नक्षत्रेभ्यः स्वाहा नक्षत्रियेभ्यः स्वाहाऽहोरात्रेभ्यः
स्वाहाऽर्धमासेभ्यः स्वाहा ।
मासेभ्यः स्वाहा ऋतुभ्यः स्वाहाऽर्तवेभ्यः स्वाहा
संवत्सराय स्वाहा द्यावापृथिवीभ्याꣳ स्वाहा ॥१॥

नक्षत्रेभ्यः । नक्षत्रियेभ्यः । अहोरात्रेभ्यः । अर्धमासेभ्य इत्यर्धऽमासेभ्यः ।
मासेभ्यः । ऋतुभ्य इत्यृतुऽभ्यः । आर्तवेभ्यः ।
संवत्सराय । द्यावापृथिवीभ्याम् ॥ ठ्रौं ॥१॥

आ– ' नक्षत्रेभ्यः ' इत्यत्र नक्षत्रादयो नव देवताः ॥३८॥

चन्द्राय स्वाहा सूर्याय स्वाहा रश्मिभ्यः स्वाहा वसुभ्यः स्वाहा ।
रुद्रेभ्यः स्वाहाऽदित्येभ्यः स्वाहा
मरुद्भ्यः स्वाहा
विश्वेभ्यो देवेभ्यः स्वाहा ॥२॥(१४)॥

चन्द्राय । सूर्याय । रश्मिभ्य इति रश्मिऽभ्यः । वसुभ्य इति वसुऽभ्यः ।
रुद्रेभ्यः । आदित्येभ्यः । मरुद्भ्य इति मरुत्ऽभ्यः । विश्वेभ्यः । देवेभ्यः ॥ ठ्रौं ॥२॥(१४)॥

आ– ' चन्द्राय ' इत्यत्र चन्द्रादयोऽष्टौ देवताः ॥३९॥

अ– 'नक्षत्रेभ्यः स्वाहा' । लिङ्गोक्तदेवत्यानि यजूंषि । अत्रानुवाके कण्डिकाद्वयात्मके नक्षत्रादिदेवताप्रकाशकाः सप्तदश मन्त्राः । तेषु च प्रथमकण्डिकायां नव, द्वितीयायामष्टाविति विवेकः ॥ १-२ ॥

इति चतुर्विंशे चतुर्दशोऽनुवाकः ॥१४॥

[ अथ पञ्चदशोऽनुवाकः । ]

मूलेभ्यः स्वाहा शाखाभ्यः स्वाहा वनस्पतिभ्यः स्वाहा ।
पुष्पेभ्यः स्वाहा फलेभ्यः स्वाहौषधीभ्यः स्वाहा ॥१॥(१५)॥

मूलेभ्यः । शाखाभ्यः । वनस्पतिभ्य इति वनस्पतिऽभ्यः ।
पुष्पेभ्यः । फलेभ्यः । ओषधीभ्यः ॥ क्रें ॥१॥(१५)॥

आ– ' मूलेभ्यः ' इत्यत्र मूलादयः षड्देवताः ॥४०॥

अ– ' मूलेभ्यः स्वाहा '। लिङ्गोक्तदेवत्यानि यजूंषि । अत्रानुवाके मूलादिदेवताप्रकाशका षण्मन्त्राः ॥१॥

इति चतुर्विंशे पञ्चदशोऽनुवाकः ॥१५॥

[ अथ षोडशोऽनुवाकः । ]

पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा ।
चन्द्राय स्वाहा नक्षत्रेभ्यः स्वाहाऽद्भ्यः स्वाहौषधीभ्यः स्वाहा ।
वनस्पतिभ्यः स्वाहा परिप्लवेभ्यः स्वाहा
चराचरेभ्यः स्वाहा सरीसृपेभ्यः स्वाहा ॥१॥(१६)॥

पृथिव्यै । अन्तरिक्षाय । दिवे । सूर्याय ।
चन्द्राय । नक्षत्रेभ्यः । अद्भ्य इत्यत्ऽभ्यः । ओषधीभ्यः ।
वनस्पतिभ्य इति वनस्पतिऽभ्यः । परिप्लवेभ्य इति परिऽप्लवेभ्यः ।
चराचरेभ्यः । सरीसृपेभ्यः ॥ गिंद ॥१॥(१६)॥

आ– ' पृथिव्यै ' इत्यत्र पृथिव्यादयो द्वादश देवताः ॥४१॥

अ– ' पृथिव्यै स्वाहा ' । लिङ्गोक्तदेवत्यानि यजूंषि । अस्मिन्ननुवाके पृथिव्यादिदेवताप्रकाशका मन्त्रा द्वादश ॥१॥

इति चतुर्विंशे षोडशोऽनुवाकः ॥१६॥

[ अथ सप्तदशोऽनुवाकः । ]

अस॑वे॒ स्वाहा॒ वस॑वे॒ स्वाहा॑ वि॒भुवे॒ स्वाहा॒ विव॑स्वते॒ स्वाहा॑ ।
ग॒ण॒श्रिये॒ स्वाहा॑ ग॒णप॑तये॒ स्वाहा॑ऽभि॒भुवे॒ स्वाहाऽधि॑पतये॒ स्वाहा॑ ॥१॥

अस॑वे । वस॑वे । वि॒भुव॒ इति॑ वि॒ऽभुवे॑ । विव॑स्वते ।
ग॒ण॒श्रिय॒ इति॑ ग॒ण॒ऽश्रिये॑ । ग॒णप॑तय॒ इति॑ ग॒णऽप॑तये ।
अ॒भि॒भुव॒ इत्य॑भि॒ऽभुवे॑ । अधि॑पतय॒ इत्यधि॑ऽपतये ॥ क्षो ॥१॥

आ– 'असवे' इत्यत्र असुवस्वादयोऽष्टौ देवताः ॥४२॥

शू॒षाय॒ स्वाहा॑ सꣳस॒र्पाय॒ स्वाहा॑ च॒न्द्राय॒ स्वाहा॒ ज्योति॑षे॒ स्वाहा॑ ।
म॒लि॒म्लु॒चाय॒ स्वाहा॒ दिवा॑ प॒तय॑ते॒ स्वाहा॑ ॥२॥(१७)॥

शू॒षाय॑ । स॒ꣳस॒र्पायेति॑ संऽस॒र्पाय॑ । च॒न्द्राय॑ । ज्योति॑षे ।
म॒लि॒म्लु॒चाय॑ । दिवा॑ । प॒तय॑ते । ॥ यै ॥२॥(१७)॥

आ– 'शूषाय' इत्यत्र शूषादयः षड्देवताः ॥४३॥

अ– 'असवे स्वाहा'। लिङ्गोक्तदेवत्यानि यजूंषि । अत्राप्यनुवाके कण्डिकाद्वयात्मके अस्वादिदेवताप्रकाशकाश्चतुर्दशमन्त्राः । तत्र प्रथमकण्डिकायामष्टौ, द्वितीयायां षडिति विवेकः ॥१-२॥

इति चतुर्दशो सप्तदशोऽनुवाकः ॥१७॥

[ अथ अष्टादशोऽनुवाकः । ]

मध॑वे॒ स्वाहा॒ माध॑वाय॒ स्वाहा॑ शु॒क्राय॒ स्वाहा॒ शुच॑ये॒ स्वाहा॑ ।
नभ॑से॒ स्वाहा॑ नभ॒स्या॑य॒ स्वाहे॒षाय॒ स्वाहो॒र्जाय॒ स्वाहा॑ ।
सह॑से॒ स्वाहा॑ सह॒स्या॑य॒ स्वाहा॒ तप॑से॒ स्वाहा॑ तप॒स्या॑य
स्वाहा॑ऽꣳहसस्प॒तये॒ स्वाहा॑ ॥१॥(१८)॥

मधवे । माधवाय । शुक्राय । शुचये ।
नभसे । नभस्याय । इषाय । ऊर्जाय ।
सहसे । सहस्याय । तपसे । तपस्याय ।
अंहसस्पतये । अंहसःपतय इत्यंहसःऽपतये ॥ कीं ॥१॥(१८)॥

आ– ' मधवे ' इत्यत्र मध्वादयस्त्रयोदशदेवताः ॥४४॥

अ– ' मधवे स्वाहा '। लिङ्गोक्तदेवत्यानि यजूंषि । अत्रानुवाके चैत्रादिमासाभिमानिदेवताप्रकाशका मन्त्रास्त्रयोदश ॥१॥

इति चतुर्विंशे अष्टादशोऽनुवाकः ॥१८॥

[ अथ एकोनविंशोऽनुवाकः ]

वाजाय स्वाहा प्रसवाय स्वाहाऽपिजाय स्वाहा क्रतवे स्वाहा ।
स्वः स्वाहा मूर्ध्ने स्वाहा व्यश्नुविने स्वाहा ।
अन्त्याय स्वाहाऽऽन्त्यायनाय स्वाहा भौवनाय स्वाहा
भुवनस्य पतये स्वाहाऽधिपतये स्वाहा प्रजापतये स्वाहा ॥१॥(१९)॥

वाजाय । प्रसवायेति प्रऽसवाय । अपिजायेत्यपिऽजाय । क्रतवे ।
स्वः । मूर्ध्ने । व्यश्नुविन इति विऽअश्नुविने ।
अन्त्याय । आन्त्यायनायेत्यान्त्यऽआयनाय । भौवनाय ।
भुवनस्य । पतये । अधिपतय इत्यधिऽपतये । प्रजापतय इति प्रजाऽपतये ॥ कुं ॥१॥१९॥

आ– ' वाजाय ' इत्यत्र वाजादयः त्रयोदश देवताः ॥४५॥

अ– ' वाजाय स्वाहा '। लिङ्गोक्तदेवत्यानि यजूंषि । अत्रानुवाके अन्नाभिमानिदेवताप्रकाशका मन्त्रास्त्रयोदश ॥१॥

[ इति चतुर्विंशे एकोनविंशोऽनुवाकः ॥१९॥ ]

[ अथ विंशोऽनुवाकः ]

आयुर्यज्ञेन कल्पताꣳ स्वाहा प्राणो यज्ञेन कल्पताꣳ स्वाहाऽपानो यज्ञेन कल्पताꣳ स्वाहा व्यानो यज्ञेन कल्पताꣳ स्वाहा । उदानो यज्ञेन कल्पताꣳ स्वाहा समानो यज्ञेन कल्पताꣳ स्वाहा चक्षुर्यज्ञेन कल्पताꣳ स्वाहा श्रोत्रं यज्ञेन कल्पताꣳ स्वाहा । वाग्यज्ञेन कल्पताꣳ स्वाहा मनो यज्ञेन कल्पताꣳ स्वाहाऽऽत्मा यज्ञेन कल्पताꣳ स्वाहा पृष्ठं यज्ञेन कल्पताꣳ स्वाहा । ब्रह्म यज्ञेन कल्पताꣳ स्वाहा यज्ञो यज्ञेन कल्पताꣳ स्वाहा ज्योतिर्यज्ञेन कल्पताꣳ स्वाहा स्वर्यज्ञेन कल्पताꣳ स्वाहा ॥१॥(२०)॥

आयुः । यज्ञेन । कल्पताम् । प्राणः । अपान इत्यपऽआनः । व्यान इति विऽआनः । उदान इत्युत्ऽआनः । समान इति सम्ऽआनः । चक्षुः । श्रोत्रम् । वाक् । मनः । आत्मा । पृष्ठम् । ब्रह्म । यज्ञः । ज्योतिः । स्वः । यज्ञेन । कल्पताम् ॥ तः ॥१॥(२०)॥

आ– ' आयुर्यज्ञेन ' इत्यत्र आयुरादयः षोडश देवताः ॥४६॥

अ– ' आयुर्यज्ञेन कल्पताꣳ स्वाहा ' । लिङ्गोक्तदेवत्यानि यजूंषि । अत्रानुवाके आयुरादिदेवताप्रकाशका मन्त्राः षोडश । यज्ञेन अश्वमेधेन आयुः कल्पतां संयुज्यतां । स्वाहा सुहुतमस्तु । एवमग्रे योज्यम् । अत्र ' समानः ' इति पदं सावग्रहम् । " यं नः समानः " ( कासं ५·६·२ ) इत्याध्वरिकं ' समानः ' इति पदमनवग्रहम् । " समानोऽनश्वमेधे " ( वाप्रा ५·३६ ) इति प्रातिशाख्येन ' अनश्वमेधे ' इति विशेषोक्तेरिति दिक् ॥२०॥

[ इति चतुर्विंशे विंशोऽनुवाकः ॥२०॥ ]

[ अथ एकविंशोऽनुवाकः ]

एकस्मै स्वाहा द्वाभ्याᳬं स्वाहा शताय स्वाहैकशताय स्वाहा ।
व्युष्टयै स्वाहा स्वर्गाय स्वाहा ॥१॥(२१)॥

एकस्मै । द्वाभ्याम् । शताय । एकशतायेत्येकऽशताय ।
व्युष्ट्या इति विऽउष्टयै । स्वर्गायेति स्वःऽगाय । स्वाहा ॥ ठैं ॥१॥(२१)॥

[ तेजोऽसि पञ्च ॥५॥ अग्नय एका ॥१॥ हिंकाराय षट् ॥६॥
तत्सवितुर्दश ॥१०॥ अजीजनो ह्येका ॥१॥ विभूर्द्वे ॥२॥ काय चतस्रः ॥४॥
आ ब्रह्मंस्तिस्रः ॥३॥ प्राणाय ॥१॥ प्राच्यै ॥१॥ अद्भ्यः ॥१॥
वाताय ॥१॥ अग्नय इत्येकैका ॥१॥ नक्षत्रेभ्यो द्वे ॥२॥ मूलेभ्यः ॥१॥
पृथिव्या इत्येकैका ॥१॥ असवे द्वे ॥२॥ मघवे। वाजाय ॥ आयुर्यज्ञेन । एकस्मा इत्येकैका ॥१॥
एकविंशत्यनुवाकेषु सप्तचत्वारिᳬंशत् ॥४७॥
एष ते तेजोऽसीति च सप्तचत्वारिᳬंशत् ॥४७॥ ]

[ इति शुक्लयजुर्वेदकाण्वसंहितायां चतुर्विंशोऽध्यायः ॥२४॥ ]

आ— 'एकस्मै' इत्यत्र षट् देवताः । एताभ्यो देवताभ्यो दिवानक्तं वा जुहुयात् । 'प्राणाय स्वाहा' इत्यादिप्रतिमन्त्रं सर्वरात्रं जुहुयात् । 'व्युष्टयै' इति व्युष्टायाम् । 'स्वर्गाय' इत्युदिते । "तदाहुः । यदुभे दिवा वा नक्तं वा जुहुयादहोरात्रे मोहयेद् व्युष्टयै स्वाहेत्यनुदित आदित्ये जुहोति स्वर्गाय स्वाहेत्युदिते अहोरात्रयोरव्यतिमोहाय" ( शब्रा १३·२·१·७ ) इत्यत्र ब्राह्मणवाक्यात् । अत्र श्रीभगवतः पुरुषोत्तमस्य अवयविन इव स्थितस्य अश्वमेधाख्यदेवत्यस्य प्राणादयः सर्वदेवताः अवयवभूताः, देवदत्तस्यावयविनः शिरःपाण्यादय इव । तस्मादेतद्देवतायजमानद्वारेण सर्वावयविभूतः श्रीभगवानेवात्रेज्यत इति सूच्यते । 'कस्मै स्वाहा' इति 'एकस्मै प्रजापतये स्वाहा' इत्येवमादय इति ॥४७॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीवासुदेवपुरीपूज्यपादपरमकारुण्यासादित-श्रीकृष्णभक्ति-साम्राज्यस्य श्रीमज्जातवेदभट्टोपाध्यायस्य सूनुना चतुर्वेदि-श्रीमदानन्दबोध-भट्टोपाध्यायेन विरचिते काण्ववेदमन्त्रभाष्यसंग्रहे चतुर्विंशोऽध्यायः ॥२४॥

22–24 V2 श्रीकाण्ववेदभाष्यसंग्रहे, शुक्लयजुःकाण्वसंहिताभाष्यसंग्रहे for श्रीमत्...संग्रहे ।

अश्वमेधमन्त्राः ]

अ– 'एकस्मै स्वाहा'। सर्वाणि यजूंषि लिङ्गोक्तदेवत्यानि अत्रानुवाके। एकादिशतान्तसंख्या-देवताप्रकाशकमन्त्राः षट्। अन्येऽपठिताः सूत्रकृता प्रदर्शिताः। 'त्रिभ्यः स्वाहा' इत्यादि 'शताय स्वाहा' इत्यन्ताः अष्टाधिकनवतिमन्त्राः प्रत्येतव्याः। ततः 'शताय स्वाहैकशताय स्वाहा' इति पठितमन्त्राभ्यामाहुती हुत्वा, व्युष्टायां रात्रौ सत्यां 'व्युष्ट्यै स्वाहा' इति घृताहुतिमेकां हुत्वा, अर्धोदिते सूर्ये 'स्वर्गाय स्वाहा' इति जुहुयात्। "व्युष्ट्यै स्वाहेत्यनुदित आदित्ये जुहोति। स्वर्गाय स्वाहेत्युदितेऽहोरात्रयोरव्यतिमोहाय" (शब्रा १३.२.१.७) इति ब्राह्मणोक्तेः। सर्वोऽप्येषोऽर्थः शतपथब्राह्मणेऽभिहितः। तथा हि अश्वमेधकाण्डे— "प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत्। स आत्मन्नश्वमेधमधत्त। ते देवाः प्रजापतिमब्रुवन्नेष वै यज्ञो यदश्वमेधोऽपि नोऽत्रास्तु भाग इति तेभ्य एतानन्नहोमान् अकल्पयद्यदन्नहोमाञ्जुहोति देवानेव तत्प्रीणाति॥ आज्येन जुहोति। तेजो वा आज्यम् ...॥ सक्तुभिर्जुहोति। देवानां वा एतद्रूपम् ...॥ धानाभिर्जुहोति ...। लाजैर्जुहोति नक्षत्राणां वा एतद्रूपम् यल्लाजा। नक्षत्राण्येव तत्प्रीणाति। प्राणाय स्वाहा अपानाय स्वाहेति नामग्राहं जुहोति नामग्राहमेवैनांस्तत्प्रीणात्येकस्मै स्वाहा द्वाभ्याꣳ स्वाहा शताय स्वाहैकशताय स्वाहेत्यनुपूर्वं जुहोत्यनुपूर्वमेवैनांस्तत्प्रीणात्येकोत्तरा जुहोत्येकवृद्धे स्वर्गो लोक एकधैवैनꣳ स्वर्गं लोकं गमयति पराचीर्जुहोति पराङिव वै स्वर्गो लोकः स्वर्गस्य लोकस्याभिजित्या ईश्वरो वा एषः पराङ् प्रदघोर्यः पराचीराहुतीर्जुहोति नैकशतमत्येति यदेकशतमतीयादायुषा यजमानं व्यर्धयेदेकशतं जुहोति शतायुर्वै पुरुष आत्मैकशत आयुष्येवात्मन् प्रतितिष्ठति। व्युष्ट्यै स्वाहा। स्वर्गाय स्वाहेत्युत्तमे आहुती जुहोति रात्रिर्वै व्युष्टिरहः स्वर्गोऽहोरात्रे एव तत्प्रीणाति। तदाहुर्यदुभे दिवा वा नक्तं वा जुहुयादहोरात्रे मोहयेद् व्युष्ट्यै स्वाहेत्यनुदित आदित्ये जुहोति स्वर्गाय स्वाहेत्युदितेऽहोरात्रयोरव्यतिमोहाय" (शब्रा १३.२.१.१–७) इति। प्रजापतिरन्यान् यज्ञान् देवेभ्यः प्रायच्छत्। आत्मन्यश्वमेधमाधत्त स्थापयामास। ते देवाः प्रजापतिमूचुर्नोऽस्माकमप्यत्राश्वमेधे भागोऽस्त्विति। तद्वचनं श्रुत्वा तेभ्य एतानन्नहोमान् अकल्पयत्। आज्यसक्तुधानालाजरूपानित्यर्थः॥

अत्र श्रीमद्भगवतो महापुरुषस्य यज्ञात्मनो विष्णोरवयविन इव स्थितस्य प्राणादयः सर्वा देवताः अवयवभूताः। देवदत्तस्यावयविनः शिरःपाण्यादय इव। तस्माद्देवतायजमानाध्वर्य्वादिद्वारेण सर्वावयवीभूतः श्रीभगवान् विष्णुरेवात्रेज्यते इति तात्पर्यमवगन्तव्यम्।

यज्ञेश्वरो हव्यकव्यसमस्तभोक्ता अव्ययात्मा हरिरीश्वरोऽत्र।
तत्संनिधानादपयन्ति सद्यो रक्षांस्यशेषाण्यसुराश्च सर्वे॥
तथा–
"त्वां योगिनश्चिन्तयन्ति त्वां जपन्ति च यज्विनः। हव्यकव्यभुगेकस्त्वं पितृदेवस्य रूपधृक्॥
कर्ता क्रियाणां स स इज्यते क्रतुः स एव तत्कर्मफलं च तस्यात्॥
स्रुगादि यत् साधनमप्यशेषं हरेर्न किंचिद्व्यतिरिक्तमस्ति॥
चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च। हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु"॥
इति विष्णुपुराणोक्तेः।
"अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च॥" (भगी ९.२४) इति गीतोक्तेश्च॥१॥

इति चतुर्विंशे एकविंशोऽनुवाकः॥२१॥

3. M4 om. ततः
4. M4 °माहती: for °माहुतीः

इति श्रीमन्नागदेवभट्टात्मजेन श्रीमद्विद्वत्कृपापात्रभूतेन श्रीमदनन्ताचार्येण प्रथमशाखिना विरचितायां श्रीमद्वेदभावार्थदीपिकायां चतुर्विंशोऽध्यायः समाप्तः ॥ २४ ॥

अनेन वेददीपेन मया नीराजितो हरिः ।
मच्छूमं सार्थकीकृत्य मद्वंशं परिरक्षतु ॥१॥
ऋषिगम्यो हि वेदार्थो मया कश्चन दर्शितः ।
हरेरनुग्रहेणैव पाणावामलकं यथा ॥२॥
न पाण्डित्याभिमानेन न च वित्तस्य लिप्सया ।
ग्रन्थोऽयं रचितः किं तु विदुषां परितुष्टये ॥३॥
सन्ति भाष्याण्यनेकानि प्रणीतानीह सूरिभिः ।
कोऽप्यस्य महिमा वेद्योऽभिज्ञैर्जयति सर्वतः ॥४॥
नमो महद्भ्यश्च नमोऽर्भकेभ्यो नमो युवभ्यश्च नमो व्रतिभ्यः ॥
यो मच्छूमस्तं परिकालयन्तु वेदार्थसंवित्तिपरंपरायै ॥५॥
अधिकारी कृतो ग्रन्थः विश्वेशस्य प्रसादतः ।
अनन्ताचार्यविदुषाऽनन्तदेवप्रसत्तये ॥६॥
यत्किंचिन्मम चाञ्चल्यं क्षम्यन्तां च विचक्षणाः ।
गुणग्राह्याः सदा सन्तो बालस्य पितराविव ॥७॥
यावच्चन्द्रश्च सूर्यश्च यावद्वेदः प्रवर्तते ।
तावद्विजयतां ग्रन्थो मत्कृतो विष्ण्वनुग्रहात् ॥८॥



P2 om. °देव°

P2 after समाप्तः ॥ adds : श्रीमते कृष्णायार्पितास्तु ॥

M4 °पालयन्तु for °कालयन्तु

P2 after °नुग्रहात् ॥ adds श्रीकृष्णाय नमः ॥

॥ ॐ ॥

## पञ्चविंशोऽध्यायः ।

### [ अथ प्रथमोऽनुवाकः । ]

हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ।।१।।

हिरण्यगर्भः । सम् ॥ प ॥१॥

आ— हिरण्मयेन पात्रेण प्राजापत्यं महिमानं ग्रहं गृह्णाति– पूर्वं 'हिरण्यगर्भः समवर्तत' इति । कायी त्रिष्टुप् । अस्याध्यायस्य प्रजापतेरार्षम् । अस्य हिरण्यगर्भो नाम कश्चिदृषिः । अस्येयं पुरोरुक् । उदिते ब्रह्मोद्ये प्रपद्य अध्वर्युर्हिरण्मयेन पात्रेण प्राजापत्यं महिमानं ग्रहं गृह्णाति । तस्य पुरोरुक् " हिरण्यगर्भः समवर्तताग्रे " ( शब्रा १३·५·२·२३ ) इति श्रुतेः ॥

'हिरण्यगर्भः' इति । हिरण्यस्य हिरण्मयब्रह्माण्डस्य यो गर्भः सः vहिरण्यगर्भः । अथवा हिरण्यमण्डं गर्भे यस्य स हिरण्यगर्भः । यो हिरण्यगर्भाख्यः पुरुषः vसमवर्तत, vअग्रे प्रथमं शरीरी समवर्तत समजायत, यस्य vभूतस्य उत्पन्नस्य प्राणिजातस्य vपतिः vजातः । यद्वा— जातमात्रः पतिः vएकः एव vआसीत् अभूत् । vसः ईश्वरो हिरण्यगर्भः । 'दाधार पृथिवीम्' इति । पृथुत्वात् अन्तरिक्षम् । vपृथिवीं पूर्ववत् कृतस्थाने vदाधार दधार धृतवान् । vद्यां द्युलोकं च दाधार । vउत अपि च vइमां प्रतीयमानां भूमिं च यो दाधार, तस्मै vकस्मै प्रजापतये vदेवाय vहविषा vविधेम हविर्दध्मः ॥१॥

अ– चतुर्विंशे होममन्त्रा उक्ताः । शिष्टं कर्मात्रोच्यते । कात्यायनः – "प्रातरुक्थ्यः । महिमानौ गृह्णाति सौवर्णेन पूर्वं हिरण्यगर्भ इति" ( काश्रौ २०·५·१-२ ) [ इति ] । प्रातर्द्वितीयेऽहनि उक्थ्यसंस्थमहर्भवति । तत्र महिमसंज्ञौ द्वौ ग्रहौ गृह्णाति । आगन्तुत्वादाग्रयणोक्थ्ययोर्मध्ये तौ गृह्णाति । " अन्तराऽऽग्रयणोक्थ्यावागन्तुस्थानं ग्रहाणाम् " ( काश्रौ १२·५·१ ) इति वचनात् । द्वयोर्मध्ये पूर्वं महिमानं ग्रहं सौवर्णेनोलूखलेन गृह्णाति । 'हिरण्यगर्भः' इति मन्त्रेणेति सूत्रार्थः ॥

6. V2 before हिरण्मयेन adds ओं
10. S3 पाठस्तु– हिरण्यगर्भः ... विधेमेति for हिरण्यगर्भ इति
17. P2 before चतुर्विंशे adds श्रीदेवदेवाय नमः ।

' हिरण्यगर्भः समवर्तताग्रे '। त्रिष्टुप् प्राजापत्या हिरण्यगर्भदृष्टा । हिरण्मयब्रह्माण्डगर्भरूपेणावस्थितः प्रजापतिः $^{v}$हिरण्यगर्भः । यद्वा- हिरण्मयं ब्रह्माण्डं गर्भे यस्य स हिरण्यगर्भः परमात्मा । सः च $^{v}$भूतस्य उत्पत्स्यमानस्य प्राणिजातस्य $^{v}$अग्रे पूर्वं $^{v}$समवर्तत । प्राण्युत्पत्तेः पूर्वं स्वयं शरीरधारी बभूव । स च $^{v}$जातः उत्पन्नमात्रः सन्, $^{v}$एकः एवोत्पत्स्यमानस्य सर्वजगतः $^{v}$पतिः $^{v}$आसीत् । अत एव $^{v}$सः $^{v}$पृथिवीं विस्तीर्णां $^{v}$द्यां दिवं $^{v}$दाधार दधार । अभ्यासदीर्घश्छान्दसः । $^{v}$उत अपि च $^{v}$इमां प्रत्यक्षतः प्रतीयमानां भुवं च दाधार । उपलक्षणमेतत् । चतुर्दश पूर्वकल्पवद्यथास्थानं धृतवान् । " धाता यथापूर्वमकल्पयत् " ( ऋ १०·१९०·३ ) इति श्रुतेः । तादृशाय $^{v}$कस्मै प्रजापतये । ब्रह्मपक्षे कस्मै निर्वक्तुमशक्याय $^{v}$देवाय $^{v}$हविषा $^{v}$विधेम वयं परिचरेम । दधातिर्दानार्थः । हविर्दध्म इत्यर्थः ॥१॥

उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णाम्येष ते योनिः सूर्यस्ते महिमा ।
यस्तेऽहन्त्संवत्सरे महिमा संबभूव यस्ते वाया अन्तरिक्षे महिमा संबभूव ।
यस्ते दिवि सूर्ये महिमा संबभूव
तस्मै ते महिम्ने प्रजापतये स्वाहा देवेभ्यः ॥२॥ (१) ॥

प्रजापतय इति प्रजा-पतये । त्वा । जुष्टम् । गृह्णामि ।
एषः । ते । योनिः । सूर्यः । ते । महिमा ॥
यः । ते । अहन् । संवत्सरे । महिमा । संबभूवेति सम्-बभूव । वायौ । अन्तरिक्षे ॥
दिवि । सूर्ये ।
तस्मै । ते । महिम्ने । प्रजापतय इति प्रजाऽपतये । स्वाहा । देवेभ्यः ॥ ण्येः ॥२॥ (१)॥

आ- ' उपयामगृहीतोऽसि '। उपयामयतीत्युपयामो ग्रहः । तेन गृहीतः । $^{v}$असि । ' प्रजापतये त्वा ' इति प्राजापत्यं यजुः । ' प्रजापतये त्वा जुष्टं गृह्णामि '। $^{v}$प्रजापतये देवतायै $^{v}$जुष्टम् अभिरुचितं ग्रहं त्वां $^{v}$गृह्णामि । अथ खरे सादयामि । $^{v}$ते $^{v}$योनिः $^{v}$एषः $^{v}$सूर्यः । सु शुद्ध ईरणात् प्रेरणात् सूर्यः । सु गतौ । सरस्वतीति वा । सूर्यः ते तव ग्रहस्य योनिः कारणम् । $^{v}$ते तव $^{v}$महिमा माहात्म्यं भाग्यं च । ' यस्तेऽहन्त्संवत्सरे महिमा संबभूव '।

1. M4 हिरण्य° for हिरण्मय°
8. P2 M2 हविर्दत्त इत्यर्थः for हविर्दध्म इत्यर्थः ।
18. S3 पाठस्तु- उपयाम ... देवेभ्य इति for उपयामगृहीतोऽसि ; V2 °यामति for °यामयति ।
21. S3 om. सु; V2 गृहस्य for ग्रहस्य

हे ग्रह, [v]अहन् अहनि निमित्ते [v]संवत्सरे च निमित्ते सति। इयं निमित्ते सप्तमी । [v]ते तव [v]यः [v]महिमा [v]संबभूव । ' यस्ते वाया अन्तरिक्षे '। [v]ते तव वायौ निमित्ते [v]अन्तरिक्षे [ च ] निमित्ते [v]यः महिमा [v]संबभूव उत्पन्नः । ' यः ते दिवि सूर्ये ' । [v]दिवि द्युस्थाननिमित्ते [ [v]सूर्ये च निमित्ते ] [v]यः [v]महिमा [v]संबभूव । ' तस्मै ते महिम्ने प्रजापतये स्वाहा ' इति । [v]स्वाहा [v]देवेभ्यः स्वाहा सुहुतमस्तु ॥२॥

---

अ– ' उपयामगृहीतोऽसि ' । प्राजापत्यं यजुः । उपयामयतीत्युपयामो ग्रहस्तेन गृहीतः। हे महिमन्, त्वम् [v]असि । [v]प्रजापतये देवतायै [v]जुष्टं रुचितं [v]त्वा त्वाम्, हे महिमन्, अहं [v]गृह्णामि ।

कात्यायनः – " एष ते योनिरिति ग्रहसादनम् " ( काश्रौ ९.५.२४ ) । हे ग्रह, [v]एषः प्रदेशः [v]ते तव [v]योनिः स्थानम् । " द्वयोर्योनिः " ( अको २.६.५६ ) इत्यभिधानात् पुंस्त्वम् । [v]ते तव [v]महिमा माहात्म्यं शक्तिः [v]सूर्यः । दीपस्येव प्रभा । यद्वा– परिवर्तमानः सूर्यस्तव महिमा सुवर्णात्मकस्य तव कान्तिः ॥

कात्यायनः – " यस्तेऽहन्निति जुहोति " ( काश्रौ २०.७.१६ ) । पूर्वं महिमानं जुहोति । वषट्कृते सर्वहुतमित्यर्थः । ' यस्तेऽहन् ' । देवदेवत्यं यजुः । हे महिमन्, [v]यः [v]ते तव [v]महिमा [v]अहन् । सप्तम्या लुक् । अह्नि दिवसे, [v]संवत्सरे च निमित्ते [v]संबभूव उत्पन्नः । तथा [v]वायौ [v]अन्तरिक्षे च यः तव [v]महिमा [v]संबभूव, तथा [v]दिवि [v]सूर्ये च यः ते [v]महिमा [v]संबभूव, [v]ते तव [v]तस्मै [v]महिम्ने [v]प्रजापतये [v]देवेभ्यः च [v]स्वाहा सुहुतमस्तु ॥

इति पञ्चविंशे प्रथमोऽनुवाकः ॥ १ ॥

---

[ अथ द्वितीयोऽनुवाकः । ]

य॒: प्रा॑ण॒तो नि॑मिष॒तो म॑हि॒त्वैक॒ इद्राजा॒ जग॑तो ब॒भूव॑ ।
य ईशे॑ अ॒स्य द्वि॒पद॒श्चतु॑ष्पद॒: कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥१॥

---

यः । प्रा॒ण॒तः । नि॒मि॒ष॒त इति॑ नि॒ऽमि॒ष॒तः । म॒हि॒त्वेति॑ म॒हि॒ऽत्वा ।
एकः॑ । इत् । राजा॑ । जग॑तः । ब॒भूव॑ ।
यः । ईशे॑ । अ॒स्य । द्वि॒पद॒ इति॑ द्वि॒ऽपदः॑ । चतु॑ष्पदः । चतु॑:पद॒ इति॒ चतु॑:ऽपदः ।
कस्मै॑ । दे॒वाय॑ । ह॒विषा॑ । वि॒धे॒म ॥ ध्रों ॥१॥

---

आ– द्वितीयं राजतेन गृह्णाति । तस्य पुरोरुक्– ' यः प्राणतः ' इति । कायी त्रिष्टुप् । कः प्रजापतिस्तद्देवत्या कायी प्राजापत्या । हिरण्यगर्भस्तस्यार्षम् । vयः vप्राणतः प्राणनं कुर्वतः भूतग्रामस्य vनिमिषतः निमेषं कुर्वतः भूतग्रामस्य vमहित्वा । छान्दसं पदम् । महित्वता महिम्ना स्वकीयेन महाभाग्येन । ' एक इद्राजा ' । vइत् शब्द एवार्थे । vएकः एव । एवंविधस्य समस्तजगतः एक एव vराजा vबभूव वृत्तः । ' य ईशे अस्य द्विपदः ' । vअस्य प्रतीयमानस्य vद्विपदः मनुष्यादिप्राणिजातस्य, vचतुष्पदः पश्वादिप्राणिजातस्य, vयः vईशे ईष्टे तस्मै । [ vकस्मै ] प्रजापतये vदेवाय vहविषा vविधेम । अत्र दधातिर्दानकर्मा । हविषा हविरिति व्यत्ययः । हविर्दध्मः ॥३॥

---

अ- कात्यायनः – " द्वितीयं राजतेन यः प्राणत इति " ( काश्रौ २०·५·२ ) इति । निगदव्याख्यानम् । ' यः प्राणतः ' । हिरण्यगर्भदृष्टा प्राजापत्या त्रिष्टुप् । तस्मै vकस्मै प्रजापतये vदेवाय वयं vहविषा vविधेम हविर्दध्मः । तृतीया द्वितीयार्थे । स कः ? vयः प्रजापतिः vप्राणतः प्रकर्षेण । अनिति चेष्टते इति प्राणत्, तस्य जङ्गमस्य । निमिषति न चेष्टते इति निमिषत्, तस्य स्थावरस्य । vजगतः विश्वस्य vएकः vइत् एक एव vराजा vबभूव । केन ? vमहित्वा महित्वेन । महेर्महिम्नो भावो महित्वं तेन । विभक्तेः पूर्वसवर्णता । vयः च vअस्य vद्विपदः । द्वौ पादौ यस्य सः द्विपात् तस्य । " पादः पत् " ( पा ६·४·१३० ) इति पदादेशः, मनुष्यपक्ष्यादेः । vचतुष्पदः हस्तिगवादेः प्राणिजातस्य । vईशे ईष्टे । स्वामित्वं करोति । " लोपस्त आत्मनेपदेषु " ( पा ७.१.४१ ) इति तकारलोपे ईशे इति रूपम् । " अधीगर्थदयेशां कर्मणि " ( पा २.३.५२ ) इति कर्मणि षष्ठी । अत्रापि हिरण्यगर्भः परमात्मा च स्तूयते ॥१॥

---

उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णाम्येष ते योनिश्चन्द्रमास्ते महिमा ।
यस्ते रात्रौ संवत्सरे महिमा संबभूव यस्ते पृथिव्यामग्नौ महिमा संबभूव ।
यस्ते नक्षत्रेषु चन्द्रमसि महिमा संबभूव
तस्मै ते महिम्ने प्रजापतये देवेभ्यः स्वाहा ॥२॥ (२)॥

---

1. S3 पाठस्तु– यः प्राणतो ... विधेमेति for ' यः प्राणतः ' इति ।
6. V2 द्विपदस्य for द्विपदः ।
12. M4 P2 अणिति for अनिति ।

चन्द्रमाः । ते । महिमा ।
यः । ते । रात्रौ । संवत्सरे । महिमा । संबभूवेति सम्ऽबभूव ।
पृथिव्याम् । अग्नौ ।
नक्षत्रेषु । चन्द्रमसि ।
तस्मै । ते । महिम्ने । प्रजापतय इति प्रजाऽपतये । देवेभ्यः । स्वाहा ॥ जौं ॥२॥

---

आ– ' उपयामगृहीतोऽसि प्रजापतये त्वा ' इति । प्राजापत्यं यजुः । [v]प्रजापतये [v]जुष्टम् अभिरुचितं ग्रहं त्वां [v]गृह्णामि । [v]एषः [v]चन्द्रमाः [v]ते [v]योनिः ग्रहस्य तव कारणम् । [v]महिमा माहात्म्यं भाग्यं च । जुहोति– ' यस्ते रात्रौ संवत्सरे माहिमा संबभूव ' । [v]रात्रौ निमित्ते [v]संवत्सरे च निमित्ते तव [v]यः [v]महिमा [v]संबभूव । ' यस्ते पृथिव्यामग्नौ महिमा संबभूव ' । [v]पृथिव्याम् [v]अग्नौ च । सर्वत्र निमित्ते सप्तमी । ' यस्ते नक्षत्रेषु चन्द्रमासि महिमा संबभूव ' । [v]नक्षत्रेषु निमित्तेषु [v]चन्द्रमसि च निमित्ते तव [v]यः [v]महिमा [v]संबभूव । ' महिम्ने प्रजापतये देवेभ्यः स्वाहा ' इति होमार्थः । सुहुतमस्तु ॥४॥

---

अ– ' उपयामगृहीतोऽसि ' इति । हे महिमन् ग्रह, त्वम् उपयामेन गृहीतः [v]असि । [v]प्रजापतये [v]जुष्टं [v]त्वां [v]गृह्णामि । सादयति– ' एषः ते योनिः ' इति पूर्ववत् । हे राजतग्रह, [v]चन्द्रमाः [v]ते तव [v]महिमा दीप्तिः ॥

कात्यायनः – " वपान्ते द्वितीयेन पूर्ववद् यस्ते रात्राविति जुहोति " ( काश्रौ २०.७.२६ )। वपायागान्ते द्वितीयेन महिम्ना पूर्ववदिति सर्वहुतं महिमानं जुहोतीत्यर्थः । ' यस्ते रात्रौ ' । अष्टिः । हे महिमन्, [v]रात्रौ [v]संवत्सरे च यः तव [v]महिमा [v]संबभूव । [v]पृथिव्याम् [v]अग्नौ च [v]यः [v]ते [v]महिमा [v]संबभूव । [v]नक्षत्रेषु [v]चन्द्रमसि च [v]यः [v]ते [v]महिमा [v]संबभूव । [v]तस्मै तव [v]महिम्ने [v]प्रजापतये [v]देवेभ्यः च [v]स्वाहा सुहुतमस्तु ॥२॥

इति पञ्चविंशे द्वितीयोऽनुवाकः ॥२५॥

---

6. S3 पाठस्तु– उपयाम° ... देवेभ्यः स्वाहेति for ' उपयामगृहीतोऽसि प्रजापतये त्वा ' इति ।

[ तृतीयोऽनुवाकः ]

युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः । रोचन्ते रोचना दिवि ॥१॥

---

युञ्जन्ति । ब्रध्नम् । अरुषम् । चरन्तम् । परि । तस्थुषः ।
रोचन्ते । रोचना । दिवि ॥ शौ ॥१॥

---

आ– अश्वं रथेन युनक्ति । 'युञ्जन्ति ब्रध्नम्' इति । आदित्यदेवत्या गायत्री । यजुश्छन्दः । अश्वश्चादित्यवत् स्तूयते । [V]युञ्जन्ति । किमिति ? 'ब्रध्नम्', 'अरुषम्' इति च द्वे अपि अश्वनामनी, सामान्यविशेषभावेन योज्ये । 'रोचन्ते रोचना दिवि' इति । यस्य संबन्धीनि [[V]रोचना] रोचनानि दीप्तानि चन्द्रग्रहतारकादीनि [V]दिवि द्युलोके [V]रोचन्ते दीप्यन्ते, तम् [V]अरुषम् अरोचनं [V]चरन्तं [V]ब्रध्नम् अश्वम् आदित्यात्मकम् अश्वम् आदित्यं वा [V]परि [V]तस्थुषः परितः सर्वतः स्थिताः ऋत्विग्यजमानाः स्वकर्मसिद्ध्यर्थं युञ्जन्ति ॥१॥

---

अ– कात्यायनः – "युनक्त्येनं युञ्जन्ति ब्रध्नमिति" (काश्रौ २०.५.१०) इति । अश्वं रथे युनक्तीत्यर्थः । 'युञ्जन्ति ब्रध्नम्' । मधुच्छन्दोदृष्टा आदित्यदेवत्या गायत्री । [V]तस्थुषः विभक्तिव्यत्ययः, तस्थिवांसः । कर्मार्थमतिशयेन स्थिता ऋत्विजः [V]ब्रध्नम् आदित्यं [V]युञ्जन्ति रथे योजयन्ति । अश्व आदित्यत्वेन स्तूयते । यद्वा– बृंहणशीलत्वाद्ब्रध्नोऽश्वस्तं युञ्जन्ति । कीदृशम् ? [V]अरुषम् । रोषति क्रुध्यतीति रुषः । "इगुपध॰" (पा ३.१.१३५) इति कप्रत्ययः । न रुषोऽरुषः, स । क्रोधरहितं [V]परि [V]चरन्तम् वैदिककर्मसिद्ध्यर्थं सर्वत्र गच्छन्तम् । यस्य ब्रध्नस्य [V]रोचना । विभक्तिलोपः । रोचनाः दीप्तयः । [V]दिवि आकाशे [V]रोचन्ते प्रकाशन्ते । यद्वा– रोचनानि दीप्तानि चन्द्रग्रहतारकादीनि यस्य ब्रध्नस्य भासा रोचन्ते । "तेजसां गोलकः सूर्यो नक्षत्राण्यम्बुगोलकाः" ( इति ज्योतिःशास्त्रोक्तेः ) । यद्वा- ब्रध्नं परमात्मानं रथे शरीरे युञ्जन्ति । तदधिष्ठितत्वात् शरीरं चेष्टत इति जानन्तीत्यर्थः । "यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरं, यो विज्ञानमन्तरो यमयति" ( बृउ ३.७.२२ ) इति श्रुतेः । येन परमात्मना दिवि रोचना आकाशे स्थितानि सूर्यचन्द्रादितेजांसि इन्द्रियाभिमानीनि रोचन्ते । "तमेव भान्तमनुभाति सर्वं यस्य भासा सर्वमिदं विभाति" ( मुंउ २.२.११ ) इति श्रुतेः । ब्रध्नशब्दस्य आदित्यपरत्वे ब्राह्मणम् – "युञ्जन्ति ब्रध्नमरुषं चरन्तमित्यसौ वा आदित्यो ब्रध्नोऽरुषोऽमुमेवास्मा आदित्यं युनक्ति स्वर्गस्य लोकस्य समष्ट्यै" ( शब्रा १३.२.६.१ ) इति ॥१॥

---

5. S3 पाठस्तु – युञ्जन्ति ...दिवीति for 'युञ्जन्ति ब्रध्नम्' इति ।
7. V2 योज्यौ for योज्ये; V2 before यस्य adds अस्य संबन्धिनी रोचना दिवि
9. A2 after वा adds आदित्य॰
16. M4 तस्य for यस्य
17. P2 M4 प्रकाश्यन्ते for प्रकाशन्ते
23. ब्रह्म for ब्रध्न॰

युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे । शोणा धृष्णू नृवाहसा ॥२॥

युञ्जन्ति । अस्य । काम्या । हरी इति हरी । विपक्षसेति विऽपक्षसा । रथे ।
शोणा । धृष्णू इति धृष्णू । नृवाहसेति नृऽवाहसा ॥ वौ ॥२॥

आ– ' युञ्जन्त्यस्य ' इति । अश्वदेवत्या गायत्री अश्वस्तुतिः । Vहरी हरितवर्णावश्वौ । हरिणौ वेगवन्तौ वा । Vरथे Vयुञ्जन्ति । किं भूताविति ? ' अस्य काम्या ' Vअस्य यजमानस्य Vकाम्या । छान्दसं पदम् । काम्यौ कमनीयौ कामसंपादनौ च । Vविपक्षसा विपक्षसौ, विविधपक्षावस्थितौ । यद्वा-- विरिति शकुनिनाम । वेतेर्गतिकर्मणः । वेः इव पक्षौ ययोः [ तौ ] विपक्षसौ । षोऽन्तकर्मणि । विपक्षं शत्रुपक्षं स्यत इति विपक्षसौ ' विपक्षसा ' इति छान्दसं पदम् । विपक्षसायकावित्यर्थः । Vशोणा शोणौ रक्तवर्णौ । Vधृष्णू । धृष प्रसहने । विपक्षघर्षण-शीलौ । Vनृवाहसा नृवाहसौ, मनुष्याणां वोढारौ । हरी अश्वौ । रथे युञ्जन्तीति संबन्धः ॥६॥

अ– कात्यायनः – " इतरांश्च युञ्जन्त्यस्येति " ( काश्रौ २०.५.११ ) । इतरांस्त्रीनश्वान् रथे युनक्तीत्यर्थः । ' युञ्जन्त्यस्य ' । अश्वदेवत्या गायत्री । ऋत्विजः Vहरी हरीन् अश्वान् रथे Vयुञ्जन्ति । कीदृशौ हरी ? Vअस्य आश्वमेधिकाश्वस्य Vकाम्या काम्यौ । काम्येते इति काम्यौ कामसंपादिनौ । एकस्य रथवाहनासामर्थ्यात् । Vविपक्षसा । पक्ष परिग्रहे इति धातोरसुन् प्रत्ययः । पक्षयन्ति शरीरं परिगृह्णन्ति ते पक्षसः पक्षाः । विविधाः पक्षसो ययोस्तौ विपक्षसौ । यद्वा–विरिति पक्षिनाम । " वेतेर्गतिकर्मणः " ( नि २.६ ) इति यास्कोक्तेः । वेः पक्षिण इव पक्षसौ ययोस्तौ । Vशोणा शोणौ रक्तवर्णौ । Vधृष्णू प्रगल्भौ । ञिधृषा प्रागल्भ्ये, अस्मात् कुप्रत्ययः । Vनृवाहसा नॄन् नरान् वहतस्तौ नृवाहसौ । वहेरसुन्प्रत्ययः । सर्वत्र विभक्तेराकारः ॥२॥

यद्वातो अपो अगनीगन् प्रियामिन्द्रस्य तन्वम् ।
एतं स्तोतरनेन पथा पुनरश्वमावर्तयासि नः ॥३॥

4. S3 पाठस्तु – युञ्जन्ति ... नृवाहसेति for ' युञ्जन्त्यस्य ' इति
5. S3 om. हरिणौ वेगवन्तौ वा
7. S3 om. विविध॰ ... विपक्षसौ [ L 8 ]; V2 ॰पक्षिवत् स्थितौ for ॰पक्षावस्थितौ
9. S3 om. धृष्णू ... प्रसहने; V2 धृषु for धृष

यत् । वातः । अपः । अगनीगन् । प्रियाम् । इन्द्रस्य । तन्वम् ।
एतम् । स्तोतः । अनेन । पथा । पुनः । अश्वम् । आ । वर्तयासि । नः ॥ न्यों ॥३॥

---

आ– अपोऽवगाढेषु वाचयति । 'यद्वातः' इति । अश्वदेवत्या बृहती । Vयत् यस्मात् Vवातः वातवेगोऽश्वः । Vअपः प्रति Vअगनीगन् अगच्छत् । बहुवचनमविवक्षितम् । 'प्रियामिन्द्रस्य तन्वम्'। Vइन्द्रस्य श्रीभगवतः Vप्रियां Vतन्वं शरीरम् उदकात्मकम् Vअगनीगन् । अतो ब्रवीमि । 'एतꣳ स्तोतरनेन पथा' । हे Vस्तोतः, हे अध्वर्यो, हे वायो, "वायुर्वै स्तोता" ( शब्रा १३.२.६.२ ) इति श्रुतेः । Vएतं Vनः अस्माकम् Vअश्वम् Vअनेन Vपथा मार्गेण येन गतः [ तेन ] Vपुनः अश्वम् Vआवर्तयासि आवर्तय आनय ॥७॥

---

अ– "अपो यात्वाऽवगाढेषु वाचयति यद्वात इति" ( काश्रौ. २०.५.१४ ) इति । चतुर्भिरश्वैर्युक्तं रथमध्वर्युयजमानावारुह्य नद्यादिजलं गत्वा जलं प्रविष्टेष्वश्वेषु अध्वर्युर्यजमानं वाचयति । 'यद्वातः' । बृहती। अश्वस्तुतिः 'सिंहो माणवकः' इतिवत् । Vवातः वातसमानवेगोऽश्वः । Vयत् यस्मात् । Vअपः जलानि Vअगनीगन् । Vइन्द्रस्य Vप्रियां Vतन्वं शरीरं च अगनीगन् अत्यर्थमगच्छत् । "दाधर्तिदर्धर्ति°" ( पा ७.४.६५ ) इत्यादिना यङ्लुगन्तो निपातः । अतः कारणात्, हे Vस्तोतः, हे वायो, "वायुर्वै स्तोता" ( शब्रा १३.२.६.२ ) इति श्रुतेः । Vएतं Vनः अस्माकम् Vअश्वम् Vअनेन Vपथा मार्गेण । येन गतस्तेनेत्यर्थः । Vपुनः Vआवर्तयासि आवर्तय आनय । "लेटोऽडाटौ" ( पा ३.४.९४ ) इत्याट् । अत्र इन्द्रशब्देन विष्णुरुच्यते । तस्य जलशायित्वेन जलशरीरत्वात् ॥३॥

---

वसवस्त्वाऽञ्जन्तु गायत्रेण छन्दसा रुद्रास्त्वाऽञ्जन्तु त्रैष्टुभेन छन्दसा ।
आदित्यास्त्वाऽञ्जन्तु जागतेन छन्दसा ॥४॥

---

वसवः । त्वा । अञ्जन्तु । गायत्रेण । छन्दसा । रुद्राः ।
त्रैष्टुभेन । त्रैस्तुभेनेति त्रैऽस्तुभेन । आदित्याः । जागतेन ॥ गौ ॥४॥

---

3. S3 पाठस्तु– यद्वातो ... न इति for 'यद्वातः' इति ।

8. V2 पुनः for तेन

आ– नः अस्माकं चतस्रो जाया उपक्लृप्ता भवन्ति । महिषी वावाता परिवृक्ता पालागली इति । तत्रागतमश्वं महिषी वावाता परिवृक्ता चेत्येता आज्येन अभ्यञ्जन्ति 'वसवस्त्वा' इति प्रतिमन्त्रम् । अश्वदेवत्यानि यजूंषि । अश्वदेवत्या बृहती । 'वसवस्त्वाऽञ्जन्तु गायत्रेण छन्दसा' । गायत्रात्मकेन vछन्दसा आज्येन vवसवः नाम देवाः, [हे] अश्व, vत्वा त्वाम् vअञ्जन्तु । vरुद्राः, [हे] अश्व, vत्वा त्वां vत्रैष्टुभेन vछन्दसा आज्येन vअञ्जन्तु, vआदित्याः, [हे] अश्व, vत्वा त्वां vजागतेन vछन्दसा आज्येन vअञ्जन्तु ॥८॥

---

अ– कात्यायनः – "आयाय विमुक्तमश्वं महिषी वावाता परिवृक्ताऽऽज्येनाभ्यञ्जन्ति, पूर्वकायमध्याऽपरकायान् यथादेशं वसवस्त्वेति प्रतिमन्त्रम्" (काश्रौ २०.५.१५)। आयाय जलप्रदेशात् देवयजनमागत्य रथाद्विमुक्तमश्वं महिष्याद्यास्तिस्रः पत्न्यो यथाक्रमम् अश्वस्य पूर्वादिकायान् घृतेनाभ्यञ्जन्ति । महिषी पूर्वकायं 'वसवः' इति । वावाता देहमध्यं 'रुद्रास्त्वा' इति । परिवृक्ता पश्चाद्भागम् 'आदित्यास्त्वा' इति मन्त्रेणेति सूत्रार्थः ॥

'वसवस्त्वा'। त्रीणि यजूंषि लिङ्गोक्तदेवत्यानि । हे अश्व, vवसवः अष्टौ देवाः । vगायत्रेण vछन्दसा तद्रूपेणाज्येन vत्वा त्वाम् vअञ्जन्तु स्निग्धं कुर्वन्तु । vरुद्राः एकादश vत्रैष्टुभेन vछन्दसा vत्वा । त्वाम् vअञ्जन्तु । vआदित्याः द्वादश vजागतेन vछन्दसा त्वाम् vअञ्जन्तु । एषोऽर्थो ब्राह्मणेऽभिहितः – "वसवस्त्वाऽञ्जन्तु गायत्रेण छन्दसेति महिष्यभ्यनक्ति तेजो वा आज्यं तेजो वा गायत्री तेजसी एवास्मिन् समीची दधाति रुद्रास्त्वाऽञ्जन्तु ... जागतेन छन्दसेनेति परिवृक्ता ... ।" (शब्रा १३.२.६.४-६) इति ॥४॥

---

**भूर्भुवः स्वर्लाजी३ञ्छाची३न् यव्ये गव्ये ।**
**एतदन्नमत्त देवा एतदन्नमद्धि प्रजापते ॥५॥**

---

भूः । भुवः । स्वः । लाजी३न् । शाची३न् । यव्ये । गव्ये ।
एतत् । अन्नम् । अत्त । देवाः । एतत् । अन्नम् । अद्धि ।
प्रजापत इति प्रजाऽपते ॥ घुं ॥५॥

---

2. S3 °गला for °गली ।
3–4. S3 पाठस्तु– वसवस्त्वा° ... जागतेन च्छन्दसेति for वसवस्त्वा ... च्छन्दसा
8. M4 °यजमानम् ... for यजनम्

आ – सौवर्णान् मणीन् एकशतं केसरपुच्छेष्वावयन्ति । 'भूर्भुवः स्वः' इति । प्रतिमहाव्याहृतिभिः पत्न्या इति । लिङ्गोक्तदेवत्यानि यजूंषि व्याख्यातानि ॥

अश्वाय रात्रिहुतशेषं प्रयच्छति । 'लाजीञ्छाचीन् यव्ये गव्ये' । लाजानां समूहा लाजयः । तान् $^{V}$लाजीन् । 'शाचीन्' इति । सक्तवोः हि अतितराम् । शच्या कर्मणा हि निष्पद्यन्ते इति सक्तवः । शाच्य इत्युक्ताः । शचीनां समूहाः शाचयः । तान् $^{V}$शाचीन् । यश्चायं $^{V}$यव्ये [ यव्यो ] यवमयः समूह उक्तः । $^{V}$गव्ये [ गव्यः ] गोविकारसमूहः इति । 'एतदन्नमत्त देवा एतदन्नमद्धि प्रजापते' । हे हयात्मकाः $^{V}$देवाः, $^{V}$एतत् $^{V}$अन्नम् $^{V}$अत्त भक्षयत । हे $^{V}$प्रजापते, अश्वाधिदेवतारूप प्रजापते देव, $^{V}$एतत् $^{V}$अन्नम् $^{V}$अद्धि भक्षय ॥८॥

---

अ– कात्यायनः – "अश्वंश्यमानान् मणीन्त्सौवर्णान् एकशतमेकशतं केसरपुच्छेष्वावयन्ति भूर्भुवः स्वरिति प्रतिमहाव्याहृति" ( काश्रौ २०.५.१६ ) । महिष्याद्यास्तिस्रः स्त्रियः एकाधिकशतमेकशतं सुवर्णमयमणीन् यथा न पतन्ति तथा केसरयोः शिरःस्कन्धस्थयोः, पुच्छे च बध्नन्ति । क्रमेण 'भूः' इति प्रतिमहाव्याहृतीति सूत्रार्थः ॥

'भूर्भुवः स्वर्लाजी३न्' । लिङ्गोक्तदेवत्यानि यजूंषि । 'भूः' इति प्रथमा व्याहृतिः । 'भुवः' इति द्वितीया । 'स्वः' इति तृतीया । एतास्तिस्रो व्याहृतयः पृथिव्यादिलोकत्रयनामानि । एतदुच्चारणपुरःसरं प्रजापतिना लोकत्रयस्य सृष्टत्वात् । यद्वा– एता ऋग्वेदादिवेदत्रयनामानि । "भूरिति ऋग्वेदो भुव इति यजुर्वेदः स्वरिति सामवेदः । भूरित्ययं लोको भुव इत्यन्तरिक्षं स्वरित्यसौ लोकः" ( ऐआ १.३.२ ) इति श्रुतेः । यद्वा– आहवनीयाद्यग्नित्रयनामानि । "भूरित्याहवनीयो भुव इति गार्हपत्य स्वरित्यन्वाहार्यपचनः" इति श्रुतेः । यद्वा– अग्न्यादिदेवतानामानि । "भूरित्यग्निः भुव इति वायुः स्वरित्यादित्यः" ( तैआ ७.५.२) इत्यादि श्रुतेः । "तदाहुः– यन्नर्चा न साम्ना न यजुषाऽग्निराधीयतेऽथ केनाधीयते" ( शब्रा २.१.४.१० ) इत्याधानकाण्डादौ व्याहृतीनां भूयान्महिमाऽवगम्यते । अत्र तु–"एकशतमेकशतं काचानावयन्ति शतायुर्वै पुरुष आत्मैकशत आयुष्येवात्मन् प्रतितिष्ठति । भूर्भुवः सुवरिति प्राजापत्याभिरावयन्ति । प्राजापत्योऽश्वः स्वयैवैनं देवतया समर्धयन्ति" ( शब्रा १३.२.६.८ ) इति ब्राह्मणोक्तेः ॥ प्रजापतिपरत्वेन व्याख्यायते । व्याहृतीनां प्राजापत्यत्वं प्रजापतिदृष्टत्वेन । हे अश्व, त्वं $^{V}$भूः असि प्रजापतिरसि । त्वां मणिभिरावयामि। हे अश्व, त्वं $^{V}$भुवः असि । प्रजापतिरसि । त्वां मणिभिरावयामि । हे अश्व, त्वं $^{V}$स्वः असि । त्वं प्रजापतिरसि । त्वां मणिभिरावयामि स्रष्टृसृज्ययोरभेदोपचारात् अश्वस्य प्रजापतित्वमित्यवधेयम् ॥

---

1. S3 °पुष्पेषु वाचयन्ति for °पुच्छेष्वावयन्ति; S3 पाठस्तु– भुवः ... प्रजापत इति for 'भूः भुव स्वः' इति
6. V2 °विकारः for °विकार°
14. M4 भुवः for स्वः
15. M4 P2 °देव° for °वेद°

कात्यायनः – " अश्वाय रात्रिहुतशेषं प्रयच्छति लाजी३ञ्छाची३निति " ( काश्रौ २०.५.१८ )। सक्तुधानालाजादिरूपं रात्रिहुतशेषमश्वाय ददाति भक्षयाय । अश्वो नान्तिके चेत् जले प्रक्षिपेत् इत्यर्थः ॥ 'लाजीञ्छाचीन्' अश्वदेवत्यं यजुः । vलाजीन् लाजान् । vशाचीन् सक्तून् । वर्णव्यत्ययश्छान्दसः । vयव्ये यव्यं धानासमूहम् । vगव्ये गव्यं दध्यादि । विभक्तिव्यत्ययः । एतत्सर्वमश्वायोपहरामीति शेषः । उपहरणं न केवलमश्वार्थम् । किं तर्हि ? अन्यार्थमपीत्याह– 'एतत्' इत्यादिना । हे vदेवाः, vएतत् vअन्नं मयोपहृतम् vअत्त भक्षयत । एवं सामान्येन देवेभ्यो दत्वा अवयुत्या प्राधान्यात् प्रजापतये प्रयच्छति– 'एतत्' इति । हे vप्रजापते, अश्वमेधस्वामिन्, त्वम् vएतदन्नम् vअद्धि भक्षय । अद भक्षणे । 'लाजी३ञ्छाची३न्' इत्यत्र अनामन्त्रणे प्लुतश्छान्दसः । एषोऽर्थो ब्राह्मणे– " लाजी३ञ्छा३चीन् यव्ये गव्य इत्यतिरिक्तमन्नमश्वायोपावहरति । प्रजामेवान्नादीं कुरुते । एतदन्नमत्त देवा एतदन्नमद्धि प्रजापत इति प्रजामेवान्नाद्येन समर्धयति " ( शब्रा १३.२.६.८ ) इति ॥

---

कः स्विदेकाकी चरति क उ स्विज्जायते पुनः ।
किंस्विद्धिमस्य भेषजं किम्वावपनं महत् ॥६॥

---

कः । स्वित् । एकाकी । चरति । कः । ऊँ इत्यूँ । स्वित् । जायते । पुनरिति पुनः ।
किम् । स्वित् । हिमस्य । भेषजम् ।
किम् । ऊँ इत्यूँ । आवपनमित्याऽवपनम् । महत् ॥ दैं ॥६॥

---

आ– ब्रह्मा पृच्छति होतारं यूपमभितः– 'कः स्विदेकाकी चरति' इति । चतस्रोऽनुष्टुभः प्रश्नप्रतिप्रश्नभूताः ब्रह्मोद्यहोतुर्ब्राह्मणश्च । 'कः स्विदेकाकीः चरति' । vएकाकी असहायः । vकः vस्वित् इति प्रश्ने । vचरति गच्छति । 'क उ स्विज्जायते पुनः' । vकः vस्वित् विनष्टः सन् । उकारः पादपूरणार्थे । vपुनः vजायते [ उत्पद्यते ] । 'किंस्वित् हिमस्य भेषजम्' । vहिमस्य vभेषजं vकिं vस्वित् । [ स्वित् ] वितर्के । 'किम्वावपनं महत्' । आ उप्यतेऽस्मिन्निति आवपनम् । vमहत् बृहत् vआवपनं vकिम् vउ ॥९॥

---

अ– कात्यायनः – " ब्रह्मा पृच्छति होतारं यूपमभितः कः स्विदेकाकी " ( काश्रौ २०.५.२० ) इति । यूपस्य दक्षिणतः उदङ्मुखो ब्रह्मा यूपोत्तरतो दक्षिणामुखं होतारं पृच्छतीत्यर्थः ।

---

16. S3 पाठस्तु– कः स्विद् ... महदिति for कः स्विदेकाकी चरतीति
18. V2 केनचिद् for कः स्विद्
19. V2 वा पुनः क उ स्विज्जायते for पुनः जायते [ उत्पद्यते ]।

'कः स्विदेकाकी चरति'। ब्रह्मोद्ये कर्मणि होतुः ब्रह्मणश्च प्रश्नप्रतिप्रश्नभूताश्चतस्रोऽनुष्टुभः। 'स्वित्' इति वितर्के प्रश्ने च। हे होतः, Vएकाकी असहायः Vकः Vचरति Vस्वित्। तथा Vकः Vउ। Vस्वित् विनष्टः सन् Vपुनः Vजायते। Vकिं Vस्वित् Vहिमस्य नीहारस्य शीतस्य वा Vभेषजम् औषधम्। तथा Vकिम् Vउ स्वित् Vमहत् Vआवपनम्। आसमन्तादुप्यते यस्मिंस्तत् ॥६॥

---

सूर्यं एकाकी चरति चन्द्रमा जायते पुनः।
अग्निर्हिमस्य भेषजं भूमिरावपनं महत् ॥७॥

---

सूर्यः। एकाकी। चरति। चन्द्रमाः। जायते। पुनरिति पुनः।
अग्निः। हिमस्य। भेषजम्। भूमिः। आवपनमित्याऽवपनम्। महत् ॥ ङ्गिं ॥७॥

---

आ– होता ब्राह्मणं प्रत्याह– 'सूर्य एकाकी' इति। Vसूर्यः Vएकाकी Vचरति, इति आद्यप्रश्नोत्तरम्। Vचन्द्रमाः Vजायते Vपुनः, इति द्वितीयप्रश्नोत्तरम्। Vअग्निः Vहिमस्य शीतस्य Vभेषजम्। 'भूमिरावपनं महत्'। Vभूमिः अत्र लोके Vमहत् Vआवपनं बीजावापक्षेत्रम् ॥१०॥

---

अ– कात्यायनः– "सूर्य इत्याचष्टे" (काश्रौ २०.५.२१)। होतैवं पृष्टो ब्रह्माणं प्रत्याहेत्यर्थः॥

'सूर्यं एकाकी चरति'। Vसूर्यः अम्बरे असहायो गच्छति। Vचन्द्रमाः कृष्णपक्षे क्षीणः Vपुनः शुक्लपक्षे Vजायते कलाभिरुपचीयते। Vहिमस्य Vभेषजम् Vअग्निः। Vभूमिः अयं लोकः Vमहत् Vआवपनम् आवापस्थानम्। एषोऽर्थो ब्राह्मणे– "अप वा एतस्मात् तेजो ब्रह्मवर्चसं क्रामति योऽश्वमेधेन यजते। होता च ब्रह्मा च ब्रह्मोद्यं वदतः। आग्नेयो वै होता बार्हस्पत्यो ब्रह्मा ब्रह्म बृहस्पतिस्तेजश्चैवास्मिन् ब्रह्मवर्चसं च समीची धत्तो यूपमभितो वदतो यजमानो वै यूपो यजमानमेवैतत् तेजसा च ब्रह्मवर्चसेन चोभयतः परिधत्तः। कः स्विदेकाकी चरतीत्यसौ वा आदित्य एकाकी चरत्येष ब्रह्मवर्चसं ब्रह्मवर्चसमेवास्मिंस्तद्धत्तः। क उ स्विज्जायते पुनरिति चन्द्रमा वै जायते पुनरायुरेवास्मिंस्तद्धत्तः। किंस्विद्धिमस्य भेषजमित्यग्निर्वै हिमस्य भेषजं तेज एवास्मिंस्तद्धत्तः। किम्वावपनं महदित्ययं वै लोक आवपनं महदस्मिन्नेव लोके प्रतितिष्ठति" (शब्रा १३.२.६.९-१३) इति ॥७॥

---

3. V2 om. शीतस्य
9. S3 पाठस्तु– सूर्य एकाकी ... महदिति for सूर्य एकाकीति
10. S2 om. शीतस्य
16. M4 क्रामयति for क्रामति
17. M4 om. ब्रह्मा

का स्विदासीत् पूर्वचित्तिः किꣳ स्विदासीद्बृहद्वयः ।
का स्विदासीत् पिलिप्पिला का स्विदासीत् पिशङ्गिला ॥८॥

का । स्वित् । आसीत् । पूर्वचित्तिरिति पूर्वऽचित्तिः ।
किम् । स्वित् । आसीत् । बृहत् । वयः ।
का । स्वित् । आसीत् । पिलिप्पिला ।
का । स्वित् । आसीत् । पिशङ्गिला ॥ खैं ॥८॥

भा– स होता ब्रह्माणं पृच्छति– ' का स्विदासीत् पूर्वचित्तिः ' इति । पूर्वैः सर्वैः प्राणिभिश्चिन्त्यत इति पूर्वचित्तिः । सा का स्वित् ? किं-शब्दः प्रश्ने । स्विदिति वितर्के । उभयमपि निमित्तप्रश्नार्थमेव वक्ति । ' किं स्विदासीद्बृहद्वयः ' । जीवनहेतुर्महान् कालो वयः बृहत् वयः, तद्वत् किं स्वित् ? ' का स्विदासीत् पिलिप्पिला ' इति । का स्वित् पिलिप्पिला, एवमनुकारशब्दयुक्ता का आसीत् ? का स्वित् आसीत् पिशङ्गिला इति ॥१॥

अ– कात्यायनः – "होता ब्रह्माणं का स्विदासीदिति" ( काश्रौ २०.५.२२ ) । पृच्छतीति शषः । ' का स्वित् आसीत् पूर्वचित्तिः ' । पूर्वं चिन्त्यत इति पूर्वचित्तिः, सर्वेषां प्रथमं स्मृतिविषया, का स्वित् आसीत् ? बृहत् वयः महान् पक्षी, किं स्वित् आसीत् ? पिलिप्पिला का स्वित् आसीत् ? पिशङ्गिला च का स्वित् आसीत् ? ॥८॥

द्यौरासीत् पूर्वचित्तिरश्व आसीद् बृहद्वयः ।
अविरासीत् पिलिप्पिला रात्रिरासीत् पिशङ्गिला ॥९॥(३)॥

द्यौः । आसीत् । पूर्वचित्तिरिति पूर्वऽचित्तिः । अश्वः । आसीत् । बृहत् । वयः ।
अविः । आसीत् । पिलिप्पिला । रात्रिः । आसीत् । । पिशङ्गिला ॥ क्रीं ॥९॥ (३)॥

7. S3 पाठस्तु– का स्विदासीत् ... पिशङ्गिलेति for ' का स्विदासीत् पूर्वचित्तिः ' इति ॥

आ– एवं ब्रह्मोक्तो होतारं प्रत्याह । ब्रह्मा– ‘ द्यौरासीत् पूर्वचित्तिः ’ इति । द्युशब्देनात्र वृष्टिर्लक्ष्यते । वृष्टिर्हि vपूर्वचित्तिः vआसीत् । आदिः पूर्वः । सर्वैः प्राणिभिश्च प्रार्थ्यत इति वृष्टिः पूर्वचित्तिरासीत् । “ द्यौर्वै वृष्टिः पूर्वचित्तिः ” ( शब्रा १३·२·६·१४ ) इति श्रुतेः । ‘ अश्वः आसीत् बृहत् वयः ’ । vअश्वः vबृहत् vवयः vआसीत् । अनेन ह्यश्वमेधिनः स्वर्गं लोकमेत्य तत्र बृहद्वय आयुरेवावरुन्धते । ‘ अविः आसीत् पिलिप्पिला ’ भवतीति । vअविः इति पृथिव्यभिधीयते । पृथिवी vपिलिप्पिला । “ श्रीर्वै पिलिप्पिला ” ( शब्रा १३·२·६·१६ ) इति श्रुतेः । वृष्ट्यादि[भिः] क्लिद्यमाना पृथिवी पिलिप्पिला भवतीति वा । एवं शब्दानुकारवती सस्यादिसंपत्त्या शोभावती भूः पिलिप्पिला vआसीत् इति । ‘ रात्रिः आसीत् पिशङ्गिला ’ । पिशशब्दो रूपवचनः । vरात्रिः हि सर्वाणि पिशानि रूपाणि गिलति अदृश्यानि करोतीति vपिशङ्गिला रात्रिः vआसीत् ॥१२॥

अ– कात्यायनः– “ द्यौरिति प्रत्याह ” ( काश्रौ २०.५.२३ ) ब्रह्मा होतारं प्रति वक्तीत्यर्थः । ‘ द्यौरासीत् पूर्वचित्तिः ’ । सर्वेषां प्रथमस्मृतिविषया vद्यौः वृष्टिः vआसीत् । द्यौशब्देन वृष्टिर्लक्ष्यते, सर्वेषां प्राणिनामिष्टत्वात् । vअश्वः vबृहत् vवयः vआसीत् । अश्वशब्देनाश्वमेधो लक्ष्यते । अश्वमेधेन वयसेव स्वर्गमारोहतीत्यश्वमेधो वयः । अवतीति vअविः पृथिवी श्रीर्वा vपिलिप्पिला vआसीत् । वृष्ट्या भूः पिलिप्पिला चिक्कणा भवति । श्रीश्च संपदा पिलिप्पिला भवति । vरात्रिः vपिशङ्गिला । पिशमिति रूपनाम । पिशं रूपं गिलतीति पिशङ्गिला । रात्रौ हि सर्वाणि रूपाण्यन्तर्हितानि भवन्ति । एषोऽर्थो ब्राह्मणे – “ का स्विदासीत् पूर्वचित्तिरिति । द्यौर्वै वृष्टिः पूर्वचित्तिर्दिवमेव वृष्टिमवरुन्द्धे । कि स्विदासीद्बृहद्वय इत्यश्वो वै बृहद्वय आयुरेवावरुन्द्धे । का स्विदासीत् पिलिप्पिलेति श्रीर्वै पिलिप्पिला श्रियमेवावरुन्द्धे । का स्विदासीत् पिशङ्गिलेत्यहोरात्रे वै पिशङ्गिले अहोरात्रयोरेव प्रतितिष्ठति ” ( शब्रा १३.२.६.१४-१७ ) इति ॥१॥

इति श्रीमद्वेदार्थदीपिकायां पञ्चविंशे तृतीयोऽनुवाकः ॥३॥

## [ अथ चतुर्थोऽनुवाकः । ]

वायुष्ट्वा पचतैरवत्वसितग्रीवश्छागैः ।
न्यग्रोधश्चमसैः शल्मलिर्वृद्ध्या ॥१॥

वायुः । त्वा । पचतैः । अवतु । असितग्रीव इत्यसितऽग्रीवः । छागैः ।
न्यग्रोधः । चमसैः । शल्मलिः । वृद्ध्या ॥ खं ॥१॥

1. S3 पाठस्तु– द्यौरासीत् ... पिशङ्गिलेति for ‘ द्यौरासीत् पूर्वचित्तिः ’ इति
5. V2 बृहद्वायुरव°, S3 बृहद्वायुस्त्वरव° for बृहद्वय आयुरेवाव°

आ– अश्वं प्रोक्षति– ‘ वायुष्ट्वा पचतैरवतु ’ इति। लिङ्गोक्तदेवत्या गायत्री। ‘ पचतैः ’। अग्निसंयोगात् $^{V}$पचतैः पाकैः $^{V}$वायुः अश्वं त्वाम् $^{V}$अवतु रक्षतु। ‘ असितग्रीवश्छागैः ’। $^{V}$असितग्रीवः कृष्णग्रीवः अग्निः। धूमसंयोगादग्निरसितग्रीवो भवति। अश्वाङ्गभूतैः $^{V}$छागैः कृष्णग्रीवादिपर्यङ्गयैः, अश्वाङ्गेष्वालभ्यमानेषु अश्वायोपकुर्वन्ति। अश्वम् अग्निः पचति। ‘ न्यग्रोधः चमसैः ’। $^{V}$न्यग्रोधः बहुपात्। $^{V}$चमसैः स्वविकारैः रसवद्द्रव्यैः अश्वं त्वाम् अवतु। ‘ शल्मलिः वृद्धया ’। $^{V}$शल्मलिः स्थिरायुः, $^{V}$वृद्धया स्वकीयया उन्नत्या अश्वम् अवतु ॥१३॥

---

अ – कात्यायनः – “ अश्वप्रोक्षणमद्भयस्त्वा वायुष्ट्वेति ” ( काश्रौ २०.६.७ )। ‘ अद्भयस्त्वौषधीभ्यः प्रोक्षामि इति सौमिकेन मन्त्रेण ‘ वायुष्ट्वा ’ इत्यारभ्य ‘ देवः सविता दधातु ’ इति पञ्चकण्डिकात्मकेनाश्वमेधिकेन च अश्वप्रोक्षणं करोतीति सूत्रार्थः ॥

‘ वायुष्ट्वा पचतैरवतु ’। पञ्चापि मन्त्रा अश्वदेवत्याः अनुष्टुभः। हे अश्व, $^{V}$वायुः, $^{V}$पचतैः पाकैः। पचतेः “ भृमृदृशियजिपर्विपच्यमितमिनमिहर्येभ्योऽतच् ” ( उसू ३.९७ ) इत्यतच्प्रत्ययः। “ भूतेऽपि दृश्यन्ते ” ( पा ३.३.२ ) इति भूतार्थः। $^{V}$त्वा त्वाम् $^{V}$अवतु। वायुसंयोगादग्निः शीघ्रं पचति। तथा $^{V}$असितग्रीवः धूमेनासिता ग्रीवा यस्य सः तथाऽग्निः $^{V}$छागैः त्वामवतु। “ अग्निर्वा असितग्रीवः ” ( शब्रा १३.२.७.२ ) इति श्रुतेः। “ कृष्णग्रीव आग्नेयो रराटे ” ( कासं २६.१.१ ) इति वक्ष्यमाणत्वाद् अश्वमेधाङ्गेषु कृष्णग्रीवादयः पञ्चदश पर्यङ्ग्याः पशवः सन्ति। तैः पशुभिरग्निस्त्वामवत्वित्यर्थः। तथा $^{V}$न्यग्रोधः वृक्षः $^{V}$चमसैः सोमपात्रैः त्वामवतु। तथा $^{V}$शल्मलिः वृक्षविशेषः, $^{V}$वृद्धया वर्धनेन त्वामवतु। शल्मलिर्हि बहुलं वर्धते। एषोऽर्थो ब्राह्मणे – “ नियुक्तेषु पशुषु प्रोक्षणीरध्वर्युरादत्तेऽश्वं प्रोक्षिष्यन्नन्वारब्धे यजमान आध्वरिकं यजुरनुद्रुत्याश्वमेधिकं यजुः प्रतिपद्यते। वायुष्ट्वा पचतैरवत्विति वायुरेवैनं पचत्यसितग्रीवश्छागैरित्यग्निर्वा असितग्रीवोऽग्निरेवैनं छागैः पचति। न्यग्रोधश्चमसैरिति। यत्र वै देवा यज्ञेनायजन्त त एतांश्चमसान् न्यौब्जंस्ते न्यञ्चोऽरोहस्तस्मान्न्यञ्चो न्यग्रोधा रोहन्ति। शल्मलिर्वृद्धयेति। शल्मलौ वृद्धिं दधाति। तस्माच्छल्मलिर्वनस्पतीनां वर्षिष्ठं वर्धते ” ( शब्रा १३.२.७.१-४ ) इति ॥१॥

---

**ए॒ष स्य रा॒थ्यो वृषा॑ प॒ड्भिश्च॒तुर्भि॒रेद॑गन् ।**
**ब्र॒ह्माऽकृ॑ष्णश्च नोऽवतु॒ नमो॒ऽग्नये॑ ॥२॥**

---

1. S3 पाठस्तु– वायुष्ट्वा ... वृध्येति for “ वायुष्ट्वा पचतैरवतु ” इति।
2. S3 अश्वं for अश्वम्
15. M4 कृच्छ्र° for कृष्ण°; M4 पर्यन्ताः for पर्यङ्ग्याः
21. M4 शाल्मलिः for शल्मलिः; M4 शाल्मलौ for शल्मलौ
22. M4 शाल्मलिः for शल्मलिः

एषः । स्यः । राथ्यः । वृषा ।
पड्भिरिति पट्ऽभिः । चतुर्भिरिति चतुःऽभिः । आ । इत् । अगन् ।
ब्रह्मा । अकृष्णः । च । नः । अवतु । नमः । अग्नये ॥ इत्यौं ॥२॥

आ– ' एष स्य राथ्यो वृषाः ' इति । लिङ्गोक्तदेवत्योष्णिक् । ' एष स्यः ' । त्यच्छब्दस्य रूपं स्य इति । vस्यः सः vएषः vराथ्यः रथसंबन्धी vवृषा वीर्यसेचनदक्षः vपड्भिः पादैः vचतुर्भिः vआ vइत् । इत् एवार्थे । vअगन् अग्रतश्चतुर्भिः पादैः, स राथ्यो वृषा च एष आगतः । ' ब्रह्माऽकृष्णश्च नोऽवतु '। कृष्णो वर्णो न विद्यते अस्येति vअकृष्णः चन्द्रमाः । vब्रह्मा अकृष्णश्चन्द्रमाः vनः अस्मान् vअवतु । यद्वा– नः अस्माकं मखं ब्रह्मा चतुर्मुख अवतु । अकृष्णश्चन्द्रमाश्च अवतु । ' नमः अग्नये ' । vनमः vअग्नये इत्यग्निं नमस्करोति ॥१४॥

अ– ' एष स्य राथ्यः वृषा ' । vस्यः सः vएषः vवृषा सेक्ताश्वः vराथ्यः रथे साधुः सन् vचतुर्भिः vपड्भिः पद्भिः पादैः । दन्त्यस्य मूर्धन्यभावश्छान्दसः । 'आ इत् अगन्' । vआ vइत् vअगन् इति पदच्छेदः । आजगाम । अश्वो हि त्रिभिः पादैस्तिष्ठति । चतुर्भिश्च गच्छतीति चतुर्ग्रहणम् । किंच– vअकृष्णः, नास्ति कृष्णं लाञ्छनं यस्मिन् स तथा । vब्रह्मा चन्द्रमाः परमात्मा वा वेदो वा vनः अस्मान् vअवतु । ' अग्नये नमः ' । vनमः नमस्कारोऽस्तु । एषोऽर्थो ब्राह्मणे– " एष स्य राथ्यो वृषेत्यश्वेनैव रथ९ संपादयति तस्मादश्वो नान्यद्रथाद्वहति । पड्भिश्चतुर्भिरेदगन्निति तस्मादश्वस्त्रिभिस्तिष्ठ९स्त्यथ युक्तः सर्वैः पड्भिः सममायुते । ब्रह्माऽकृष्णश्च वैनं नोऽवत्विति । चन्द्रमा वै ब्रह्माऽकृष्णश्चन्द्रमस एवैनं परिददाति नमोऽग्नय इत्यग्नय एव नमस्करोति " ( शब्रा १३.२.७.५-७ ) इति ॥२॥

सं९शितो रश्मिना रथः सं९शितो रश्मिना हयः ।
सं९शितो अप्स्वप्सुजा ब्रह्मा सोमपुरोगवः ॥३॥

4. S3 पाठस्तु– एष स्य ... नमोऽग्नय इति for ' एष स्य राथ्यो वृषा ' इति ।
6. S3 V2 पद्भिः for पड्भिः
16. M4 वान्यरथाद् for नान्यद रथाद्; M4 पद्भिः for पड्भिः

सꣳ शि॑त॒ इ॒ति॒ सम्ऽशि॑तः । र॒श्मिना॑ । रथः॑ ।

सꣳ शि॑त॒ इ॒ति॒ सम्ऽशि॑तः । र॒श्मिना॑ । हयः॑ ।

सꣳ शि॑त॒ इ॒ति॒ सम्ऽशि॑तः । अ॒प्स्वित्य॒प्ऽसु । अ॒प्सु॒जा इत्य॑प्सु॒ऽजाः ।

ब्र॒ह्मा । सोम॑पुरोगव॒ इ॒ति॒ सोम॑ऽपुरोगवः ॥ स्त्रां ॥३॥

~~~~~~~~~~~~~~~~~~~~~~

आ– ‘ सꣳशितो रश्मिना ’ । सꣳशितादयस्तिस्रोऽग्निदेवत्या अनुष्टुप् [विराट्] त्रिष्टुभः । ‘ सꣳशितो रश्मिना ’ । संपूर्वः शितिः शोभनार्थे वर्तते । vरश्मिना तत्रोचितरज्ज्वा युक्तः vरथः vसंशितः दर्शनीयतमो भवति । ‘ संशितो रश्मिना हयः ’ । vरश्मिना तत्रोचितरज्ज्वा आबद्धो भूयिष्ठं रोचते अभितः संशोभते । vअप्सुजाः । “ विड्वनोरनुनासिकस्य आत् ” ( पा ६.४.४१ ) इत्याकारदेशः । अप्सु जातो ह्यश्वः स्वयोन्यां समृद्धोऽतितरां शोभते । ‘ ब्रह्मा सोमपुरोगवः ’ इति । vब्रह्मा– बिभर्तीति ब्रह्मा । सोमं पुरस्कृत्य गच्छतीति vसोमपुरोगवः । सोमसंस्कारार्थाः पशव इति ॥१५॥

~~~~~~~~~~~~~~~~~~~~~~

अ– ‘ सꣳशितो रश्मिना रथः ’ । अश्वदेवत्याऽनुष्टुप् । संपूर्वः श्यतिधातुः शोभनार्थः । vरथः vरश्मिना कृत्वा vसंशितः दर्शनीयो भवति । तथा vहयः vरश्मिना vसंशितः शोभितो भवति । vअप्सुजाः, अप्सु जायत इत्यप्सुजाः । जातिविशेषोऽश्वोऽपि vअप्सु अद्भिः vसंशितः क्षालनेन शोभितो भवति । तथा vब्रह्मा वेदः ब्राह्मणो वा vसोमपुरोगवः, सोमः पुरोगवः पुरोगमो यस्य स तथा । वकार आर्षः । सोमसंबद्धः सन् संशितो भवतीति पूर्वेणान्वयः । एषोऽर्थो ब्राह्मणे– “ सꣳशितो रश्मिना रथ इति । रश्मिनैव रथं संपादयति । तस्माद्रथः पर्युतो दर्शनीयतमो भवति । सꣳशितो रश्मिना हय इति । रश्मिनैवाश्वं संपादयति तस्मादश्वो रश्मिना प्रतिहृतो भूयिष्ठं रोचते । सꣳशितो अप्स्वप्सुजा इत्यप्सु योनिर्वा अश्वः स्वयैवैनं योन्या समर्धयति ब्रह्मा सोमपुरोगव इति सोमपुरोगवमेवैनꣳ स्वर्गं लोकं गमयति ” ( शब्रा १३·२·७·१० ) इति ॥३॥

~~~~~~~~~~~~~~~~~~~~~~

**स्व॒यं वा॑जि॒ꣳस्त॒न्वं॑ कल्पयस्व स्व॒यं य॑जस्व स्व॒यं जु॑षस्व ।**

**म॒हि॒मा ते॒ऽन्येन॒ न सं॒नशे॑ ॥४॥**

~~~~~~~~~~~~~~~~~~~~~~

5. S3 पाठस्तु– सꣳशितो ... पुरोगव इति for सꣳशितो रश्मिना

8. S3 अप्स्विति for अभितः

16. M4 °संबन्धः for °संबद्धः

17. M4 after भवति ins. इति

स्वयम् । वाजिन् । तन्वम् । कल्पयस्व । स्वयम् । यजस्व । स्वयम् । जुषस्व ।
महिमा । ते । अन्येन । न । सन्नश इति सम्ऽनशे ॥ ह्रीं ॥४॥

---

आ– किं च– । ' स्वयं वाजिन् ' इति । हे $^{v}$वाजिन्, $^{v}$स्वयं स्वयमेव $^{v}$तन्वं शरीरं $^{v}$कल्पयस्व स्वयमेव रूपं कुरुष्व । तव यादृशं रूपमस्ति तादृक् रूपं कुरुष्व । एवं समर्थोऽसि इति श्रुतेः । अत एव $^{v}$स्वयं $^{v}$यजस्व । न ते अन्य ईदृगस्तीत्यभिप्रायः । ' स्वयं जुषस्व ' । अत एव $^{v}$स्वयम् एवात्मानं $^{v}$जुषस्व सेवस्व, यथाऽभिरुचितं जुषस्व । अपि च ' महिमा तेऽन्येन ' । $^{v}$ते तव $^{v}$महिमा माहात्म्यम् $^{v}$अन्येन महिम्ना $^{v}$न $^{v}$संनशे । नश अदर्शने । नाशं न प्राप्नोति । सर्वथा तव महिमा वर्धते । न नश्यतीत्यभिप्रायः । वेदे तु नशिर्व्याप्त्यर्थोऽपि भवति, न व्याप्यते ॥१६॥

---

अ– ' स्वयं वाजिन् ' । अश्वदेवत्या विराट् । हे $^{v}$वाजिन्, $^{v}$तन्वं शरीरं $^{v}$स्वयं $^{v}$कल्पयस्व स्वेच्छाधीनं कुरुष्व, यादृशमिच्छसि तादृशमित्यर्थः । अतः $^{v}$स्वयं $^{v}$यजस्व । न तवान्यो यष्टाऽस्ति । $^{v}$स्वयं $^{v}$जुषस्व इष्टं स्थानं सेवस्व । यतः $^{v}$ते तव $^{v}$महिमा $^{v}$अन्येन अन्यदीयमहिम्ना $^{v}$न $^{v}$संनशे न संनश्यते, नातिक्रम्यते । सर्वोत्कृष्टस्तव महिमेत्यर्थः । तलोपे यलोपे च नशे इति रूपम् । एषोऽर्थो ब्राह्मणे– " स्वयं वाजिंस्तन्वं कल्पयस्वेति स्वयं रूपं कुरुष्व यादृशमिच्छसीत्येनं तदाह स्वयं यजस्वेति स्वाराज्यमेवास्मिन् दधाति । स्वयं जुषस्वेति स्वयं लोकं रोचयस्व यावन्तमिच्छसीत्येवैनं तदाह महिमा तेऽन्येन न संनश इत्यश्वमेव महिम्ना समर्धयति " ( शब्रा १३.२.७.११ ) इति ॥

परमात्मपरत्वे तु वाजोऽन्नं विद्यते यस्य स वाजी । तत्संबोधनं हे वाजिन्, हे सर्वयज्ञभोक्तः, त्वं तन्वं शरीरमवताररूपं स्वयं स्वरूपभूतं कल्पयस्व । ते चावताररूपाणि, न कर्मानुबन्धीनीत्यर्थः । शिष्टमुक्तार्थम् ॥४॥

---

न वा उं एतन्म्रियसे न रिष्यसि देवाँ२ इदेषि पथिभिः सुगेभिः ।
यत्रासते सुकृतो यत्र ते ययुस्तत्र त्वा देवः सविता दधातु ॥५॥

---

न । वै । ऊँ इत्यूँ । एतत् । म्रियसे । न । रिष्यसि ।
देवान् । इत् । एषि । पथिभिरिति पथिऽभिः । सुगेभिरिति सुऽगेभिः ।
यत्र । आसते । सुकृत इति सुऽकृतः । यत्र । ते । ययुः ।
तत्र । त्वा । देवः । सविता । दधातु ॥ न्यीः ॥५॥

---

3. S3 पाठस्तु– स्वयं वाजिन् ... संनश इति for स्वयं वाजिन्निति

आ– ' न वै ' इति । vन vवै vउँ अपि vएतत् एतस्मिन् vम्रियसे, vन वै vरिष्यसि । संज्ञपनविधानेन मृत्वाऽपि त्वं न रिष्यसि, न वै विनश्यसि । किमिति ? vदेवान् vइत् प्रति vएषि गच्छसि । vपथिभिः मार्गैः vसुगेभिः साधुगमनैः देवयानैः मार्गैः । देवयानैरेव गच्छसि हि । किं च– ' यत्राऽऽसते सुकृतो यत्र ते ययुः ' । vसुकृतः, पूर्वं साधुकारिणः vयत्र यस्मिन् स्थाने vआसते निवसन्ति, ये सत्कर्मकारिणः vते यत्र यत् स्थानं vययुः प्राप्नुयुः । ' तत्र त्वा देवः सविता दधातु ' । vतत्र स्वर्गं लोकं vसविता vएव vदेवः एनमश्वं vत्वा vदधातु स्थापयतु ॥१७॥

---

अ– ' न वा उ एतत् ' । अश्वदेवत्या त्रिष्टुप् । हे अश्व, अस्माभिर्यस्त्वं संज्ञप्यसे, vएतत् त्वं vन vम्रियसे मरणं पृथग्जनवन्नाप्नोषि । ' न रिष्यसि च ' । विशस्यमानो न विनश्यसि । ' वै उँ ' निपातौ सत्यार्थकौ । यत् यतः vसुगेभिः सुगैः । भिस– ऐस् भावश्छान्दसः । सुखेन गम्यते येषु ते सुगाः, तैः । " सुदुरोरधिकरणे " ( पा ३.२.४८ वा ३) इति गमेर्डप्रत्ययः । साधुगमनैः पथिभिः देवयानमार्गैः vदेवान् इत् । देवान् प्रति एषि गच्छति । इण् गतौ । किं च– vसुकृतः साधुकारिणो नराः अतिधर्मपराः vयत्र लोके vआसते तिष्ठन्ति, vयत्र ततोऽपि श्रेष्ठे लोके vते सुकृतः vययुः गताः । vतत्र लोके vसविता सर्वस्य प्रेरको देवः vत्वा त्वां vदधातु स्थापयतु । एषोऽर्थो ब्राह्मणे– " न वा उ एतन्म्रियसे न रिष्यसीति प्रश्वासयत्येवैनं तद्देवाँ इदेषि पथिभिः सुगेभिरिति देवयानानेवैनं पथो दर्शयति यत्रासते सुकृतो यत्र ते ययुरिति सुकृद्भिरेवैनꣳ सलोकं करोति तत्र त्वा देवः सविता दधात्विति सवितैवैनꣳ स्वर्गे लोके दधाति " (शब्रा १३.२.७.१२) इति ॥५॥

---

अग्निः पशुरासीत् तेनायजन्त स एतँ लोकमजयद्यस्मिन्नग्निः ।
स ते लोको भविष्यति तं जेष्यसि पिबैता अपः ।
वायुः पशुरासीत् तेनायजन्त स एतꣳ लोकमजयद्यास्मिन् वायुः ।
स ते लोको भविष्यति तं जेष्यसि पिबैता अपः ।
सूर्यः पशुरासीत् तेनायजन्त स एतँ लोकमजयद्यस्मिन्त्सूर्यः ।
स ते लोको भविष्यति तं जेष्यसि पिबैता अपः ॥६॥ (४) ॥

---

1. S3 पाठस्तु– न वा उ ... दधात्विति for ' न वै ' इति ।
6. V2 एतम् for एनम्

अग्निः । पशुः । आसीत् । तेन॑ । अयजन्त ।

सः । एतम् । लोकम् । अजयत् । यस्मि॑न् । अग्निः ।

सः । ते । लोकः । भविष्यति । तम् । जेष्यसि । पिब॑ । एताः । अपः ।

वायुः ।

सूर्य॑ः ॥ त्रिः ॥६॥ (४)

---

आ – अपि च – ‘ अग्निः पशुः ’ इति । पुरा किल साध्यानां यज्ञे vअग्निः vपशुः vआसीत् । सोऽग्निस्तत्र साधनतामुपगतः । vतेन पशुना साध्या नाम देवाः vअयजन्त यज्ञं कृतवन्तः । ‘ स एतं लोकमजयत् यस्मिन्नग्निः ’ । vसः vअग्निः vयस्मिन् पशुरासीत् तम् vएतं पृथिवीलोकं vअजयत् । अत एव ‘ स ते लोको भविष्यति ’ । vते अश्वस्य तव, vसः पृथिवीलोकः vभविष्यति । vतं पृथिवीलोकं त्वं vजेष्यसि । अतस्त्वां ब्रवीमि– ‘ पिबैता अपः ’ । हे अश्व, vएताः प्रोक्षणीस्थाः vअपः त्वं vपिब । एवमेव vवायुः vपशुः vआसीत् । एवमेव vसूर्यः vपशुः vआसीत् इति । अस्यार्थं ब्राह्मणवाक्यं [स]विस्तरं व्याचष्टे – “ अग्निः पशुरासीत् तेनायजन्त स एतं लोकमयजद्यस्मिन्नग्निः स ते लोको भविष्यति तं जेष्यसि पिबैता अप इति यावानग्नेर्विजयो यावाँल्लोको यावदैश्वर्यं तावाँस्ते विजयस्तावाँल्लोकस्तावदैश्वर्यं भविष्यति ” ( शब्रा १३.२.७.१३ ) इति ॥१८॥

---

अ – कात्यायनः – “ उपगृह्णात्यपां पेरुरग्निः पशुरिति ” ( काश्रौ २०.६.८ ) । “ अपां पेरुः ” ( कासं ६.२.४ ) इति प्राकृतेन मन्त्रेण ‘ अग्निः पशुः ’ इति वैकृतेन च प्रोक्षणीरश्वास्ये उपगृह्णातीति सूत्रार्थः ।

‘ अग्निः पशुरासीत् ’ । अश्वदेवत्यानि त्रीणि यजूंषि । पुरा किल साध्यानां देवानां vअग्निः vपशुः vआसीत् । तेन vअग्निना पशुना ते vअयजन्त ईजिरे । vसः, पशुभावमुपगतोऽग्निः vएतं vलोकं पृथिवीलोकम् अग्निलोकं वा vअजयत् । vयस्मिन् लोके vअग्निः । हे अश्व, vसः vलोकः vते तव vभविष्यति । vतं लोकं त्वं vजेष्यसि । vएताः प्रोक्षणीः vअपः vपिब । एवमेव ‘ वायुः पशुः आसीत्, सूर्यः पशुः आसीत् ’ इति च व्याख्येयम् । वायुलोकोऽन्तरिक्षलोकः । स्वर्ग इति विशेषः । एषोऽर्थो ब्राह्मणे – “ अग्निः पशुरासीदिति । ... यावानग्नेर्विजयो यावाँल्लोको यावदैश्वर्यं तावाँस्ते विजयस्तावाँल्लोकस्तावदैश्वर्यं भविष्यतीत्येवैनं तदाह ” ( शब्रा १३.२.७.१३ ) इत्यादिना ॥६॥

इति वेदार्थदीपिकायां पञ्चविंशे चतुर्थोऽनुवाकः ॥४॥

---

6. S3 पाठस्तु– अग्निः ... पिबैता अपः । प्राणाय स्वाहापानाय स्वाहा व्यानाय स्वाहेति for ‘ अग्निः पशुः ’ इति

16. P2 om. वेदार्थदीपिकायां

[ अथ पञ्चमोऽनुवाकः । ]

प्राणाय स्वाहाऽपानाय स्वाहा व्यानाय स्वाहा ।
अम्बे अम्बिकेऽम्बालिके न मा नयति कश्चन ।
ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ॥१॥

---

अम्बे । अम्बिके । अम्बालिके । न । मा । नयति । कः । चन ।
ससस्ति । अश्वकः । सुभद्रिकामिति सुऽभद्रिकाम् ।
काम्पीलवासिनीमिति काम्पीलऽवासिनीम् ॥ किम् ॥१॥

---

आ– व्याख्यातसमानार्थे यजुषी । ‘ प्राणाय स्वाहाऽपानाय स्वाहा व्यानाय स्वाहा ’ इति संख्यायमाण आहुतीर्जुहोति । अपराः पत्नीर्वाचयति– ‘ अम्बे अम्बिके ’ इति । अनुष्टुप् । अश्वस्तुतिः । पत्न्यः परस्परमामन्त्रयन्ते– हे [V]अम्बे, हे [V]अम्बिके, हे [V]अम्बालिके । ‘ न मा नयति कश्चन ’ । अश्वं प्रति [V]मा मां [V]कः [V]चन पुमान् [V]न [V]नयति न प्रापयति । ‘ ससस्त्यश्वकः ’ । शस्ल स्वापे । [V]ससस्ति शेते । अन्यां परिगृह्य [V]अश्वकः [ कुत्सितः ] अश्वः । कुत्सिते कप्रत्ययः । ससस्ति शेते स्वापं करोति । [V]काम्पीलवासिनीं [V]सुभद्रिकाम् । सुभद्रामकुत्सितामन्यां परिगृह्य ससस्ति । यद्वा– तरुणोऽश्वः काम्पीलवासिनीं काम्पीलनगरवासिनीं सुकुमारीं परिगृह्य शेत इति । काम्पीलनगरे हि सुरूपाः सुभगाः स्त्रियो भवन्ति ॥१९॥

---

8. V2 °समनर्थे° for °समानार्थे ।
9. S3 अम्बे ... °वासिनीमिति for ‘अम्बे अम्बिके ’ इति ।
10. S2 V2 परमस्पदम् for परस्परम्

[ अश्वमेधमन्त्राः

अ- कात्यायनः - " परिपशव्ये हुत्वा प्राणाय स्वाहेति तिस्रोऽपराः " ( काश्रौ २०.६.११ )। 'परिपशव्ये स्वाहा, देवेभ्यो देवेभ्यः स्वाहा ' इति द्वे आहुती हुत्वा ' प्राणाय ' इत्याद्यास्तिस्र आहुतीर्जुहोति। एकामश्वसंज्ञापनादौ चतस्रोऽन्त इति सूत्रार्थः । ' प्राणाय स्वाहा '। त्रीणि यजूंषि । प्रकर्षेण अनिति चेष्टते चेष्टयते वा प्राणो वायुस्तस्मै स्वाहा सुहुतमस्तु । एवमपानितीत्यपानः तस्मै स्वाहा । वि अनितीति व्यानस्तस्मै स्वाहा। आभिराहुतिभिरश्वं प्राणवन्तं करोति । " प्राणाय स्वाहाऽपानाय स्वाहा व्यानाय स्वाहेति संज्ञप्यमान आहुतीर्जुहोति । प्राणानेवास्मिँस्तद्दधाति। तथो हास्यैतेन जीवतैव पशुनेष्टं भवति " ( द्र. शब्रा १३.२.८.२ ) इति ब्राह्मणात् ॥

कात्यायनः - " वाचयति पत्नीर्नयन्नमस्तेऽम्ब " ( काश्रौ २०.६.१२ ) इति । सर्वाः पत्नीः पशुशोधनाय पात्रेजनीहस्ताः पशून् प्रति नयन् " नमस्त आतान " ( कासं. ६.३.१ ) इति प्राकृतं मन्त्रम्, ' अम्ब ' इत्याश्वमेधिकं च वाचयत्यध्वर्युरिति सूत्रार्थः ॥

'अम्बे अम्बिके '। अश्वदेवत्याऽनुष्टुप् । पत्न्यः परस्परं वदन्ति- हे अम्बे, हे अम्बिके, हे अम्बालिके। नामान्येतानि तासाम् । कः चन कश्चित् नरः मा न नयति अश्वं प्रति न प्रापयति । तर्हि किमर्थं गम्यते ? तत्राह -' अश्वकः '। कुत्सितोऽश्वः अश्वकः । अकुत्सितोऽपीर्ष्यया कुत्स्यते। सुभद्रिकाम् । कुत्सिता सुभद्रा सुभद्रिका । ईर्ष्यया कुत्स्यते । कुत्सिते कप्रत्ययः । " प्रत्ययस्थात् कात्पूर्वस्यात इदाप्यसुपः " ( पा ७.३.४४ ) इतीकारः। तां नारीमादाय ससस्ति शेते शयिष्यते । सस् स्वप्न इति धातुर्ह्वादिः । ममानागमनेऽश्वोऽन्यामादाय शयिष्यत इति हेतोर्मया गम्यते । न तु बलात् मां कश्चिन्नयतीति भावः । किं भूतां सुभद्रिकाम् ? काम्पीलवासिनीम् । काम्पीले नगरे वसतीति काम्पीलवासिनी, ताम् । तत्र हि विविधाः सुरूपाः कामिन्यो भवन्ति । अतः पूर्वमेव गच्छामीत्यर्थः ।

यद्वा- अश्वकः तरुणः काम्पीलवासिनीं सुभद्रिकां कल्याणरूपां स्त्रियं परिगृह्य शेते । अतोऽहमेव गच्छामीति । " आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बेऽम्बालेऽम्बिके पूर्वे " ( द्र. पा ६.१.११८ ) इति प्रकृतिभावः । स्मृत्याऽयं मन्त्रः शक्त्यां विनियुक्तोऽतस्तत्परत्वेन व्याख्यायते । अम्बादिशब्दा जननीवाचकाः। हे अम्बे जननि, हे अम्बिके, हे अम्बालिके मातः । अभ्यासः आदरार्थः। कः चन कोऽपि शत्रुः मां न नयति न वशीकरोति, त्वत्प्रसादात् । यतः काम्पीलवासिनीं सुरभिदेशवासिनीं सुभद्रिकां परममङ्गलरूपां त्वां प्रति स शत्रुरश्वकः पशुः । यथा पशुः स्वहितं न वेद तथा त्वत्पूजादिकं न जानातीत्यर्थः। अत एव ससस्ति, सर्वकार्ये शेते ॥१॥

गणानां त्वा गणपतिꣳ हवामहे प्रियाणां त्वा प्रियपतिꣳ हवामहे ।
निधीनां त्वा निधिपतिꣳ हवामहे वसो मम ॥२॥

3. M4 om. चेष्टते

12. M4 मां for न; M4 P2 प्रापयतेति for प्रापयति

गणाना॑म् । त्वा । गणप॑ति॒मिति॑ गणऽप॑तिम् । ह॒वा॒म॒हे॒ ।

प्रि॒याणा॑म् । प्रि॒यप॑ति॒मिति॑ प्रि॒यऽप॑तिम् ।

नि॒धी॒नामिति॑ नि॒ऽधी॒नाम् । नि॒धि॒प॒ति॒मिति॑ नि॒धि॒ऽप॒ति॑म् । ह॒वा॒म॒हे॒ ।

व॒सो॒ इति॑ वसो । म॒म ॥ क्षां ॥२॥

---

आ– पत्न्यस्त्रिस्त्रिः पर्यन्त्यश्वम् । 'गणानां त्वा' इति । लिङ्गोक्तदेवत्याऽऽस्तारपङ्क्तिः । Vगणानां मध्ये Vगणपतिम् अश्वपत्न्यो वयं Vहवामहे आह्वयामः, गणपतिरूपेण संस्तुवन्ति । 'प्रियाणां त्वा प्रियपतिम्' । Vप्रियाणां सर्वप्राणिनां ये ये प्रियाः प्रीतिहेतवः तेषां Vप्रियपतिं तेषां प्रियाणां च प्रियाः मनुष्याः, तेषां पतिः प्रियपतिस्तं प्रियपतिं प्रियं भर्तारमश्वं च त्वां Vहवामहे आह्वयामः। एवमेत्र Vनिधीनां विविधानां सुखनिधीनां पतिं Vनिधिपतिं सुखनिधीनां भर्तारं त्वां Vहवामहे । कथं कृत्वा ? एवम् । 'वसो' । हे Vवसो अश्व, त्वं Vमम मनसो धनरूपः पतिः प्रियाणां सर्वप्राणिनां गर्भधारको भूया इति। विघ्नेश्वरविषयत्वेनायं मन्त्रः प्रसिद्धार्थः ॥२०॥

---

अ– कात्यायनः – "अश्वं त्रिस्त्रिः परियन्ति पितृवन्मध्ये गणानां प्रियाणां निधीनामिति" ( काश्रौ २०.६.१३ ) । सर्वाः पत्न्यः पान्नेजनीहस्ता एव प्राणशोधनात् प्राक् अश्वं त्रिस्त्रिः परियन्ति । मध्ये पितृवदप्रदक्षिणं परियन्ति त्रिस्त्रिभिर्मन्त्रैः । 'वसो मम' इति त्रिष्वप्यनुषज्यते । ततश्चैवं प्रथमं- Vगणानाम् इति त्रिः प्रदक्षिणं परियन्ति । तत्र सकृन्मन्त्रेण द्विस्तूष्णीम् । ततः Vप्रियाणाम् इत्यप्रदक्षिणं त्रिः । Vनिधीनाम् इति प्रदक्षिणं त्रिः । एवं नवकृत्वः इति सूत्रार्थः ॥

'गणानां त्वा' । त्रीणि यजूंषि लिङ्गोक्तानि । हे अश्व, वयं Vत्वा त्वां Vहवामहे आह्वयामः। कीदृशं त्वाम् ? 'गणपतिं गणानाम्' । Vगणानां मध्ये Vगणपतिं गणरूपेण पालकम् । Vप्रियाणां वल्लभानां मध्ये प्रियपतिम् प्रियस्य पालकम् । Vनिधीनां सुखनिधीनां मध्ये Vनिधिपतिं सुखनिधेः पालकम् । हे Vवसो, वसुरूप । वसन्ति यस्मिन्नरा इति वसुः । तत्संबोधनं वसो । अश्व, मम पतिस्त्वं भूया इति शेषः । अयं स्मृत्या गणपतिपूजायां विनियुक्तत्वात् तत्परो योज्यः ॥२॥

---

5. S3 पाठस्तु– गणानां ... वसो ममेति for गणानां त्वा इति

13–15 M4 पर्यन्ति for परियन्ति

आऽह॒मंजानि गर्भ॒धमा त्वमंजासि गर्भ॒धम् ।
ता उ॒भौ च॒तुर॑ः प॒दः सं॒प्रसा॑रयाव ।
स्व॒र्गे लो॒के प्रोर्ण्वी॑था॒ँ वृषा॑ वा॒जी रे॑तो॒धा रेतो॑ दधातु ॥३॥ (५) ॥

---

आ । अ॒हम् । अ॒जा॒नि । ग॒र्भ॒धमिति॑ ग॒र्भ॒ऽधम् ।
आ । त्वम् । अ॒जा॒सि । ग॒र्भ॒धमिति॑ ग॒र्भ॒ऽधम् ।
तौ । उ॒भौ । च॒तुर॑ः । प॒दः । सं॒प्रसा॑र॒या॒वेति॑ स॒म्ऽप्रसा॑रयाव ।
स्व॒र्ग इति॑ स्व॒ःऽगे । लो॒के । प्र । ऊ॒र्ण्वा॒था॒म् । वृषा॑ । वा॒जी ।
रे॒तो॒धा इति॑ रे॒तः॒ऽधाः । रेत॑ः । द॒धा॒तु ॥ प्रिः ॥३॥(५) ॥

---

आ– महिषी अश्वमुपसंविशति– 'आऽहम्' इति । अश्वदेवत्या महासतोबृहती 'आऽहमजानि गर्भधम्' । अज गतिविक्षेपणयोः । गर्भस्य धारयित्री Vआ आकृष्य Vअजानि विक्षिपामि । 'आ त्वमजासि गर्भधम्' । Vआ आकृष्य च Vगर्भधं गर्भधारकं Vरेतः विक्षिपसि । एवं कृतसंकेतौ यौ Vतौ Vउभौ Vत्वं च अहं च आवां Vचतुरः Vपदः तव संबन्धिनः पादान् Vसंप्रसारयाव संप्रसारणं कुर्वः । एवं हि संवेशनप्रकारो लोकप्रसिद्ध इत्यभिप्रायः । 'स्वर्गे लोके प्रोर्ण्वाथाम्' । Vस्वर्गे Vलोके संज्ञपनार्थे स्थितये स्वस्वावस्थाने पश्वस्थाने स्वर्गे लोके Vप्र Vऊर्ण्वाथाम् । ऊर्णुञ् आच्छादने । प्रोर्णनमाच्छादनं कुरुतमित्यर्थः । अश्वशिश्नमुपस्थे कुरुते । 'वृषा वाजी रेतोधाः' । सेचनदक्षः Vवृषा Vवाजी विशिष्टान्नवान् अश्वः Vरेतोधाः रेतसोऽर्पयिता, वीर्यप्रतिष्ठापनकर्ता रेतोधाः अश्वः, Vरेतः Vदधातु योनौ स्थापयतु ॥२१॥

---

9. S3 पाठस्तु– आहमजानि ... दधात्विति for आऽहमिति ।
11. V2 अन्वाकृष्य for आ आकृष्य
14. S3 om. पश्वस्थाने
15. D1-2 ऊर्णवाथाम् for ऊर्ण्वाथाम्

अश्वमेधमन्त्राः ]

अ– कात्यायनः – "प्रक्षालितेषु महिष्यश्वमुपसंविशतित्याऽहमजानि" ( काश्रौ २०·६·१४ ) प्रक्षालितेषु शोधितेषु पशूनां प्राणेषु पत्नीभिरध्वर्युणा यजमानेन प्राणशोधने कृते सति महिषी अश्वसमीपे शेत इत्यर्थः ॥

'आऽहमजानि'। अश्वदेवत्यं यजुः। हे अश्व, vगर्भधं गर्भधारकं रेतः। vअहम् vआ vअजानि। आकृष्य क्षिपामि। अज गतिक्षेपणयोः। लेट्। vत्वं च vगर्भधं रेतः आ vअजासि आकृष्य क्षिपसि। vतौ त्वं च अहं चेति vउभौ vचतुरः vपदः पादान् आवां vसंप्रसारयाव प्रसारणं कुर्वः। तव द्वौ पादौ मम द्वाविति चत्वारः। एवं संवेशनप्रकारः ॥

कात्यायनः – "अधीवासेन प्रच्छादयति स्वर्गे लोक इति" ( काश्रौ २०·६·१५ ) अधीवासेन अश्वमहिष्यौ च्छादयति। अध उपरिष्टाच्च। छादनक्षमं वासः vअधीवासः महद्वस्त्रम् ॥

'स्वर्गे लोके'। अश्वदेवत्यम्। अध्वर्युर्वदति– हे अश्वमहिष्यौ, युवां vस्वर्गे vलोके अस्मिन् यज्ञदेशे vप्र vऊर्ण्वाथाम्। वास आच्छादयतम्। ऊर्णुञ् आच्छादने। "एष वै स्वर्गो लोको यत्र पशुं संज्ञपयन्ति" ( शब्रा १३·२·८·५ ) इति श्रुत्या यज्ञभूमेः स्वर्गसाधनत्वात् स्वर्गत्वमुच्यते।

कात्यायनः – "अश्वशिश्नमुपस्थे कुरुते वृषा वाजीति" ( काश्रौ २०.६.१६ )। महिषीति शेषः। 'वृषा वाजी'। अश्वदेवत्यं यजुः। vवृषा सेक्ता। रेतो दधातीति vरेतोधाः। vवाजी अश्वो मयि vरेतः vदधातु स्थापयतु।

इति पञ्चविंशे पञ्चमोऽनुवाकः ॥ ५ ॥

---

[ अथ षष्ठोऽनुवाकः। ]

**उत्सक्थ्या अव गुदं धेहि समञ्जिं चारया वृषन्।**

**य स्त्रीणां जीवभोजनः ॥१॥**

---

उत्सक्थ्या इत्युत्ऽसक्थ्याः। अव। गुदम्। धेहि। सम्। अञ्जिम्। चारय। वृषन्। यः। स्त्रीणाम्। जीवभोजन इति जीवऽभोजनः ॥ ज्यां ॥१॥

---

आ– अश्वं यजमानोऽभिमन्त्रयते। 'उत्सक्थ्या अव'। अश्वदेवत्या गायत्री। उद्गते सक्थिनी यस्याः सा उत्सक्थी। तस्याः vउत्सक्थ्याः महिष्याः vअव vगुदम् अवाचीनं गुदे रेतः vधेहि सिञ्च। कथमिति? 'समञ्जिं चारया वृषन्'। अञ्जू व्यक्तिम्रक्षणगतिषु।

---

8. M4 अधि° for अधी°
9. M4 अथोप° for अध उप°; M4 P2 अधि° for अधी°
22. S3 पाठस्तु– उत्सक्थ्या ... भोजन इति for उत्सक्थ्या अव।

[V]अञ्जिम् अभिव्यक्तिं पुंस्त्वाभिव्यक्तिं प्रजननयुक्तिं [V]संचारय । [V]वृषन् सेचनं कुर्वन् संचारय । 'यः स्त्रीणां जीवभोजनः' । जीवनादीन् भोगान् लभते इति । जीवो भुङ्क्ते येन, भुज्यते येनेति वा [V]जीवभोजनः । स अञ्जिं संचारय इति संबन्धः ।२२॥

---

अ– कात्यायनः– "उत्सक्थ्या इत्यश्वं यजमानोऽभिमन्त्रयते" (काश्रौ २०.६.१७)। 'उत्सक्थ्या अव'। अश्वदेवत्या गायत्री । हे [V]वृषन् सेक्तः अश्व । महिष्याः [V]अव [V]गुदम् । अव उपर्यर्थः । गुदोपरि रेतो वीर्यं [V]धेहि । रेत इत्यनुषज्यते । कीदृश्याः ? [V]उत्सक्थ्याः । उत् ऊर्ध्वं सक्थिनी ऊरू यस्याः सा उत्सक्थी, तस्याः । कथमित्यत आह– [V]अञ्जि लिङ्गं [V]संचारय । अनक्ति व्यनक्ति पुंस्त्वमित्यञ्जिस्तम् । लिङ्गं योनौ प्रवेशय । [V]यः अञ्जिः [V]स्त्रीणां [V]जीवभोजनः, जीवयतीति जीवः । भोजयतीति भोजनः । जीवश्चासौ भोजनश्चेति तथा । यस्मिन् लिङ्गे योनौ प्रविष्टे स्त्रियो जीवन्ति भोगांश्च भुञ्जते ।

"अध्वा जरा मनुष्याणामनध्वा वाजिनां जरा ।
अमैथुनं जरा स्त्रीणां वस्त्राणामातपो जरा ॥"

अन्तर्हितण्यर्थो जीवभोजनशब्दः ॥१॥

---

यकाऽसकौ शकुन्तिकाऽऽहलगिति वञ्चति ।
आहन्ति गभे पसो निगल्गलीति धारका ॥२॥

---

यका । असकौ । शकुन्तिका । आहलक् । इति । वञ्चति ।
आ । हन्ति । गभे । पसः । नि । गल्गलीति । धारका ॥ शीं ॥२॥

---

आ– अथाध्वर्युः कुमारीमभिमेथयति– 'यकासकौ' इति । इत उत्तरं दशानुष्टुभः । द्वितीयोपरिष्टाद्बृहती । अतिमिथुनीभूतदेवत्या । अध्वर्य्वादीनां कुमार्यादिभिरश्लीलभाषणम् । अत्र ता एव देवता । अत्र च या यत्र भण्यते सा तत्र देवतात्वमुपगच्छति । 'यकासकौ'। कप्रत्ययः, अकच्प्रत्ययश्च कुत्सायाम् । [V]यका [V]असकौ, असौ अङ्गुल्या प्रदर्शयन्नाह– या असौ [V]शकुन्तिका ।

---

8. M4 योनिः for यः अञ्जिः ।
18. S3 पाठस्तु– यकासकौ ... धारकेति for यकासकौ इति
20. V2 यकप्र° for कप्र°
21. S3 अक° for अकच्°

अल्पे कन्प्रत्ययः । अल्पा शकुन्तिः शकुन्तिका पक्षिणी इव । Vआहलक् इति प्रकारवचने । हले हले इति ब्रुवती त्वरितं Vवञ्चति गच्छति चपला । तस्या अपि ' आ हन्ति गभे पसः ' । हन्तिर्गत्यर्थः । आगमयति प्रवेशयति, Vआ अत्यर्थं प्रवेशयति । Vगभे इत्यत्र आद्यन्तवर्णविपर्ययः भगे इति । तस्याः भगे Vपसः । पसतेः स्पर्शनकर्मणो रूपं पस इति । शिश्ननाम । तस्याः गभे पसः आहन्तीत्यर्थः । अथ तदा ' नि गल्गलीति धारका ' । व्यत्ययः । Vधारका रेतोधारकं शिश्नं Vनिगल्गलीति रेतो मुञ्चति । यद्वा— धारका योनिरपि वीर्यं निगल्गलीति अत्यर्थं शुक्रं मुञ्चतीत्यर्थः । यद्वा— शब्दानुकरणे निगल्गलीतीति । निपूर्वस्य गिलतेः रूपं निगल्गलीतीति । छान्दसो लकारः ॥२३॥

---

अ- कात्यायनः – " अध्वर्युब्रह्मोद्गातृहोतृक्षत्तारः कुमारीपत्नीभिः संवदन्ते यकासकाविति दशर्चस्य द्वाभ्यां द्वाभ्यां हये हयेऽसावित्यामन्त्र्यामन्त्र्य " ( काश्रौ २०.६.१८ ) । अध्वर्य्वादयः पञ्च हये हयेऽसाविति संबुध्यन्त नामोच्चारणपूर्वकं संमुखीकृत्य यकासकाविति दशर्चसंबन्धिनीभ्यां द्वाभ्यां द्वाभ्याम् ऋग्भ्यां कुमारीपत्नीभिः सह सोपहासं संवदन्ते । तत्र प्रथममध्वर्युः कुमारीं पृच्छति– कुमारि हये हये कुमारि, यकासकौ शकुन्तिकेत्यर्थः ॥ ' यकासकौ शकुन्तिका ' । दश कुमार्यादिदेवत्याः । तन्मध्ये द्वितीयोपरिष्टाद्बृहती । अन्या नवानुष्टुभः । " अव्ययसर्वनाम्नामकच् प्राक् टेः " ( पा ५.३.७१ ) इत्यकच् कुत्सायाम् । अल्पाः शकुन्तिः शकुन्तिका । " अल्पे " ( पा ५.३.८५ ) इति कन् । अङ्गुल्या योनिं प्रदर्शयन्नाह– Vयका या Vअसकौ असौ योनिः । Vशकुन्तिका अल्पा पक्षिणीव । Vआहलक् शब्दानुकरणमेतत् । हले हले Vइति शब्दयन्ती सती, Vवञ्चति गच्छति । स्त्रीणां शीघ्रगमने सति योनौ हलहलाशब्दो भवतीत्यर्थः । वञ्चिर्गच्छत्यर्थः । आहलगिति क्रियाविशेषणम् । तथा Vगभे भगे । वर्णविपर्ययः । Vपसः लिङ्गम् । यद्वा– Vआ Vहन्ति योनौ गच्छति । हन हिंसागत्योः । पस इति पसतेः स्पृशतिकर्मणः ( निरु ५.१३ ) इति यास्कोक्तेः पुंप्रजननस्य नाम । यदा शकुनिसदृश्यां योनौ लिङ्गं प्रविशति तदा । Vधारका धरतीति धारका लिङ्गम् । धारयतीति योनिः । Vनिगल्गलीति नितरां गलति, वीर्यं क्षरति । अनुकरणशब्दोऽयम् ॥२॥

---

1. S3 °गमने for °वञ्चने
4. S3 गभ इति for भगे इति
6. V2 S3 निगलालीति for निगल्गलीति
7. V2 °करणो for °करणे
11. M4 om. द्वाभ्यां द्वाभ्याम् ऋग्भ्यां
12. M4 एकति for पृच्छति
14–15. M4 अल्पा शकुंन्ति शकुन्तिकाम् for अल्पाः ... शकुन्तिका
18. P2 गर्भे for भगे

यकोऽसकौ शकुन्तक आहलगिति वञ्चति ।
विवक्षत इव ते मुखमध्वर्यो मा नस्त्वमभि भाषथाः ॥३॥

यकः । असकौ । शकुन्तकः । आहलक् । इति । वञ्चति ।
विवक्षत इवेति विवक्षतःऽइव । ते । मुखम् ।
अध्वर्यो इत्यध्वर्यो । मा । नः । त्वम् । अभि । भाषथाः ॥ ३ुं ॥३॥

आ– तं कुमारी प्रत्यभिमेथति । 'यकोऽसकौ शकुन्तकः' इति । यकोऽसकौ पूर्ववत् । [V]यकः य इत्यर्थः । [V]असकौ । असौ व्यत्ययः । असौ [V]शकुन्तकः शकुन्तक इव । शकि विभाषणे मर्षणे च । शक्लृ शक्तौ । शकि शङ्कायामिति । एषामेकतरस्य रूपम् । शकुन्तकः अल्पपक्षीव । 'आहलगिति वञ्चति' । प्रकारगमने [V]आहलक् [V]इति । कुमारीं हये हये ब्रुवन् [V]गच्छति । चपलः 'विवक्षत इव ते मुखमध्वर्यो मा नस्त्वमभि भाषथाः' । तस्याल्पभाषिणस्तव किमहमन्यद्ब्रवीमि । [V]विवक्षतः [V]इव [V]ते [V]मुखं वक्तुमिच्छत इव स्थितस्य ते मुखं हे [V]अध्वर्यो, [V]मा [V]नः [V]त्वम् [V]अभिभाषथाः साभिप्रायं वक्ति । हे अध्वर्यो, [मा] नः अस्मान् त्वं अभिभाषथाः अभिभाषणं मा कृथाः ॥२४॥

अ– अथ कुमारी अध्वर्युं प्रत्याह– 'यकोऽसकौ शकुन्तकः' । इत्यङ्गुल्या शिश्नं प्रदर्शयन्त्याह । हे [V]अध्वर्यो, [V]यकः यः [V]असकौ असौ शकुन्तकः पक्षीइव स्थितः शिश्नः, [V]विवक्षितः वक्तुमिच्छतः [V]ते तव [V]मुखम् इव [V]आहलक् [V]इति यथा स्यात् तथा [V]वञ्चति प्रविशति । इवशब्द आर्षो भिन्नक्रमः । अतो मुखे लिङ्गप्रवेशनभयात् [V]नः अऽस्मान् प्रति [V]मा [V]अभि [V]भाषथाः मा वद । एवमावयोस्तुल्यत्वमिति भावः ॥३॥

माता च ते पिता च तेऽग्रं वृक्षस्य रोहतः ।
प्र तिलामीति ते पिता गभे मुष्टिमतंसयत् ॥४॥

6. S3 पाठस्तु यकोऽसकौ ... भाषथाः इति for 'यकोऽसकौ शकुन्तकः' इति
7. S3 असा व्यत्ययः for असौ व्यत्ययः, S3 om. इव
9. V2 अल्पापेक्षण इव for अल्पपक्षीव
17. M4 भूयात् for °भयात्

माता । च । ते । पिता । च । ते । अग्रम् । वृक्षस्य । रोहतः ।

प्र । तिलामि । इति । ते । पिता । गभे । मुष्टिम् । अतंसयत् ॥ शैं ॥४॥

---

आ– अथ ब्रह्मा महिषीमभिमेथयति– ‘ माता च ते ’ इति । हये हये हे हे नः महिषि। यदा च ‘ माता च ते पिता च ते अग्रं वृक्षस्य रोहतः ’ । वृक्षस्योपरितनं भागम् ᵛअग्रम् । वार्क्षस्ये स्थितस्य ।ᵛवृक्षस्य इति तद्धितलोपश्छान्दसः । अतो वृक्षकार्यस्य पर्यङ्कस्य उपरितनं भागं ᵛरोहतः आरोहतः इत्यश्लीलाभिप्रायमिदं वचनम् । तदा ᵛप्र ᵛतिलामि ᵛइति । तिल स्नेहने । अनेन कर्मणा स्नेहं करोमीति एवम् । ‘ इति ’ प्रकारवचने । ᵛते तव ᵛपिता ᵛगभे भगे ᵛमुष्टिं मुष्ट्याकारं शिश्नम् ᵛअतंसयत् । तंसतिर्निक्षेपकर्मा । अपाक्षिपत् ॥२५॥

---

अ– ‘ माता च ते ’ । अथ ब्रह्मा महिषीमाह– महिषि हये हये महिषि, ᵛते तव ᵛमाता ᵛच पुनः ᵛते तव ᵛपिता ᵛच यदा ᵛवृक्षस्य । संबन्धिनी लक्षणा । वृक्षजन्यकाष्ठमयमञ्चकस्य ᵛअग्रम् उपरिभागं ᵛरोहतः आरोहतः । तत्रैकदेशे “ °कृत्स्नवन्निगमा भवन्ति ” ( नि २.५ ) इति यास्कोक्तेः । तदा ᵛते ᵛपिता ᵛगभे भगे ᵛमुष्टिं मुष्टितुल्यं शिश्नम् ᵛअतंसयत् तंसयति । लकारव्यत्ययः । प्रक्षिपति । एवं तवोत्पत्तिरित्यश्लीलम् । तसि अलंकरणे । चुरादिः । लिङ्गस्यालंकरणं योनिप्रवेशनमेव । किं कुर्वन् ? ᵛप्र ᵛतिलामि ᵛइति वदन्निति शेषः । तिल स्नेहने । तव भोगेन प्रकृष्टं स्निह्यामि ॥४॥

---

माता च ते पिता च तेऽग्रे वृक्षस्य क्रीळतः ।

विवक्षतइव ते मुखं ब्रह्मन्मा त्वं वदो बहु ॥५॥

---

माता । च । ते । पिता । च । ते । अग्रे । वृक्षस्य । क्रीळतः ।

विवक्षत इवेति विवक्षतःऽइव । ते । मुखम् ।

ब्रह्मन् । मा । त्वम् । वदः । बहु ॥ ग्यैं ॥५॥

---

3. S3 पाठस्तु- माता ... अतंसयदिति for माता च ते इति ।

आ– होता ब्रह्माणं प्रत्यभिमेथयति– ब्रह्मन् इये हये इति । एवं तवोत्पत्तिरपीति । महिषी च प्रत्याह– ' माता च ते पिता च तेऽग्रे वृक्षस्य क्रीळतः ' । यदा [v]वृक्षस्य [v]अग्रे पर्यङ्के [v]माता [v]च [v]पिता [v]च उभौ [v]क्रीळतः तदा त्वमुत्पन्नः । अतः तुल्योत्पत्तिरावयोः । अतस्त्वावयोस्तुल्योत्पत्तित्वात् यत्र चोद्यपरिहारौ समौ उभयोः, एवं सत्यपि [v]विवक्षतइव [v]ते [v]मुखम् । यदा साधु वदितुमिच्छतः इव ते मुखं लक्ष्यते तत्र ' ब्रह्मन् मा त्वं वदः बहु ' । हे [v]ब्रह्मन्, [v]त्वं [v]बहु [v]मा [v]वदः बहु भाषणं मा कार्षीः ॥२६॥

अ– सा ब्रह्माणं प्रत्याह – ' माता च ते पिता च तेऽग्रे वृक्षस्य क्रीळतः ' । क्रीडतः इत्युक्तार्थम् । एवं च तवाप्युत्पत्तिरश्लीला ।

" यत्रोभयोः समो दोषः परिहारोऽपि वा समः ।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥ "

इति न्यायात् न त्वयेदं वक्तव्यमिति भावः । एवं सत्यपि [v]विवक्षतःइव वक्तुमिच्छोरिव स्थितस्य [v]ते तव [v]मुखं लक्ष्यत इति शेषः । हे [v]ब्रह्मन्, [v]त्वं [v]बहु [v]मा [v]वदः बहुलं मा ब्रूहि । एषोऽर्थो ब्राह्मणे– " यकासकौ शकुन्तिकेति । विड्वै शकुन्तिकाऽऽहलगिति वञ्चतीति विशो वै राष्ट्राय वञ्चत्याहन्ति गभे पसो निगल्गलीति धारकेति विड्वै गभो राष्ट्रं पसो राष्ट्रमेव विश्याहन्ति तस्माद्राष्ट्री विशघातुक इति ॥ माता च ते पिता च त इतीयं वै माताऽसौ पिताऽऽभ्यामेवैनꣳ स्वर्गं लोकं गमयति " ( शब्रा १३.२.९.६-७ ) इत्यादिना । अत्र विशराष्ट्रशब्दौ स्त्रीपुरुषपरौ ज्ञेयौ ॥५॥

ऊ॒र्ध्वामे॑नामुच्छ्रा॑पय गि॒रौ भा॒रꣳ हर॑न्निव ।
अथा॑स्यै॒ मध्य॑मेधताꣳ शी॒ते वाते॑ पु॒नन्नि॑व ॥६॥

ऊ॒र्ध्वाम् । ए॒ना॒म् । उत् । श्रा॒प॒य॒ । गि॒रौ । भा॒रम् । हर॑न्नि॒वेति॒ हर॑न्ऽइव ।
अथ॑ । अ॒स्यै॒ । मध्य॑म् । ए॒ध॒ता॒म् । शी॒ते । वाते॑ । पु॒नन्नि॒वेति॑ पु॒नन्ऽइव ॥ धुं ॥६॥

आ– अथोद्गाता वावातामभिमेथयति– ' ऊर्ध्वामेनाम् ' इति । कंचित् पुरुषमाह – ' ऊर्ध्वामेनामुच्छ्रापय ' इति । [v]एनां बालाम् [v]उच्छ्रापय उच्छ्रितां कुरु । कथमिव ? ' गिरौ भारं हरन्निव ' । यथा [v]गिरौ पर्वते [v]भारं हरेत् एवमेतां मध्ये निगृह्य [v]ऊर्ध्वाम् उच्छ्रापय ।

2. S3 पाठस्तु– माता च ... बहु इति for माता च .. क्रीळतः ।
21. S3 पाठस्तु– ऊर्ध्वामेनाम् ... पुनन्निवेति for ' ऊर्ध्वामेनाम् ' इति
22. S2 om. ऊर्ध्वामेनामुच्छ्रापय ' इति

' अथास्यै मध्यमेधताम् ' । ᵛअथ ᵛअस्यै अस्याः ᵛमध्यं योनिप्रदेशः ᵛएधताम् । एध वृद्धौ । वृद्धिं यायात्, अथैवमेनां निगृह्णीयात् । ' शीते वाते पुनन्निव ' इति । यावत् स हि ग्रहणमोक्षे झटिति करोति क्षेमो वै राष्ट्रस्य । शीतं क्षेममेवास्यै करोति ॥२७॥

---

अ– अथ उद्गाता वावातामाह – ' ऊर्ध्वामेनामुच्छ्रापय ' । अत्र कश्चित् संबोध्यते । हे नर, ᵛएनां वावाताम् ᵛऊर्ध्वाम् ᵛउच्छ्रापय अत्युच्छ्रितां कुरु । कथमिव ? ' गिरौ भारं हरन्निव ' । यथा कश्चित् ᵛगिरौ पर्वते ᵛभारं ᵛहरन् पर्वतोपरि भारमारोपयन्, यथा तमुच्छ्रयति तथैव । वैनामूर्ध्वां कुरु । श्रयतिर्णिजन्तः । कथमित्यत आह– ' अथ ' इति । ᵛअथ इति निपातो यथार्थः । यथा ᵛअस्यै अस्याः वावातायाः ᵛमध्यम् ᵛएधतां मध्यप्रदेशो वृद्धिं यायात् । यथा योनिर्विशाला भवति तथैनां मध्ये गृहीत्वोच्छ्रयेत्यर्थः । तत्र दृष्टान्तमाह – ' शीते वाते पुनन्निव ' । यथा शीतले ᵛवाते वाते सति पुनन् धान्यपवनं कुर्वाणः कृषीवलः ऊर्ध्वीकरणेन बाहू विशालौ करोति तथैवैनामुच्छ्रयेत्यर्थः ॥६॥

---

ऊर्ध्वमेनमुच्छ्रयताद्गिरौ भारꣳ हरन्निव ।
अथास्य मध्यमेजतु शीते वाते पुनन्निव ॥७॥

---

ऊर्ध्वम् । एनम् । उत् । श्रयतात् । गिरौ । भारम् । हरन्निवेति हरन्ऽइव ।
अथ । अस्य । मध्यम् । एजतु । शीते । वाते । पुनन्निवेति पुनन्ऽइव ॥ कं ॥७॥

---

आ– वावाता तदनुचर्यश्च (?) प्रत्याहुः – ' ऊर्ध्वमेनमुच्छ्रयतात् ' इति । ᵛऊर्ध्वम् उपरिभागे, हे उद्गातः, ᵛएनं मुखम् (?) ᵛउच्छ्रयतात् उच्छ्रितं कुर्यात् । कथमिव ? ' गिरौ भारं हरन्निव ' । यथा ᵛगिरौ पर्वते ᵛभारं हरन् पुरुषः मध्ये निगृह्य हरेत् एवं मुखस्य (?) मध्यं निगृह्य उच्छ्रितं हरेत् । ᵛअथ अस्य ᵛमध्यं प्रजननं लिङ्गम् ᵛएजतु । योनिमध्ये चलतु, मैथुनं करोतु । ᵛशीते ᵛवाते ᵛपुनन् ᵛइव राष्ट्रस्य क्षेमं कुर्वन्निव ॥२८॥

---

2. P2 om. एव
10. M4 °वपन् for °पवन
16. S3 पाठस्तु– ऊर्ध्वमेनम् ... पुनन्निवेति for ऊर्ध्वमेनमुच्छ्रयतात् इति ।

अ- अथ वावाता उद्गातारं प्रत्याह - 'ऊर्ध्वमेनमुच्छ्रयतात्' इति। तातङ्डादेशः। vगिरौ vभारम् इति पूर्ववत्। vअथ यथा vअस्य उद्गातुः vमध्यम्। तत्रत्यं लिङ्गं कम्पताम्। एजृ कम्पने, लोट्। 'शीते वाते' इत्युक्तार्थम् ॥७॥

---

यद॑स्या अं॒हुभेद्याः कृ॒धु स्थू॒लमु॒पात॑सत् ।

मु॒ष्का इद॑स्या एजतो गोश॒फे श॑कु॒लाइ॑व ।।८।।

---

यत् । अ॒स्याः । अं॒हु॒भेद्या॒ इत्यं॑हु॒ऽभेद्याः ।

कृ॒धु । स्थू॒लम् । उ॒पात॑स॒दित्यु॑प॒ऽअत॑सत् ।

मु॒ष्कौ । इत् । अ॒स्याः । ए॒ज॒तः ।

गो॒श॒फ इति॒ गो॒ऽश॒फे । श॒कु॒ला इ॒वेति॑ श॒कु॒लौऽइ॑व ॥ धिं ॥८॥

---

आ- अथ होता परिवृक्तामभिमेथति - 'यदस्याः' इति। vयत् यदा vअस्याः परिवृक्तायाः vअंहुभेद्याः अल्पयोन्याः। अंहु हन्तव्यः भेदः प्रदेशः प्रजननं यस्याः इति अंहुभेदी। तस्या अंहुभेद्या अविदारितप्रजननस्थानायाः vकृधु vस्थूलम् vउपातसत् उपसंगच्छेत्। अथ तदा अल्पत्वाद्योनेः स्थूलत्वाच्च प्रजननस्य vमुष्कौ मुष्कौ, वृषणौ vइत् एनम् vअस्याः प्रजननस्योपरि vएजतः चलतः। एजृ कम्पने। कथमिव कम्पनं कुरुतः ? 'गोशफे शकुलाइव'। vगोशफे गोः पादे उदकपूर्णे vशकुलाइव मत्स्या इव ॥ २९ ॥

---

अ- अथ होता परिवृक्तामाह। 'यदस्या अंहुभेद्याः'। vयत् यदा vअस्याः परिवृक्तायाः vकृधु ह्रस्वं vस्थूलं च शिश्नम् vउपातसत् उपगच्छेत् योनिं प्रविशेत्। दसु तसु उपक्षये। कृध्विति ह्रस्वनाम। तदा vमुष्कौ वृषणौ vइत् एवमस्याः योनेः उपरि vएजतः कम्पेते। स्थूललिङ्गेन योनेर्व्याप्तत्वात्। वृषणौ बहिरेव अवतिष्ठत इत्यर्थः। तत्र दृष्टान्तः- vगोशफे जलनिर्गतगोखुरे vशकुलाइव मृत्पिण्डा इव। यद्वा- गोशफे गोखुरनिर्मितगर्तजले शकुलाइव मत्स्यौ इव। कीदृश्या अस्याः ? vअंहुभेद्याः। अंहिति भगनाम। अंहु भेद्यं विदार्यं यस्याः, अंहु भिद्यते यस्याः वा, सा अंहुभेदी, तस्या अंहुभेद्याः ॥ ८ ॥

---

2. M4 मध्ये for मध्यम्, M4 तत्र for तत्रत्यं

10. S3 पाठस्तु- यदस्याः .... शकुला इवेति for 'यदस्याः' इति।

13. S3 om. मुष्कौ

अश्वमेधमन्त्राः ]

यद्दे॒वासो॑ लला॒मगुं॒ प्र वि॑ष्टी॒मिन॒माविषुः ।
स॒क्थ्ना दे॑दिश्यते॒ नारी॑ स॒त्यस्या॑क्षि॒भुवो॑ यथा ॥९॥

यत् । दे॒वासः॑ । ल॒लाम॑गु॒मिति॑ ल॒लाम॑ऽगुम् । प्र । वि॒ष्टी॒मिन॑म् । आवि॑षुः ।
स॒क्थ्ना । दे॒दि॒श्यते॑ । नारी॑ । स॒त्यस्य॑ । अ॒क्षि॒भुव॒ इत्य॑क्षि॒ऽभुवः॑ । य॒था ॥ जिं ॥९॥

आ– होतारं प्रत्याभिमेथति । 'यद्देवासः' इति । होतृप्रमुखान् सर्वानेव ऋत्विजः प्रतिवदन्ति । $^{V}$यत् $^{V}$देवासः देवाः शिश्नेन क्रीळिनः । ललामेति सुखनाम । ललामं सुखं कर्तुं गच्छतीति ललामगुः । तं $^{V}$ललामगुं शिश्नम् । यद्वा– ललामेति रौद्रमभिधीयते । शिश्नं हि योनिं प्रविशति रौद्रं भवति । 'प्र विष्टीमिनम्' । प्रविश्य विष्टभ्य स्तीम्यतीति [ प्रविष्टीमी । तं ] $^{V}$प्रविष्टीमिनं शिश्नं प्रवेश्य $^{V}$आविषुः आलिङ्गनबन्ध( ? चुम्ब )नादिभिः नारीं निगृह्णीयुरिति । 'सक्थ्ना देदिश्यते नारी' । सक्थिकृतेन कुटिलभावेन $^{V}$नारी $^{V}$देदिश्यते लक्ष्यते । कथमिव ? 'सत्यस्य आक्षिभुवो यथा' । द्विप्रकारं सत्यमक्षिप्रभवमनक्षिप्रभवं चेति । अक्षिप्रभवं च प्रत्यक्षं सत्यमक्षिभूरित्युच्यते । अनक्षिप्रभवं च श्रोत्रादिग्राह्यं तत्सापेक्षं वक्तुराप्तत्वाद्यपेक्षते । अतो विशिनष्टि– $^{V}$सत्यस्य $^{V}$अक्षिभुवः $^{V}$यथा इति । यथा येनेत्थं भवति तथेति ॥३०॥

अ– अथ परिवृक्ता होतारमाह– 'यद्देवासो ललामगुम्' । $^{V}$यत् यदा $^{V}$देवासः देवाः । "आज्जसेरसुक्" (पा ७.१.५७) इत्यसुक् । क्रीडासमर्था ऋत्विजः $^{V}$ललामगुं शिश्नं $^{V}$प्र $^{V}$आविषुः । योनौ प्रवेशयन्ति ॥

अव रक्षे गतौ कान्तौ तृप्तौ प्रीतौ द्युतौ श्रुतौ ।
प्राप्तौ श्लेषेऽर्थने वेशे भागे वृद्धौ ग्रहे वधे ॥

चेत्युक्तेरत्र अवधातुः प्रवेशनार्थः । लुङ् "छन्दसि लुङ्लङ्लिटः" (पा ३.४.६) इति वर्तमाने । "व्यवहिताश्च" (पा १.४.८२) इतिं प्रोपसर्गेण व्यवधानम् । ललामेति सुखनाम । ललाम सुखं गच्छति प्राप्नोतीति ललामगुः शिश्नः । यद्वा– ललामशब्देन पुण्ड्रमुच्यते । ललाम पुण्ड्रं गच्छतीति ललामगुः । शिश्नो योनिं प्रविशन्नुत्थितः पुण्ड्राकारो भवतीत्यर्थः ।

5. S3 पाठस्तु– यद्देवासो ... यथेति for 'यद्देवासः' इति
8. V2 मिनोमीति for स्तीम्यतीति
12. S3 om. प्रत्यक्षं
13. S3 om. first इति

कीदृशं ललामगुम् ? vविष्टीमिनम् । ष्टिम क्लेदे । विशेषेण स्तीमनं क्लेदनं विष्टीमः । विष्टीमो विद्यते यस्य स विष्टीमी । तं विष्टीमिनम् । " अत इनिठनौ " ( पा ५.२.११५ ) इत्यस्त्यर्थे इन्प्रत्ययः । शिश्नस्य योनिप्रवेशे द्रवीभावो भवतीत्यर्थः । तथा– यदा देवाः शिश्नक्रीडिनो भवन्तः vललामगुं योनौ प्रवेशयन्ति तदा vनारी vसक्थ्ना ऊरुणा । वचनव्यत्ययः । ऊरुभ्यां vदेदिश्यते निर्दिश्यते अत्यन्तं लक्ष्यते । दिशतेर्यङन्तस्य रूपम् । भोगसमये सर्वस्य नार्यङ्गस्य नरेणाच्छादितत्वात् उरुमात्रं लक्ष्यत इत्यर्थः । तत्र दृष्टान्तः – ' सत्यस्याक्षिभुवो यथा ' इति । सत्यं द्विविधम्– चाक्षुषं श्रावणं चेति । षष्ठ्यौ तृतीयार्थे । यथा कश्चित् अक्षिभुवा प्रत्यक्षेण सत्येन निर्दिश्यते चक्षुर्विषयः श्रोत्रविषयो वा क्रियते तथा दृष्टाभ्यामूरुभ्यां नारीति निश्चीयत इत्यर्थः । श्रोत्रग्राह्ये सत्ये तु वक्तुराप्तत्वमपेक्षितम् ॥९॥

यद्धरिणो यवमत्ति न पुष्टं पशु मन्यते ।
शूद्रा यदर्यजारा न पोषाय धनायति ॥१०॥

यत् । हरिणः । यवम् । अत्ति । न । पुष्टम् । पशु । मन्यते ।
शूद्रा । यत् । अर्यजारेत्यर्यऽजारा । न । पोषाय । धनायति ॥ कुं ॥१०॥

आ–अथ क्षत्ता पालागलीमभिमेथति ' यद्धरिणः ' इति । vयत् यदा vहरिणः कृष्णसारङ्गमृगः vयवं सस्यम् vअत्ति भक्षयति, अथ तदा, क्षेत्री ' पुष्टं पशु ' । व्यत्ययः । पशुमिति प्राप्ते विभक्तिलोपश्छान्दसः । vपशुं vपुष्टं vन vमन्यते नावगच्छति । मम क्षेत्रमनेन भक्षितमिति मन्यते । अथवा पुष्टं न पुष्टमिव मन्यते । यथा– 'यदर्यजारा न पोषाय धनायति' । vशूद्रा जातितः vअर्यजारा वैश्यजारावत् यथा न पोषणार्थं vधनायति आत्मनो धनं नेच्छति । स्वयं परस्योपभोग्यत्वात् । अथवा अर्यजारा न वैश्यजारा इव । नकार उपमार्थीयः ॥३१॥

अ– क्षत्ता पालागलीमाह– ' यद्धरिणो यवमत्ति ' । vयत् यदा vहरिणः vयवम् vअत्ति । मृगो यदा क्षेत्रस्थं धान्यं भक्षयति तदा क्षेत्री vपशुं हरिणं vपुष्टं न मन्यते । मम धान्यभक्षणेन मृगः पुष्टः इदं साध्विति न मन्यते । किं तु मदीयं क्षेत्रमनेन भक्षितमिति दुःखीभवतीत्यर्थः । पशुशब्दात् " सुपां सुलुक् " ( पा ७.१.३९ ) इति अमो लुगार्षः । एवमेव vशूद्रा शूद्रजातिः स्त्री vयत् यदा vअर्यजारा भवति । " अर्यः स्वामिवैश्ययोः " ( पा ३.१.१३ ) इति निपातनात् ।

4. P2 M4 सक्थ्या for सक्थ्ना
14. S3 पाठस्तु– यद्धरिणः ... धनायतीति for ' यद्धरिणः ' इति
15. S3 om. पशुमिति ... छान्दसः [ L 16 ]
16. S3 om. नावगच्छति

अर्यो वैश्यो जारः उपपतिर्यस्याः सा अर्यजारा। "शूद्रा चामहत्पूर्वा जातिः" ( पा ४.१.४ ) इति शूद्रशब्दात् जात्यर्थे टाप्प्रत्ययः । तथा च वैश्यो यदा शूद्रां गच्छति तदा शूद्रः पोषाय ˇन ˇधनायति पुष्टिं न इच्छति। मद्भार्या वैश्येन भुक्ता सती पुष्टा जातेति सुखं न मन्यते। किं तु व्यभिचारिणी जातेति दुःखितो भवतीत्यर्थः। "अशनायोदन्यधनाया बुभुक्षापिपासागर्द्धेषु" ( पा ७.४.३४ ) इति क्यचि धनायतीति इच्छार्थे निपातः ॥१०॥

---

यद्ध॒रि॑णो॒ यव॒मत्ति॒ न पु॒ष्टं ब॒हु मन्य॑ते ॥

शू॒द्रो यद॒र्यायै॑ जा॒रो न पोष॒मनु॑ मन्यते ॥११॥

---

यत् । ह॒रि॑णः । यव॑म् । अत्ति॑ । न । पु॒ष्टम् । ब॒हु । मन्य॑ते ।

शू॒द्रः । यत् । अर्या॑यै । जा॒रः । न । पोष॑म् । अनु॑ । म॒न्य॒ते॒ ॥ सैम् ॥११॥

---

आ– क्षतारं प्रतिमेथति । 'यद्धरिणो यवमत्ति न पुष्टम्' इति। ˇयत् यदा ˇहरिणः मृगः ˇयवं यवसस्यम् ˇअत्ति भक्षयति । अथ तत्क्षेत्रे वैश्यः ˇपुष्टं पशुं पुष्टं ˇन ˇबहु ˇमन्यते मन्यत इव वा। 'शूद्रो यदर्यायै जारो न पोषमनु मन्यते'। ˇशूद्रः जारः ˇयत् यस्मात् ˇअर्यायै अर्यायाः वैश्यायाः ˇजारः जरयिता तदा क्षेत्री वैश्य आत्मनः ˇन ˇपोषं न पोषणम् ˇअनु ˇमन्यते। समाप्तमश्लीलभाषणम् ॥३२॥

---

अ- पालागली क्षत्तारमाह– 'यद्धरिणो यवमत्ति'। ˇयत् यदा ˇहरिणः ˇयवम् ˇअत्ति। तदा क्षेत्री ˇबहु यथा तथा ˇपुष्टं पशुं ˇन ˇमन्यते। इदं भवतोऽपि तुल्यम्। इयांस्तु विशेषः। ˇयत् यदा ˇशूद्रः ˇअर्यायै अर्यायाः वैश्यायाः ˇजारः भवति तदा वैश्यः ˇपोषं पुष्टिं ˇन ˇअनुमन्यते न संतुष्यति। किं तु मद्भार्या शूद्रेण नीचेन भुक्तेति क्लिश्यत्येवेत्यर्थः। एषोऽर्थो ब्राह्मणे– "यद्धरिणो यवमत्तीति विड्वै यवो राष्ट्रꣳ हरिणो विशमेव राष्ट्रायाद्यां करोति तस्माद्राष्ट्री विशमत्ति न पुष्टं पशु मन्यत इति तस्माद्राजा पशून्न पुष्यति शूद्रा यदर्यजारा न पोषाय धनायतीति तस्माद्वैशीपुत्रं नाभिषिञ्चति" ( शब्रा १३.२.९.८ ) इति। अश्लीलभाषणं समाप्तम् ॥११॥

---

10. S3 पाठस्तु– यद्धरिणो ... अनु मन्यत इति for यद्धरिणो ... पुष्टम्' इति

12. S3 before इव ins. इति

16. V2 before तदा adds नः

दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखा करत् प्र ण आयूंषि तारिषत् ॥१२॥(६)॥

---

दधिक्राव्ण इति दधिऽक्राव्णः । अकारिषम् । जिष्णोः । अश्वस्य । वाजिनः ।
सुरभि । नः । मुखा । करत् । प्र । नः । आयूंषि । तारिषत् ॥ ङी ॥१२॥ (६)॥

---

आ– ऋत्विजः यजमानश्च सुरभिमतीमृचमन्ततोऽन्वाहुः । 'दधिक्राव्णः' इति । दधिक्राव्ण वामदेव्यः सुरभिमत्यश्वदेवत्यानुष्टुप् । दधिक्रावेत्यश्वनाम । Vदधिक्राव्णः Vअश्वस्य-संस्कारार्थमश्लीलभाषणम् Vअकारिषम् अकार्ष्म कृतवन्तः । अत्र एकवचनस्थाने बहुवचनत्वेन विपरिणामः । उपरिष्टात् बहूनि बहुवचनान्तानि पदानि दृश्यन्ते । कथंभूतस्याश्वस्य ? Vजिष्णोः जयशीलस्य अश्वस्य । अशू व्याप्तौ । व्याप्तिधर्मयुक्तस्य Vवाजिनः । ओविजी भयचलनयोः । वेजनवतः चलनवतः । तत्र Vसुरभि । व्यत्ययः । सुरभीणि सुगन्धीनि Vमुखा मुखानि-Vनः अस्माकमश्वस्य मुखानि सुरभीणि Vकरत् । व्यत्ययः । करोतु । अध्याहारः – यज्ञः करोतु । किं च– 'प्र ण आयूंषि तारिषत्'। Vप्रतारिषत् प्रवर्धयतु च Vनः अस्माकं बालयौवन-वृद्धवयोऽपेक्ष्यम् । तथा च सूत्रम्– "उत्सक्थ्या इत्यश्वं यजमानोऽभिमन्त्रयते । अध्वर्युर्ब्रह्मोद्गातृहोतृक्षत्तारः कुमारीपत्नीभिः संवदन्ते यकासकाविति दशर्चस्य द्वाभ्यां द्वाभ्यां हये हयेऽसावित्यामन्त्र्यामन्त्र्य ॥ सानुचर्यः प्रत्याहुः ॥ अनुचर्यं एकेषाम् ॥ महिषीमुत्थाप्य पुरुषा दधिक्राव्ण इत्याहुः ॥ तिस्रः पत्न्योऽसिपथान् कल्पयन्त्यश्वस्य सूचीभिर्लौहराजतसौवर्णीभिर्माणिसंख्याभिः" ( काश्रौ २०.६.१७–२१,७.१ ) ॥३३॥

---

अ– कात्यायनः– "महिषीमुत्थाप्य पुरुषा दधिक्राव्ण इत्याहुः" ( काश्रौ २०.६.२१ ) महिषीं यजमानस्य प्रथमपरिणीतां पत्नीमश्वसमीपसुप्तामुत्थाप्य पुरुषा अध्वर्युब्रह्मोद्गातृहोतृक्षत्तारो 'दधिक्राव्णः' इति मन्त्रं पठेयुरिति सूत्रार्थः ॥

'दधिक्राव्णो अकारिषम्'। वामदेवात्मजदधिक्राव्णदृष्टा अश्वदेवत्या अनुष्टुप् । वयमध्वर्य्वादयः । Vअकारिषम् । वचनव्यत्ययः । न इति लिङ्गात् । 'अकार्ष्म' । प्रकरणवशादश्लीलभाषणमित्यनुवर्तते । किमर्थम् ? Vअश्वस्य, संस्कारायेति शेषः । कीदृशस्य ? Vदधिक्राव्णः । दधाति नरमिति दधि ।

---

5. S3 पाठस्तु– दधिक्राव्णो ... तारिषदिति for दधिक्राव्ण इति

7. P2 M4 अकार्षम् for अकारिषम्

अश्वमेधमन्त्राः ]

" आदृगमहन° " ( पा ३.२.१७१ ) इति किप्रत्ययः । दधिः संक्रामतीति दधिक्रावा, तस्य । " अन्येभ्योऽपि दृश्यन्ते " ( पा ३.२.७५ ) इति वनिप्प्रत्ययः । " विड्वनोरनुनासिकस्यात् " ( पा ६.४.४१ ) इति धातोराकारः । जिष्णोः जयनशीलस्य वाजिनः अन्नवतः । यद्वा – वजति गच्छतीति वाजी, तस्येति । किं च– नः अस्माकं मुखा मुखानि । " शेश्छन्दसि° " (पा ६.१.७० ) इति शिलोपे नलोपे च रूपम्, सुरभि सुरभीणि सुवासितानि, करत् करोतु । यज्ञ इति शेषः । अश्लीलभाषणेन दुर्गन्धीनि मुखानि सुरभीणि सुवाक्यवक्तॄणि यज्ञः करोत्वित्यर्थः । निशब्दो बहुलमिति निलोपः । किं च– नः अस्माकम् आयूंषि जीवनानि बाल्ययौवनवार्धकानि प्रतारिषत् प्रतारयतु, प्रवर्धयतु । प्रतरतिर्वर्धनार्थः । करोतितरत्योः " लिङर्थे लेट् " ( पा ३.४.७ ) इति लेटि " लेटोऽडाटौ " ( पा ३.४.९४ ) इत्यटि कृते, " इतश्च लोपः परस्मैपदेषु " ( पा ३.४.९७ ) इति इकारलोपे च सति रूपसिद्धिः । एषोऽर्थो ब्राह्मणेऽभिहितः – " अप वा एतेभ्यः प्राणाः क्रामन्ति । ये यज्ञेऽपूतां वाचं वदन्ति दधिक्राव्णोऽकारिषमिति सुरभिमतीमृचमन्ततोऽन्वाहुर्वाचमेव पुनते नैभ्यः प्राणा अपक्रामन्ति " ( शब्रा १३.२.९.९ ) इति ॥१२॥

इति पञ्चविंशे षष्ठोऽनुवाकः ।

---

[ अथ सप्तमोऽनुवाकः ]

गायत्री त्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्या सह ।
बृहत्युष्णिहा ककुप्सूचीभिः शम्यन्तु त्वा ॥१॥

---

गायत्री । त्रिष्टुप् । त्रिस्तुबिति त्रिऽस्तुप् । जगती ।
अनुष्टुप् । अनुस्तुबित्यनुऽस्तुप् । पङ्क्त्या । सह ।
बृहती । उष्णिहा । ककुप् । सूचीभिः । शम्यन्तु । त्वा ॥ चं ॥१॥

---

आ– ' गायत्री त्रिष्टुप् ' इति । षडृचः अश्वदेवत्याः, आद्योष्णिक् चतस्रोऽनुष्टुभः । अन्त्या त्रिष्टुप् । गायत्री चतुर्विंशदक्षरा त्रिष्टुप् चतुश्चत्वारिंशदक्षरा जगती अष्टाचत्वारिंशदक्षरा । अनुष्टुप् द्वात्रिंशदक्षरा । पङ्क्त्या चत्वारिंशदक्षरात्मिकया । बृहती षट्त्रिंशदक्षरा । उष्णिहा अष्टाविंशदक्षरात्मिकया सह ककुप् । यस्या आद्यतृतीयपादावष्टाक्षरौ द्वितीयो द्वादशाक्षरश्चेत् सा ककुप् । ' सूचीभिः शम्यन्तु त्वा ' । लौहराजतसौवर्णाभिः सूचीभिः हे अश्व, त्वां शम्यन्तु । शमनं चाङ्गानां भेदनं तेन वर्त्मनिदर्शनं सूचीभिः क्रियते । तेन पथा असिः प्रवर्तते ॥३४॥

---

3. M4 यजन° for जयन°

20. S3 पाठस्तु– गायत्री ... शम्यन्तु त्वेति for ' गायत्री त्रिष्टुप् ' इति ।

अ- कात्यायनः - " तिस्रः पत्न्योऽसिपथान् कल्पयन्त्यश्वस्य सूचीभिर्लोहराजतसौवर्णीभिर्मणिसंख्याभिर्गायत्रीत्रिष्टुबिति द्वाभ्यां द्वाभ्याम् " ( काश्रौ २०.७.१ ) । गायत्री त्रिष्टुबिति षड्चे द्वाभ्यां द्वाभ्यामृग्भ्यां महिष्याद्यास्तिस्रः पत्न्यस्ताम्ररूप्यस्वर्णमयीभिः प्रत्येकमेकाधिकशतसंख्याभिः सूचीभिरश्वाङ्गेऽसेः शासस्य मार्गान् कुर्वन्ति । शासस्य सुखप्रवेशाय सूचीभिर्वितुद्य वितुद्य अश्वत्वचं जर्जरीकुर्वन्तीति सूत्रार्थः ॥

' गायत्री त्रिष्टुप् ' । अश्वदेवत्याः षड्चः । तत्राद्योष्णिक् । चतस्रोऽनुष्टुभः । अन्त्या त्रिष्टुप् । हे अश्व, $^{V}$गायत्री $^{V}$त्रिष्टुप् $^{V}$जगती $^{V}$अनुष्टुप् $^{V}$पङ्क्त्या $^{V}$सह $^{V}$बृहती $^{V}$उष्णिहा $^{V}$ककुप् । एतान्यष्टौ छन्दांसि $^{V}$सूचीभिः एताभिः । $^{V}$त्वा त्वां $^{V}$शम्यन्तु संस्कुर्वन्तु । विकरणव्यत्ययः । एष ब्राह्मणे- "यदसिपथान् कल्पयन्ति । सेतुमेव तं संक्रमणं यजमानः कुरुते स्वर्गस्य लोकस्य समष्ट्यै । सूचीभिः कल्पयन्ति । विशो वै सूच्यो राष्ट्रमश्वमेधो विशं चैवास्मिन् राष्ट्रं च समीची दधति ... । त्रयः सूच्यो भवन्ति-लोहमय्यो राजता हरिण्यो दिशो वै लोहमय्योऽवान्तरदिशो राजता ऊर्ध्वा हरिण्यस्ताभिरेवैनं कल्पयन्ति तिरश्चीभिश्चोर्ध्वाभिश्च " ( शब्रा १३.२.१०.१-४ ) इति ॥१॥

---

द्विपदा याश्चतुष्पदास्त्रिपदा याश्च षट्पदाः ।
विच्छन्दा याश्च सच्छन्दाः सूचीभिः शम्यन्तु त्वा ॥२॥

---

द्विपदा इति द्वि॒ऽपदाः । याः । चतुष्पदाः । चतुःपदा इति चतुःऽपदाः ।
त्रिपदा इति त्रिऽपदाः । याः । च । षट्पदा इति षट्ऽपदाः ।
विच्छन्दा इति विऽच्छन्दाः । याः । च । सच्छन्दा इति सऽच्छन्दाः ।
सूचीभिः । शम्यन्तु । त्वा ॥ कुं ॥२॥

---

आ- ' द्विपदा याः ' । $^{V}$द्विपदाः पादद्वयात्मिकाः $^{V}$याः छन्दोजातयः । याः $^{V}$चतुष्पदाः पादचतुष्टयात्मिकाः याः छन्दोजातयः । $^{V}$त्रिपदाः पादत्रयवत्यो याश्छन्दोजातयः । $^{V}$षट्पदाः षट्पदात्मिका विषमाक्षराः $^{V}$याः छन्दोजातयः । ' विच्छन्दा याश्च ' । $^{V}$विच्छन्दाः $^{V}$याः विषमपादलक्षणाः याश्छन्दोजातयः । $^{V}$सच्छन्दाः अन्यूनातिरिक्ताक्षरा याः छन्दोजातयः । हे अश्व, $^{V}$सूचीभिः यथाजातिभिः त्वां $^{V}$शम्यन्तु ॥२'१॥

---

4. M4 मुख° for सुख°

11. P2 हिरण्यो for हरिण्यो; P2 हिरण्यं for हरिण्यस्

19. S3 पाठस्तु- द्विपदा ... शम्यन्तु त्वेति for द्विपदा याः

अ– 'द्विपदा याः' । द्वे पदे यासां ताः vद्विपदाः, vयाः vचतुष्पदाः, याः vत्रिपदाः, vयाः vच vषट्पदाः, याः vविच्छन्दाः छन्दोलक्षणरहिताः vयाः vच vसच्छन्दाः छन्दोलक्षणसहिताः, ताः सर्वाश्छन्दोजातयः हे अश्व, vसूचीभिः त्वां vशम्यन्तु ॥२॥

---

महानाम्न्यो रेवत्यो विश्वा आशाः प्रभूवरीः ।
मैघीर्विद्युतो वाचः सूचीभिः शम्यन्तु त्वा ॥३॥

---

महानाम्न्य इति महाऽनाम्न्यः । रेवत्यः । विश्वाः । आशाः । प्रभूवरीरिति प्रऽभूवरीः ।
मैघीः । विद्युत इति विऽद्युतः । वाचः । सूचीभिः । शम्यन्तु । त्वा ॥ द्वी ॥३॥

---

आ– 'महानाम्न्यः' इति । vमहानाम्न्यः ऋचः शक्वर्य इति वर्ण्यन्ते । 'रेवत्यः' । एता अपि च vरेवत्यः ऋचस्तासु च रैवतं हि साम गीयते । 'विश्वा आशाः प्रभूवरीः' । vआशाः दिशः । vप्रभूवरीः प्रभूवर्यः प्रभूतवरणाः । vमैघीः vविद्युतः मेघसंबन्धिन्यः विद्युतः उत्पन्ना याः vवाचः ताः सर्वाः vसूचीभिः vशम्यन्तु vत्वा त्वां शमनं हविः कुर्वन्तु॥३६॥

---

अ– 'महानाम्न्यो रेवत्यः' । vमहानाम्न्यः शक्वर्यः ऋचः । vरेवत्यः यासु ऋक्षु रैवतं साम गीयते ता रेवत्यः । vविश्वाः vआशाः सर्वा दिशः । कीदृश्यः आशाः ? vप्रभूवरीः । प्रभवन्ति, सर्वभूतानि धारयितुं समर्था भवन्तीति प्रभूवर्यः । "अन्येभ्योऽपि दृश्यन्ते" (पा ३.२.७५) इति वनिप् । "ऋन्नेभ्यः°" (पा ४·१·५) इति ङीप् । "वनो र च" (पा ४·१·७) इति नस्य रेफः । पूर्वसवर्णदीर्घः । तथा मेघे भवा मैघ्यः । पूर्वसवर्णः । vमैघीः मेघोत्थाः vविद्युतः vवाचः वेदलक्षणा अन्या अपि एता सर्वाः vसूचीभिः हे अश्व, त्वां vशम्यन्तु ॥३॥

---

नार्यस्ते पत्न्यो लोम विचिन्वन्तु मनीषया ।
देवानां पत्न्यो दिशः सूचीभिः शम्यन्तु त्वा ॥४॥

---

नार्यः । ते । पत्न्यः । लोम । वि । चिन्वन्तु । मनीषया ।
देवानाम् । पत्न्यः । दिशः । सूचीभिः । शम्यन्तु । त्वा ॥ द्वां ॥४॥

---

8. S3 पाठस्तु– महानाम्न्यो ... त्वेति for 'महानाम्न्यः' इति ।
9. V2 ऋग्देवताश्च; S3 ऋ एव ताश्च for 'ऋचस्तासु च

आ– 'नार्यस्ते' इति। Vते तव यजमानस्य Vनार्यः Vपत्न्यः लोमानि विचिन्वन्तु Vमनीषया मनसा पर्यालोचनेन Vविचिन्वन्तु पृथक्कुर्वन्तु। 'देवानां पत्न्यो दिशः'। Vदेवानां च याः Vपत्न्यः Vदिशः च याः ताः Vसूचीभिः यथोक्ताभिः Vत्वा त्वां Vशम्यन्तु शमनं कुर्वन्तु ॥३७॥

---

अ– 'नार्यस्ते'। हे अश्व, Vपत्न्यः यज्ञे सहायाः Vनार्यः यजमानस्त्रियः Vते तव Vलोम रोमाणि Vमनीषया Vविचार्य Vविचिन्वन्तु पृथक्कुर्वन्तु। किं च – Vदेवानाम् इन्द्रादीनां Vपत्न्यः पत्नीरूपाः Vदिशः प्राच्याद्याः Vसूचीभिः त्वां Vशम्यन्तु ॥४॥

---

रजता हरि॑णीः सीसा युजो॑ युज्यन्ते कर्म॑भिः।
अश्व॑स्य वाजिन॑स्त्वचि सिमा॑ः शम्यन्तु शम्य॑न्तीः ॥५॥

---

रजताः। हरि॑णीः। सीसा॑ः। युजः। युज्यन्ते। कर्म॑भिरिति कर्म॑ऽभिः।
अश्व॑स्य। वाजिन॑ः। त्वचि। सिमा॑ः। शम्यन्तु। शम्य॑न्तीः ॥ ग्रि ॥५॥

---

आ– 'रजता हरिणीः' इति। Vरजताः रजतमयाः Vहरिणीः हरिण्यः विवक्षिता हरणशीला सुवर्णमय्यः Vसीसाः आयसमयाः सूच्यः प्रकरणवशात् रजतादिशब्दैस्तत् कार्याणि लक्ष्यन्ते। सूच्यः सुयुजः सहयोजनाः Vयुज्यन्ते ताःकर्मभिः सीमाकरणलक्षणैर्युज्यन्ते नियुज्यन्ते। ततः Vअश्वस्य Vवाजिनः वेगवतः चलनवतः चलनव्यत्ययः। अश्वस्य त्वचि रोममूलेषु मनीषया मनसः पर्यालोचनेन Vसिमाः Vशम्यन्तु। सिमाशब्दः सीमापर्यायः। Vशम्यन्तीः शमनहेतुभूताः सीमाः सीमां कुर्वन्तु। शमनं हविः कुर्वन्तु ॥३७॥

---

अ– 'रजता हरिणीः'। Vरजताः रजतमय्यः। हरिणीति सुवर्णनाम। Vहरिणीः हरिण्यः, सुवर्णमय्यः। Vसीसाः ताम्रमय्यः। सीसमिति ताम्रनाम। एताः सर्वाः सूच्यः Vकर्मभिः अश्वदेहे सीमाकरणलक्षणैः Vयुज्यन्ते योगं प्राप्नुवन्ति। कीदृश्यस्ताः? Vयुजः। युज्यन्ते संयुज्यन्ते इति युजः, एकीभूताः। ताः सूच्यः Vवाजिनः वेगवतः Vअश्वस्य Vत्वचि Vसिमाः सीमाः रेखाः Vशम्यन्तु कुर्वन्तु। सिमाशब्दः सीमापर्यायः। कीदृश्यस्ताः? Vशम्यन्तीः शम्यन्त्यः अश्वं संस्कुर्वन्त्यः ॥५॥

---

1. S3 पाठस्तु– नार्यस्ते ... शम्यन्तु त्वेति for 'नार्यस्ते' इति
12. S3 पाठस्तु– रजता ... शम्यन्तीः for 'रजता हरिणीः' इति
20. M4 प्राप्नुवन्तु for प्राप्नुवन्ति

**कुविदङ्ग यवमन्तो यवंचिद्यथा दान्त्यनुपूर्वं वियूय ।**
**इहेहैषां कृणुहि भोजनानि ये बर्हिषो नम उक्तिं न जग्मुः ॥६॥**

---

कुविदङ्ग ॥ क ॥ ६ ॥

---

आ– ' कुविदङ्ग ' इति । ' कुवित् ' इति बहुनाम । ' अङ्ग ' इति क्षिप्रनाम । हे सोम, यथा केचिज्जनपदाः Vकुवित् बहुक्षेत्रं Vअङ्ग क्षिप्रं Vयवमन्तः बहुयवसंपन्नाः ( चिच्छब्दो वितर्के । Vयवम् Vयथा बहुधा यवसस्यं Vदान्ति । दाप् लवने । लुनन्ति । Vअनुपूर्वम् अनुपूर्वेण लवनं कृत्वा । Vवियूय पृथक्कृत्य निश्चित्य ' इहेहैषां कृणुहि भोजनानि ' । Vइह च धनानि व्युत्पन्नानाम् अन्यक्षनाय (?) Vएषां यजमानानां Vभोजनानि भोग्यानि वस्तूनि Vकृणुहि कुरुष्व । Vबर्हिषः Vनमउक्ति Vये यजमानानां बर्हिषः उपस्थिताः । नम इत्यन्ननाम । उक्तं वचनं हविर्लक्षणमन्नमादाय उक्तम् आज्यम् अभिधाय ये यजन्ति, तेषामेषां भोजनानि कृणुहि । एवं चित् Vन Vजग्मुः । ये एवं क्रियापरं न गच्छन्ति चित् तेषां न कृणुहीत्यर्थे उक्तं भवति । यद्वा– ये यजमानाश्च भिषजो नमउक्तिं न यज्ञसंबन्धितया क्लृप्तमन्नं हविर्योग्यमन्नमादाय उक्तिं यजमानाभिधानं न इव यथास्थितं तथैव ये यजन्ति तेषामिति संबन्धः । पूर्वं सौत्रामणि-प्रकरणे अभिहितः । इह तु अर्थवशात् अश्वमेधप्रकरणे पाठितोऽयं मन्त्रः ॥२९॥

---

अ– ' कुविदङ्ग यवमन्तः ' । व्याख्याता ॥६॥

इति पञ्चविंशे सप्तमोऽनुवाकः ॥७॥

---

4. S3 पाठस्तु– कुविदङ्ग ... जग्मुरिति for ' कुविदङ्ग ' इति
5. S3 केनचित् for केचित्
8. V2 अभ्याक्षनाय for अव्यक्षनाय; V2 येषां for एषां
10. S2 अन्नसाक्ष्यः for अन्नमादाय
13. V2 पूर्वत्र for पूर्वं

## [ अथ अष्टमोऽनुवाकः । ]

**कस्त्वा छ्यति कस्त्वा विशास्ति कस्ते गात्राणि शम्यति ।
क उ ते शमिता कविः ॥१॥**

क: । त्वा । आ । छ्यति । कः । त्वा । वि । शास्ति ।
कः । ते । गात्राणि । शम्यति ।
कः । ऊँ इत्यूँ । ते । शमिता । कविः ॥ ॐ ॥१॥

आ– अश्वं विशास्त्यनुवाकेन षडृचेन । ' कस्त्वा छ्यति ' । तत्राद्या गायत्री पञ्चानुष्टुभः । ' कस्त्वा छ्यति ' । छो छेदने । छान्दसम् । हे अश्व, [V]त्वा त्वां [V]कः प्रजापतिः [V]आछ्यति आछिनत्ति । [V]कः च [V]त्वा [V]विशास्ति विशसनं करोति । विशसनं नाम हृदयाद्यवयवग्रहणम् । प्रजापतिरेव त्वां विशास्तीति धिया योजयति । ' कस्ते गात्राणि शम्यति ' । [V]कः प्रजापतिरेव [V]ते तव [V]गात्राणि शरीराणि तदवयवांश्च [V]शम्यति । शमनेन हविर्भागमापादयति । ' क उ ते शमिता कविः ' ? [V]उ एवार्थे । [V]कः प्रजापतिरेव [V]ते तव [V]शमिता शमयिता । विशसनकर्ता सन् [V]कविः क्रान्तदर्शनः ।

यद्वा– प्रश्नरूपोऽयं मन्त्रः । को नाम मनुष्यः त्वाम् आछ्यति ? कश्च त्वां विशास्ति ? कश्च ते गात्राणि शम्यति ? कश्च ते उ शमयिता कविरिति पृच्छति ? न केऽपि मनुष्या इत्याक्षेपाभिप्रायः । अस्मिन् पक्षे प्रजापतिरिति व्याख्यातः ॥४०॥

अ– कात्यायनः – " अश्वं विशास्त्यनुवाकेन कस्त्वा छ्यतीति " ( काश्रौ २०.७.६ ) । षडृचेनानुवाकेन अश्वं विशास्ति । अश्वोदरं पाटयति मेदस उद्धरणाय । वपाया अभावात् । उदरमध्यस्थं स्त्यानघृताभं घनं श्वेतं मांसं मेद इति सूत्रार्थः ॥

' कस्त्वा छ्यति ' । अश्वदेवत्याः षडृचः । आद्या गायत्री । पञ्चानुष्टुभः प्रजापतिर्दृष्टाः । हे अश्व, [V]कः प्रजापतिः [V]त्वा त्वाम् [V]आ [V]छ्यति छिनत्ति । छो छेदने । लट् । " ओतः श्यनि " ( पा ७.३.७१ ) इत्योकारलोपः । [V]कः एव त्वां [V]विशास्ति त्वचा वियोजयति । [V]कः एव [V]ते तव [V]गात्राणि [V]शम्यति । शमनेन हविः करोति । [V]कः [V]उ प्रजापतिरेव [V]कविः मेधावी [V]ते तव [V]शमिता शमयिता । कशब्दः प्रजापतिवाची । " प्रजापतिर्वै कः " ( शब्रा ६.४.३.४ ) इति श्रुतेः । यद्वा– कः प्राणी त्वाम् आछ्यतीत्याक्षेपरूपेण व्याख्याने सर्वमीश्वरः करोति । नाहमिति योजना ॥१॥

7. V2 षट्तृचेम for षडृचेन; पाठस्तु–कस्त्वा ... कविरिति for कस्त्वा छ्यति ।
13. V2 विक्रान्त° for क्रान्त°

ऋतवस्त ऋतुथा पर्व शमितारो वि शासतु ।
संवत्सरस्य तेजसा शमीभिः शम्यन्तु त्वा ॥२॥

ऋतवः । ते । ऋतुथेत्यृतुऽथा । पर्व । शमितारः । वि । शासतु ।
संवत्सरस्य । तेजसा । शमीभिः । शम्यन्तु । त्वा ॥ गिं ॥२॥

आ– ' ऋतवस्ते ' इति । $^v$ऋतवः च $^v$ते $^v$शमितारः $^v$ऋतुथा ऋतौ काले काले पर्वणि पर्वणि, $^v$वि $^v$शासतु विशसनं कुर्वन्तु । ' संवत्सरस्य तेजसा शमीभिः शम्यन्तु त्वा ' । $^v$संवत्सरस्य कालस्य $^v$तेजसा युक्ताभिः $^v$शमीभिः । शमीति कर्मनाम । शमीभिः कर्मभिः । $^v$त्वा अश्वं $^v$शम्यन्तु । शमनेन कर्म आपादयन्तु ॥४१॥

अ– ' ऋतवस्ते ' । हे अश्व, $^v$ऋतवः $^v$शमितारः $^v$ऋतुथा । ऋतौ ऋतौ सप्तम्यर्थे थाल् । काले काले $^v$ते तव $^v$पर्व पर्वणि अस्थिग्रन्थीन् $^v$शमीभिः कर्मभिः $^v$विशासतु भिन्नानि कुर्वन्तु । तथा $^v$संवत्सरस्य संवत्सरात्मकदेवस्य $^v$तेजसा सामर्थ्येन $^v$शमीभिः कर्मभिश्च । शमीति कर्मनाम । हे अश्व, $^v$त्वा त्वां $^v$शम्यन्तु शमं प्रापयन्तु ॥२॥

अर्धमासाः परूंषि ते मासा आ छ्यन्तु शम्यन्तः ।
अहोरात्राणि मरुतो विलिष्टं सूदयन्तु ते ॥३॥

अर्धमासा इत्यर्धऽमासाः । परूंषि । ते । मासाः । आ । छ्यन्तु । शम्यन्तः ।
अहोरात्राणि । मरुतः । विलिष्टमिति विऽलिष्टम् । सूदयन्तु । ते ॥ झिं ॥३॥

आ– ' अर्धमासाः परूंषि ते ' । $^v$अर्धमासाः च हे अश्व, $^v$ते तव $^v$परूंषि पर्वाणि मरुतश्च $^v$आ $^v$छ्यन्तु आच्छादयन्तु । $^v$मासाः च $^v$शम्यन्तः शमनं कुर्वन्तः शमनेन हविर्भागमापादयन्तु । किं च – ' अहोरात्राणि मरुतो विलिष्टं सूदयन्तु ते ' । $^v$अहोरात्राणि $^v$मरुतः च देवाः $^v$विलिष्टं $^v$ते तव अङ्गं यदिति विलिष्टं दुःश्लिष्टं $^v$सूदयन्तु । षूद क्षरण इति तत्र क्षरणे पठ्यते । इह तु संधाने वर्तते । वाक्ययोगात् ॥४२॥

5. S3 पाठस्तु– ऋतवस्ते .. त्वेति for ' ऋतवस्ते ' इति ।
17. S3 पाठस्तु - अर्धमासाः ... सूदयन्तु त इति for ' अर्धमासा ... ते ' ।
21. S3 संधान for संधाने

अ–' अर्धमासाः परूंषि '। vअर्धमासाः पक्षाः, vमासाः च तदभिमानिनो देवाः vशम्यन्तः संस्कुर्वन्तः सन्तः vते तव vपरूंषि पर्वाणि vआछ्यन्तु समन्तात् छिन्दन्तु। परुस् शब्दः पर्ववचनः। "ग्रन्थिर्ना पर्वपरुषी" ( अको २.४.१६२ ) इति कोशात्। किं च – vअहोरात्राणि अहोरात्राभिमानि देवाः vमरुतः च देवाः vते तव vविलिष्टं। लिश अल्पीभावे। विशेषेण अल्पमङ्गं vसूदयन्तु संदधतु। सूद निरासे। अत्र संधानार्थः व्यर्थं माऽस्तु ॥३॥

दै॒व्या॑ अध्व॒र्यव॑स्त्वा छ्य॑न्तु॒ वि च॑ शासतु ।
गात्रा॑णि प॒र्व॒शस्ते॒ सिमा॑ः कृण्वन्तु॒ शम्य॑न्तीः ॥४॥

दै॒व्या॑ः । अ॒ध्व॒र्यव॑ः । त्वा॒ । आ । छ्य॒न्तु॒ । वि । च॒ । शा॒स॒तु॒ ।
गात्रा॑णि । प॒र्व॒शेति॑ प॒र्व॒ऽशः । ते॒ । सिमा॑ः । कृ॒ण्व॒न्तु॒ । शम्य॑न्तीः ॥ ङुं ॥४॥

आ– 'दैव्या अध्वर्यवः' इति। vदैव्याः देवानां संबन्धिनः दैव्याः, अश्विन्यादयः। vअध्वर्यवः प्रतिप्रस्थात्रादयः vत्वा त्वाम् आछ्यन्तु। 'वि च शासतु'। आच्छिन्दन्तु। vवि vच। चकारो भिन्नक्रमः। vविशासतु च विशसनं कुर्वन्तु। 'गात्राणि पर्वशस्ते सिमाः कृण्वन्तु शम्यन्तीः'। vते तव vगात्राणि vपर्वशः पर्वशः vसिमाः सीमाः मर्यादाः कुर्वन्तु। vशम्यन्तीः मर्यादादर्शनेन शमनं कुर्वाणाः vकृण्वन्तु ॥४३॥

अ– 'दैव्या अध्वर्यवः'। देवानामिमे vदैव्याः। vअध्वर्यवः अश्विप्रभृतयः। "अश्विनौ देवानामध्वर्यू" (मैसं ४.५.४) इति श्रुतेः। हे अश्व, त्वाम् vआछ्यन्तु आच्छिन्दन्तु। vविशासतु vच। तथा तव vगात्राणि गात्रेषु vपर्वशः पर्वणि पर्वणि vसिमाः मर्यादाः vकृण्वन्तु। कृ करणे। स्वादिः। गात्राणीति प्रथमा सप्तम्यर्थे। कीदृशीः सिमाः? vशम्यन्तीः संस्कुर्वाणाः ॥४॥

1. M4 देवताः for देवाः.
5. M4 अस्तु for माऽस्तु
10. S3 दैव्या ... शम्यन्तीरिति for 'दैव्या अध्वर्यवः' इति

द्यौस्ते॑ पृथि॒व्य॒न्तरि॑क्षं वा॒युश्छि॒द्रं पृ॑णातु ते ।
सूर्य॑स्ते॒ नक्ष॑त्रैः स॒ह लो॒कं कृ॑णोतु साधु॒या ॥५॥

द्यौः । ते॒ । पृ॒थि॒वी । अ॒न्तरि॑क्षम् । वा॒युः । छि॒द्रम् । पृ॒णा॒तु॒ । ते॒ । सूर्यः॑ ।
ते॒ । नक्ष॑त्रैः । स॒ह । लो॒कम् । कृ॒णो॒तु॒ । सा॒धु॒येति॑ सा॒धुऽया ॥ द्यु ॥५॥

आ— ‘ द्यौस्ते ’ इति । द्यौः च पृथिवी च अन्तरिक्षं च वायुः च ते तव छिद्रं [अ]परिपूर्णं यत् तत् पृणातु परिपूर्णं करोतु । किं च — ‘ सूर्यस्ते नक्षत्रैः सह लोकं कृणोतु साधुया ’ । नक्षत्रैः सह सूर्यः ते तव त्वां साधुया । साधु इत्यस्मिन्नर्थे साधुयेति छान्दसम् । द्वितीयार्थे तृतीया । साधुलोकम् उत्तमलोकं कृणोतु करोतु प्रयच्छत्वित्यर्थः ॥४४॥

अ— ‘ द्यौस्ते ’ । द्यौः स्वर्गः पृथिवी अयं लोकः अन्तरिक्षम् अन्तरिक्षलोकश्च । लोकत्रयाभिमानी देव इत्यर्थः । वायुः च शरीरस्थः प्राणादिः । हे अश्व, ते तव छिद्रं पृणातु प्रत्येकं पूरयतु । किं च— नक्षत्रैः सहितः सूर्यः ते तव साधुया साधुं समीचीनं लोकं कृणोतु करोतु । “ सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः ” (पा ७.१.३९) इति साधुशब्दात् परस्य द्वितीयैकवचनस्य यादेशः । सूर्यस्तवोत्तमं लोकं ददात्वित्यर्थः ॥५॥

शं ते॒ परे॑भ्यो॒ गात्रे॑भ्यः॒ शम॒स्त्वव॑रेभ्यः ।
शम॒स्थभ्यो॑ म॒ज्जभ्य॒ः शम्व॑स्तु त॒न्वै॑ तव॑ ॥६॥ (८)

शम् । ते॒ । परे॑भ्यः । गात्रे॑भ्यः । शम् । अ॒स्तु॒ । अव॑रेभ्यः ।
शम् । अ॒स्थभ्य॒ इत्य॒स्थऽभ्यः॑ । म॒ज्जभ्य॒ इति॑ म॒ज्जऽभ्यः॑ । शम् । ऊँ॒ इत्यूँ॑ ॥
अ॒स्तु॒ । त॒न्वै॑ । तव॑ ॥ णूं ॥६॥ (८)

5. S3 द्यौस्तै ... साधुयेति for ‘ द्यौस्ते ’ इति

आ– ‘ शं ते परेभ्यः ’ इति । हे अश्व, vते तव vशं सुखम् अस्तु । vपरेभ्यः vगात्रेभ्यः vशमस्तु, vअवरेभ्यः शमस्तु । vअस्थभ्यः अस्थिभ्यः vशम् अस्तु । vमज्जभ्यः शमस्तु । vशम्वस्तु । शम् उ अस्तु । vतन्वै । षष्ठ्यर्थे चतुर्थी । vतव तन्वाः शरीरस्य तव शमस्तु करोतु ॥४५॥

अ– ‘ शं ते परेभ्यः ’ । हे अश्व, vते तव vपरेभ्यः vगात्रेभ्यः अवयवेभ्यः । परशब्द उत्तमार्थः । “ परः प्रधाने ” ( वाप्रा २.२७ ) इति प्रातिशाख्येन आद्युदात्तत्वात् । शिर आदिमुख्यावयवेभ्य इति यावत् । सुखमस्तु । तथा vअवरेभ्यः गात्रेभ्यः पादाद्यवयवेभ्यः vशम् vअस्तु । vअस्थभ्यः तवास्थिभ्यः vशमस्तु । अनुषङ्गः । “ अस्थिदधिसक्थ्यक्ष्णामनङ् उदात्तः ” ( पा ७.१.७५) इत्यस्यानुवृत्तौ “ छन्दस्यपि दृश्यते ” ( पा ७.१.७६ ) इति सूत्रेण हलादावप्यस्थिशब्दस्यानङादेशः । vमज्जभ्यः । षष्ठधातुभ्यः शं सुखमस्तु । किं बहुना vतव vतन्वै सर्वशरीराय शम् सुखमेव vअस्तु । अत्र सर्वत्र आशिषि चतुर्थी ॥६॥

[ इति पञ्चविंशे अष्टमोऽनुवाकः ॥२०॥ ]

## [ अथ नवमोऽनुवाकः ]

कः स्विदेकाकी चरति क उ स्विज्जायते पुनः ।

किꣳ स्विद्धिमस्य भेषजं किम्वावपनं महत् ॥१॥

कः स्वित् । क ॥१॥

आ– होत्रध्वर्यू च सदसि संवदेते चतसृभिः कण्डिकाभिः । ‘ कः स्विदेकाकी चरति ’ इति । इत उत्तरमष्टादशर्चं ब्रह्मोद्यम् । अध्वर्युब्रह्महोत्रादीनां प्रश्नप्रतिप्रश्नभूतम् । आद्यश्चतस्रोऽनुष्टुभः । होता अध्वर्युं पृच्छति– ‘ कः स्वित् ’ इति ॥४६॥

1. S3 पाठस्तु– शं ते ... तवेति for ‘ शं ते परेभ्यः ’ इति
7. M4 अस्थिभ्यः for अस्थभ्यः
16. S3 पाठस्तु– कः स्विद् ... महदिति for ‘ कः स्विदेकाकी चरति ’ इति
18. S3 om. कः स्विदिति

अ– कात्यायनः – " प्राग्वपाहोमाद्धोताऽध्वर्यू च सदसि संवदेते चतसृभिः " ( काश्रौ २०.७.१० ) । ' कः स्विदेकाकी ' इति पूर्ववत् । वपाहोमात् प्राक् चतुर्भिर्मन्त्रैः पूर्ववदुक्तिप्रत्युक्त्या सदोमध्ये गत्वा होता अध्वर्युश्च संवादं वाकोवाक्यं कुरुतः इति सूत्रार्थः ॥

' कः स्विदेकाकी चरति ' । इत आरभ्य अष्टादश ऋचो ब्रह्मोद्यसंज्ञाः । ब्रह्मोद्यं वाकोवाक्यं प्रश्नप्रतिवचनरूपम् । तत्राद्याश्चतस्रोऽनुष्टुभः । कः स्विदित्याद्याश्च अनुष्टुभः । पञ्चमाद्या दश त्रिष्टुभः ।

होता अध्वर्युं पृच्छति– ' कः स्वित् ' इति ॥१॥

---

सूर्य॑ एका॒की च॑रति च॒न्द्रमा॑ जायते॒ पुन॑ः ।
अ॒ग्निर्हि॒मस्य॑ भेष॒जं भूमि॑रा॒वप॑नं म॒हत् ॥२॥

---

सूर्य॑ एका॒की ॥ स ॥२॥

---

आ– तं प्रत्याह– ' सूर्य एकाकी चरति ' इति । एतौ द्वावपि व्याख्यातौ ॥४७॥

---

अ– अध्वर्युः प्रत्याह– ' सूर्य एकाकी ' इति ॥२॥

---

कि॑ स्वि॒त् सूर्य॑सम॒ं ज्योति॒ः कि॑ सं॑मु॒द्रस॑म॒ं सर॑ः ।
कि॑ स्वि॑त् पृ॒थि॒व्यै॒ वर्षी॑यः कस्य॒ मात्रा॒ न वि॑द्यते ॥३॥

---

किम् । स्वि॒त् । सूर्य॑सम॒मिति॒ सूर्य॑ऽसमम् । ज्योति॑ः ।
किम् । स॒मु॒द्रस॑म॒मिति॑ स॒मु॒द्रऽस॑मम् । सर॑ः ।
किम् । स्वि॒त् । पृ॒थि॒व्यै । वर्षी॑यः ।
कस्य॑ । मात्रा॑ । न । वि॒द्य॒ते ॥ जुं ॥३॥

---

11. S3 सूर्य एकाकी ... महदिति for ' सूर्य एकाकी चरति ' इति

आ– अध्वर्युर्होतारं पृच्छति– ‘ [1]किं स्वित् सूर्यसमं ज्योतिः ’ इति । सूर्येण समं सूर्यसदृशं $^{v}$ज्योतिः $^{v}$किम् इति प्रश्नः । ‘ किं समुद्रसमं सरः ’ । समुद्रेण समं $^{v}$सरः सरसि $^{v}$किम् इति । ‘ किं स्वित् पृथिव्यै ’ । व्यत्ययः । पृथिव्यां $^{v}$वर्षीयः महत्तरं $^{v}$किम् । $^{v}$कस्य पदार्थस्य $^{v}$मात्रा परिमाणं $^{v}$न $^{v}$विद्यते ॥४८॥

अ– अध्वर्युर्होतारं पृच्छति, ‘ किं स्वित् सूर्यसमम् ’ इति । तत्र द्वे व्याख्याते । हे होतः, $^{v}$स्वित् इति वितर्के । $^{v}$सूर्यसमं सूर्यमण्डलतुल्यं $^{v}$ज्योतिः तेजः $^{v}$किम् तद् ब्रूहि । तथा $^{v}$समुद्रसमं समुद्रतुल्यं $^{v}$सरः $^{v}$किं स्वित् । तथा $^{v}$पृथिव्यै पृथिव्याः सकाशात् $^{v}$वर्षीयः महत्तरं $^{v}$किं स्वित् । “ प्रियस्थिर°– ” ( पा ६.४.१५७ ) इत्यादिना वृद्धशब्दस्य वर्षादेशः ईयसि प्रत्यये । तथा $^{v}$कस्य $^{v}$मात्रा परिमाणं $^{v}$न $^{v}$विद्यते ॥३॥

ब्रह्म सूर्यसमं ज्योतिर्द्यौः समुद्रसमꣳ सरः ।
इन्द्रः पृथिव्यै वर्षीयान् गोस्तु मात्रा न विद्यते ॥४॥

ब्रह्म । सूर्यसममिति सूर्यऽसमम् । ज्योतिः । द्यौः । समुद्रसममिति समुद्रऽसमम् । सरः ।
इन्द्रः । पृथिव्यै । वर्षीयान् । गोः । तु । मात्रा । न । विद्यते ॥ ३ं ॥४॥

आ– होता प्रत्याह– ‘ [14]ब्रह्म सूर्यसमम् ’ इति । “ येन सूर्यस्तपति तेजसेद्धः ” ( तैब्रा ३.१२.९.७ ) इत्यादौ परमतेजोरूपं यत् $^{v}$ब्रह्म तदेव $^{v}$सूर्यसमं $^{v}$ज्योतिः इति अभिधीयते । मण्डलोपलक्षितपरब्रह्मैव सूर्य इत्यभिधीयते । सच्चिदानन्दरूपस्य सूर्यस्य तथाविधब्रह्मैव यत्किंचिन्निमित्तवशात् किंचिद्भेदमाश्रित्य सत्यमित्यभिधीयते । नान्यत् । ‘ द्यौः समुद्रसमं सरः ’ । बहुविधजलरत्नादिमत्त्वात् च द्युस्थानस्य । अतः $^{v}$समुद्रसमं $^{v}$सरः इत्यभिहितम् । ‘ इन्द्रः पृथिव्यै वर्षीयान् ’ । पृथिव्याः $^{v}$इन्द्रः महत्तरः अनवरतसर्वफलप्रदानेन । $^{v}$गोः तु $^{v}$मात्रा $^{v}$न $^{v}$विद्यते । गवा हि यज्ञो धार्यते । स च जगतः कारणं भवतीति । ब्रह्मोद्गाता च सदसि संवदेते ॥४९॥

1. S3 पाठस्तु– किं स्वित् ... विद्यत इति for ‘ किं स्वित् ... ज्योतिः ’ इति

14. S3 पाठस्तु– ब्रह्म ... न विद्यत इति for ‘ ब्रह्म सूर्यसमम् ’ इति

अश्वमेधमन्त्राः ]

अ– होता अध्वर्युं प्रत्याह– ‘ ब्रह्म सूर्यसमं ज्योतिः ’ । [v]सूर्यसमं [v]ज्योतिः [v]ब्रह्म । त्रयीलक्षणपरं च । सूर्यसमत्वकथनं प्राकृतलोकाभिप्रायम् । ब्रह्मणोऽनन्तसूर्यवत् प्रकाशकत्वात् । “ तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ” ( कठोप ५.१५ ) इति श्रुतेः । तथा [v]समुद्रसमं [v]सरः [v]द्यौः अन्तरिक्षलोकः । यतो वृष्टिर्भवति । वृष्ट्या विश्वस्य जीवनाद्दिवः सरस्त्वमिति ध्वनिः । [v]पृथिव्यै पृथिव्याः सकाशात् [v]इन्द्रः [v]वर्षीयान् वृद्धतरः । वृष्ट्यादिना भूमिरक्षणेनातिमहानित्यर्थः । यद्वा– परमेश्वर एवेन्द्रः । सर्वाधारभूतायाः पृथिव्या धारकत्वात् । “ य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा ” ( ऋ. १.१५४.४ ) इत्यादिश्रुतेः । [v]तु पुनः [v]गोः धेनोः [v]मात्रा साम्यं [v]न [v]विद्यते । यज्ञादिधारकत्वात् ॥४॥

पृच्छामि त्वा चितये देवसख यदि त्वमत्र मनसा जगन्थ ।
येषु विष्णुस्त्रिषु पदेष्वेष्टस्तेषु विश्वं भुवनमा विवेशा३ ॥५॥

पृच्छामि । त्वा । चितये । देवसखेति देवऽसख ।
यदि । त्वम् । अत्र । मनसा । जगन्थ ।
येषु । विष्णुः । त्रिषु । पदेषु । एष्ट इत्याऽइष्टः ।
तेषु । विश्वम् । भुवनम् । आ । विवेशा ३ ॥ त्र ॥५॥

आ– अथ ब्रह्मोद्गातारं पृच्छति– ‘ पृच्छामि त्वा ’ इति । हे [v]देवसख, देवानां सखिभूत उद्गातः [v]त्वा [v]पृच्छामि [v]चितये । चिती संज्ञाने परिज्ञानाय । ‘ यदि त्वमत्र मनसा जगन्थ ’ । [v]अत्र अस्मिन् विषये पृष्टः सन् [v]मनसा अवगच्छसि । ‘ येषु विष्णुस्त्रिषु पदेष्वेष्टस्तेषु विश्वं भुवनमाविवेशा ’ । [v]येषु [v]त्रिषु [v]पदेषु गार्हपत्याहवनीयदक्षिणाग्निषु स्थानेषु [v]विष्णुः यज्ञः [v]एष्टः आ इष्टः । यजतेरेतद्रूपम् । यागादिना पूजितः । तेषु विश्वं भुवनं [ भूत- ] जातम् । [v]आ [v]विवेशा । प्लुतस्तु प्रश्नार्थे । आविष्टं भवति उत नेत्यर्थः ॥५०॥

1. M4 om. सूर्यसमं ज्योतिर्ब्रह्म
14. S3 पाठस्तु– पृच्छामि त्वा चित्तये ... विवेशेति for ‘ पृच्छामि त्वा ’ इति
15. S3 चित्तये for चितये
19. S3 यागादि॰ for यागादिना
20. S3, V2 om. भुवनं

अ– कात्यायनः– "ब्रह्मोद्गातारं पृच्छति पृच्छामीति" ( काश्रौ. २०.७.११ )। चतुर्भिर्मन्त्रैः सदसि ब्रह्मोद्गातारौ संवदत इति सूत्रार्थः ॥ ब्रह्मोद्गातारं पृच्छति – 'पृच्छामि त्वा चितये'। देवानां सखा देवसखः । "राजाहःसखिभ्यष्टच्" ( पा. ५.४.९१ )। तत्संबोधनम् । हे देवसख उद्गातः त्वा त्वां चितये ज्ञानाय । चिती संज्ञाने । इक्प्रत्ययः । अहं पृच्छामि । अत्र मत्कृते प्रश्ने यदि त्वं मनसा अन्तरिन्द्रियेण जगन्थ जानासि । गमेर्लिटि मध्यमैकवचनम् । ये गत्यर्थास्ते ज्ञानार्थाः । किं पृच्छसीत्यत आह- विष्णुः यज्ञः परमात्मा वा येषु त्रिषु पदेषु गार्हपत्याहवनीयदक्षिणाग्निषु त्रिविक्रमपदेषु वा एष्टः । आ इष्टः । यागेन तर्पितः । द्वितीयपक्षे एष्टः प्रविष्टः । बभूवेति शेषः । यजेः कर्मणि क्तः । तेषु त्रिषु पदेषु विश्वं सर्वं भुवनम् आविवेशा३ प्रविष्टम् । उत नेति प्रश्ने प्लुतः ॥५॥

---

अपि तेषु त्रिषु पदेष्वस्मि येषु विश्वं भुवनमा विवेश ।
सद्यः पर्येमि पृथिवीमुत द्यामेकेनाङ्गेन दिवो अस्य पृष्ठम् ॥६॥

---

अपि । तेषु । त्रिषु । पदेषु । अस्मि ।
येषु । विश्वम् । भुवनम् । आविवेशेत्याऽविवेश ।
सद्यः । परि । एमि । पृथिवीम् । उत । द्याम् ।
एकेन । अङ्गेन । दिवः । अस्य । पृष्ठम् ॥ खः ॥६॥

---

आ– उद्गाता प्रत्याह– 'अपि तेषु त्रिषु' इति । तेषु त्रिषु पदेषु गार्हपत्याहवनीयदक्षिणाग्निषु येषु पदेषु विश्वं सर्वं भुवनं भूतजातम् आविवेश आविष्टम् । एवम् अपि अस्मि इति अहमपि त्रिषु तेषु प्रविष्टोऽस्मि । त्वमपि प्रविष्टोऽसीति भावः । यत् पुनरेतत् पृष्टं भवता यदि 'त्वमत्र मनसा जगन्थ' इति अत्र ब्रूमः । 'सद्यः पर्येमि'। सद्यः एककाले एव परि एमि परिगच्छामि । पृथिवीं जानामि । उत अपि द्यां द्युलोकमपि अवगच्छामि । एकेन अङ्गेन एकमुखेन मनसा जानामि । दिवः अस्य पृष्ठं च जानामि । किमुत भूतान्याविष्टानीति ॥५१॥

---

4. M4 चित्तये for चितये
16. S3 पाठस्तु- अपि ... पृष्ठमिति for 'अपि ... त्रिषु' इति
21. S3 om. च
22. V2 after आविष्टानि ins. अपि ह्याविष्टानि; S3 अपि त्वाविष्टानि

अश्वमेधमन्त्राः ]

अ– उद्गाता ब्रह्माणं प्रत्याह– ' अपि तेषु ' । हे ब्रह्मन्, [v]येषु त्रिषु पदेषु [v]विश्वं [v]भुवनम् [v]आविवेश इति यत् त्वया पृष्टम्, [v]तेषु [v]त्रिषु [v]पदेषु पूर्वोक्तेषु गार्हपत्यादिषु अहम् [v]अस्मि । अहमपि तत्रैवावस्थितोऽस्मि । अपि शब्दात् त्वं च तत्रैवासि । न केवलमेतावज्जानामि । किंतु–[v]पृथिवीम् [v]उत अपि च [v]द्यां स्वर्गम् । [v]अस्य [v]दिवः स्वर्गस्य [v]पृष्ठम् उपरिभागमपि । [v]सद्यः तत्क्षणमेव [v]एकेन [v]अङ्गेन अन्यस्यासाहायेन मनसा [v]परि [v]एमि परिगच्छामि, सर्वं जानामि । किं पुनर्भूतानि प्रविष्टानीति भावः ॥६॥

---

केष्व॒न्तः पुरु॑ष॒ आ वि॑वे॒श कान्य॒न्तः पुरु॑षे॒ अर्पि॑तानि ।
ए॒तद् ब्र॑ह्म॒न्नुप॑ वल्हामसि त्वा॒ कि॑ᳲ स्वि॑न्न॒ः प्रति॑ वोचा॒स्यत्र॑ ॥७॥

---

केषु॑ । अ॒न्तरित्य॒न्तः । पुरु॑षः । आ । वि॒वे॒श ।
कानि॑ । अ॒न्तरित्य॒न्तः । पुरु॑षे । अर्पि॑तानि ।
ए॒तत् । ब्र॒ह्म॒न् । उप॑ । व॒ल्हा॒मा॒सि॒ । त्वा॒ ।
किम् । स्वि॒त् । न॒ः । प्रति॑ । वो॒चा॒सि॒ । अत्र॑ ॥ इयः ॥७॥

---

आ– अथोद्गाता ब्रह्माणं पृच्छति– ' केष्वन्तः पुरुष आ विवेश ' इति । [v]केषु [v]अन्तः मध्ये [v]पुरुषः जगदादिभूतः [v]आ [v]विवेश आविष्टः । ' कान्यन्तः पुरुषे अर्पितानि ' । तस्मिन् [v]पुरुषे [v]अन्तः [v]कानि [v]अर्पितानि । ' एतद् ब्रह्मन्नुप वल्हामसि त्वा ' । वल्ह प्राधान्ये । इह तु आह्वानपूर्वे संहर्षे वर्तते । छान्दसं पदम् । व्यत्ययः । [v]उपवल्हाम् [v]असि । हे [v]ब्रह्मन् उपसंगम्य आहूयोत्क्षिप्य बाहुमेतं त्वां पृच्छामि । त्वां भवन्तमिति । 'किᳲ स्विन्नः प्रतिवोचास्यत्र' । [v]अत्र प्रश्ने [v]नः अस्माकं [v]प्रतिवोचासि [v]किं [v]स्वित् । प्रतिब्रवीषि किंस्विदिति ॥५२॥

---

अ– उद्गाता ब्रह्माणं पृच्छति– ' केष्वन्तः पुरुष आविवेश ' । हे [v]ब्रह्मन्, पुरुषः [v]केषु पदार्थेषु [v]अन्तः मध्ये [v]आविवेश प्रविवेश । तथा [v]पुरुषे [v]अन्तः मध्ये [v]कानि वस्तूनि [v]अर्पितानि स्थापितानि । [v]एतत् इदं प्रमेयम् । [v]त्वा त्वां [v]प्रति वयम् [v]उप [v]वल्हामसि उपवल्हामः । स्पर्द्धया पृच्छामः । वल्ह प्राधान्यपरिभाषणहिंसादानेषु । अस्माल्लट्युत्तमम् । " इदन्तो मसि " ( पा ७.१.४६ ) इति मस इकारः । अत्र प्रश्ने [v]किं [v]स्वित् । ' [v]त्वां ' प्रति [v]वोचासि प्रतिवदसि । " वच उम् " ( पा ७.४.२० ) इति लेटि छान्दस उम् । " लेटोऽडाटौ " ( पा ३.४.९४ ) इत्याडागमः ॥७॥

---

2. M4 om. अहमपि
4. M4 इति for अपि
12. S3 पाठस्तु– केषु वोचास्यत्रेति for ' केष्वन्तः पुरुष आ विवेश ' इति
14. V2 प्रधाने for प्राधान्ये
16. V2 भूयोत्क्षिप्य for आहूयोत्क्षिप्य

पञ्चस्वन्तः पुरुष आ विवेश तान्यन्तः पुरुषे अर्पितानि ।
एतत् त्वाऽत्र प्रतिमन्वानो अस्मि न मायया भवस्युत्तरो मत् ॥८॥(९)

पञ्चस्विति पञ्चऽसु । अन्तरित्यन्तः । पुरुषः । आ । विवेश ।
तानि । अन्तरित्यन्तः । पुरुषे । अर्पितानि ।
एतत् । त्वा । अत्र । प्रतिमन्वान इति प्रतिऽमन्वानः । अस्मि ।
न । मायया । भवसि । उत्तर इत्युत्ऽतरः । मत् ॥ मौं ॥८॥(९)

आ– ब्रह्मा प्रत्याह– 'पञ्चस्वन्तः पुरुषः' इति । Vपञ्चसु प्राणेषु Vअन्तः Vपुरुषः पूर्णः Vआविवेश क्षेत्रज्ञरूपेण अन्तर्यामिरूपेण चाविवेश आविष्टः । Vतानि प्राणादीनि इन्द्रियाणि Vपुरुषे Vअन्तः Vअर्पितानि । न चात्मानमन्तरेण प्राणाः ख्यायन्ते । "न प्राणानन्तरेणात्मा" इति श्रुतिः । एवं परात्मभावेन संसारव्यवहारादि-लीलादिसिद्धिः । 'एतत् त्वाऽत्र प्रतिमन्वानो अस्मि न मायया'। अस्मिन्नात्मानात्म-संमिळितरूपे देहादौ Vएतत् साक्षादपरोक्षरूपं वस्तु प्रति Vत्वा त्वां प्रत्यवगमयत् । प्रतिब्रुवंश्च Vअस्मि आस्थितोऽस्मि । Vन च Vमायया प्रज्ञया Vभवसि Vउत्तरः उद्गततरः Vमत् मत्तः मामपेक्ष्य न मायया न वञ्चनाय । 'भवस्युत्तरो मत्' मत्तः सकाशात् उत्तरो भवसि । एवं दत्तोत्तरोऽसीत्यर्थः ॥५३॥

अ– ब्रह्मोद्गातारं प्रत्याह– 'पञ्चस्वन्तः पुरुष आ विवेश'। हे उद्गातः, Vपुरुषः नियन्ता परमात्मा Vपञ्चसु प्राणेषु Vअन्तः मध्ये Vआविवेश आविष्टः । तथा तानि प्राणादिवस्तूनि Vपुरुषे पूर्णे परमेश्वरे अन्तर्मध्ये Vअर्पितानि। तेषामन्योन्यापेक्षत्वात्। न चात्मानमन्तरेण प्राणाः ख्यायन्ते । "न च प्राणानन्तरेणात्मा" इति बह्वृचश्रुतेः । यद्वा– पञ्चसु भूम्यादिपञ्चमहाभूतेषु Vअन्तः Vपुरुषः हरिराविवेश । तानि च पुरुषे अन्तः समर्पितानीति प्रतिप्रश्नः । "तत्सृष्ट्वा। तदेवानुप्राविशत्" (तै उप २.६) इति तैत्तिरीयश्रुतेः। किं च– अत्र त्वत्प्रश्नप्रतिप्रश्ने Vत्वा त्वां प्रति Vएतत् उत्तरं Vप्रतिमन्वानः प्रतिजानानः Vअस्मि। किं च– Vमायया वञ्चनया बुद्ध्या वा Vमत् मत्तः Vउत्तरः अधिकस्त्वं Vन Vभवसि। मत्तो बुद्धिमान् नासीत्यर्थः । एतदनुवाकार्थो ब्राह्मणेऽभिहितः– शृतासु वपासु स्वाहाकृतिभिश्चरित्वा प्रत्यञ्चः प्रति परेत्य सदसि ब्रह्मोद्यं वदन्ति पूर्वया द्वारा प्रतिपद्य यथाधिष्ण्यं व्युपविशन्ति। होताऽध्वर्युं पृच्छति "कस्विदेकाकी चरति" (शब्रा १३.५.२.११,१२)। इत्यादिना ॥८॥ (९)

इति पञ्चविंशे नवमोऽनुवाकः ॥ ९ ॥

---

7. S3 पाठस्तु– पञ्चस्वन्तः ... मदिति for 'पञ्चस्वन्तः पुरुषः' इति
17. M4, P2 कानि for तानि
23. M4 नास्ति for नासि

[ अथ दशमोऽनुवाकः । ]

का स्विदासीत् पूर्वचित्तिः किꣳ स्विदासीद् बृहद्वयः ।
का स्विदासीत् पिलिप्पिला का स्विदासीत् पिशङ्गिला ॥१॥

का स्वित् । दा ॥१॥

आ– स होताऽध्वर्युं पृच्छति– 'का स्विदासीत् पूर्वचित्तिः' इति ॥१॥

अ– कात्यायनः – "पुनः पूर्वापरेणोत्तरवेदिं का स्विदासीदिति" (काश्रौ २०.७.१२)। सदसो निष्क्रम्य हविर्धानस्य पुरः उत्तरवेदेः पश्चादुपविश्य पूर्वौ पूर्वोक्तौ होत्रध्वर्यू चतुर्भिर्मन्त्रैः संवदेते इति सूत्रार्थः । तत्र होता अध्वर्युं पृच्छति– 'का स्विदासीत्' इति ॥१॥

द्यौरासीत् पूर्वचित्तिरश्व आसीद् बृहद्वयः ।
अविरासीत् पिलिप्पिला रात्रिरासीत् पिशङ्गिला ॥२॥

द्यौरासीत् ॥२॥

आ– तं प्रत्याह– 'द्यौरासीत्' इति । एतौ मन्त्रौ व्याख्यातौ ।
( कासं २५.३.८,९, ) ॥५५॥

अ– तं प्रत्यध्वर्युराह– 'द्यौरासीत्' इति । ऋग्द्वयं व्याख्यातम् ॥२॥

का ईमरे पिशङ्गिला का ईं कुरुपिशङ्गिला ।
क ईमास्कन्दमर्षति क ईं पन्थां वि सर्पति ॥३॥

का । ईम् । अरे । पिशङ्गिला ।
का । ईम् । कुरुपिशङ्गिलेति कुरुऽपिशङ्गिला ।
कः । ईम् । आस्कन्दमित्याऽस्कन्दम् । अर्षति ।
कः । ईम् । पन्थाम् । वि । सर्पति ॥ छें ॥३॥

आ– अथाध्वर्युर्होतारं पृच्छति– ‘ का ईमरे पिशङ्गिला ’ इति । vईम् इति चकारार्थे । vअरे इति आमन्त्रिते । उभावपि निपातौ । अरे हे होतः, vका च vपिशङ्गिला नाम । ‘ का ईं कुरुपिशङ्गिला ’। हे होतः, vकुरुपिशङ्गिला vका ? ‘ क ईमास्कन्दमर्षति ’। vकः vईम् vआस्कन्दम् । स्कन्दिर्गतिशोषणयोः । vअर्षति गच्छति । ‘ क ईं पन्थां विसर्पति ’ । vकः च vपन्थां पन्थानं vवि vसर्पति ॥५६॥

---

अ– अथाध्वर्युर्होतारं पृच्छति– ‘ का ईमरे पिशङ्गिला ’। vईम् इति निपातश्चार्थः । vअरे इति संबोधनार्थम् । अरे होतः, vका च vपिशङ्गिला । vका च vकुरुपिशङ्गिला । vकः च vआस्कन्दम् । णमुलन्तः । आस्कन्द्योत्प्लुत्य vअर्षति गच्छति । ऋषी गताविति धातुस्तुदादिः । व्यत्ययेन शप् । vकः च vपन्थां पन्थानं मार्गं प्रति vवि vसर्पति विविधं गच्छति ॥३॥

---

अ॒जाऽरे॑ पिश॒ङ्गि॒ला श्वा॒वित् कु॑रुपिश॒ङ्गि॒ला ।

श॒श आ॒स्कन्द॑मर्ष॒त्यहि॒ः पन्था॒ं वि स॑र्पति ॥४॥

---

अ॒जा । अ॒रे । पि॒श॒ङ्गि॒ला । श्वा॒वित् ।

श्वा॒विदिति॑ श्व॒ऽवित् । कु॒रु॒पि॒श॒ङ्गि॒लेति॑ कु॒रु॒ऽपि॒श॒ङ्गि॒ला ।

श॒शः । आ॒स्कन्द॒मित्या॒ऽस्कन्द॑म् । अ॒र्ष॒ति ।

अहि॑ः । पन्था॑म् । वि । स॒र्प॒ति ॥ङि॥४॥

---

आ– स होता प्रत्याह– ‘ अजाऽरे पिशङ्गिला ’ इति । vअरे अध्वर्यो, vपिशङ्गिला नाम vअजा । सा हि पिशं रूपं गिलति । [ स हि ] तस्याः स्वभावः । ‘ श्वावित् कुरुपिशाङ्गिला’ । vश्वावित् सेधा उच्यते । शलको । vकुरुपिशङ्गिला नाम । शशः स्वभावतः (!) vआस्कन्दम । आस्कन्दतीत्यास्कन्दः । vशशः vअर्षति गच्छति । ‘ अहिः पन्थां वि सर्पति ’। स्वभावतः vअहिः सर्पः vपन्थां पन्थानं vविसर्पति गच्छति ॥५७॥

---

1. S3 पाठस्तु– का ईमरे ... सर्पति इति for ‘ का ईमरे पिशङ्गिला ’ इति ।
16. S3 पाठस्तु– अजाऽरे ... सर्पति इति for ‘ अजाऽरे पिशङ्गिला ’ इति ।
20. V2 स्वभावः for स्वभावतः

अ–होता तं प्रत्याह– 'अजाऽरे पिशङ्गिला'। अरे अध्वर्यो, अजा पिशङ्गिला। अजा नित्या माया रात्रिर्वा पशुर्वा पिशं रूपं गिलति भक्षयतीति पिशङ्गिला। माया विश्वं ग्रसते। रात्रिरपि रूपाणि तमसा छादयति। पशुस्तु सर्वौषधं ग्रसतीति भावः। श्वावित् सेधा कुरुपिशङ्गिला। कुरुशब्दोऽनुकरणे। पिश अवयव इति धातोः "इगुपध°" (३·१·१३५) इति कप्रत्ययः। कुरु कुरु इति शब्दान् कुर्वाणा, पिशान् मूलाद्यवयवान् गिलतीति पिशङ्गिला। मूलानां शतं कुक्षौ स्थापयति शतं च भक्षयतीति सेधायाः स्वभावः। शशः वन्यो जीवविशेषः। आस्कन्दम् आस्कन्द्यास्कन्द्य अर्षति गच्छति। स तस्य स्वभावः। अहिः सर्पः पन्थां पन्थानं वि सर्पति। पन्थामित्यत्र "सुपां सुलुक्" (पा ७·१·३९) इति सूत्रेण अमोऽकारस्य डादेशः ॥४॥

---

कत्यस्य विष्ठाः कत्यक्षराणि कति होमासः कतिधा समिद्धः।
यज्ञस्य त्वा विदथा पृच्छमत्र कति होतार ऋतुशो यजन्ति ॥५॥

---

कति। अस्य। विष्ठाः। विस्था इति विऽस्थाः। कति। अक्षराणि।
कति। होमासः। कतिधा। समिद्ध इति सम्ऽइद्धः।
यज्ञस्य। त्वा। विदथा। पृच्छम्। अत्र।
कति। होतारः। ऋतुश इत्यृतुऽशः। यजन्ति ॥ णे ॥५॥

---

आ– अथ ब्रह्मोद्गातारं पृच्छति– 'कत्यस्य विष्ठाः' इति। अस्य यज्ञस्य विष्ठाः कति। विष्ठा इति कर्मनाम। संख्यापरिणामविषयः प्रश्नः। अस्य यज्ञस्य कति वा अक्षराणि। कति च होमासः। कतिसंख्याका होमाः। कतिधा समिद्धः। समिधः कति कतिसंख्याकाः। 'यज्ञस्य त्वा विदथा पृच्छमत्र'। विदथा विदथेन। आकारश्छान्दसः। वेदनेन यज्ञविषयज्ञानेन हेतुना त्वा त्वां पृच्छम्। "बहुलं छन्दसि°" (पा ६.४.७५) इत्यमागमोऽप्यडभावः [च]। "छन्दसि लुङ्लङ्लिटः" (पा ३.४.६) इति लुङ्लङ्लिटः सर्वलकारार्थेऽपि संभवान्ति। पृच्छं पृच्छामि। अत्र अस्मिन् विषये कति होतारः ऋतुशः यजन्ति ॥५८॥

---

20. S3 अड्भावः for ( अडभावः ); S3 om. लुङ्लङ्लिटः
21. V2, S3 संभवति for संभवन्ति

अ– कात्यायनः – ‘ उत्तरौ च कत्यस्येति ’ ( काश्रौ २०·७·१३ ) । उत्तरौ :पश्चादुक्तौ ब्रह्मोद्गातारौ च चतुर्ऋग्भिः संवदेते इति सूत्रार्थः ॥

तत्र ब्रह्मोद्गातारं पृच्छति– ‘ कत्यस्य विष्ठाः ’ । अस्य vयज्ञस्य vकति vविष्ठाः कियन्त्यङ्गानि, स्थानानि वा । का संख्या यासां ताः कति । डत्यन्तः । विशेषेण तिष्ठति यज्ञो यासु ताः विष्ठाः । क्विबन्तः । यज्ञस्य कियन्त्यङ्गानि स्थानानि वेत्यर्थः । तथा यज्ञस्य vअक्षराणि vकति । vहोमासः होमाः vकति । vसमिद्धः समिधः । धकारस्य द्वित्वमार्षम् । vकतिधाः कति प्रकाराः । ‘ समिधो ह तिस्रः ’ इत्युत्तरवाक्यादेवमेव । तथा vयज्ञस्य vविदथा । वेत्तीति विदः । विदस्य भावो विदथा । यज्ञवेदितृत्वेन हेतुना । vअत्र स्थले vत्वा त्वाम् अहम् vपृच्छम् पृच्छामि । पृच्छतेर्लङ् । अडभाव आर्षः, तथा– vऋतुशः ऋतौ ऋतौ vकति vहोतारः यज्ञे vयजन्ति ॥५॥

षळ॑स्य वि॒ष्ठाः श॒तम॒क्षरा॑ण्यशी॒तिर्होमा॑ः स॒मिधो॑ ह ति॒स्रः ।
य॒ज्ञस्य॑ ते वि॒दथा॒ प्र ब्र॑वीमि स॒प्त होता॑र ऋ॒तु॒शो य॑जन्ति ॥६॥

षट् । अ॒स्य । वि॒ष्ठाः । वि॒स्था इति॑ वि॒ऽस्थाः । श॒तम् । अ॒क्षरा॑णि ।
अ॒शी॒तिः । होमा॑ः । स॒मिध॒ इति॑ स॒म्ऽइध॑ः । ह॒ । ति॒स्रः ।
य॒ज्ञस्य॑ । ते । वि॒दथा॑ । प्र । ब्र॒वी॒मि ।
स॒प्त । होता॑रः । ऋ॒तु॒श इत्यृ॑तु॒ऽशः । य॒ज॒न्ति॒ ॥ द्रौं ॥६॥

आ– ब्रह्माणं प्रत्याह– ‘षळस्य विष्ठाः’ इति । vअस्य यज्ञस्य vविष्ठाः सायंप्रातर्होमदर्शपूर्णमासौ चातुर्मास्यपशुबन्धसोमाग्निचयनात्मकानि इति कर्माणि षट् । vशतम् vअक्षराणि इति छन्दोद्वारेणोपजिहीर्षुराह । अत्र छन्दांसि गायत्रीप्रभृतीनि चतुर्विंशत्यक्षरादीनि चतुरुत्तराणि अतिधृतिपर्यन्तानि चतुर्दश । अतिधृतिस्तु षट्सप्तत्या भवति । अत्र गायत्री चातिधृतिश्च मिलित्वा शतमक्षराणि भवन्ति । उष्णिक् धृतिश्चाप्येवम् । अन्येष्वपि छन्दःसु शताक्षरसंख्याः प्रेक्षणीयाः ॥

‘ अशीतिर्होमाः ’ । एकविंशतियूपा इत्यादयश्चाश्वमेधविषये । प्रसिद्धहोमविषये vअशीतिः vहोमाः इति । ‘ समिधो ह तिस्रः ’ । vतिस्रः vसमिधः भवन्ति । याभिः समिद्भिः यज्ञः दीप्तो भवति, ताः । अश्वस्तूपरो गोमृगस्ते प्राजापत्याः पशवः । ‘ यज्ञस्य ते विदथा प्रब्रवीमि ’। vयज्ञस्य vविदथा वेदनेन ज्ञानेन हेतुना vप्रब्रवीमि । vसप्त vहोतारः vऋतुशः ऋतौ ऋतौ vयजन्ति ॥५९॥

5. M4 om. होमास:
16. S3 पाठस्तु– षळस्य ... यजन्तीति for ‘ षळस्य विष्ठाः ’ इति ।

अश्वमेधमन्त्राः ]

अ- उद्गातारं प्रत्याह- 'षळस्य विष्ठाः' । क्रमेणोत्तरम् । vअस्य यज्ञस्य vविष्ठाः अन्नानि vषट् । अन्नानां षड्रसात्मकत्वात् । स्थानपक्षे आहवनीयगार्हपत्यदक्षिणाग्निसभ्यावसथ्यपचनाग्निलक्षणानि षडग्नेः स्थानानि । अस्य यज्ञस्य vशतम् vअक्षराणि । छन्दोभिर्यज्ञो निष्पाद्यते । तानि च छन्दांसि गायत्र्यादीन्यतिधृत्यन्तानि चतुर्दश । चतुर्विंशत्यक्षरादीनि चतुर्वर्णोत्तराणि । तेषां क्रमोत्क्रमगत्या द्वाभ्यां द्वाभ्यां शतमक्षराणि भवन्ति । तथा हि- गायत्री चतुर्विंशतिवर्णा । अतिधृतिः षट्सप्ताक्षरा । एवं द्वे मिलित्वा शतमक्षराणि । उष्णिक् २८ + धृतिः ७२ = एवं शतम् । अनुष्टुप् ३२ + अत्यष्टिः ६८ = एवं शतम् । अष्टिः ६४ + बृहती ३६ = एवं शतम् । अतिशक्करी ६० + पङ्क्तिः ४० = एवं शतम् । शक्करी ५६ + त्रिष्टुप् ४४ = एवं शतम् । अतिजगती ५२ + जगती ४८ = एवं शतमक्षराणि । अनेनाभिप्रायेण शतमक्षराणीत्युक्तम् । vहोमाः । होम्यन्त इति होमाः । पशवः vअशीतिः । अश्वमेधे एकविंशतिर्यूपाः सन्ति । तत्र अग्निष्टोमयूपे अश्वतूपरगोमृगान् नियुनक्ति । इतरेषु षोडश षोडश पशून् । तत्र विंशतियूपेषु चतस्रोऽशीतयः पशवो भवन्तीत्यभिप्रायेणोक्तम् । 'अशीतिर्होमाः' इति । इ स्फुटम् । vतिस्रः vसमिधः अश्वतूपरगोमृगाः प्राजापत्याः पशवस्तद्रूपाभिः समिद्भिर्यज्ञोदीप्त इति तिस्रः समिध उक्ताः । vयज्ञस्य vविदथा वेदनेन हेतुना vते तुभ्यं vप्रब्रवीमि प्रवदामि । किं च- vसप्त vहोतारः वषट्कर्तारः vऋतुशः ऋतुयाजेषु यजन्ति ॥६॥

को अस्य वेद भुवनस्य नाभिं को द्यावापृथिवी अन्तरिक्षम् ।
कः सूर्यस्य वेद बृहतो जनित्रं को वेद चन्द्रमसं यतोजाः ॥७॥

कः । अस्य । वेद । भुवनस्य । नाभिम् ।
कः । द्यावापृथिवी इति द्यावापृथिवी । अन्तरिक्षम् ।
कः । सूर्यस्य । वेद । बृहतः । जनित्रम् ।
कः । वेद । चन्द्रमसम् । यतोजा इति यतःऽजाः ॥ छूं ॥७॥

आ- अथोद्गाता ब्रह्माणं पृच्छति- 'को अस्य वेद' इति । vअस्य vभुवनस्य भूतजातस्य vनाभिम् आधारभूतम् उत्पत्तिकारणं vकः vवेद को जानाति । vकः vद्यावापृथिवी vअन्तरिक्षं च को वेद । 'कः सूर्यस्य वेद बृहतः जनित्रम्' । vबृहतः महतः vसूर्यस्य vजनित्रं जन्म vकः vवेद । 'कः वेदः चन्द्रमसं यतोजाः' । vचन्द्रमसम् इति व्यत्ययः । चन्द्रमाः vयतोजाः यतोजातो भवति । तं vकः vवेद ॥६०॥

5. M4 om. हि
6. P2 with marking above अक्षराणि ins in the upper margin: - अन्तिमं छन्दोऽत्रिकृतिः । तत्र शताक्षरम् । यथा - संवत्सरोपरिवत्सरोऽसीत्याध्रुवः सीदत्यन्तं तं शताक्षरं तदुपरि छन्दो नास्तीत्यर्थः ।
10. M4 अत्र for तत्र
21. S3 पाठस्तु- को अस्य .. यतोजा इति for 'को अस्य वेद' इति।
24. V2 चन्द्रमसः for चन्द्रमसं

अ– उद्गाता ब्रह्माणं पृच्छति– 'को अस्य वेद'। हे ब्रह्मन्, अस्य भुवनस्य भूतजातस्य नाभिम्। नभ्यते नह्यते यत्र सा नाभिः। बन्धनस्थानम्। कारणमिति यावत्। नाभौ हि सर्वा नाड्यो बध्यन्ते। णभ हिंसायाम् इति धातुः। अत्र बन्धनार्थः। औणादिक इञ्प्रत्ययः। भूतजातस्य कारणं कः वेद जानाति। तथा– द्यावापृथिवी द्यावापृथिव्यौ अन्तरिक्षम् च कः वेद। बृहतः महतः महत्त्वस्य वा जनित्रं जन्म कः वेद। आद्यपक्षे सूर्यस्योत्पत्तिः कस्मादित्यर्थः। जनेस्त्रप्रत्ययः। यतोजायते उत्पद्यत इति यतोजाः। यत इत्युपपदे "जनसनखनक्रमगमो विट्" (पा ३.२.६७) इति विट्प्रत्यये कृते "विड्वनोरनुनासिकस्यात्" (पा ६.४.४१) इति नकारस्याकारः। प्रथमा द्वितीयार्थे। यतोजाम्। यदुत्पन्नं चन्द्रमसं चन्द्रं कः वेद। यद्वा– यतोजाश्चन्द्रमास्तादृशकारणकं चन्द्रमसं को वेद को जानाति। "विदो लटो वा" (पा ३·४·८३) इति सूत्रेण णलादेशे वेदेति रूपम्। यतश्चन्द्रस्योत्पत्तिस्तं को वेदेत्यर्थः ॥७॥

---

वेदाहमस्य भुवनस्य नाभिं वेद द्यावापृथिवी अन्तरिक्षम्।
वेद सूर्यस्य बृहतो जनित्रमथो वेद चन्द्रमसं यतोजाः ॥८॥

---

वेद। अहम्। अस्य। भुवनस्य। नाभिम्।
वेद। द्यावापृथिवी इति द्यावापृथिवी। अन्तरिक्षम्।
वेद। सूर्यस्य। बृहतः। जनित्रम्।
अथो इत्यथो। वेद। चन्द्रमसम्। यतोजा इति यतःऽजाः ॥ डें ॥८॥

---

आ– ब्रह्मा प्रत्याह– 'वेदाहमस्य' इति। 'वेदाहमस्य भुवनस्य नाभिम्'। अस्य भुवनस्य भूतजातस्य नाभिम्। णह बन्धने। नहनं बन्धनम्। सर्वं भुवनजातं नह्यते निबध्यते यस्यामिति सा नाभिः परं ब्रह्म। तत् अहं वेद जानामि। वेद द्यावापृथिवी अन्तरिक्षं च। एतत्सर्वं स्वकारणभूतेन ब्रह्मणा बभूवेत्यहं वेद। 'सूर्यस्य बृहतो जनित्रम्'। बृहतः परब्रह्मात्मकस्य सूर्यस्य जनित्रं जन्म आविर्भावमहं वेद। 'अथो वेद चन्द्रमसं यतोजाः'। अथो अपि च चन्द्रमसं यतोजाः परमात्मनो जन्म आविर्भावस्तत् परं ब्रह्म सर्वजगदुपादानभूतं सर्वजगदधिष्ठातृभूतं च परं ब्रह्माऽहमात्मत्वेन जानामि ॥६१॥

---

17. S3 वेदाहम् ... यतोजा इति for 'वेदाहमस्य' इति; S3 om. वेदाहमस्य ... नाभिम्।
20. V2 after ब्रह्मणा adds सर्वं
23. S3 om. च

अ– ब्रह्मोद्गातारमाह– 'वेदाहमस्य भुवनस्य नाभिम्'। अस्य भुवनस्य नाभिं कारणम् अहं वेद जानामि। "विदो लटो वा" (पा ३.४.८३)। परं ब्रह्मैव जगत्कारणं जानामीत्यर्थः। द्यावापृथिवी अन्तरिक्षं अहं वेद। बृहतः सूर्यस्य जनित्रम् उत्पत्तिकारणं ब्रह्म वेद। अथो अपि च। यतोजां चन्द्रमसम् अहम् वेद। परमात्मनो जातं चन्द्रमसम् अहं वेद्मीत्यर्थः। ॥८॥

---

पृ॒च्छामि॑ त्वा॒ पर॒मन्तं॑ पृथि॒व्याः पृ॒च्छामि॒ यत्र॒ भुव॑नस्य॒ नाभिः॑ ।
पृ॒च्छामि॑ त्वा॒ वृष्णो॒ अश्व॑स्य॒ रेतः॑ पृ॒च्छामि॑ वा॒चः प॑र॒मं व्यो॑म ॥९॥

---

पृ॒च्छामि॑ । त्वा॒ । पर॑म् । अन्त॑म् । पृ॒थि॒व्याः ।
पृ॒च्छामि॑ । यत्र॑ । भुव॑नस्य । नाभिः॑ ।
पृ॒च्छामि॑ । त्वा॒ । वृष्णः॑ । अश्व॑स्य । रेतः॑ ।
पृ॒च्छामि॑ । वा॒चः । प॒र॒मम् । व्यो॒मेति॒ विऽओ॑म ॥ ङों ॥९॥

---

आ– अथाध्वर्युर्यजमानं पृच्छति– 'पृच्छामि त्वा' इति। 'पृच्छामि त्वा परमन्तं पृथिव्याः'। पृथिव्याः अन्तं सीमारूपं प्रकृष्टमन्तं पृच्छामि। 'पृच्छामि यत्र भुवनस्य नाभिः'। यत्र यस्मिन् भुवनस्य भूतजातस्य नाभिः। तदपि पृच्छामि। 'पृच्छामि त्वा वृष्णः अश्वस्य रेतः'। वृष्णः सेक्तुः अश्वस्य रेतः पृच्छामि। 'पृच्छामि वाचः परमं व्योम'। वाचः वेदवाक्यस्य व्योम स्थानं विषयः तं परमम् उत्कृष्टतमं किमिति पृच्छामि ॥६२॥

---

अ– कात्यायनः– "यजमानोऽध्वर्युं पृच्छामि त्वेति" (काश्रौ २०.७.१४)। पृच्छतीति शेषः। 'पृच्छामि त्वा परम्'। हे अध्वर्यो, पृथिव्याः परम् अन्तम् अवधिभूतं त्वा त्वाम् अहं पृच्छामि। पृच्छतिर्द्विकर्मकः। यत्र यस्मिन् स्थले भुवनस्य भूतजातस्य नाभिः कारणं तदपि त्वां पृच्छामि। वृष्णः सेक्तुः अश्वस्य रेतः वीर्यं त्वां पृच्छामि। वाचः वाण्याः त्रयीलक्षणायाः परमम् उत्कृष्टं व्योम स्थानं त्वां पृच्छामि ॥९॥

---

11. S3 पाठस्तु– पृच्छामि ... व्योमेति for 'पृच्छामि त्वा' इति।
11-12. S3 om. पृच्छामि ... त्वा परमन्तं पृथिव्याः
12-13. S3 om. पृच्छामि ... नाभिः।
18. V2 °व्रातस्य for °जातस्य
19. V2 बृहतो for वृष्णः; M4 om. त्वां

इयं वेदिः परो अन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिः ।
अय९ सोमो वृष्णो अश्वस्य रेतो ब्रह्माऽयं वाचः परमं व्योम ॥१०॥

इयम् । वेदिः । परः । अन्तः । पृथिव्याः ।
अयम् । यज्ञः । भुवनस्य । नाभिः ।
अयम् । सोमः । वृष्णः । अश्वस्य । रेतः ।
ब्रह्मा । अयम् । वाचः । परमम् । व्योमेति विऽओम ॥ओ॥१०॥

आ– यजमानं प्रत्याहाध्वर्युः – ' इयं वेदिः ' इति । इयं वेदिः पृथिव्याः परः अन्तः । इयम् आश्वमेधिका वेदिः । अयम् एव यज्ञः भुवनस्य नाभिः नहनम् । " अस्माद्धि यज्ञात् भुवनानि जायन्ते " इति । ' अयं सोमः वृष्णो अश्वस्य रेतः ' । अयं च सोमः चन्द्रमाः वृष्णः अश्वस्य रेतः । ' ब्रह्माऽयम् वाचः परमं व्योम ' । अयं व्यत्ययः । इदं साक्षात् अपरोक्षरूपं ब्रह्मा एव वाचः परमं व्योम । वेदस्य परमतात्पर्येण प्रतिपाद्योऽर्थो ब्रह्मैव । " सर्वे देवा यत्पदमामनन्ति " ( कठोप २.१५ ) इति श्रुतेः । समाप्तं ब्रह्मोद्यम् । ब्रह्मवादः ॥६३॥

अ– कात्यायनः – " इयं वेदिरित्यध्वर्युः " ( काश्रौ २०.७.१५ ) । अध्वर्युर्यजमानं प्रत्याह– ' इयं वेदिः परो अन्तः ' । इयं वेदिः उत्तरवेदिः पृथिव्याः परः अन्तः उत्कृष्टोऽवधिः । उत्तरवेदेः सर्वपृथिव्याः सारत्वादित्यर्थः । भुवनस्य नाभिः कारणम् अयं यज्ञः अश्वमेधः परमात्मा वा भुवनस्य प्राणिजातस्य नाभिः कारणम् । " यज्ञाद्धि प्रजाः प्रजायन्ते " ( शब्रा ४.४.२.९ ) इति श्रुतेः । वृष्णः अश्वस्य रेतः अयं सोमः सोमलता । अश्वस्य वीर्याज्जातेत्यर्थः । अयं ब्रह्मा ऋत्विक् वाचः त्रयीरूपायाः परमं व्योम स्थानम् । ब्रह्मर्त्विजस्त्रिवेदपरिज्ञानादिति भावः । यद्वा— इयं वेदिः प्रकृतिः । विद्यते लभ्यते सर्वैरिति वेदिरिति विग्रहः । पृथिव्याः उपलक्षणात् लोकत्रयस्य परः अन्तः परमावधिः प्रकृतेरेव तस्य स्थूलसूक्ष्मरूपेण जन्मलयात् । अयं यज्ञः परमात्मा भुवनस्य नाभिः आदिकारणम् । अयं सोमः उपलक्षणाच्चन्द्रसूर्यादिः । वृष्णः सर्वकामप्रकस्य अश्वस्य संसारधर्मरहितस्य परमात्मनः रेतः सामर्थ्यं, तेज इत्यर्थः ।

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ ( भगी १५.१२ ) ।

इति भगवद्वचनात् । अश्वस्येत्यत्र [स्य] न विद्यते श्वः कालादिपरिमाणं यस्येति व्युत्पत्तिः । अयं ब्रह्मा चतुर्मुखः वाचः वेदरूपायाः परमं व्योम स्थानम् । आदिसृष्टौ तस्यैव हरिणा सर्ववेदोपदेशात् । " यो ब्रह्माणं विदधाति पूर्वं तस्मै वेदांश्च प्रहिणोति सर्वान् " ( द्र. श्वेउ ६.१२ ) इति श्रुतेः । इति ब्रह्मोद्यं समाप्तम् ॥१०॥

7. S3 पाठस्तु– इयं वेदि ... व्योमेति for ' इयं वेदिः ' इति ।

अश्वमेधमन्त्राः ]

सुभूः स्वयम्भूः प्रथमोऽन्तर्महत्यर्णवे ।
दधे ह गर्भमृत्वियं यतो जातः प्रजापतिः ॥११॥

---

सुभूरिति सुऽभूः । स्वयंभूरिति स्वयम्ऽभूः । प्रथमः । अन्तः । महति । अर्णवे ।
दधे । ह । गर्भम् । ऋत्वियम् । यतः । जातः । प्रजापतिरिति प्रजाऽपतिः ॥ ढ्रीः ॥११॥

---

आ– महिम्नः पुरोऽनुवाक्येयम् । ' सुभूः स्वयंभूः ' इति । लिङ्गोक्तदेवत्याऽनुष्टुप् । vसुभूः साधुभवनः vस्वयंभूः स्वेच्छागृहीतशरीरः vप्रथमः अनादिनिधनः सर्वेषामाद्यः पुरुषः । ' अन्तर्महत्यर्णवे दधे ह गर्भमृत्वियम् ' । vमहति vअर्णवे । प्रलयार्णवोपलक्षितस्थूलसूक्ष्माख्यमहत्कारणतत्त्वम् । vअन्तः vऋत्वियम् ऋतुकालसंबन्धिनं वृष्टिकालीनं vगर्भं vदधे गर्भधारणं कृतवान् । सर्वकल्पादावेवमेवं प्रसिद्धमित्यर्थः । ' यतो जातः प्रजापतिः ' । vयतः गर्भात् vप्रजापतिः हिरण्यगर्भः vजातः तं गर्भं दधे इति संबन्धः ॥६४॥

---

अ– ' सुभूः ' इति पूर्वस्य महिम्नः पुरोऽनुवाक्या । उत्तरस्य याज्या । " उदिते ब्रह्मोद्ये प्रपथाध्वर्युर्हिरण्मयेन पात्रेण प्राजापत्यं महिमानं ग्रहं गृह्णाति । तस्य पुरोरुग्घिरण्यगर्भः समवर्तताग्र इत्यथास्य पुरोऽनुवाक्या सुभूः स्वयंभूः प्रथमः " ( शब्रा १३.५.२.२३ ) इति श्रुतेः । ' सुभूः स्वयम्भूः ' । प्रजापतिदेवत्याऽनुष्टुप् । vह इति प्रसिद्धम् । vप्रथमः सर्वस्य आदिः अनादिनिधनः पुरुषः, vमहति vअर्णवे कल्पान्तकालीने समुद्रे vअन्तः मध्ये स्थितोऽपः पीत्वा सृष्टिकाले vगर्भं vदधे स्थापितवान् । कीदृशः सः ? vसुभूः । सुष्ठु भूरुत्पत्तिर्यस्माद्यस्येति वा सुभूः । विश्वोत्पादको मत्स्याद्यवतारवांश्च । स्वयमेव भवतीति vस्वयंभूः स्वेच्छाविग्रहः । अनेन विश्ववैलक्षण्यं तस्योक्तम् । कीदृशं गर्भम् ? vऋत्वियम् । ऋतुः प्राप्तो यस्य । ऋतौ भव इत्यर्थः । घस्प्रत्ययः । तस्येयादेशः । प्रातःकालम् । vयतः गर्भात् vप्रजापतिः ब्रह्मा vजातः उत्पन्नः ॥११॥

---

होता यक्षत् प्रजापतिꣳ सोमस्य महिम्नः ।
जुषतां पिबतु सोमꣳ होतर्यज ॥१२॥

---

5. S3 पाठस्तु– सुभूः ... प्रजापतिरिति for ' सुभूः स्वयंभूः ' इति ।
6. S3 °भुवनः for °भवनः
9. S3 om. एवम्

कासं .... ४४

होता । यक्षत् । प्रजापतिमिति प्रजाऽपतिम् । सोमस्य । महिम्नः ।
जुषताम् । पिबतु । सोमम् । होतः । यज ॥ खं ॥१२॥

आ– अथ प्राजापत्यप्रैषः । ‘ होता यक्षत् ’ इति । प्राजापत्यानुष्टुप् । ‘ होता यक्षत् प्रजापतिꣳ सोमस्य महिम्नः ’। vसोमस्य सोमग्रहस्य vमहिम्नः संबन्धिनं vप्रजापतिं vहोता vयक्षत् । ‘ जुषतां पिबतु सोमं ’। स प्रजापतिः vसोमं vपिबतु । सोमं vजुषताम् यथेष्टं सेवताम् । अत एव vहोतः तं प्रजापतिं vयज ॥६५॥

अ– ‘ होता यक्षत् ’ इति महिम्नः प्रैषः । “ होता यक्षत् प्रजापतिमिति महिम्नः प्रैषः ” ( द्र. शब्रा १३.५.२.२३ ) इति श्रुतेः । ऋषिदेवत्या गायत्री । vमहिम्नः vसोमस्य । महिमसंज्ञस्य सोमग्रहस्य संबन्धिनं प्रजापतिं vहोता दैव्यः vयक्षत् यजतु । इज्यमानः स प्रजापतिः vजुषताम् प्रीयताम् । vसोमं महिमग्रहं vपिबतु च । हे मनुष्यहोतः, त्वमपि vयज ॥१२॥

प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम् ॥१३॥

प्रजापते न ॥ प ॥ १३ ॥

हिरण्यगर्भो द्वे ॥२॥ यः प्राणतो द्वे ॥२॥ युञ्जन्ति ब्रध्नन्नव ॥९॥ वायुष्ट्वा षट् ॥६॥ प्राणाय तिस्रः ॥३॥ उत्सक्थ्या द्वादश ॥१२॥ गायत्री षट् ॥६॥ कस्त्वा षट् ॥६॥ कः स्विदष्टा ॥८॥ का स्वित् त्रयोदश ॥१३॥ दशानुवाकेषु सप्तषष्टिः ॥६७॥

[ इति शुक्लयजुःकाण्वपदसंहितायां पञ्चविंशतितमोऽध्यायः ॥२५॥ ]

आ– होता यजति । ‘ प्रजापते न त्वदेतान्यन्यः ’ इति । हिरण्यगर्भ ऋषिः । प्रजापतिर्देवता त्रिष्टुप् । व्याख्यातो मन्त्रः ॥६७॥

इति श्री-[मत्परमहंसपरिव्राजकाचार्य श्रीवासुदेवपुरी श्रीकृष्णभक्तिसाम्राज्यस्य श्रीमज्जातवेदोपाध्यायस्य सूनुना चतुर्वेदिश्रीमदानन्दबोधभट्टोपाध्यायेन विरचिते ] काण्ववेदमन्त्रभाष्यसंग्रहे पञ्चविंशोऽध्यायः ॥२५॥

3. S3 पाठस्तु– होता...यजेति for ‘होता यक्षत्’ इति; S3 om. ‘होता ... महिम्नः’। (L 4)
16. A after सप्तषष्टिः ॥६७॥ adds द्विपदाया महानाम्न्यो नार्यस्ते रजतास्तथा । कुविदं स्विद च ब्रूयाद्यथाक्रममनुस्मरन् ॥१॥
18. S3 पाठस्तु– प्रजापते ... रयीणामिति for ‘ प्रजापते न त्वदेतान्यन्य ’ इति
21. S3 शुक्लयजुःकाण्वसंहिताभाष्ये for काण्व ... संग्रहे ( L 22 )

अश्वमेधमन्त्राः ]

अ– ' प्रजापते न ' इति पूर्वस्य महिम्नो याज्या। " प्रजापते न त्वदेतान्यन्य इति होता यजति ', ( शब्रा १३.५.२.२३ ) इति श्रुतेः। ' प्रजापते न '। हिरण्यगर्भदृष्टा प्राजापत्या। हे ᵛप्रजापते प्रजानां ब्रह्मादीनां पालक, परमात्मन्, ᵛत्वत् त्वत्तः ᵛअन्यः कोऽपि पुरुषः ᵛएतानि प्रत्यक्षादिप्रमाणसिद्धानि ᵛविश्वा विश्वानि सर्वाणि ᵛरूपाणि नामरूपात्मकानि जगति सन्ति। ᵛता तानि ᵛन ᵛपरि ᵛबभूव परिभवितुं समर्थो नाभूत्। परिभवनं नियमनम्। " यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयतीति। एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः। एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः। " ( बृहउ ३.७.३;८.९ ) इत्यादि श्रुतेः। परिभवनं सृष्ट्यादेरुपलक्षणम्। एतत्सृष्टिसंहारादौ ᵛत्वत् ᵛअन्यः ᵛन शक्तः। किं तु त्वमेव शक्त इत्यर्थः। " यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति " ( तैउ ३.१ ) इत्यादिश्रुतेः। अतो हेतोः एवं जानन्तो वयं ᵛयत्कामाः। यत् इष्टं कामयन्त इति ᵛयत्कामाः सन्तः ᵛते तुभ्यं त्वत्प्रीत्यर्थम्। ᵛते इति युष्मदादेशः। न सर्वनाम। तथात्वे ते नोऽवन्त्वित्यादिवदाद्युदात्तत्वं स्यात्। अतस्ते तुभ्यं ᵛजुहुमः होमादिकं कुर्मः। नोऽस्माकं तत् इष्टमस्तु। किं च– ᵛवयं ᵛरयीणां यज्ञादिसाधनीभूतधनानां ᵛपतयः स्वामिनः ᵛस्याम भवेम ॥१३॥

इति पञ्चविंशे दशमोऽनुवाकः ॥१०॥

इति श्रीमन्नागदेवभट्टात्मजेन श्रीमदनन्ताचार्येण विरचितायां वेदार्थदीपिकायां काण्वसंहिताभाष्ये पञ्चविंशोऽध्यायः समाप्तः ॥२५॥

अनेन वेददीपेन मया नीराजितो हरिः।
मच्छ्रमं सार्थकं कृत्वा मद्वंशं सर्वदाऽवतु ॥१॥
सन्ति भाष्याणि सर्वत्र प्रणीतानीह सूरिभिः।
कोऽप्यस्य महिमा वेद्योऽभिज्ञैर्जयति सर्वतः ॥२॥
न पाण्डित्याभिमानेन न च वित्तस्य लिप्सया।
ग्रन्थोऽयं रचितः किं तु विदुषां प्रीतये मया ॥३॥
तात्पर्यं वेदवाक्यस्य को नरो वेद सर्वतः।
अतो यथामति मया भाषितोऽर्थोऽनुगृह्यताम् ॥४॥

---

1. P2 M4 after न adds प्रजापते
9. M4 एवं for एतत्°
11. M4 om. यत्कामाः ... कामयन्त इति
12. M4 च for त्वत्°; M4 सवर्या for सर्वनाम।
16. M4 om. °देव
17. P2 om. काण्व°; M4 om. समाप्तः; P2 after समाप्तः adds श्रीकृष्णः प्रीयतां मम।

## षड्विंशोऽध्यायः ।

### [ अथ प्रथमोऽनुवाकः । ]

हरिः ॐ ।। अश्वस्तूपरो गोमृगस्ते प्राजापत्याः
कृष्णग्रीव आग्नेयो ररार्टे ।
पुरस्तात् सारस्वती मेष्यधस्ताद्धन्वोः ॥१॥

अश्वः । तूपरः । गोमृग इति गोऽमृगः । ते । प्राजापत्या इति प्राजाऽपत्याः ।
कृष्णग्रीव इति कृष्णऽग्रीवः । आग्नेयः । ररार्टे ।
पुरस्तात् । सारस्वती । मेषी । अधस्तात् । हन्वोः ॥ ढीम् ॥१॥

भा– इत उत्तरं श्रुतिरूपा मन्त्राः । आश्वमेधिकानां पशूनां देवतासंबन्धविधायिनो मन्त्राः आध्यायपरिसमाप्तेः अभिधीयन्ते । 'अश्वस्तूपरः' इति । अनेनाध्यायेनोक्ताः पशवः देवता वा पर्यङ्ग्याः तथा रोहितादयो ये गुणयुक्ताश्चारण्याश्च कपिलादयः । अध्यायात् 'अश्वस्तूपरः' इत्यादयः सप्तदश पशवः, रोहितादयः षोडश पशवः, सर्वशुद्धवाल इत्यादयस्त्रयोदश देवताः पशवश्च त्रयोदशग्राम्या आरण्याश्च कृष्णग्रीवा आग्नेयाः शितिभ्रव इत्यादयः, श्वेता वायव्याः श्वेताः सौर्या इत्येता एकोनषष्टिदेवत्याः पशवः, वसन्ताय कपिञ्जलानित्यादयः विश्वेषां देवानां पृषत इत्येवमन्ताः विंशत्युत्तरशतं देवताः तत्तद्देवत्याः पशवश्च । "सप्तदशैव पशून् मध्यमे यूप आलभेत । प्रजापतिः सप्तदशः सर्वं सप्तदशः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै षोडश-षोडशेतरेषु षोडशकलं वा इद१ सर्वं१ सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै त्रयोदशत्रयोदशारण्यानाकाशेष्वालभते त्रयोदश मासाः संवत्सरः" ( शब्रा १३.५.१.१५ ) इत्यादिब्राह्मणवाक्यादयमर्थः प्रतीयते ॥

अश्वमेधमन्त्राः ]

अथ प्रतिपदव्याख्या । ‘ अश्वस्तूपरो गोमृगः ’ इति । अस्याध्यायस्य प्रजापतिः ऋषिः । लिङ्गोक्ता देवताश्च । ‘ अश्वस्तूपरः ’ इत्यस्य प्रजापतिः ऋषिः । बृहतीच्छन्दः । अत्रत्या एते मन्त्राः ब्राह्मणवाक्यसरूपा द्रष्टव्याः । ‘ कर्मनो ( ? चो )दना ब्राह्मणम् ’ इति लक्षणसंपत्तेः ब्राह्मणाध्यायोऽयम् । अत्र सर्वत्र यत्र यत्र पशुविशेष उक्तः तत्र तत्र तज्जातीय एव पशुः । अन्यत्र तु अन्यः पशुरेव ज्ञातव्यः । अत्र सप्तदश पर्यङ्ग्याः । पर्यङ्ग्याः । अश्वस्य पर्यङ्गविशेषाः सप्तदश पञ्चदश वा । इतरे प्लक्षशाखासु स्थापयितव्याः । अत्र एकविंशतियूपाः । तत्र मध्ये एको यूपः ततः परे त्रयोदशयूपाः । मध्यमे अश्वम् । इतरत्रेतरे पशव इति । टुओश्वि गतिवृद्ध्योः । “ प्रजापतेरक्ष्यश्वयत् तत् पराऽपतत् ततोऽश्वः समभवत् । यदश्वयद्यदस्याश्वत्वम् ” (द्र. तैसं ५.३.१२.१) इत्यादि श्रुतेः । vतूपरः शून्यशृङ्गः खंडशृङ्गो वा । अश्वस्तूपरः vगोमृगः गवयः । vते ये पशवस्ते vप्राजापत्याः प्रजापतिदेवताकाः । “ प्रजापतये त्वा जुष्टं नियुनज्मि ” इति मन्त्रेण बन्धनीयाः । एवमग्रेऽपि यो यद्देवत्यः पशुः ‘ अमुष्मै त्वा जुष्टं नियुज्मि ’ इत्यादिमन्त्रैर्बन्धनीयाः । vकृष्णग्रीवः । कृष्णा ग्रीवा यस्य स कृष्णग्रीवः । vआग्नेयः स अग्निदेवत्यः पशुः vरराटे । अश्वस्य ललाटे स्थाने तं नियुनक्ति । vपुरस्तात् vमेषी vसारस्वती । सरस्वतीदेवता मेषी अश्वस्य पुरतः नियोज्या । vअधस्तात् vधन्वोः [ vहन्वोः ] अधस्तात् ॥१॥

~~~~~~~~~~~~~~~~~~~~

अ– अत्र षड्विंशे अध्याये आश्वमेधिकानां पशूनां देवतासंबन्धविधायिनो ब्राह्मणात्मिका मन्त्रा अभिधीयन्ते । तत्र अश्वमेधे एकविंशतिर्यूपाः सन्ति । तत्र मध्यमो यूपोऽग्निष्ठसंज्ञः । तत्र सप्तदश पशवो नियोज्यन्ते । तान् देवतासंबन्धकथनपूर्वकमाह – ‘ अश्वस्तूपरो गोमृगस्ते प्राजापत्याः ’ । कात्यायनेनैषामृष्यादि नोक्तम् । कर्मणि विनियोगाभावात् । तथा ‘ इषे त्वा ’ आदि सामान्येनोक्तमृष्यादिकमध्ययनादौ स्मर्तव्यम् । vअश्वः vतूपरः । शृङ्गोत्पत्तिकालेऽपि शृङ्गहीनस्तूपरः । vगोमृगः गवयः । एते त्रयः पशवः vप्राजापत्याः प्रजापतिदेवत्याः । “ दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ” ( पा ४.१.८५ ) इति ण्यः । ततः “ प्रजापतये त्वा जुष्टं नियुनज्मि ” इति मन्त्रेण यूपे बन्धनीयाः । एवमग्रेऽपि यो यद्देवत्यः पशुः स अमुष्मै त्वा जुष्टं नियुनज्मीत्यादि तत्तद्देवतानामूहेन बन्धनीयाः । vआग्नेयः अग्निदेवत्यः । vकृष्णग्रीवः श्यामवर्णगलः अजः अश्वस्य vपुरस्तात् vरराटे ललाटे उपायेन बन्धनीयः । vहन्वोः vअधस्तात् अश्वस्य हनुदेशे अधस्तात् vसारस्वती vमेषी vबन्धनीया ॥१॥

~~~~~~~~~~~~~~~~~~~~

1. S3 पाठस्तु– अश्वस्तूपरो ... हन्वोरिति for ‘ अश्वस्तूपरो गोमृगः ’ इति ।
7. S3 मध्ये for मध्यमे
10. S3 om. ते ये पशवः
10–11. S3 om. प्रजापतये ..., मन्त्रेण बन्धनीयाः
13. S3 युनक्ति for नियुनक्ति
23. M4 om. श्यामवर्णगलः

आश्विना अधोरामौ बाह्वोः सौमापौष्णः श्यामो नाभ्यां सौर्ययामौ ।
श्वेतश्च कृष्णश्च पार्श्वयोः ।।२।।

आश्विनौ । अधोरामा इत्यधःऽरामौ । बाह्वोः ।
सौमापौष्णः । श्यामः । नाभ्याम् । सौर्ययामौ ।
श्वेतः । च । कृष्णः । च । पार्श्वयोः ॥ त्रिम ॥२॥

आ– ' आश्विना अधोरामौ ' इति। अनुष्टुप् लिङ्गोक्तदेवत्या । ययोः शुक्लो रामश्च रजतं शितिरित्यभिधानात् । ययोः पश्वोः संनिधानात् अन्वयः । हन्वोः अधोरामः शुक्लो वर्णो ययोस्तौ [V]अधोरामौ । अधोऽश्वस्य हन्वोः अधः वियुनक्ति । [V]बाह्वोः अश्वस्य पूर्वपादयोर्मध्यमप्रदेशे । [V]सौमापौष्णः । सोमश्च पूषा च देवते अस्येति सौमापौष्णः । तं बाह्वोः नियुनक्ति । [V]श्यामः [V]नाभ्याम् । श्यामवर्णः पशुः अश्वस्य नाभ्यां नियुनक्ति । [V]सौर्ययामौ । [V]श्वेतः च कृष्णः च पार्श्वयोः सौर्ययामौ । सूर्यश्च यमश्च देवते अनयोरिति सौर्ययामौ, तौ कृष्णच शुक्लश्च अश्वस्य पार्श्वयोः नियोजनीयौ ॥२॥

अ– ' आश्विना अधोरामौ ' । [V]आश्विनौ अश्विदेवत्यौ [V]अधोरामौ अधोभागे शुक्लवर्णावजौ । रामशब्दः शुक्लवर्णपरः । [V]बाह्वोः अश्वस्य पूर्वपादयोः समीपे बन्धनीयौ । [V]सौमापौष्णः सोमपूषदेवत्यः श्यामः । शुक्लकृष्णरोमा अजः अश्वस्य [V]नाभ्यां बन्धनीयः । अत्र " देवताद्वन्द्वे च " ( पा ७.३.२१ ) इति पूर्वोत्तरपदयोराद्यचोर्वृद्धिः । एवमुत्तरत्रापि ज्ञेयम् । [V]श्वेतः [V]च [V]कृष्णः [V]च [V]सौर्ययामौ । श्वेतः पशुः सूर्यदेवत्यः दक्षिणपार्श्वे बन्धनीयः । कृष्णो यमदेवतोऽश्वो वामपार्श्वे बन्धनीयः ॥२॥

त्वाष्ट्रौ लोमशसक्थौ सक्थ्योर्वायव्यः श्वेतः
पुच्छ इन्द्राय स्वपस्याय वेहद्वैष्णवो वामनः ।
रोहितो धूम्ररोहितः कर्कन्धुरोहितस्ते सौम्या
बभ्रुररुणबभ्रुः शुकबभ्रुस्ते वारुणाः ।।३।।

6. S3 आश्विना ... पार्श्वयोरिति for ' अश्विना अधोरामौ ' इति ।
7. V2 after संनिधानात adds : ययोः संनिधानात्

त्वाष्ट्रौ । लोमशसंक्थ्या इति लोमशऽसक्थौ । सक्थ्योः । वायव्यः । श्वेतः । पुच्छे । इन्द्राय । स्वपस्यायेति सुऽअपस्याय । वेहत् । वैष्णवः । वामनः । रोहितः । धूम्ररोहित इति धूम्रऽरोहितः । कर्कन्धुरोहित इति कर्कन्धुऽरोहितः । ते । सौम्याः । बभ्रुः । अरुणबभ्रुरित्यरुणऽबभ्रुः । शुकबभ्रुरिति शुकऽबभ्रुः । ते । वारुणाः ॥ गों: ॥३॥

---

आ –' त्वाष्ट्रौ लोमशसक्थौ ' इति । लिङ्गोक्तदेवत्या अतिशक्वरी । $^v$लोमशसक्थौ $^v$त्वाष्ट्रौ त्वष्टृदेवत्यौ $^v$सक्थ्योः अश्वस्य सक्थ्योः नियोक्तव्यौ । ' वायव्यः श्वेतः पुच्छे ' । यः $^v$श्वेतः च पशुः $^v$वायव्यः वायुदेवत्यः $^v$पुच्छे तं पशुं अश्वस्य पुच्छे नियुनक्ति । " यजमानो यज्ञो यदश्वे पशून्नियुनक्ति " ( शब्रा १३.२.२.१) इति श्रुतेः । ' इन्द्राय स्वपस्याय वेहत् ' । शोभनाय स्वपस्यसंबन्धिने $^v$इन्द्राय $^v$वेहत् । गर्भोपघातकः पशुः वेहत् । ' वैष्णवो वामनः ' । स च अजः $^v$वामनः कुब्जः श्वेतः $^v$वैष्णवः पशुः । ' रोहितः धूम्ररोहितः कर्कन्धुरोहितः ' इति । $^v$रोहितः रोहितवर्णः पशुः । धूम्रमिश्रो लोहितवर्णः पशुः $^v$धूम्ररोहितः । कर्कन्धुफलवद्रोहितः पशुः $^v$कर्कन्धुरोहितः । कर्कन्धुर्बदरः । एवंरूपा ये पशवस्ते $^v$सौम्याः । ' बभ्रुररुणबभ्रुः शुकबभ्रुस्ते वारुणाः " । $^v$बभ्रुः कपिलः कपिलवर्णः पशुः । तथा च सूत्रकारः– " छागोस्रमेषाः पश्वभिधानाद्यथालिङ्गं गुणवचनात् " ( काश्रौ २०.७.१९,२० ) इति । अतो गुणवचनात् अश्वः श्वेतादयो गुणाभिधानद्वारेण गुण्यभिधायका भवन्ति । $^v$अरुणबभ्रुः अजः अरुणवर्णमिश्रः कपिलः पशुः अरुणबभ्रुः । शुकवर्णमिश्रो बभ्रुः शुकपक्षिसवर्णः $^v$शुकबभ्रुः इति । $^v$ते पशवः $^v$वारुणाः वरुणदेवत्याः ॥३॥

---

अ– ' त्वाष्ट्रौ लोमशसक्थौ ' । $^v$त्वाष्ट्रौ । अत्र " साऽस्य देवता " ( पा ४.२.२४ ) इत्यण् । त्वष्टृदेवतौ । $^v$लोमशसक्थौ रोमयुक्तसक्थिकौ अजौ अश्वस्य $^v$सक्थ्योः ऊर्वोः बन्धनीयौ । $^v$वायव्यः श्वेतवर्णः पशुः $^v$पुच्छे अश्वस्य बन्धनीयाः । $^v$स्वपस्याय शोभनकर्मणे $^v$इन्द्राय $^v$वेहत् गर्भघातिनी । $^v$वैष्णवः विष्णुदेवत्यः $^v$वामनः पशुश्च । द्वौ पुच्छे एव । अङ्गान्तरानुपदेशात् । एवमश्वादिभिः

---

6.　V2 °सक्थ्यौ for °सक्थौ, S3 पाठस्तु-त्वाष्ट्रौ...वारुणा for ' त्वाष्ट्रौ लोमशसक्थौ ' इति

7.　V2 °सक्थौ for सक्थ्योः

8.　S3 यज्ञे for यज्ञो

17.　S3 om. शुकपक्षिसवर्णः

19.　M4 °सक्थ्यौ for °सक्थौ; M4 अस्य for अत्र

सह पञ्चदश भवन्ति । एते पर्यङ्ग्या उच्यन्ते । अङ्गानां परितो विद्यमानत्वात् । अत्राश्वस्य शरीरं तरणाय तुम्बीफलवत् रज्जुं बध्वा गुम्फनीयम् । ततः ‘ कृष्णग्रीवः आग्नेयो रराटः ’ इत्यादयोऽश्वस्य शरीरे यथोक्तस्थाने संबद्धायां रज्ज्वां बन्धनीयाः । ततः ˇरोहितः ˇधूम्ररोहितः इत्यादयो द्वादश पशवः । “शितिबाहुः अन्यतः शितिबाहुः समन्तशितिबाहुस्ते बार्हस्पत्याः ” इत्यन्ताः मध्यमे एव यूपे नियोक्तव्याः । “सप्तदशैव पशून् मध्यमे यूप आलभेत ” ( शब्रा. १३.५.१.१५ ) इति श्रुतेः । तत्र तत्र त्रयोऽश्वस्तूपरगोमृगा द्वौ चाग्नेयौ एकादशिनौ । द्वादश रोहितादयः । एवं सप्तदश मध्यमे यूपे नियोज्याः । ततः पृषती क्षुद्रपृषतीत्यादीनां श्वेताः सौर्या इत्यन्तानां शतत्रयसंख्याकानां पशूनां मध्ये पञ्चदश पञ्चदश पशूनेकैकस्मिन् यूपे नियुनक्ति । एवमितरेषु यूपेषु । पञ्चदशपञ्चदशैते पशवो नियोज्याः । एकैकश्चैकादशिनः । एवं मध्यमयूपव्यतिरिक्तेषु विंशतियूपेषु षोडश षोडश पशवो भवन्ति । “ षोडश-षोडशेतरेषु ” ( शब्रा १३.५.१.१५ ) इति वचनात् । एवं पशुनियोजनप्रकारोऽत्रानुसंधेय इत्यलम् ॥

ˇरोहितः सर्वरक्तः । ˇधूम्ररोहितः धूम्रवर्णमिश्रो रक्तः । ˇकर्कन्धुरोहितः बदरसदृशरक्तः । ˇते रोहितादयस्त्रयः ˇसौम्याः सोमदेवत्याः । ‘ सोमाय जुष्टं नियुनज्मि ’ इत्यादिमन्त्रेण प्रत्येकं मध्यमे यूप एव नियोज्याः । ˇबभ्रुः कपिलवर्णः । अरुणबभ्रुः अरुणवर्णमिश्रबभ्रुः । ˇशुकबभ्रुः शुकवर्णसदृशबभ्रुः । ˇते त्रयः ˇवारुणाः वरुणदेवत्याः मध्यमे यूपे नियोज्याः ॥३॥

---

शितिरन्ध्रोऽन्यतः शितिरन्ध्रः समन्तशितिरन्ध्रस्ते सावित्राः
शितिबाहुरन्यतः शितिबाहुः समन्तशितिबाहुस्ते बार्हस्पत्याः ।
पृषती क्षुद्रपृषती स्थूलपृषती ता मैत्रावरुण्यः ॥४॥

---

शितिरन्ध्र इति शितिऽरन्ध्रः । अन्यतःशितिरन्ध्र इत्यन्यतःऽशितिरन्ध्रः । समन्तशितिरन्ध्र इति समन्तऽशितिरन्ध्रः । ते । सावित्राः ।

शितिबाहुरिति शितिऽबाहुः । अन्यतःशितिबाहुरित्यन्यतःऽशितिबाहुः । समन्तशितिबाहुरिति समन्तऽशितिबाहुः । ते । बार्हस्पत्याः । पृषती । क्षुद्रपृषतीति क्षुद्रऽपृषती । स्थूलऽपृषतीति स्थूलऽपृषती । ताः । मैत्रावरुण्यः ॥ ढ्रीं ॥४॥

---

14. M4 om. ते

आ– 'शितिरन्ध्रोऽन्यतःशितिरन्ध्रः' इति । अतिशक्वरी । vशितिरन्ध्रः । रन्ध्रवत् रन्ध्रः । शिति कृष्णवर्णः रन्ध्रवत् यस्मिन् पशौ प्रतीयते स शितिरन्ध्रः । अन्यतः एकतः पार्श्वतः कृष्णवर्णः शितिरन्ध्रः सुषिरः यस्मिन् सः vअन्यतःशितिरन्ध्रः । vसमन्तशितिरन्ध्रः । शुक्लवर्णे पशौ क्वापि कृष्णः सर्वतो यत्र भाति स समन्तशितिरन्ध्रः । एवंविधा ये पशवः vते vसावित्राः सवितृदेवत्याः । vशितिबाहुः । शिती व्याप्तौ बाहू पूर्वपादौ यस्य सः शितिबाहुः, श्वेतपादः । अन्यतः एकतरः शितिबाहुः । vसमन्तशितिबाहुः । एवंविधा ये पशवः vते vबार्हस्पत्याः । vपृषती । यस्य पशोर्देहे पृषतो बिन्दवः बिन्द्वाकाराः प्रतीयन्ते सा पृषती । तत्रापि vक्षुद्रपृषती सूक्ष्मबिन्दुयुक्ता । vस्थूलपृषती स्थूलबिन्द्वाकारयुक्ता । एवंविधा ये पशवः vताः vमैत्रावरुण्यः ॥४॥

---

अ– 'शितिरन्ध्रोऽन्यतःशितिरन्ध्रः'। शिति कृष्णं रन्ध्रं छिद्रं बिन्दुरूपं यस्य सः vशितिरन्ध्रः । अन्यत इत्येकपार्श्वे शितिरन्ध्रः vअन्यतःशितिरन्ध्रः । समन्तं सर्वतः शितिरन्ध्रः, vसमन्तशितिरन्ध्रः । vते त्रयः vसावित्राः सवितृदेवत्याः मध्यमे यूप एव । vशितिबाहुः श्वेतपूर्वपादः । vअन्यतःशितिबाहुः । एकस्मिन्नेव पार्श्वे शितिपादः । vसमन्तशितिबाहुः सर्वश्वेतबाहुः । "शिती धवलमेचकौ" (अको ३.३.८२) इत्यभिधानात् शितिशब्दः श्वेतपरः । vते vबार्हस्पत्याः बृहस्पतिदेवत्याः मध्यमे यूप एव ।

अथ द्वितीययूपे vपृषती विचित्रवर्णबिन्दुयुक्तशरीरा । vक्षुद्रपृषती सूक्ष्मविचित्रबिन्दुयुक्ता । vस्थूलपृषती स्थूलविचित्रबिन्दुयुक्ता । vताः स्त्रीपशवः vमैत्रावरुण्यः मित्रावरुणदेवत्याः द्वितीये यूपे नियोज्याः पूर्ववत् ॥४॥

---

**शुद्धवालः सर्वशुद्धवालो मणिवालस्त आश्विनाः ।**
**श्येतः श्येताक्षोऽरुणस्ते रुद्राय पशुपतये कर्णा यामाः ॥५॥**

---

शुद्धवाल इति शुद्धऽवालः । सर्वशुद्धवाल इति सर्वऽशुद्धवालः ।
मणिवाल इति मणिऽवालः । ते । आश्विनाः ।
श्येतः । श्येताक्ष इति श्येतऽअक्षः । अरुणः । ते । रुद्राय ।
पशुपतय इति पशुऽपतये । कर्णाः । यामाः ॥ भ्रीं ॥५॥

---

1. S3 पाठस्तु– शितिरन्ध्रो ... °वरुण्यः for 'शितिरन्ध्रोऽन्यतः शितिरन्ध्रः' इति ।

आ - 'शुद्धवालः सर्वशुद्धवालः' इति। लिङ्गोक्तदेवत्या बृहती। ᵛशुद्धवालः निर्दुष्टवालः पशुः शुद्धवालः। शुभ्रवालः। ᵛमणिवालः मणिवर्णकेशः पुष्पवालः। एवंविधा ये पशवः ᵛते ᵛआश्विनाः अश्विदेवत्याः पशवः। ᵛश्येतः श्वेतपशुः ᵛश्येताक्षः श्येतनेत्रः ᵛअरुणः आरक्तरोमः, एवंगुणा ये पशवः ᵛते ᵛरुद्राय ᵛपशुपतये भवन्ति। ᵛकर्णाः पशुविशेषाः। "कर्णाश्चन्द्रे च वृक्षे च" इति विश्वोक्तेः। कर्णाश्चन्द्रसदृशश्वेतकर्णास्त्रयः पशवः। बहुवचनस्य त्रित्वे पर्यवसानात्। ᵛयामाः यमदेवत्याः। अथवा आग्नेयं कृष्णग्रीवं पुरस्तात् ललाटे, सौमापौष्णं बाह्वोः, ऐन्द्रापौष्णमुपरिष्टात् ग्रीवासु, त्वाष्ट्रौ लोमशसक्थौ सक्थ्योः। शितिबाहुं बार्हस्पत्यं शितिपृष्ठौ बार्हस्पत्यौ सौर्ययामौ श्वेतं कृष्णं च पार्श्वयोः, धात्रे पृषोदर अधस्तात्, सौर्यं वलक्षं पुच्छे इत्येते पशवः स्वाङ्गेष्वेवमभिहितेषु संस्पृश्य संस्पृश्य प्राकरणीया* इति ज्ञातव्यं इति वा ॥५॥

---

अ- ᵛशुद्धवालः शुभ्ररोमा ᵛसर्वशुद्धवालः ᵛमणिवालः मणिवर्णकेशः। ᵛते त्रयः ᵛआश्विनाः अश्विदेवत्याः। ᵛश्येतः श्वेतवर्णः, ᵛश्येताक्षः श्वेतनेत्रः ᵛअरुणः रक्तः। ᵛते त्रयः ᵛपशुपतये पशुपतित्वगुणविशिष्टाय ᵛरुद्राय नियोज्याः। तथा ᵛकर्णाः त्रयः। बहुवचनात्। "कर्णश्चन्द्रे च वृक्षे च" इति विश्वोक्तेः। कर्णसदृशाः पशुजातिविशेषाः। ᵛयामाः यमदेवताः। एते सर्वे द्वितीययूपे नियोज्याः ॥ ५ ॥

---

अ॒व॒लि॒प्ता रौ॒द्रा नभो॑रूपाः पार्ज॒न्याः ।
पृश्नि॑स्तिर॒श्चीन॑पृश्निरू॒र्ध्वपृ॑श्निस्ते मा॑रु॒ताः ॥६॥

---

अ॒व॒लि॒प्ता इत्य॑व॒ऽलि॒प्ताः । रौ॒द्राः । नभो॑रूपा॒ इति॒ नभः॑ऽरूपाः । पा॒र्ज॒न्याः ।
पृश्निः । ति॒र॒श्चीन॑पृश्नि॒रिति॑ ति॒र॒श्चीन॑ऽपृश्निः ।
ऊ॒र्ध्वपृ॑श्नि॒रित्यू॒र्ध्वऽपृ॑श्निः । ते । मा॒रु॒ताः ॥ ध्रौ ॥ ॥६॥

---

1. S3 पाठस्तु- शुद्धवालः ... यामा इति for 'शुद्धवालः सर्वशुद्धवालः' इति
2. S3 om. मणिवर्णकेशः
4. S3 om. कर्णाश्चन्द्रे ... पर्यवसानात् ( L 5 )
8. S3 om. एवम्
9. *उपाकरणीया इति संभावितः मूलपाठः । सर्वेषु लिखितपुस्तकेषु प्राकरणीया इति पाठ उपलभ्यते ।; S3 om. ज्ञातव्यम् इति

आ– ‘ अवलिप्ता रौद्राः ’ इति वा। लिङ्गोक्तदेवत्योष्णिक्। Vअवलिप्ताः अवलेपं प्राप्ताः। पशवः Vरौद्राः रुद्रदेवत्याः। Vनभोरूपाः आकाशवन्नीलवर्णाः। Vपार्जन्याः पर्जन्यदेवत्याः। Vपृश्निः विचित्रवर्णः। ‘ तिरश्चीनपृश्निः ऊर्ध्वपृश्निः ’। पृश्निः तनुकायः। तिरश्चीनानि पृश्नीनि बिन्दवो यस्य सः आयामतोऽल्पकायः Vतिरश्चीनपृश्निः। विस्तरतोऽल्पकायः Vऊर्ध्वपृश्निः ह्रस्वकायः। एवंगुणा ये पशवः Vते Vमारुताः मरुद्देवत्या पशवः॥

---

अ– ‘ अवलिप्ता रौद्राः ’। Vअवलिप्ताः सगर्वास्त्रयः। Vरौद्राः रुद्रदेवताः। एतेऽपि द्वितीये यूपे नियोज्याः। अथ तृतीये Vनभोरूपाः आकाशसदृशवर्णाः Vपार्जन्याः पर्जन्यदेवताः त्रयः। बहुवचनस्य त्रित्वे पर्यवसानात्। Vपृश्निः विचित्रवर्णः। तिरश्चीनानि पृश्नीनि बिन्दवो यस्य सः Vतिरश्चीनपृश्निः। ऊर्ध्वानि पृश्नीनि यस्य सः Vऊर्ध्वपृश्निः। Vते त्रयः Vमारुताः मरुद्देवताकाः तृतीये नियोज्याः॥६॥

---

फ़ल्गूर्लोहितोर्णी पलक्षी ताः सारस्वत्यः।
प्लीहाकर्णः शुण्ठाकर्णोऽध्यालोहकर्णस्ते त्वाष्ट्राः॥७॥

---

फल्गूः। लोहितोर्णीति लोहितऽऊर्णी। पलक्षी। ताः। सारस्वत्यः।
प्लीहाकर्ण इति प्लीहाऽकर्णः। शुण्ठाकर्ण इति शुण्ठाऽकर्णः।
अध्यालोहकर्ण इत्यध्यालोहऽकर्णः। ते। त्वाष्ट्राः॥श्रम॥७॥

---

आ– ‘ फल्गूर्लोहितोर्णी ’ इति। लिङ्गोक्तदेवत्या त्रिष्टुप्। Vफल्गूः अपुष्टशरीरः पशुः। Vलोहितोर्णी रक्तलोमवती। Vपलक्षी श्वेता अजा। Vयाः ताः पशवः Vताः Vसारस्वत्यः सरस्वतीदेवत्याः। Vप्लीहाकर्णः प्लीहाव्याप्तकर्णः। Vशुण्ठाकर्णः ह्रस्वकर्णः। Vअध्यालोहकर्णः रक्तवर्णकर्णः। एवंरूपा ये पशवः Vते Vत्वाष्ट्राः त्वष्टृदेवत्याः पशवः॥७॥

---

1. S3 पाठस्तु– अवलिप्ताः ... मारुता इति for ‘ अवलिप्ता रौद्राः ’ इति।
3. S3 om. पृश्निः
6. M4 °देवत्याः for °देवताः
15. S3 पाठस्तु– फल्गू ... त्वाष्ट्रा इति for ‘ फल्गूलोहितोर्णी ’ इति।
17. S3 om. प्लीहाकर्णः; V2 after प्लीहाकर्णः adds in brakets : प्लीहाव्याप्तकर्णः

अ- 'फल्गूर्लोहितोर्णी'। [V]फल्गूः अपुष्टशरीरा [V]लोहितोर्णी रक्तरोमवती [V]पलक्षी श्वेता। पलक्षशब्दो वलक्षार्थः। "वलक्षो धवलोऽर्जुनः" ( अको १.५.१३ ) इति कोशः। [V]ताः तिस्रोऽजाः [V]सारस्वत्यः सरस्वतीदेवताः। [V]प्लीहाकर्णः। प्लीहा रोगविशेषः। तद्युक्तौ कर्णौ यस्य स प्लीहकर्णः। दीर्घश्छान्दसः। [V]शुण्ठाकर्णः। ह्रस्ववाची शुण्ठशब्दः। ह्रस्वकर्णः। अत्रापि दीर्घश्छान्दसः। स च काण्वमते प्रकृतिदीर्घः। तेन पदपाठे न द्विरावृत्तत्वम्। [V]अध्यालोहकर्णः अधिकरक्तवर्णकर्णः। [V]ते त्रयः [V]त्वाष्ट्राः त्वष्टृदेवत्याः। एतेऽपि तृतीये नियोज्याः ॥७॥

---

कृष्णग्रीवः शितिकक्षोऽञ्जिसक्थस्त ऐन्द्राग्नाः।
कृष्णाञ्जिरल्पाञ्जिर्महाञ्जिस्त उषस्याः ॥८॥

---

कृष्णग्रीव इति कृष्णऽग्रीवः। शितिकक्ष इति शितिऽकक्षः।
अञ्जिसक्थ इत्यञ्जिऽसक्थः। ते। ऐन्द्राग्नाः।
कृष्णाञ्जिरिति कृष्णऽअञ्जिः। अल्पाञ्जिरित्यल्पऽआञ्जिः।
महाञ्जिरिति महाऽअञ्जिः। ते। उषस्याः ॥ ग्रः ॥८॥

---

आ— 'कृष्णग्रीवः शितिकक्षः' इति। लिङ्गोक्तदेवत्योष्णिक्। [V]कृष्णग्रीवः [V]शितिकक्षः श्वेतकक्षः। [V]अञ्जिसक्थः अञ्जि पुण्ड्रं सक्थ्योरुर्वोर्यस्य सः। अभिव्यक्तोरुः। एवंगुणाः पशवः [V]ते [V]ऐन्द्राग्नाः इन्द्राग्निदेवत्याः पशवः। [V]कृष्णाञ्जिः कृष्णपुण्ड्रः। कृष्णवर्णाभिव्यक्ताङ्गः। [V]अल्पाञ्जिः ईषदभिव्यक्तः। [V]महाञ्जिः महत्पुण्ड्राभिव्यक्तिमान्। एवंगुणा ये पशवः [V]ते [V]उषस्याः उषोदेवत्याः ॥८॥

---

अ- 'कृष्णग्रीवः शितिकक्षः'। [V]कृष्णग्रीवः नीलवर्णकण्ठः। [V]शितिकक्षः श्वेतकक्षः। [V]अञ्जिसक्थः। [V]अञ्जि पुण्ड्रं सक्थ्योरुर्वोर्यस्य सः। [V]ते त्रयः [V]ऐन्द्राग्नाः इन्द्राग्निदेवताः। एतेऽपि तृतीये योज्याः॥

अथ चतुर्थे। [V]कृष्णाञ्जिः कृष्णपुण्ड्रः [V]अल्पाञ्जिः अल्पबिन्दुः [V]महाञ्जिः महाबिन्दुः। [V]ते त्रयः [V]उषस्याः उषोदेवताः चतुर्थे नियोज्याः ॥८॥

---

13. S3 पाठस्तु- कृष्णग्रीवः ... उषस्या इति for कृष्णग्रीवः शितिकक्षः इति।

14. S3 om. श्वेतकक्षः; S3 om. अञ्जि पुण्ड्रं ... सः।

15. S3 om. कृष्णपुण्ड्रः; V2 °व्यक्तवानङ्गः for °व्यक्ताङ्गः

16. S3 कृष्णाञ्जिः for अल्पाञ्जिः

शिल्पा वैश्वदेव्यो रोहिण्यस्त्र्यवयो वाचेऽविज्ञाता अदित्यै ।
सरूपा धात्रे वत्सतर्यो देवानां पत्नीभ्यः ॥९॥

---

शिल्पाः । वैश्वदेव्य इति वैश्वऽदेव्यः । रोहिण्यः । त्र्यवय इति त्रिऽअवयः ।
वाचे । अविज्ञाता इत्यविऽज्ञाताः । अदित्यै ।
सरूपा इति सऽरूपाः । धात्रे । वत्सतर्यः । देवानाम् । पत्नीभ्यः ॥ द्रिम् ॥९॥

---

आ– 'शिल्पा वैश्वदेव्यः' इति । लिङ्गोक्तदेवत्या बृहती । vशिल्पाः विचित्रवर्णाः अजाः । vवैश्वदेव्यः vरोहिण्यः vत्र्यवयः । सामान्येन पशवः सार्धसंवत्सरास्तिस्रोऽजाः । vत्र्यवयः त्रयो मेषाः । vवाचे सरस्वत्यै । vअविज्ञाताः । यथोक्तकृष्णादिचिह्नविज्ञानशून्याः पशवः अविज्ञाताः । ताः vअदित्यै । vसरूपाः समानरूपाः ये पशवः अजाः । 'धात्रे वत्सतर्यो देवानां पत्नीभ्यः'। vवत्सतर्यः पोताः ॥९॥

---

अ–'शिल्पाः वैश्वदेव्यः'। vशिल्पाः चित्रवर्णाः तिस्रोऽजाः। vवैश्वदेव्यः विश्वेदेवदेवत्याः। vरोहिण्यः रक्तवर्णाः। vत्र्यवयः सार्धसंवत्सरास्तिस्रोऽजाः। vवाचे वाग्देवतायै। vअविज्ञाताः कृष्णग्रीवादिपूर्वोक्तचिह्नज्ञानशून्यास्त्रयः पशवः vअदित्यै देवतायै। vसरूपाः समानरूपास्त्रयः पशवः vधात्रे धातृदेवतायै चतुर्थे यूपे नियोज्याः। एवं पञ्चदश संपूर्णाः। अथ पञ्चमे vवत्सतर्यः बालच्छाग्यः तिस्रः vदेवानां vपत्नीभ्यः देवताभ्यो नियोज्याः पञ्चमे यूपे ॥९॥

इति श्रीवेदार्थदीपिकायां षड्विंशे प्रथमोऽनुवाकः ॥१॥

---

[ द्वितीयोऽनुवाकः ]

कृष्णग्रीवा आग्नेयाः शितिभ्रवो वसूनां रोहिता रुद्राणाम् ।
श्वेता अवरोकिण आदित्यानां नभोरूपाः पार्जन्याः ॥१॥

---

6. S3 पाठस्तु– शिल्पाः...पत्नीभ्य इति for 'शिल्पा वैश्वदेव्यः' इति; S3 om. विचित्रवर्णाः
7. S3 om. सार्धसंवत्सरास्तिस्रोऽजाः

कृष्णग्रीवा इति कृष्णऽग्रीवाः । आग्नेयाः । शितिभ्रव इति शितिऽभ्रवः ।
वसूनाम् । रोहिताः । रुद्राणाम् ।
श्वेताः । अवरोकिण इत्यवऽरोकिणः । आदित्यानाम् ।
नभोरूपा इति नभःऽरूपाः । पार्जन्याः ॥ ध्रां ॥१॥

---

आ– ' कृष्णग्रीवा आग्नेयाः ' इति । लिङ्गोक्तदेवत्या बृहती । $^{v}$कृष्णग्रीवाः $^{v}$आग्नेयाः $^{v}$शितिभ्रवः । भ्रुवोः श्वेतगुणयुक्ताः पशवः शितिभ्रवः $^{v}$वसूनां देवानां भवन्ति । $^{v}$रोहिताः लोहितवर्णाः पशवः । $^{v}$रुद्राणां $^{v}$श्वेताः $^{v}$अवरोकिणः । अव अधस्तात् रोकः, छिद्रं येषां ते । " छिद्रं निर्व्यथनं रोकम् " ( अको १.८.२ ) । अवलोकिनः पशवः $^{v}$आदित्यानां देवानां भवन्ति । $^{v}$नभोरूपाः $^{v}$पार्जन्याः पर्जन्यदेवत्याः ॥१०॥

---

**अ– ' कृष्णग्रीवा आग्नेयाः ' । कृष्णकण्ठास्त्रयः पशवः $^{v}$आग्नेयाः अग्निदेवत्याः । $^{v}$शितिभ्रवः । श्वेतभ्रूयुक्तास्त्रयः पशवः $^{v}$वसूनाम् । विभक्तिव्यत्ययः । वसुभ्यः । $^{v}$रोहिताः रक्तवर्णास्त्रयः $^{v}$रुद्राणां रुद्रेभ्यः $^{v}$श्वेताः $^{v}$अवरोकिणः अवलोकिनः । रलयोरभेदात् । यद्वा– अव अधस्तात् रोकः छिद्रं येषां ते, तथा । " छिद्रं निर्व्यथनं रोकम् " ( अको १.८.२ ) इत्यभिधानात् । $^{v}$ते त्रयः $^{v}$आदित्यानाम् आदित्येभ्यः । एतेऽपि पञ्चमे नियोज्याः । अथ षष्ठे $^{v}$नभोरूपाः आकाशसदृशास्त्रयः $^{v}$पार्जन्याः पर्जन्यदेवताः नियोज्याः ॥१॥**

---

**उन्नत ऋषभो वामनस्त ऐन्द्रावैष्णवा**
**उन्नतः शितिबाहुः शितिपृष्ठस्त ऐन्द्राबार्हस्पत्याः ।**
**शुकरूपा वाजिनाः कल्माषा आग्निमारुताः श्यामाः पौष्णाः ॥२॥**

---

उन्नत इत्युत्ऽनतः । ऋषभः । वामनः । ते । ऐन्द्रावैष्णवाः ।
उन्नत इत्युत्ऽनतः । शितिबाहुरिति शितिऽबाहुः ।
शितिपृष्ठ इति शितिऽपृष्ठः । ते । ऐन्द्राबार्हस्पत्याः ।
शुकरूपा इति शुकऽरूपाः । वाजिनाः । कल्माषाः ।
आग्निमारुताः । श्यामाः । पौष्णाः ॥ भेम् ॥२॥

---

5. S3 पाठस्तु– कृष्णग्रीवा ... पार्जन्या इति for ' कृष्णग्रीवा आग्नेयाः ' इति; V2 after आग्नेयाः adds बालच्छाग्यः

7. S3 om. अव अधस्तात् ... रोकः ।

अश्वमेधमन्त्राः ]

आ– 'उन्नत ऋषभः' इति । लिङ्गोक्तदेवत्या जगती । Vउन्नतः उच्छ्रितः अजः पशुः । Vऋषभः च श्रेष्ठश्च । Vवामनः । बहुन्यपि वयसि गते वृद्धिरहितः वामनः, कुब्जश्च । Vते एते पशवः Vऐन्द्रावैष्णवाः इन्द्राविष्णुदेवत्याः । Vउन्नतः Vशितिबाहुः श्वेतबाहुः । अस्मिन् प्रकरणे बाहुशब्दः पूर्वपादवचनः । शितिबाहुः श्वेतपादः । Vशितिपृष्ठः श्वेतपृष्ठः । एते पशवः Vऐन्द्राबार्हस्पत्याः इन्द्राबृहस्पतिदेवत्याः । Vशुकरूपाः शुकसदृशरूपाः Vवाजिनाः वाजिनवद्रूपाः Vकल्माषाः कृष्णवर्णाः अजाः Vआग्निमारुताः अग्निमरुद्देवत्याः । Vश्यामाः कृष्णाः पशवः । Vपौष्णाः पूषदेवत्याः ॥११॥

---

अ– 'उन्नत ऋषभः' । Vउन्नतः उच्चः Vऋषभः पुष्टः । Vवामनः । बहुन्यपि वयसि गते वृद्धिरहितः । Vते त्रयः Vऐन्द्रावैष्णवाः इन्द्राविष्णुदेवताः । Vउन्नतः Vशितिबाहुः श्वेतबाहुः Vशितिपृष्ठः । Vते त्रयः Vऐन्द्राबार्हस्पत्याः इन्द्रबृहस्पतिदेवताः । Vशुकरूपाः Vशुकपक्षिसमवर्णास्त्रयः पशवः Vवाजिनाः । वाजी देवता येषां ते तथा वाजिदेवताः । Vकल्माषाः कर्बुरवर्णास्त्रयः । Vआग्निमारुताः अग्निमरुद्देवताः । एते पञ्चदश षष्ठे नियोज्याः । अथ सप्तमे Vश्यामाः शुक्लकृष्णवर्णास्त्रयः । Vपौष्णाः पूषदेवत्याः ॥२॥

---

एता ऐन्द्राग्ना द्विरूपा अग्नीषोमीया वामना अनड्वाह आग्नावैष्णवाः ।
वशा मैत्रावरुण्योऽन्यतएन्यो मैत्र्यः ॥३॥

---

एताः । ऐन्द्राग्नाः । द्विरूपा इति द्विऽरूपाः । अग्नीषोमीयाः ।
वामनाः । अनड्वाहः । आग्नावैष्णवाः ।
वशाः । मैत्रावरुण्यः । अन्यतएन्य इत्यन्यतःऽएन्यः । मैत्र्यः ॥ छाम् ॥३॥

---

आ– 'एता ऐन्द्राग्नाः' इति । लिङ्गोक्तदेवत्या बृहती । एते Vद्विरूपाः वर्णद्वयोपेताः ये पशवस्ते Vऐन्द्राग्नाः इन्द्राग्निदेवत्याः द्विविधरूपाः । Vअग्नीषोमीयाः Vवामनाः ह्रस्वाः Vअग्नीषोमीयाः अग्निसोमदेवत्याः । Vअनड्वाहः भारोद्वहनदक्षाः पशवः । Vआग्नावैष्णवाः

---

1. S3 पाठस्तु– उन्नत ... पौष्णा इति for 'उन्नत ऋषभः' इति ।
2. V2 वृषभश्च for ऋषभः च; S3 om. बहुन्यपि ... वामनः; S3 om. ते
7. V2 पौष्ण° for पूष°
12. M4 पृष्ठे for षष्ठे
18. S3 पाठस्तु– एता ऐन्द्राग्ना ... मैत्र्य इति for 'एता ऐन्द्राग्नाः' इति; S3 om. लिङ्गोक्त ... ऐन्द्राग्नाः । ( L 19 )
19. S3 ऐन्द्राग्नि° for इन्द्राग्नि°
20. V2 अग्नीषोम° for अग्निसोम°

अग्निविष्णुदेवत्याः । ‘ वशा मैत्रावरुण्यः ’ । vवशा वन्ध्याः पशवः । vमैत्रावरुण्यः मित्रावरुणदेवत्याः । अन्यतः एकतरतः श्यामादिगुणयुक्ताः vअन्यतएन्यः । vमैत्र्यः मित्रदेवत्याः ॥१२॥

अ– ‘एता ऐन्द्राग्नाः’ । vएताः कर्बुरवर्णास्त्रयः पशवः vऐन्द्राग्नाः इन्द्राग्निदेवताः । एतशब्दोऽयं वर्णवचनः । “ °शबलैताश्च कर्बुरे ” ( अको १.६.१७ ) इत्यभिधानात् । अत एव “ एता वर्णे ” ( वाप्रा २.३५ ) इति प्रातिशाख्येन आद्युदात्तः । vद्विरूपाः वर्णद्वयोपेतास्त्रयः । vअग्नीषोमीयाः अग्निसोमदेवताः । vवामनाः vअनड्वाहः शकटवाहनसमर्थाः अजास्त्रयः । vआग्नावैष्णवाः अग्निविष्णुदेवताः । vवशाः वन्ध्यास्तिस्रोऽजाः । vमैत्रावरुण्यः मित्रवरुणदेवताः । एते पञ्चदश सप्तमे योज्याः । अथाष्टमे । vअन्यतएन्यः एकपार्श्वे कर्बुरवर्णास्तिस्रोऽजाः । “ वर्णादनुदात्तात्तोपधात्तो नः ” ( पा ४.१.३९ ) इति ङापि स्त्रियां कृते सति तकारस्य नकारश्चादेश इत्येवं रूपसिद्धिः । vमैत्र्यः मित्रदेवताः ॥३॥

कृष्णग्रीवा आग्नेया बभ्रवः सौम्याः
श्वेता वायव्या अविज्ञाता अदित्यै ।
सरूपा धात्रे वत्सतर्यो देवानां पत्नीभ्यः ॥४॥

कृष्णग्रीवा इति कृष्णऽग्रीवाः । आग्नेयाः । बभ्रवः । सौम्याः ।
श्वेताः । वायव्याः । अविज्ञाता इत्यविऽज्ञाताः । अदित्यै ।
सरूपा इति सऽरूपाः । धात्रे । वत्सतर्यः । देवानाम् । पत्नीभ्यः ॥ग्रीम् ॥४॥

आ– ‘ कृष्णग्रीवा आग्नेयाः ’ इति । लिङ्गोक्तदेवत्या पङ्क्तिः । vकृष्णग्रीवाः vआग्नेयाः vबभ्रवः कपिलाः पशवः vसौम्याः सोमदेवत्याः । vश्वेताः पशवः vवायव्याः वायुदेवत्याः । vअविज्ञाताः । लक्षणतः अविज्ञाताः, चिह्नविशेषेणाज्ञाताः पशवः vआदित्यै भवन्ति । vसरूपाः समानरूपाः vधात्रे प्रजापतये vवत्सतर्यः vदेवानां vपत्नीभ्यः इति ॥१३॥

अ– ‘ कृष्णग्रीवा आग्नेयाः ’ । नीलकण्ठास्त्रयः vआग्नेयाः । vबभ्रवः कपिलवर्णास्त्रयः vसौम्याः । vश्वेताः त्रयः vवायव्याः । vअविज्ञाताः रूपेण त्रयः । vअदित्यै देवतायै । अथ नवमे vसरूपाः त्रयः vधात्रे vवत्सतर्यः तिस्रः vदेवानां vपत्नीभ्यः नियोज्याः ॥४॥

8. M4 om. मैत्रावरुण्यः ... कर्बुरवर्णास्तिस्रोऽजाः । ( L 9 )
17. S3 पाठस्तु– कृष्णग्रीवाः ... पत्नीभ्य इति for ‘ कृष्णग्रीवा आग्नेयाः ’ इति ।
19. S3 om. चिह्नविशेषेणाज्ञाताः

कृष्णा भौमा धूम्रा आन्तरिक्षा बृहन्तो दिव्याः ।
शबला वैद्युताः सिध्मास्तारकाः ॥५॥(२)॥

कृष्णाः । भौमाः । धूम्राः । आन्तरिक्षाः । बृहन्तः । दिव्याः ।
शबलाः । वैद्युताः । सिध्माः । तारकाः ॥ ळं ॥५॥(२)॥

आ– 'कृष्णा भौमाः' इति । लिङ्गोक्तदेवत्या गायत्री । कृष्णाः पशवः भौमाः भूमिदेवत्याः । धूम्राः धूम्रवर्णाः अजाः आन्तरिक्षाः अन्तरिक्षदेवत्याः । बृहन्तः दिव्याः द्युदेवत्याः । शबलाः मिश्रवर्णाः वैद्युताः विद्युद्देवत्याः । सिध्माः सिध्माख्यरोगवन्तः पशुविशेषाः तारकाः नक्षत्रदेवत्याः ॥१४॥

अ– 'कृष्णा भौमाः' । कृष्णाः कृष्णवर्णाः । वर्णार्थत्वादन्तोदात्तः । भौमाः भूमिदेवतास्त्रयः । धूम्राः त्रयः आन्तरिक्षाः अन्तरिक्षदेवताः । बृहन्तः महान्तस्त्रयः दिव्याः द्युदेवताः । एते पञ्चदश नवमे नियोज्याः । अथ दशमे शबलाः कर्बुरास्त्रयः वैद्युताः विद्युद्देवताः । सिध्माः सिध्माख्यरोगवन्तः त्रयः तारकाः नक्षत्रदेवताः ॥५॥

इति द्वितीयोऽनुवाकः ॥२॥

## [ अथ तृतीयोऽनुवाकः ]

धूम्रान् वसन्ताया लभते श्वेतान् ग्रीष्माय कृष्णान् वर्षाभ्योऽरुणाञ्छरदे ।
पृषतो हेमन्ताय पिशङ्गाञ्छिशिराय ॥१॥

धूम्रान् । वसन्ताय । आ । लभते । श्वेतान् । ग्रीष्माय ।
कृष्णान् । वर्षाभ्यः । अरुणान् । शरदे ।
पृषतः । हेमन्ताय । पिशङ्गान् । शिशिराय ॥ श्रुं ॥१॥

5. S3 पाठस्तु– कृष्णाः ... तारका इति for 'कृष्णा भौमाः' इति ।
7. S3 om. सिध्माख्यरोगवन्तः

आ– ' धूम्रान् वसन्ताय ' इति । लिङ्गोक्तदेवत्या पङ्क्तिः । Vधूम्रान् धूम्रवर्णान् पशून् [ Vवसन्ताय ] वसन्ताख्यऋतुदेवतायै Vआ Vलभते आलभनं विशसनं करोति । Vश्वेतान् श्वेतवर्णान् पशून् Vग्रीष्माय ऋतवे आलभते इति संबन्धः । Vकृष्णान् कृष्णवर्णान् अजान् पशून् Vवर्षाभ्यः ऋतुदेवतायै आलभते । Vअरुणान् अरुणवर्णान् Vशरदे ऋतवे आलभते । Vपृषतः नानावर्णबिन्दुयुक्तान् पशून् Vहेमन्ताय ऋतवे आलभते । Vपिशङ्गान् लोहितमिश्रान् कपिलवर्णान् Vशिशिराय ऋतवे आलभते ॥१५॥

---

अ– ' धूम्रान् वसन्ताय ' । Vधूम्रान् त्रीनजान् Vवसन्ताय देवतायै Vआलभते नियुनक्ति दशमे । Vश्वेतान् त्रीन् Vग्रीष्माय । Vकृष्णान् त्रीन् Vवर्षाभ्यः । एवं पञ्चदश दशमे नियोज्याः । अथैकादशे Vअरुणान् त्रीन् Vशरदे । Vपृषतः नानावर्णबिन्दुयुक्तान् त्रीन् पशून् Vहेमन्ताय । Vपिशङ्गान् लोहितमिश्रकपिलवर्णान् त्रीन् Vशिशिराय ॥१॥

---

त्र्यवयो गायत्र्यै पञ्चावयस्त्रिष्टुभे दित्यवाहो जगत्यै ।
त्रिवत्सा अनुष्टुभे तुर्यवाह उष्णिहे ॥२॥

---

त्र्यवय इति त्रिऽअवयः । गायत्र्यै । पञ्चावय इति पञ्चऽअवयः ।
त्रिष्टुभे । त्रिस्तुभ इति त्रिऽस्तुभे । दित्यवाह इति दित्यऽवाहः । जगत्यै ।
त्रिवत्सा इति त्रिऽवत्साः । अनुष्टुभे । अनुस्तुभ इत्यनुऽस्तुभे ।
तुर्यवाह इति तुर्यऽवाहः । उष्णिहे ॥ ३ ॥२॥

---

आ– ' त्र्यवयः ' इति । लिङ्गोक्तदेवत्या बृहती । Vत्र्यवयः षण्मासावधिः कालोऽविः । त्रयोऽवयो मेषा येषां ते त्र्यवयः । त्र्यवयो मेषा Vगायत्र्यै गायत्र्यभिधानदेवतायै । सार्धद्विवत्सराः Vपशवः Vपञ्चावयः पञ्चमेषाः Vत्रिष्टुभे देवतायै । दिर्ति खण्डनां वहन्तीति Vदित्यवाहः द्विसंवत्सराः पशुविशेषाः । Vजगत्यै जगत्यभिधानायैः Vत्रिवत्साः त्रिवर्षाः पशवः Vअनुष्टुभे । Vतुर्यवाहः सार्धत्रिवत्सराः Vउष्णिहे छन्दोदेवतायै ॥१६॥

---

1. S3 पाठस्तु– धूम्रान् ... शिशिरायेति for ' धूम्रान् वसन्ताय ' इति ।
17. S3 पाठस्तु– त्र्यवयो ... उष्णिह इति for ' त्र्यवयः ' इति ।
17–18. S3 om. षण्मासावधिः ... ते त्र्यवयः ।
18. V2 गायत्र्याभिमान° for गायत्र्यभिधान°
19. S3 om. सार्धद्विवत्सराः पशवः
20. S3 om. द्विसंवत्सराः; S3 om. त्रिवर्षाः
21. S3 om. सार्धत्रिवत्सराः

अ- ' त्र्यवयो गायत्र्यै ' । षण्मासात्मकः कालोऽविरित्युच्यते । त्रयोऽवयो येषां ते Vत्र्यवयः । सार्धसंवत्सराः त्रयः पशवः Vगायत्र्यै देवतायै नियोज्याः । Vपञ्चावयः सार्धद्विसंवत्सराः Vत्रिष्टुभे । एवमेकादशे पञ्चदश नियोज्याः । अथ द्वादशे Vदित्यवाहः । दित्यं युगं वहन्तीति विग्रहे " भजो ण्विः " (पा ३.२.६२) इत्यनुवर्तमाने " वहश्च " (पा ३.२.६४) इति सूत्रेण ण्वौ कृते वृद्धौ सत्यां दित्यवाडिति रूपसिद्धिः । द्विसंवत्सरास्त्रयः पशवः Vजगत्यै । Vत्रिवत्साः त्रिवत्सरास्त्रयः Vअनुष्टुभे । Vतुर्यवाहः सार्धत्रिवत्सरास्त्रयः Vउष्णिहे ॥२॥

---

पष्ठवाहो विराज उक्षाणो बृहत्या ऋषभाः ककुभे ।
अनड्वाहः पङ्क्त्यै धेनवोऽतिच्छन्दसे ॥३॥

---

पष्ठवाह इति पष्ठऽवाहः । विराज इति विऽराजे । उक्षाणः । बृहत्यै । ऋषभाः । ककुभे । अनड्वाहः । पङ्क्त्यै । धेनवः । अतिच्छन्दस इत्यतिऽच्छन्दसे ॥ णम् ॥ ॥३॥

---

आ- ' पष्ठवाहः ' इति । लिङ्गोक्तदेवत्याऽनुष्टुप् । Vपष्ठवाहः । " प्रष्ठवाड् युगपार्श्वगः " ( अको २.९.६३ ) इत्यभिधानात् । Vपष्ठवाहः चतुःसंवत्सराः पशवः Vविराजे विराट्छन्दोदेवतायै । Vउक्षाणः सेचनसमर्थाः Vअनड्वाहः Vबृहत्यै । Vऋषभाः Vककुभे ककुप्छन्दसेऽनड्वाहः । Vपङ्क्त्यै छन्दसे Vधेनवः [ नव-] प्रसूता गावः Vअतिच्छन्दसे देवतायै ॥१७॥

---

अ- ' पष्ठवाहो विराजे ' । Vपष्ठवाहः चतुःसंवत्सरास्त्रयः Vविराजे । Vउक्षाणः सेचनसमर्थाः । उक्ष सेचने । युवानस्त्रयोऽजाः Vबृहत्यै । एवं द्वादशे पञ्चदश नियोज्याः । अथ त्रयोदशे । Vऋषभाः उक्ष्णोऽप्यधिकवयस्काः त्रयः Vककुभे । Vअनड्वाहः शकटवाहनसमर्थाः त्रयोऽजाः Vपङ्क्त्यै । Vधेनवः नवप्रसूताः तिस्रोऽजाः Vअतिच्छन्दसे ॥३॥

---

कृष्णग्रीवा आग्नेया बभ्रवः सौम्या
उपध्वस्ताः सावित्रा वत्सतर्यः सारस्वत्यः श्यामाः पौष्णाः ।
पृश्नयो मारुता बहुरूपा वैश्वदेवा वशा द्यावापृथिवीयाः ॥४॥

---

11. S3 पष्ठवाहो ... °च्छन्दस इति for ' पष्ठवाहः ' इति; V2 °पार्श्वग्रहः for °पार्श्वगः
12. S3 om. चतुःसंवत्सराः

कृष्णग्रीवा इति कृष्णऽग्रीवाः । आग्नेयाः । बभ्रवः । सौम्याः ।
उपध्वस्ता इत्युपऽध्वस्ताः । सावित्राः । वत्सतर्यः । सारस्वत्यः । श्यामाः । पौष्णाः ।
पृश्नयः । मारुताः । बहुरूपा इति बहुऽरूपाः ।
वैश्वदेवा इति वैश्वऽदेवाः । वशाः । द्यावापृथिवीयाः ॥ त्रैम् ॥१॥

आ– 'कृष्णग्रीवा आग्नेया बभ्रवः' इति । लिङ्गोक्तदेवत्या बृहती जगती वा । vकृष्णग्रीवाः vआग्नेयाः vबभ्रवः कपिलाः vसौम्याः सोमदेवत्यः vउपध्वस्ताः उपध्वंसनमधःपतनं तद्गुणविशिष्टाः पशवः । ध्वंसु गतौ । vसावित्राः सवितृदेवत्याः । vवत्सतर्यः vसारस्वत्यः सरस्वतीदेवत्याः । vश्यामाः कृष्णवर्णाः vपौष्णाः पूषदेवत्याः । vपृश्नयः तनुकायाः, विचित्रवर्णाः वा vमारुताः मरुद्देवत्याः । vबहुरूपाः नानारूपाः vवैश्वदेवाः विश्वेदेवदेवत्याः । vवशाः वन्ध्याः अजाः vद्यावापृथिवीयाः द्यावापृथिवीदेवत्याः ॥१८॥

अ– 'कृष्णग्रीवा आग्नेयाः'। अथ चातुर्मास्यदेवताकपशवः 'श्वेताः सौर्याः' इत्यन्ताः कथ्यन्ते । तत्र प्रथमं वैश्वदेवपर्वदेवतापशव उच्यन्ते । vकृष्णग्रीवाः त्रयः vआग्नेयाः । vबभ्रवः कपिलास्त्रयः vसौम्याः । एवं पञ्चदश त्रयोदशे । अथ चतुर्दशे vउपध्वस्ताः । उपध्वंसनमधःपतनम् । तद्गुणविशिष्टाः वर्णान्तरमिश्रिता वा त्रयः vसावित्राः सवितृदेवताः । vवत्सतर्यः तिस्रः vसारस्वत्यः सरस्वतीदेवताः । vश्यामाः शुक्लकृष्णवर्णाः vपौष्णाः पूषदेवत्याः । vपृश्नयः तनुकायाः विचित्रवर्णाः वा त्रयः vमारुताः मरुद्देवताः । vबहुरूपाः त्रयः vवैश्वदेवाः । एते पञ्चदश चतुर्दशे नियोज्याः । अथ पञ्चदशे vवशाः वन्ध्यास्तिस्रः vद्यावापृथिवीयाः द्यावापृथिवीदेवताः ॥४॥

उक्ताः सचरा एता ऐन्द्राग्नाः ।
कृष्णा वारुणाः पृश्नयो मारुताः कायास्तूपराः ॥५॥(३)॥

उक्ताः । संचरा इति सम्ऽचराः । एताः । ऐन्द्राग्नाः ।
कृष्णाः । वारुणाः । पृश्नयः । मारुताः । कायाः । तूपराः ॥ङ्म्॥ ॥१॥३॥

आ– 'उक्ताः संचराः' इति । लिङ्गोक्तदेवत्या गायत्री । vउक्ताः vसंचराः सम्यक्चरणयुक्ताः vएताः अजाः vऐन्द्राग्नाः इन्द्राग्निदेवत्याः । vकृष्णाः vवारुणाः vपृश्नयः vमारुताः। 'कायास्तूपराः'। शृङ्गरहिताः vतूपराः vकायाः प्रजापतिदेवत्याः ॥१९॥

5. S3 पाठस्तु– कृष्णग्रीवाः . . द्यावापृथिवीया इति for 'कृष्ण° ... बभ्रवः' इति
22. S3 उक्ताः ... तूपरा इति for 'उक्ताः संचराः' इति
24. S3 om. शृङ्गरहिताः vतूपराः

अ– ‘ उक्ताः संचराः ’ । अथ वरुणप्रघासीया उच्यन्ते । संचरशब्देन ‘ कृष्णग्रीवा आग्नेया ’ इत्यादयः पूर्वकण्डिकोक्ताः पञ्चदशपशव उच्यन्ते । पञ्च संचराणि हवींषि भवन्तीतिवत् । यथा चातुर्मास्येषु चतुर्ष्वपि पर्वसु आग्नेयादीनि पञ्च हवींषि समानानि । एवमत्रापि चतुर्णां पर्वणां संबन्धिनामाद्यानां पञ्चानां देवानामाद्या एते पञ्चदशपशवः समाना एव भवन्ति । तेन vसंचराः इति vउक्ताः । तथा चाग्नेयादयः पञ्चदश पशवः उक्ता इत्यर्थः । ते च – आग्नेयाः कृष्णग्रीवास्त्रयः । सौम्या बभ्रवः त्रयः । सावित्रा उपध्वस्तास्त्रयः । सावित्रा वत्सतर्यस्तिस्रः । पञ्चदश यूपे नियोज्याः । अथ षोडशे– पौष्णाः श्यामास्त्रयः । एते संचराः । vएताः कर्बुरास्त्रयः vऐन्द्राग्नाः । vकृष्णाः vवारुण्याः त्रयः । vपृश्नयः सूक्ष्मशरीरास्त्रयः vमारुताः । vतूपराः अशृङ्गाः vकायाः कदेवतास्त्रयो नियोज्याः ॥५॥

इति षड्विंशे तृतीयोऽनुवाकः ॥३॥

---

[ अथ चतुर्थोऽनुवाकः । ]

अग्नयेऽनीकवते प्रथमजाना लभते मरुद्भ्यः
सान्तपनेभ्यः सवात्यान् मरुद्भ्यो गृहमेधिभ्यो बष्किहान् ।
मरुद्भ्यः क्रीळिभ्यः सꣳसृष्टान् मरुद्भ्यः स्वतवद्भ्योऽनुसृष्टान् ॥१॥

---

अग्नये । अनीकवत इत्यनीकऽवते । प्रथमजानिति प्रथमऽजान् ।
आ । लभते । मरुद्भ्य इति मरुत्ऽभ्यः ।
सान्तपनेभ्य इति साम्ऽतपनेभ्यः ।
सवात्यानिति सऽवात्यान् । गृहमेधिभ्य इति गृहमेधिऽभ्यः । बाष्किहान् ।
क्रीळिभ्य इति क्रीळिऽभ्यः । सꣳसृष्टानिति सम्ऽसृष्टान् ।
स्वतवद्भ्य इति स्वतवत्ऽभ्यः । अनुसृष्टानित्यनुऽसृष्टान् ॥ सुंम् ॥१॥

---

आ– ‘ अग्नयेऽनीकवते ’ इति । लिङ्गोक्तदेवत्या शक्वरी । vअग्नये vअनीकवते स्वसेनायुक्तायाग्नये vप्रथमजान् मातुः प्रथमगर्भे जातान् अजायाः प्रथमोत्पन्नान् । मरुद्भ्यः vसांतपनेभ्यः सूर्यसंबन्धिभ्यः मरुद्भ्यः vसवात्यान् वातमण्डलीमध्यस्थान् अजान् । vमरुद्भ्यः vगृहमेधिभ्यः vबष्किहान् चिरप्रसूतान् अजान् । vमरुद्भ्यः vक्रीळिभ्यः क्रीळनशीलेभ्यः vसꣳसृष्टान् सह सृष्टान् संसृष्टधर्मयुक्तान् पशून् । vमरुद्भ्यः vस्वतवद्भ्यः बलवद्भ्यः vअनुसृष्टान् अनुसर्गधर्मयुक्तान् अजान् । vआलभते सर्वत्रान्वयः ॥२०॥

---

4. M4 एवं for एव
20. S3 पाठस्तु– अग्नये ... अनुसृष्टानिति for ‘ अग्नयेऽनीकवते ’ इति ।

अ– 'अग्नयेऽनीकवते'। अथ सप्तदशे साकमेधपशवः। प्रथमजान् मातुः प्रथमगर्भे जातान् त्रीनजान् अनीकवते अनीकतद्गुणविशिष्टाय अग्नये आलभते नियुनक्ति। वातसमूहो वात्या। तया सह वर्तन्त इति सवात्यास्तान् वातमण्डलीमध्यस्थान् त्रीनजान् सांतपनेभ्यः मरुद्भ्यः। बष्किहान् चिरप्रसूतान् त्रीनजान् गृहमेधिभ्यः मरुद्भ्यः। संसृष्टान् सह ब्रह्मणा सृष्टान् त्रीन् क्रीलिभ्यः मरुद्भ्यः। अनुसृष्टान् अनुक्रमेण जातान् त्रीन् स्वतवद्भ्यः मरुद्भ्य आलभत इति शेषः ॥१॥

उक्ताः संचरा एता ऐन्द्राग्नाः।
प्राशृङ्गा माहेन्द्रा बहुरूपा वैश्वकर्मणाः ॥२॥

उक्ताः। संचरा इति सम्ऽचराः। एताः। ऐन्द्राग्नाः।
प्राशृङ्गाः। प्रशृङ्गा इति प्रऽशृङ्गाः। माहेन्द्रा इति माहाऽइन्द्राः।
बहुरूपा इति बहुऽरूपाः। वैश्वकर्मणा इति वैश्वऽकर्मणाः ॥ ओम् ॥२॥

आ– 'उक्ताः संचराः' इति। लिङ्गोक्तदेवत्या गायत्री। याः उक्ताः संचराः ता एव ऐन्द्राग्नाः इन्द्राग्निदेवत्याः। प्राशृङ्गाः प्रकृष्टशृङ्गवन्तः माहेन्द्राः महेन्द्रदेवत्याः। बहुरूपाः वैश्वकर्मणाः विश्वकर्मदेवत्याः ॥२१॥

अ– अष्टादशे यूपे महाहविर्देवतापशवो नियोज्याः। कृष्णग्रीवादयः पञ्चदश पूर्ववत्। अथैकोनविंशे एताः ऐन्द्राग्नाः त्रयः। प्राशृङ्गाः प्रशृङ्गाः। संहितायां दीर्घ आर्षः। प्रकृष्टशृङ्गाः। माहेन्द्राः महेन्द्रदेवताः त्रयः। बहुरूपाः नानारूपास्त्रयः वैश्वकर्मणाः विश्वकर्मदेवताः ॥३॥

धूम्रा बभ्रुनीकाशाः पितॄणाꣳ सोमवतां बभ्रवो
धूम्रनीकाशाः पितॄणां बर्हिषदाम्।
कृष्णा बभ्रुनीकाशाः पितॄणामग्निष्वात्तानां कृष्णाः
पृषन्तस्त्रैयम्बकाः ॥३॥

1. M4 P2 मात्रा for मातुः
5. M4 P2 after °क्रमेण adds च
11. S3 पाठस्तु– उक्ताः ... °कर्मणा इति for 'उक्ताः संचराः' इति।

धूम्राः । बभ्रुनीकाशाः । बभ्रुनिकाशा इति बभ्रुऽनिकाशाः । पितॄणाम् । सोमवतामिति सोमऽवताम् । बभ्रवः । धूम्रनीकाशाः । धूम्रनिकाशा इति धूम्रऽनिकाशाः । पितॄणाम् । बर्हिषदाम् । बर्हिसदामिति बर्हिऽसदाम् ।

कृष्णाः । बभ्रुनीकाशाः । बभ्रुनिकाशा इति बभ्रुऽनिकाशाः । पितॄणाम् । अग्निष्वात्तानाम् । अग्निस्वात्तानामित्यग्निऽस्वात्तानाम् ।

कृष्णाः । पृषन्तः । त्रैयम्बकाः । घ्रुं ॥३॥

---

आ– ' धूम्राः बभ्रुनीकाशाः ' इति । लिङ्गोक्तदेवत्या शक्वरी । Vधूम्राः कृष्णमिश्रलोहितवर्णाः । Vबभ्रुनीकाशाः कपिलवर्णसदृशाः पशवः Vसोमवतां Vपितॄणां भवन्ति । ' बभ्रवो धूम्रनीकाशाः ' । Vबभ्रवः Vपितॄणां Vबर्हिषदां पशवो भवन्ति । Vकृष्णाः कृष्णवर्णाः Vपृषन्तः बिन्दुमन्तः Vत्रैयम्बकाः त्रियम्बकदेवत्याः ॥२२॥

---

अ– ' धूम्राः बभ्रुनीकाशाः ' । अथ पित्र्येष्टिदेवतापशवः Vधूम्राः कृष्णवर्णमिश्रलोहितवर्णाः । Vबभ्रुनीकाशाः कपिलवर्णसदृशाः । " नभनीकाशसंकाशसदृशप्रतिमादयः " ( द्र. अको २.१०.३७ ) इत्यभिधानम् । त्रयः पशवः Vसोमवतां Vपितॄणाम् । Vबभ्रवः Vधूम्रनीकाशाः धूम्रसदृशास्त्रयः Vबर्हिषदां Vपितॄणाम् । एवं पञ्चदश एकोनविंशे नियोज्याः । अथ विंशे यूपे Vकृष्णाः Vबभ्रुनीकाशाः त्रयः Vअग्निष्वात्तानां Vपितॄणाम् । नीकाश इति दीर्घश्छान्दसः । Vकृष्णाः Vपृषन्तः बिन्दुयुक्तास्त्रयः Vत्रैयम्बकाः त्र्यम्बकदेवताः ॥३॥

---

उक्ताः संचरा एताः शुनासीरीयाः ।
श्वेता वायव्याः श्वेताः सौर्याः ॥४॥

---

उक्ताः । संचरा इति सम्ऽचराः । एताः । शुनासीरीयाः ।
श्वेताः । वायव्याः । श्वेताः । सौर्याः ॥ घ्रों ॥४॥

---

7. S3 पाठस्तु – धूम्रा ... त्रैयम्बका इति for ' धूम्रा बभ्रुनीकाशाः ' इति ।
11. M4 पित्र्यैष्टिदेवताः for पित्र्येष्टिदेवता° ।
12–13. P2 M4 trans नभ° ... प्रतिमादय इत्यभिधानम् after पितॄणाम्
14. V2 °निकाशाः for °नीकाशाः

आ– ' उक्ताः संचराः ' इति । लिङ्गोक्तदेवत्या बृहती । [v]उक्ताः [v]संचराः याः पशवः [v]एताः [v]शुनासीरीयाः । शुनासीरः इन्द्रः । शुनासीरदेवत्याः पशवः । [v]श्वेताः [v]वायव्याः वायुदेवत्याः पशवः । [v]श्वेताः [v]सौर्याः च सूर्यदेवत्याः ॥२३॥

---

अ– ' उक्ताः संचराः ' । अथ शुनासीरीयपशवः । तत्र [v]संचराः आग्नेयादयः पञ्चदशोक्ताः । तेन कृष्णग्रीवाः आग्नेयास्त्रयः बभ्रवः सौम्यास्त्रयः उपध्वस्ताः सावित्रास्त्रयो विंशे नियोज्याः । अथैकविंशे वत्सतर्यः सारस्वत्यस्तिस्रः । श्यामाः पौष्णास्त्रयः । [v]एताः कर्बुरास्त्रयः । [v]शुनासीरीयाः शुनासीरदेवताः । [v]श्वेताः त्रयः [v]वायव्याः । [v]श्वेताः त्रयः [v]सौर्याः सूर्यदेवताः । एवं पञ्चदशैकविंशे नियोज्याः । एवं समाप्ता यूपाः इति । अश्वाद्याः सौर्यान्ताः सप्तविंशत्यधिकं शतत्रयं ग्राम्याः पशव उक्ताः ॥४॥

---

वसन्ताय कपिञ्जलानालभते ग्रीष्माय कलविङ्कान्
वर्षाभ्यस्तित्तिरीञ्छरदे वर्तिकाः ।
हेमन्ताय ककराञ्छिशिराय विककरान् ॥५॥

---

वसन्ताय । कपिञ्जलान् । आ । लभते । ग्रीष्माय ।
कलविङ्कान् । वर्षाभ्यः । तित्तिरीन् । शरदे । वर्तिकाः ।
हेमन्ताय । ककरान् । शिशिराय । विककरानिति विऽककरान् ॥ खं ॥५॥

---

आ– कपिञ्जलादयः आरण्याः पशवः पक्षिणोऽश्वमेधे पशुत्वेनाकाशयूपे निबन्ध्यालम्भनीया इत्याह– ' वसन्ताय कपिञ्जलान् ' इति । लिङ्गोक्तदेवत्या त्रिष्टुप् । [v]वसन्ताय ऋतवे [v]कपिञ्जलान् चित्रपक्षान् । [v]ग्रीष्माय ऋतवे [v]कलविङ्कान् चटकान् । [v]वर्षाभ्यः [v]तित्तिरीन् कुक्कुररवान् । [v]शरदे ऋतवे वर्तिकान् पक्षिविशेषान् । [v]हेमन्ताय [v]ककरान् पक्षिविशेषान् । [v]शिशिराय ऋतवे [v]विककरान् पक्षिविशेषान् ॥२४॥

---

1. S3 पाठस्तु– उक्ताः ... सौर्या इति for ' उक्ताः संचराः ' इति
17. S3 पाठस्तु– वसन्ताय ... विककरानिति for ' वसन्ताय कपिञ्जलान् ' इति

अ- 'वसन्ताय कपिञ्जलान्'। अथारण्याः पशव उच्यन्ते। अत्रैकविंशतिर्यूपाः । तेषां यूपानां विंशतिरन्तरालानि सन्ति । तेष्वन्तरालेषु अन्तरालोत्पत्तिक्रमेण कपिञ्जलादयस्त्रयोदश त्रयोदश पशव आलभ्यन्ते। अत्र यूपान्तरालेषु आरण्यपशूनां बन्धनोपाय उक्तो मानवसूत्रे- "नाडिषु प्लुषिमशकान् करण्डेषु सर्पान् पञ्जरेषु मृगव्याघ्रसिंहान् कुम्भेषु मकरमत्स्यमण्डूकान् जालेषु पक्षिणः कारासु हस्तिनः नौषु चौदकानि यथार्थमितरान्" ( माश्रौ ९.२.४.४ ) इति। ये च पशवो येनोपायेन यूपान्तरालेषु तिष्ठन्ति ते तेनोपायेन स्थापनीया इति तात्पर्यम् । अत्र येषामारण्यजीववाचिपदानामर्था न ज्ञायन्ते ते निगमनिरुक्तनिघण्टुव्याकरणोणादिवृत्त्यभिधानग्रन्थेभ्यो विलोक्यावगन्तव्याः । आटविकेभ्यश्च लक्षणीयाः। तत्र प्रथमोत्पन्ने यूपान्तराले त्रीन् vकपिञ्जलान् vवसन्ताय vआलभते नियुनक्ति। त्रीन् vकलविङ्कान् चटकान् vग्रीष्माय । vतित्तिरीन् vवर्षाभ्यः। vवर्तिकाः vशरदे । ततस्त्रयाणां संपादितानां ककराणां एकं ककरं vहेमन्ताय । अथ द्वितीयेऽवकाशे शिष्टौ द्वौ ककरौ पक्षिविशेषौ हेमन्ताय। त्रीन् vविककरान् vशिशिराय ॥५॥

इति षड्विंशे चतुर्थोऽनुवाकः ॥१०॥

---

[ अथ पञ्चमोऽनुवाकः। ]

समुद्राय शिशुमारानालभते पर्जन्याय मण्डूकानद्भ्यो मत्स्यान् ।
मित्राय कुलीपयान् वरुणाय नाक्रान् ॥१॥

---

समुद्राय। शिशुमारान् इति शिशुऽमारान्। आ। लभते। पर्जन्याय। मण्डूकान्। अद्भ्यः इत्यत्ऽभ्यः। मत्स्यान्। मित्राय। कुलीपयान्। वरुणाय। नाक्रान् ॥त्रिं॥१॥

---

आ- जलचरप्राणिभूतपशूनाह- 'समुद्राय शिशुमारान्' इति । लिङ्गोक्तदेवत्या बृहती। vसमुद्राय देवतायै vशिशुमारान् बकविशेषान् vआ vलभते। vपर्जन्याय vमण्डूकान्। vअद्भ्यः देवताभ्यः vमत्स्यान् । vमित्राय vकुलीपयान् जलजान् । vवरुणाय vनाक्रान् नक्रसंबन्धिनः आलभते इति संबन्धः ॥२४॥

---

अ- 'समुद्राय शिशुमारान्'। त्रीन् vशिशुमारान् जलचरजन्तून् vसमुद्राय vआ vलभते। त्रीन् vमण्डूकान् भेकान् vपर्जन्याय । यथा त्रयाणां मत्स्यानां मध्ये द्वौ vअद्भ्यः। अथ तृतीयेऽवकाशे एकं शिष्टमद्भ्यः। त्रीन् vकुलीपयान् जलचरान् vमित्राय। त्रीन् vनाक्रान्। नक्रा एव नाक्राः, तान् vवरुणाय ॥१॥

---

7. M4 °निखण्टु for °निघण्टु

18. S3 पाठस्तु - समुद्राय ... नाक्रानिति for 'समुद्राय शिशुमारान्' इति।

सोमा॑य ह॒ꣳसाना ल॑भते वा॒यवे॑ ब॒लाका॑ इन्द्रा॒ग्निभ्यां॒ क्रुञ्चा॑न् ।
मि॒त्राय॑ म॒द्गून् वरु॑णाय चक्र॒वा॒कान् ॥२॥

सोमा॑य । ह॒ꣳसान् । आ । ल॒भ॒ते । वा॒यवे॑ ।
ब॒लाका॑: । इ॒न्द्रा॒ग्निभ्या॒मिती॑न्द्रा॒ग्नि॒ऽभ्या॑म् । क्रुञ्चा॑न् ।
मि॒त्राय॑ । म॒द्गून् । वरु॑णाय । च॒क्र॒वा॒कानिति॑ च॒क्र॒ऽवा॒कान् ॥ ञ्चिम् ॥२॥

आ– 'सोमाय हꣳसान्' इति। लिङ्गोक्तदेवत्या बृहती । vसोमाय vहꣳसान् । vवायवे vबलाकाः बिसखण्डिकाः । vइन्द्राग्निभ्यां vक्रुञ्चान् क्रौञ्चान् । vमित्राय vमद्गून् जलकाकान् । vवरुणाय vचक्रवाकान् रथाङ्गाह्वयान् ॥२५॥

अ– 'सोमाय हꣳसान्'। त्रीन् vहꣳसान् vसोमाय vआ vलभते । तिस्रः vबलाकाः बलाकस्त्रियः vवायवे । अथ चतुर्थेऽवकाशे त्रीन् vक्रुञ्चान् पक्षिणः vइन्द्राग्निभ्याम् । त्रीन् vमद्गून् जलकाकान् vमित्राय । त्रीन् vचक्रवाकान् वरुणाय ॥२॥

अ॒ग्नये॑ कु॒टरू॒ना ल॑भते॒ व॒न॒स्पति॑भ्य॒ उलू॑काना॒ग्नीषोमा॑भ्यां॒ चाषा॑न् ।
अ॒श्विभ्यां॑ म॒यूरा॑न् मि॒त्रावरु॑णाभ्यां क॒पोता॑न् ॥३॥

अ॒ग्नये॑ । कु॒टरू॑न् । आ । ल॒भ॒ते । व॒न॒स्पति॑भ्य॒ इ॒ति॒ व॒न॒स्पति॑ऽभ्यः । उलू॑कान् ।
अ॒ग्नीषोमा॑भ्याम् । चाषा॑न् ।
अ॒श्विभ्या॒मित्य॒श्वि॒ऽभ्या॑म् । म॒यूरा॑न् । मि॒त्रावरु॑णाभ्याम् । क॒पोता॑न् ॥ ञ्चिम् ॥३॥

6. S3 पाठस्तु – सोमाय ... चक्रवाकानिति for 'सोमाय हꣳसान्' इति ।

आ– 'अग्नये कुटरून्' इति। लिङ्गोक्तदेवत्या बृहती। Vअग्नये Vकुटरून् कुक्कुटान् Vआ Vलभते। Vवनस्पतिभ्यः Vउलूकान् वायसारातीन्। Vअग्नीषोमाभ्यां Vचाषान् किकीदिवीन्। Vअश्विभ्यां Vमयूरान् बर्हिणः। Vमित्रावरुणाभ्यां बालवत्सान् आलभत इति संबन्धः ॥२६॥

---

अ– 'अग्नये कुटरून्'। त्रीन् Vकुटरून् कुक्कुटान् Vअग्नये Vआ Vलभते। ततस्त्रयाणाम् Vउलूकानां मध्ये एकमुलूकं Vवनस्पतिभ्यः। अथ पञ्चमेऽवकाशे द्वौ उलूकौ काकवैरिणौ वनस्पतिभ्यः। त्रीन् Vचाषान् Vअग्नीषोमाभ्याम्। त्रीन् Vमयूरान् Vअश्विभ्याम्। त्रीन् Vकपोतान् Vमित्रावरुणाभ्याम् ॥३॥

---

सोमा॑य लवाना लभते त्वष्ट्रे कौलीकान् गोषादीर्देवानां पत्नीभ्यः ।
कुलीका देवजामिभ्योऽग्नये गृहपतये पारुष्णान् ॥४॥

---

सोमा॑य। लबान्। आ। लभते। त्वष्ट्रे। कौलीकान्। गोषादीः। गोसादीरिति गोऽसादीः। देवाना॑म्। पत्नी॑भ्यः। कुलीका॑ः। देवजामिभ्य इति देवजामिऽभ्यः। अग्नये॑। गृहप॑तय इति गृहऽप॑तये। पारुष्णान् ॥ भ्रं ॥४॥

---

आ– 'सोमाय लबान्' इति। लिङ्गोक्तदेवत्या बृहती। Vसोमाय Vलबान् पक्षिविशेषान् Vआ Vलभते। Vत्वष्ट्रे Vकौलीकान्। Vगोषादीः Vदेवानां Vपत्नीभ्यः। गोषादी आलभते। Vकुलीकाः Vदेवजामिभ्यः। कुलीका आलभते। Vअग्नये Vगृहपतये Vपारुष्णान्। आलभत इति सर्वत्र संबन्धः ॥२७॥

---

अ– 'सोमाय लबान्'। त्रयाणां लबानां लावकानां मध्ये द्वौ Vसोमाय। अथ षष्ठेऽवकाशे एकं लबं सोमाय। Vकौलीकान् त्रीन् Vत्वष्ट्रे। तिस्रः Vगोषादीः। गवां सादयित्रीः सहावीसंज्ञाः पक्षिणीः। Vदेवजामिभ्यः देवस्त्रीभ्यः। "जामिः स्वसृकुलस्त्रियोः" (अको ३.३.१४२) इत्यभिधानात्। त्रीन् Vपारुष्णान् Vगृहपतये Vअग्नये ॥४॥

---

1. S3 पाठस्तु– अग्नये ... कपोतानिति for 'अग्नये कुटरून्' इति।
12. S3 पाठस्तु – सोमाय ... पारुष्णानिति for 'सोमाय लबान्' इति।
13. V2 कौलिकान् for कौलीकान्
14. V2 कुलिकान् आ°, S3 कुलीकान् आ° for कुलीका आ°; S3 पार्ष्णान् for पारुष्णान्
19. P2 M4 पार्ष्णान् for पारुष्णान्

अह्ने पारावताना लभते रात्र्यै सीचापूरहोरात्रयोः सन्धिभ्यो जतूः ।
मासेभ्यो दात्यौहान् संवत्सराय महतः सुपर्णान् ॥५॥

अह्ने । पारावतान् । आ । लभते । रात्र्यै । सीचापूः । अहोरात्रयोः ।
सन्धिभ्य इति सन्धिऽभ्यः । जतूः । मासेभ्यः । दात्यौहान् ।
संवत्सराय । महतः । सुपर्णानिति सुऽपर्णान् ॥ च्लुं ॥५॥५॥

आ– ' अह्ने पारावतान् ' इति । लिङ्गोक्तदेवत्या पङ्क्तिः । [V]अह्ने [V]पारावतान् कलरवान् [V]आ [V]लभते । [V]रात्र्यै [V]सीचापूः पक्षिणः आलभते । [V]अहोरात्रयोः [V]सन्धिभ्यः [V]जतूः पत्राख्याः खगान् आलभते । [V]मासेभ्यः [V]दात्यौहान् कलकण्ठाख्यान् पक्षिणः आलभते । [V]संवत्सराय [V]महतः [V]सुपर्णान् बृहत्पक्षिणः आलभते ॥२७॥

अ– ' अह्ने पारावतान् ' । अथ सप्तमेऽवकाशे त्रीन् [V]पारावतान् कलरवान् [V]अह्ने [V]आ [V]लभते । तिस्रः [V]सीचापूः पक्षिणीः [V]रात्र्यै । [V]जतूः पत्राख्याः पक्षिणीः [V]अहोरात्रयोः [V]सन्धिभ्यः । त्रीन् [V]दात्यौहान् कालकण्ठान् [V]मासेभ्यः । त्रयाणां महतां सुपर्णानां मध्ये एकं संवत्सराय । अथाष्टमेऽवकाशे द्वौ सुपर्णौ [V]संवत्सराय ॥५॥

इति पञ्चमोऽनुवाकः ॥५॥

[ अथ षष्ठोऽनुवाकः । ]

भूम्या आखूना लभतेऽन्तरिक्षाय पाङ्क्त्रान् दिवे कशान् ।
दिग्भ्यो नकुलान् बभ्रुकानवान्तर दिशाभ्यः ॥१॥

भूम्यै । आखून् । आ । लभते । अन्तरिक्षाय । पाङ्क्त्रान् । दिवे । कशान् ।
दिग्भ्य इति दिक्ऽभ्यः । नकुलान् । बभ्रुकान् । अवान्तरदिशाभ्य
इत्यवान्तरऽदिशाभ्यः ॥ छ्रिम् ॥१॥

6. S3 पाठस्तु– अह्ने ... सुर्णानिति for ' अह्ने पारावतान् ' इति ।
8. V2 दात्सुहान् for दात्यौहान्

आ– मूषिकादीनपि पशुत्वेनाह– ‘भूम्या आखून्’ इति । लिङ्गोक्तदेवत्याऽनुष्टुप् । vभूम्यै vआखून् मूषकान् vअन्तरिक्षाय vपाङ्क्त्रान् मूषकजातिविशेषान् vआ vलभते । vदिवे द्युलोकाय vकशान् आलभते । vदिग्भ्यः vनकुलान् सर्परिपून् vबभ्रुकान् vअवान्तरदिशाभ्यः आलभते ॥२८॥

---

अ– ‘भूम्या आखून्’ । vआखून् त्रीन् मूषकान् vभूम्यै vआ vलभते । vपाङ्क्त्रान् मूषकजातिविशेषान् vअन्तरिक्षाय । vकशान् मूषकभेदान् vदिवे । त्रीन् नकुलान् vदिग्भ्यः । तत्र द्वौ अष्टमे । अथ नवमे । एकं नवमे । त्रीन् vबभ्रुकान् अल्पनकुलान् vअवान्तरदिशाभ्यः ॥१॥

---

वसुभ्य ऋश्याना लभते रुद्रेभ्यो रुरूनादित्येभ्यो न्यङ्कून् ।
विश्वेभ्यो देवेभ्यः पृषतान्त्साध्येभ्यः कुलुङ्गान् ॥२॥

---

वसुभ्य इति वसुऽभ्यः । ऋश्यान् । आ । लभते ।
रुद्रेभ्यः । रुरून् । आदित्येभ्यः । न्यङ्कून् ।
विश्वेभ्यः । देवेभ्यः । पृषतान् । साध्येभ्यः । कुलुङ्गान् ॥ क्लीम् ॥२॥

---

आ– पुनरपि तिर्यक्पशूनाह– ‘वसुभ्य ऋश्यान्’ इति । लिङ्गोक्तदेवत्या बृहती । vवसुभ्यः vऋश्यान् रोहितः vआ vलभते । vरुद्रेभ्यः vरुरून् महत्कृष्णसारान् । vआदित्येभ्यः vन्यङ्कून् मृगविशेषान् । vविश्वेभ्यः vदेवेभ्यः vपृषतान् बिन्दुमतो मृगान् । “पृषतस्तु बिन्दुमान्” ( द्र. टीका अको २.५.१० ) इति । साध्येभ्यः vकुलुङ्गान् कुरङ्गान् हरिणान् आलभते ॥२९॥

---

अ– ‘वसुभ्य ऋश्यान्’ । ऋश्यादयो मृगविशेषाः । त्रीन् vऋश्यान् भल्लूकान् vवसुभ्यः vआ vलभते । vत्रीन् vरुरून् vरुद्रेभ्यः । त्रीन् vन्यङ्कून् vआदित्येभ्यः । अथ दशमेऽवकाशे त्रीन् vपृषतान् vविश्वेभ्यः vदेवेभ्यः । vकुलुङ्गान् कुरङ्गान् vसाध्येभ्यः ॥२॥

---

1. S3 before भूम्या adds पाठस्तु; S3 om. भूम्या ... अनुष्टुप् ।
2. V2 पाङ्क्श्रान् for पाङ्क्त्रान्; S3 om. आ लभते
13. S3 om. पुनरपि तिर्यक् पशूनाह; S3 पाठस्तु वसुभ्य ... कुलुङ्गानिति for ‘वसुभ्य ऋश्यान्’ इति ।

ईशानाय परस्वत आलभते मित्राय गौरान् वरुणाय महिषान् ।
बृहस्पतये गवयाꣳस्त्वष्ट्र उष्ट्रान् ॥३॥

ईशानाय । परस्वतः । आ । लभते । मित्राय । गौरान् । वरुणाय । महिषान् ।
बृहस्पतये । गवयान् । त्वष्ट्रे । उष्ट्रान् ॥ श्विम् ॥३॥

आ– 'ईशानाय परस्वतः' इति । लिङ्गोक्तदेवत्या बृहती । ᵛईशानाय ᵛपरस्वतः मृगविशेषान् । ᵛमित्राय ᵛगौरान् आरण्यान् पशून् । ᵛवरुणाय ᵛमहिषान् । ᵛबृहस्पतये ᵛगवयान् । ᵛत्वष्ट्रे ᵛउष्ट्रान् क्रमेलकान् ॥३०॥

अ– 'ईशानाय परस्वतः' । ᵛपरस्वतः मृगविशेषान् ᵛईशानाय ᵛआ ᵛलभते । त्रीन् ᵛगौरान् गौरमृगान् ᵛमित्राय । त्रीन् ᵛमहिषान् ᵛवरुणाय । तत्रैकं दशमे । अथैकादशेऽवकाशे द्वावत्र । त्रीन् ᵛगवयान् गोसदृशान् आरण्यान् ᵛबृहस्पतये । त्रीनुष्ट्रान् ᵛत्वष्ट्रे ॥३॥

प्रजापतये पुरुषान् हस्तिन आ लभते वाचे प्लुषीन्
चक्षुषे मशकाञ्छ्रोत्राय भृङ्गाः ॥४॥

प्रजापतय इति प्रजाऽपतये । पुरुषान् । हस्तिनः । आ । लभते । वाचे । प्लुषीन् ।
चक्षुषे । मशकान् । श्रोत्राय । भृङ्गाः ॥ ख्लाम् ॥४॥

आ– 'प्रजापतये पुरुषान्' इति । लिङ्गोक्तदेवत्याऽनुष्टुप् । ᵛप्रजापतये ᵛपुरुषान् ᵛहस्तिनः ᵛआ ᵛलभते । ᵛवाचे ᵛप्लुषीन् वज्रतुण्डान् । ᵛचक्षुषे ᵛमशकान् प्रसिद्धान् । ᵛश्रोत्राय ᵛभृङ्गाः भ्रमरान् आलभते ॥३१॥

अ– 'प्रजापतये पुरुषान्' । त्रीन् ᵛपुरुषान् ᵛहस्तिनः ᵛप्रजापतये ᵛआ ᵛलभते । ᵛप्लुषीन् वक्रतुण्डान् ᵛवाचे । तन्मध्ये द्वावेवात्र । अथ द्वादशेऽवकाशे एकमत्र । त्रीन् ᵛमशकान् ᵛचक्षुषे । त्रयः ᵛभृङ्गाः ᵛश्रोत्राय आलभ्या इति शेषः ॥४॥

5. S3 पाठस्तु– ईशानाय ... उष्ट्रानिति for 'ईशानाय परस्वतः' इति ।
15. S3 पाठस्तु– प्रजापतये ... भृङ्गा इति for 'प्रजापतये पुरुषान्' इति ।
20. M4 P2 मृगाः for भृङ्गाः

प्रजापतये च वायवे च गोमृगो वरुणायारण्यो मेषो यमाय
कृष्णो मनुष्यराजाय मर्कटः शार्दूलाय रोहिदृषभाय गवयी
क्षिप्रश्येनाय वर्तिका नीलङ्गोः क्रिमिः समुद्राय
शिशुमारो हिमवते हस्ती ॥५॥

---

प्रजापतय इति प्रजाऽपतये । च । वायवे । च । गोमृग इति गोऽमृगः । वरुणाय । आरण्यः । मेषः । यमाय । कृष्णः । मनुष्यराजायेति मनुष्यऽराजाय । मर्कटः । शार्दूलाय । रोहित् । ऋषभाय । गवयी । क्षिप्रश्येनायेति क्षिप्रऽश्येनाय । वर्तिका । नीलङ्गोः । क्रिमिः । समुद्राय । शिशुमार इति शिशुऽमारः । हिमवत इति हिमऽवते । हस्ती ॥ग्रु:॥५॥

---

आ— 'प्रजापतये च' इति । लिङ्गोक्तदेवत्याऽतिधृतिः । V प्रजापतये V च V वायवे V च V गोमृगः गवयः । V वरुणाय V आरण्यः V मेषः । V यमाय V कृष्णः । V मनुष्यराजाय V मर्कटः कपिः । V शार्दूलाय शार्दूलार्थं V रोहित् ऋश्यः । V ऋषभाय V गवयी गवयरूपः पशुः । V क्षिप्रश्येनाय क्षिप्रगुणयुक्ताय श्येनाय अभ्रवर्णकाय V वर्तिका वर्तना । 'नीलङ्गोः क्रिमिः' । V नीलङ्गोः नीलङ्गवे V क्रिमिः विलेशयी । V समुद्राय V शिशुमारः नक्रविशेषः । V हिमवते V हस्ती गजः ॥३२॥

---

अ— 'प्रजापतये च'। एकः V गोमृगः गवयः V प्रजापतये V च V वायवे V च नियोज्यः । एकः V आरण्यः V मेषः V वरुणाय । एकः V कृष्णः मेषः V यमाय । एकः V मर्कटः V मनुष्यराजाय । एकः V रोहिद् V शार्दूलाय देवतायै । एका V गवयी ऋषभाय देवाय । अथ त्रयोदशेऽवकाशे । एका V वर्तिका V क्षिप्रश्येनाय देवाय । एकः V क्रिमिः कीटः V नीलङ्गोः नीलङ्गुदेवाय । एकः V शिशुमारः जलचरः V समुद्राय । एकः V हस्ती V हिमवते ॥५॥

इति षष्ठोऽनुवाकः ॥६॥

---

11.　S3 पाठस्तु - प्रजापतये ... हस्तीति for 'प्रजापतये च' इति ।

[ अथ सप्तमोऽनुवाकः । ]

मयुः प्राजापत्य उलो हलिक्ष्णो वृषदंशस्ते धात्रे दिशां
कङ्को धुङ्क्षाग्नेयी ।
कलविङ्को लोहिताहिः पुष्करसादस्ते त्वाष्ट्रा वाचे क्रुञ्चः ॥१॥

---

मयुः । प्राजापत्य इति प्राजाऽपत्यः । उलः । हलिक्ष्णः ।
वृषदंश इति वृषऽदंशः । ते । धात्रे । दिशाम् । कङ्कः । धुङ्क्षा । आग्नेयी ।
कलविङ्कः । लोहिताहिरिति लोहितऽअहिः । पुष्करसाद इति पुष्करऽसादः ।
ते । त्वाष्ट्राः । वाचे । क्रुञ्चः ॥ तोम् ॥१॥

---

आ– ' मयुः प्राजापत्यः ' इति । लिङ्गोक्तदेवत्या जगती । vमयुः vप्राजापत्यः तुरंगवदनः । vउलः मृगविशेषः । vहलिक्ष्णः सिंहविशेषः । vवृषदंशः आखुभुक् । vते एते पशवः vधात्रे प्रजापतये । vदिशां दिग्देवतायै vकङ्कः । कङ्को बहुलोहपृष्ठः । ' धुङ्क्षाग्नेयी ' । vधुङ्क्षा पाक्षिविशेषः । vआग्नेयी अग्निदेवत्या । ' कलविङ्को लोहिताहिः पुष्करसादस्ते त्वाष्ट्राः ' । vकलविङ्कः चटकः । vरोहिताहिः रक्तसर्पः । vपुष्करसादः । पुष्करे सीदति । कमलभक्षी पाक्षिविशेषः। vते एते पशवः त्वाष्ट्राः त्वष्टृदेवत्याः । vवाचे सरस्वत्यै vक्रुञ्चः ॥२३॥

---

अ– ' मयु प्राजापत्यः ' । " तुरंगवदनो मयुः " ( अको १.१.७१ ) इत्यभिधानात् । vमयुः अश्वमुखः किन्नरः । vप्राजापत्यः प्रजापतिदेवताकः । vउलः मृगविशेषः । vहलिक्ष्णः सिंहविशेषः । vवृषदंशः विडालः । vते त्रयः vधात्रे । vकङ्कः बकः vदिशां दिग्भ्यः । एका vधुङ्क्षा पक्षिणी vआग्नेयी अग्निदेवत्या । धुङ्क्षेति वकारसंयोगरहितं केचन पठन्ति । vकलविङ्कः रोहिताहिः रक्तवर्णसर्पः । vपुष्करसादः । पुष्करे कमले सीदतीति पुष्करसादः । कमलभक्षी पक्षी । vते त्रयः vत्वाष्ट्राः । अथ च चतुर्दशेऽवकाशे एकः vक्रुञ्चः vवाचे ॥१॥

---

9. S3 पाठस्तु– मयुः ... क्रुञ्च इति for ' मयुः प्राजापत्यः ' इति ।
12. V2 धुङ्क्ष्वा for धुङ्क्षा

सोमाय कुलुङ्ग आरण्योऽजो नकुलः शका ते पौष्णाः
क्रोष्टा मायोरिन्द्रस्य गौरमृगः ।
पिद्वो न्यङ्कुः कक्कुटस्तेऽनुमत्यै प्रतिश्रुत्कायै चक्रवाकः ।।२।।

---

सोमाय । कुलुङ्गः । आरण्यः । अजः । नकुलः । शका । ते । पौष्णाः ।
क्रोष्टा । मायोः । इन्द्रस्य । गौरमृग इति गौरऽमृगः ।
पिद्वः । न्यङ्कुः । कक्कुटः । ते । अनुमत्या इत्यनुऽमत्यै ।
प्रतिश्रुत्काया इति प्रतिऽश्रुत्कायै । चक्रवाक इति चक्रऽवाकः ॥ तौम् ॥२॥

---

आ– ' सोमाय कुलुङ्गः ' इति । लिङ्गोक्तदेवत्या जगती । Vसोमाय Vकुलुङ्गः कुरुङ्गः हरिणः सारङ्गः, Vआरण्यः Vअजः Vनकुलः सर्पारिः, Vशका शकुन्तिका, एते पशवः Vपौष्णाः पूषदेवत्याः । Vक्रोष्टा जम्बूकः Vमायोः मृत्युदेवतायाः । Vइन्द्रस्य Vगौरमृगः । आरण्यो मृगविशेषः प्रसिद्धः । Vपिद्वः Vन्यङ्कुः Vकक्कटः इत्येते त्रयः मृगविशेषाः पशवः Vअनुमत्यै देवतायै । Vप्रतिश्रुत्कायै देवतायै Vचक्रवाकः रथाङ्गनामा ॥३४॥

---

अ– ' सोमाय कुलुङ्गः ' । कुलुङ्ग एकः सोमाय । Vआरण्यः वनजः Vअजः छागः । Vनकुलः । Vशका शकुन्तिः । Vते त्रयः Vपौष्णाः । Vक्रोष्टा सृगालः । Vमायोः मायवे देवाय । एकः Vगोरमृगः Vइन्द्रस्य । Vपिद्वः मृगविशेषः । Vन्यङ्कुः Vअपि Vकक्कटः च । Vते त्रयः Vअनुमत्यै । Vचक्रवाकः Vप्रतिश्रुत्कायै देवतायै । अत्र प्रतिपूर्वात् शृणोतेः क्विपि " ह्रस्वस्य पिति कृति°– " ( पा ६.१.७१ ) इति तुकि स्वार्थे कप्रत्यये रूपसिद्धिः । तेन प्रतिशब्दादवग्रहः पदपाठे ॥२॥

---

सौरी बलाका शार्गः सृजयः शयाण्डकस्ते मैत्राः सरस्वत्यै
शारिः पुरुषवाक् श्वाविद्भौमी ।
शार्दूलो वृकः पृदाकुस्ते मन्यवे सरस्वते शुकः पुरुषवाक् ।।३।।

---

8. S3 पाठस्तु– सोमाय ... चक्रवाक इति for ' सोमाय कुलुङ्गः ' इति ।

11. V2 वाक्वश्च for कक्कटः

15. M4 कक्कुटश्च for कक्कटश्च

सौरी । बलाका । शार्गः । सृजयः । शयाण्डक इति शयऽआण्डकः ।
ते । मैत्राः । सरस्वत्यै । शारिः । पुरुषवागिति पुरुषऽवाक् ।
श्वावित् । श्वविदिति श्वऽवित् । भौमी । शार्दूलः । वृकः । पृदाकुः ।
ते । मन्यवे । सरस्वते । शुकः । पुरुषवागिति पुरुषऽवाक् ॥प्रा:॥३॥

आ– 'सौरी बलाका' इति । लिङ्गोक्तदेवत्या जगती । [V]बलाका बकस्त्री बिसखण्डिका [V]सौरी सूर्यदेवत्या । [V]शार्गः [V]सृजयः [V]शयाण्डकः । त्रय एते पक्षिणः पशवः [V]मैत्राः मित्रदेवत्याः । [V]सरस्वत्यै [V]शारिः शुकवद्वदन्ती । [V]पुरुषवाक् इति तस्यैव विशेषणम् । पुरुषवद्वक्तीति पुरुषवाक् । [V]श्वावित् शल्यकः । [V]भौमी भूमिदेवत्या । [V]शार्दूलः व्याघ्रः । [V]वृकः बालमारकः । [V]पृदाकुः सर्पमृगविशेषः । एते पशवः [V]मन्यवे । [V]सरस्वते देवताविशेषाय [V]शुकः [V]पुरुषवाक् ॥३५॥

अ– 'सौरी बलाका' । [V]बलाका बलाकस्त्री [V]सौरी सूर्यदेवत्या । [V]शार्गः पक्षिविशेषः । अथ पञ्चदशेऽवकाशे । [V]सृजयः पक्षिविशेषः । [V]शयाण्डकः अपि । ते त्रयः [V]मैत्राः मित्रदेवताः । [V]पुरुषवाक् । मनुष्यवद्वदतीति । [V]शारिः शुकी [V]सरस्वत्यै । [V]श्वावित् सेधा [V]भौमी भूमिदेवत्या । [V]शार्दूलः व्याघ्रः [V]वृकः चित्रकः [V]पृदाकुः सर्पः । [V]ते त्रयः [V]मन्यवे । [V]पुरुषवाक् पुरुषवद्वक्ता [V]शुकः [V]सरस्वते समुद्राय ॥३॥

सुपर्णः पार्जन्य आतिर्वाहसो दर्विदा ते वायवे बृहस्पतये
वाचस्पतये पैङ्गराजोऽलज आन्तरिक्षः ।
प्लवो मद्गुर्मत्स्यस्ते नदीपतये द्यावापृथिवीयः कूर्मः ॥४॥

सुपर्ण इति सुऽपर्णः । पार्जन्यः । आतिः । वाहसः । दर्विदेति दर्विऽदा ।
ते । वायवे । बृहस्पतये । वाचः । पतये । पैङ्गराज इति पैङ्गऽराजः ।
अलजः । आन्तरिक्षः । प्लवः । मद्गुः । मत्स्यः । ते । नदीपतय इति नदीऽपतये ।
द्यावापृथिवीयः । कूर्मः ॥द:॥४॥

5. S3 पाठस्तु– सौरी ... पुरुषवागिति for 'सौरी बलाका' इति ।
7. V2 वक्त्रीति for वक्तीति
11. M4 गार्ह° for शार्गः

आ– 'सुपर्णः पार्जन्यः' इति। बृहती गायत्री वेति बार्हतप्रगाथोऽयं लिङ्गोक्तदेवत्यः। vसुपर्णः गरुत्मान्। vपार्जन्यः पर्जन्यदेवत्यः। vआतिः आडी vवाहसः vदर्विदा इति काष्ठकुट्टः। ते एते त्रयः पशवः क्रमेण vवायवे vबृहस्पतये vवाचस्पतये भवन्ति। 'पैङ्गराजोऽलजः'। पिङ्गेन लोहितेन मिश्रीकृतेन वर्णेन राजत इति vपैङ्गराजः। स एव पैङ्गलाजः। vअलजः पक्षिविशेषः। सः vआन्तरिक्षः पशुः अन्तरिक्षदेवत्यः। 'प्लवो मद्गुर्मत्स्यः'। vप्लवः जलचरः पक्षी vमद्गुः जलकाकः vमत्स्यः इति त्रय एते पशवः vनदीपतये समुद्राय भवन्ति। vद्यावापृथिवीयः कूर्मः कच्छपः द्यावापृथिवीदेवत्यः ॥३६॥

---

अ– सुपर्णः पार्जन्यः। vसुपर्णः गरुत्मान् vपार्जन्यः पर्जन्यदेवत्यः। vआतिः आडी। vवाहसः vदर्विदा काष्ठकुट्टः। vते त्रयः पक्षिविशेषः vवायवे vवाचस्पतये एतद्गुणविशिष्टाय vबृहस्पतये। vपैङ्गराजः पक्षिविशेषः। एते नियोज्याः। अथ षोडशेऽवकाशे vअलजः पक्षी vआन्तरिक्षः अन्तरिक्षदेवत्यः। vप्लवः जलपक्षी। vमद्गुः कारण्डवः। vमत्स्यः। vते vनदीपतये। vकूर्मः कच्छपः vद्यावापृथिवीयः द्यावापृथिवीदेवत्यः ॥४॥

---

पुरुषमृगश्चन्द्रमसो गोधा कालका दार्वाघाटस्ते वनस्पतीनां
कृकवाकुः सावित्रो हꣳसो वातस्य।
नाक्रो मकरः कुलीपयस्तेऽकूपारस्य ह्रियै शल्यकः ॥५॥(७)॥

---

पुरुषमृग इति पुरुषऽमृगः। चन्द्रमसः। गोधा। कालका।
दार्वाघाटः। दार्वाघात इति दारुऽआघातः। ते। वनस्पतीनाम्।
कृकवाकुरिति कृकऽवाकुः। सावित्रः। हꣳसः। वातस्य।
नाक्रः। मकरः। कुलीपयः। ते। अकूपारस्य। ह्रियै। शल्यकः॥ ण्रों ॥५॥(७)॥

---

आ– 'पुरुषमृगश्चन्द्रमसः' इति। लिङ्गोक्तदेवत्यो बार्हतप्रगाथः। vपुरुषमृगः vचन्द्रमसः भवति। 'गोधा कालका दार्वाघाटस्ते'। vगोधा गोधिका। vकालका पक्षिविशेषः। vदार्वाघाटः सारसो वा शतपत्रकः। vते एते त्रयः पशुत्वेन कल्पिताः vवनस्पतीनां पशवो भवन्ति। vकृकवाकुः ताम्रचूडः vसावित्रः सवितृदेवत्यः। vहंसः vवातस्य वायोः। vनाक्रः vमकरः vकुलीपयः। vते एते जलचराः vअकूपारस्य समुद्रस्य। vह्रियै श्रीभुवनेश्वर्यै vशल्यकः ॥३७॥

---

2. V2 trans दर्विदा after काष्ठकुट्टः।; S3 om. काष्ठकुट्टः ... एते (L 3)

20. S3 पाठस्तु– पुरुषमृगः ... शल्यकः for 'पुरुषमृगश्चन्द्रमसः' इति।

अ- ‘ पुरुषमृगश्चन्द्रमसः ’। पुंमृगश्चन्द्रमसे । $^{V}$गोधा $^{V}$कालका $^{V}$दार्वाघाटः सारसः । $^{V}$ते त्रयः $^{V}$वनस्पतीनां वनस्पतिभ्यः । $^{V}$कृकवाकुः ताम्रचूडः । $^{V}$सावित्रः सवितृदेवतः । $^{V}$हंसः $^{V}$वातस्य वाताय । $^{V}$नाक्रः । स्वार्थे: णुः । नक्रः । $^{V}$मकरः । $^{V}$कुलीपयः । $^{V}$ते त्रयो जलचराः अकूपारस्य समुद्राय । “समुद्रोऽब्धिरकूपारः” ( अको १.१०.१ ) इत्यभिधानात् । एतेषां त्रयाणां मध्ये द्वौ षोडशे । अथ सप्तदशेऽवकाशे । एकः $^{V}$कुलीपयः अकूपाराय । $^{V}$शल्यकः $^{V}$श्वावित् $^{V}$ह्रियै देवतायै ॥५॥

इति सप्तमोऽनुवाकः ॥७॥

[ अथ अष्टमोऽनुवाकः । ]

एण्यह्नो मण्डूको मूषिका तित्तिरिस्ते सर्पाणां

लोपाश आश्विनः कृष्णो रात्र्यै ।

ऋक्षो जतूः सुषिलीका त इतरजनानां जहका वैष्णवी ॥१॥

एणी । अह्नः । मण्डूकः । मूषिका । तित्तिरिः । ते । सर्पाणाम् ।

लोपाशः । आश्विनः । कृष्णः । रात्र्यै ।

ऋक्षः । जतूः । सुषिलीकेति सुषिऽलीका ।

ते । इतरजनानामितीतरऽजनानाम् । जहका । वैष्णवी ॥ ओम् ॥१॥

आ– ‘ एण्यह्नः ’ इति । लिङ्गोक्तदेवत्या जगती । $^{V}$एणी $^{V}$अह्नः । अहोरूपदेवता या एणी एणवती बिन्दुमती अजा पशुः । $^{V}$मण्डूकः भेकः । $^{V}$मूषिका आखुः । $^{V}$तित्तिरिः कुररः । $^{V}$ते एते त्रयः पशवः $^{V}$सर्पाणां देवानां भवन्ति । $^{V}$लोपाशः पशुविशेषः $^{V}$आश्विनः अश्विदेवत्यः $^{V}$कृष्णः कृष्णमृगः $^{V}$रात्र्यै रात्रिदेवतायै । $^{V}$ऋक्षः भल्लूकः । $^{V}$जतूः जतुका अजिनपत्रा । $^{V}$सुषिलीका प्राणिविशेषः । एते पशवः $^{V}$ते इतरजनानां देवतानां भवन्ति । $^{V}$जहका गात्रसंकोचनी पक्षिविशेषः । $^{V}$वैष्णवी विष्णुदेवत्या ॥३८॥

15. S3 पाठस्तु– एण्यह्नः... वैष्णवीति for ‘ एण्यह्नः ’ इति; V2 after °देवत्या adds इति ।

18. V2 जतुः for जतूः; S3 जलूका for जतुका

19. V2 सुषिलिका for सुषिलीका

20. S3 om गात्रसंकोचनी

अ– ' एण्यह्नः ' । ˇएणी मृगी ˇअह्नः अहर्देवतायै । ˇमण्डूकः ˇमूषिका ˇतित्तिरिः । ˇते त्रयः ˇसर्पाणां सर्पेभ्यः । ˇलोपाशः वनचरविशेषः ˇआश्विनः अश्विदेवत्यः । ˇकृष्णः हरिणः ˇरात्र्यै । कृष्णशब्दोऽत्र मृगवचनः । " कृष्णो मृगसंयोगे " ( वाप्रा २.२५ ) इति प्रातिशाख्येनाद्युदात्तत्वात् । ˇऋक्षः भल्लूकः । ˇजतूः ˇसुषिलीका । एतौ पक्षिविशेषौ । ˇते त्रयः ˇइतरजनानां देवानामितरजनेभ्यः । ˇजहका गात्रसंकोची ˇवैष्णवी विष्णुदेवत्या ॥ १ ॥

---

अन्यवापोऽर्धमासानामृश्यो मयूरः सुपर्णस्ते
गन्धर्वाणामपामुद्रो मासां कश्यपः ।
रोहित् कुण्डृणाची गोलत्तिका तेऽप्सरसां मृत्यवेऽसितः ॥२॥

---

अन्यवाप इत्यन्यऽवापः । अर्धमासानामित्यर्धऽमासानाम् । ऋश्यः । मयूरः ।
सुपर्ण इति सुऽपर्णः । ते । गन्धर्वाणाम् । अपाम् । उद्रः । मासाम् । कश्यपः ।
रोहित् । कुण्डृणाची । गोलत्तिका । ते । अप्सरसाम् । मृत्यवे । असितः ॥ ढ़ों ॥२॥

---

आ– ' अन्यवापोऽर्धमासानाम् ' इति । लिङ्गोक्तदेवत्या जगती । ˇअन्यवापः कोकिलाख्यो मृगः ( ? पक्षि-)विशेषः । ˇअर्धमासानां देवतानाम् । ˇऋश्यः मृगविशेषः । ˇमयूरः बर्हो । ˇसुपर्णः गरुत्मान् । ˇते एते त्रयः पशवः ˇगन्धर्वाणां देवतानाम् । ˇअपाम् ˇउद्रः कर्कटसंज्ञः जलचरः प्राणिविशेषः । ˇमासां मासानां देवतानां ˇकश्यपः कच्छपः प्राणिविशेषः । ˇरोहित् लोहितः ˇकुण्डृणाची वनचरीविशेषः । ˇगोलत्तिका खञ्जरीटका । ˇते एते पशवः ˇअप्सरसां देवतानाम् । ˇमृत्यवे ˇअसितः कृष्णवर्गः ॥३९॥

---

अ– ' अन्यवापोऽर्धमासानाम् ' । ˇअन्यवापः कोकिलाख्यः पक्षिविशेषः ˇअर्धमासानाम् अर्धमासेभ्यः । अथ अष्टादशोऽवकाशे । ˇऋश्यः मृगविशेषः । ˇमयूरः बर्हो । ˇसुपर्णः गरुत्मान् । ˇते ˇगन्धर्वाणां गन्धर्वेभ्यः । ˇउद्रः जलचरः कर्कटसंज्ञः । ˇअपाम् अद्भ्यः । ˇकश्यपः कच्छपः । ˇमासां मासेभ्यः । वर्णविपर्ययश्छान्दसः । ˇरोहित् ˇऋश्यः ˇकुण्डृणाची वनचरी । ˇगोलत्तिका । ˇते त्रयः ˇअप्सरसाम् अप्सरोभ्यः । ˇअसितः कृष्णवर्णः पशुः ˇमृत्यवे ॥२॥

---

12. S3 पाठस्तु– अन्यवापो ... असित इति for ' अन्यवापोऽर्धमासानाम् ' इति ।
12–13. S3 om. कोकिलाख्यो
15. S3 om. कर्कटसंज्ञः जलचरः; कच्छपः
19. M4 om. अथ

वर्षाहूर्ऋतूनामाखुः कशो मान्थालस्ते पितृणां
बलायाजगरो वसूनां कपिञ्जलः ।
कपोत उलूकः शशस्ते निर्ऋत्यै वरुणायारण्यो मेषः ॥३॥

---

वर्षाहूरिति वर्षऽआहूः । ऋतूनाम् । आखुः । कशः । मान्थालः । ते ।
पितृणाम् । बलाय । अजगरः । वसूनाम् । कपिञ्जलः ।
कपोतः । उलूकः । शशः । ते । निर्ऋत्या इति निःऽऋत्यै । वरुणाय ।
आरण्यः । मेषः ॥ छौं ॥ ३ ॥

---

आ– ' वर्षाहूः ' इति । लिङ्गोक्तदेवत्या बृहती । [v]वर्षाहूः वर्षाभूः भेकी । [v]ऋतूनां पशुर्भवति । [v]आखुः [v]कशः [v]मान्थालः । एते त्रयः पशवः [v]पितृणां पशवो भवन्ति । [v]बलाय देवाय [v]अजगरः बृहत् सर्पः । [v]वसूनां [v]कपिञ्जलः चित्रपक्षः । [v]कपोतः बालवत्सः । [v]उलूकः वायसारातिः [v]शशः प्रसिद्धः । एते [v]निर्ऋत्यै । [v]वरुणाय [v]आरण्यः [v]मेषः ॥३॥

---

अ– ' वर्षाहूर्ऋतूनाम् ' । [v]वर्षाहूः वर्षाभूः भेकी । वर्णविपर्ययः । [v]ऋतूनाम् ऋतुभ्यः । [v]आखुः मूषकः । [v]कशः [v]मान्थालः च मूषकविशेषौ । [v]ते त्रयः [v]पितृणां पितृभ्यः । अथैकोनविंशेऽवकाशे । [v]अजगरः महासर्पः [v]बलाय । [v]कपिञ्जलः [v]वसूनाम् वसुभ्यः । [v]कपोतः [v]उलूकः [v]शशः च । [v]ते [v]निर्ऋत्यै । [v]आरण्यः [v]मेषः [v]वरुणाय ॥३॥

---

श्वित्र आदित्यानामुष्ट्रो घृणीवान् वार्ध्रीनसस्ते
मत्या अरण्याय सृमरो रुरू रौद्रः ।
क्वयिः कुटरुर्दात्यौहस्ते वाजिनां कामाय पिकः ॥४॥

---

8. S3 पाठस्तु– वर्षाहू ... मेष इति for ' वर्षाहूः ' इति ।

13. V2 after मान्थालः adds इति ।

श्वित्रः । आदित्यानाम् । उष्ट्रः । घृणीवान् । घृणिवानिति घृणिऽवान् । वार्ध्रीनसः । ते । मत्यै । अरण्याय । सृमरः । रुरुः । रौद्रः । क्वयिः । कुटरुः । दात्यौहः । ते । वाजिनाम् । कामाय । पिकः ॥ ङ्लौ ॥४॥

आ– 'श्वित्र आदित्यानाम्' इति । लिङ्गोक्तदेवत्या त्रिष्टुप् । ${}^{V}$श्वित्रः पशुविशेषः ${}^{V}$आदित्यानां भवति । ${}^{V}$उष्ट्रः दीर्घग्रीवः । ${}^{V}$घृणीवान् तेजस्वी पशुः । ${}^{V}$वार्ध्रीनसः कण्ठे स्तनवानजः । गुणोत्साहः । ${}^{V}$ते एते पशवः ${}^{V}$मत्यै देवतायै । ${}^{V}$अरण्याय देवतायै ${}^{V}$सृमरः गवयः मृगविशेषः । ${}^{V}$रुरुः महान् कृष्णसारः ${}^{V}$रौद्रः रुद्रदेवत्यः । ${}^{V}$क्वयिः पक्षिविशेषः । ${}^{V}$कुटरुः कुक्कुटः । ${}^{V}$दात्यौहः कालकण्ठः । ${}^{V}$ते एते त्रयः पशवः ${}^{V}$वाजिनां देवतानाम् । ${}^{V}$कामाय देवतायै ${}^{V}$पिकः कोकिलः ॥४२॥

अ– 'श्वित्र आदित्यानाम्' । ${}^{V}$श्वित्रः श्वेतः पशुः ${}^{V}$आदित्यानाम् आदित्येभ्यः । ${}^{V}$उष्ट्रः दीर्घग्रीवः । ${}^{V}$घृणीवान् । दीर्घ आर्षः । तेजस्वी पशुः । वार्ध्रीनसः कण्ठे स्तनवानजः । ते त्रयः ${}^{V}$मत्यै । ${}^{V}$सृमरः गवयः ${}^{V}$अरण्याय । ${}^{V}$रुरुः मृगः ${}^{V}$रौद्रः रुद्रदेवतः । ${}^{V}$क्वयिः पक्षिविशेषः । अथ विंशेऽवकाशे । ${}^{V}$कुटरुः कुक्कुटः । ${}^{V}$दात्यौहः कालकण्ठः । ${}^{V}$ते त्रयः ${}^{V}$वाजिनां वाजिभ्यः । ${}^{V}$पिकः कोकिलः ${}^{V}$कामाय ॥४॥

खड्गो वैश्वदेवः श्वा कृष्णः कर्णो
गर्दभस्तरक्षुस्ते रक्षसामिन्द्राय सूकरः ।
सिंहो मारुतः कृकलासः पिप्पका
शकुनिस्ते शरव्यायै विश्वेषां देवानां पृषतः ॥५॥(८)॥

खड्गः । वैश्वदेव इति वैश्वऽदेवः । श्वा । कृष्णः । कर्णः । गर्दभः । तरक्षुः । ते । रक्षसाम् । इन्द्राय । सूकरः । सिंहः । मारुतः । कृकलासः । पिप्पका । शकुनिः । ते । शरव्यायै । विश्वेषाम् । देवानाम् । पृषतः ॥खाः ॥५॥(छ)॥

4. S3 श्वित्रः ... पिक इति for 'श्वित्र आदित्यानाम्' इति ।
5. V2 after घृणीवान् adds घृणीवान्; S3 om. घृणीवान् तेजस्वी पशुः
6. S3 स्तनवाजिः for स्तनवानजः
8. V2 दात्यूहः for दात्यौहः

अश्वस्तूपरो नव ॥९॥ प्रथमकृष्णग्रीवा आग्नेयाः ॥५॥ धूम्रान् वसन्ताय ॥५॥ अग्नयेऽनीकवते ॥५॥ समुद्राय शिशुमारान् ॥५॥ भूम्या आखून् ॥५॥ मयुः प्राजापत्यः ॥५॥ एण्यहश्वेति पञ्च पञ्च ॥५॥ अष्टानुवाकेषु चतुश्चत्वारिंशत् ॥४४॥

[ इति शुक्लयजुःकाण्वपदसंहितायां षड्विंशतितमोऽध्यायः ]

आ– 'खड्गो वैश्वदेवः' इति । लिङ्गोक्तदेवत्या शक्वरी । $^{V}$खड्गः मृगादनः $^{V}$वैश्वदेवः विश्वेदेवदेवत्यः । $^{V}$श्वा सारमेयः कृष्णवर्णः । श्वा कृष्णः प्रसिद्धः । $^{V}$कर्णः प्राणिविशेषः । लम्बकर्णः खरः $^{V}$गर्दभः । $^{V}$तरक्षुः मृगादनः मृगजीवः । $^{V}$ते एते पशवः $^{V}$रक्षसां राक्षसानाम् । $^{V}$इन्द्राय सूकरः वराहः । $^{V}$सिंहः $^{V}$मारुतः मरुद्देवत्यः । $^{V}$कृकलासः सरटः । $^{V}$पिप्पका पक्षिविशेषः । $^{V}$शकुनिः पक्षी । $^{V}$ते एते पशवः $^{V}$शरव्यायै देवतायै । $^{V}$विश्वेषां $^{V}$देवानां $^{V}$पृषतः मृगविशेषः पशुर्भवति । आरण्यपशून् पर्यग्निकृतान् उत्सृजन्ति । न तु तेषां विशसनमस्ति । तथा तदाह– "अपशुर्वा एष यदारण्यो इत्यारभ्य विस्तरतो विधाय पर्यग्निकृतानेवोत्सृजन्ति" ( शब्रा १३.२.४.३ ) इति श्रुतेः । एवं षष्ट्यधिकं शतद्वयमारण्याः पशव उक्ताः । अत्र विंशतिरेकादशिनः । सप्तविंशत्यधिकानि त्रीणि शतान्यश्वादयः सौर्यान्ताः । षष्ट्यधिकं शतद्वयं कपिञ्जलादयः पृषतान्तास्ता आरण्याः पशवः । सर्वे मीलितः षट्शतानि नवाधिकानि पशवो भवन्ति । श्लोकश्च –

"षट्शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि ।
अश्वमेधस्य यज्ञस्य नवभिश्चाधिकानि च" ॥ इति ।
ते सर्वे उत्सृष्टव्याः न तु हिंसितव्याः ॥४४॥

इति श्री [ मत्परमहंसपरिव्राजकाचार्य-श्रीवासुदेवपुरी-श्रीकृष्णभक्तिसाम्राज्यस्य श्रीमज्जातवेदोपाध्यायस्य सूनुना चतुर्वेदि-श्रीमदानन्दबोधभट्टोपाध्यायेन विरचिते ] शुक्लयजुःकाण्वसंहितामन्त्रभाष्यसंग्रहे षड्विंशोऽध्यायः ॥२६॥

---

1–3 D2 om. अश्वस्तूपरो ... चतुश्चत्वारिंशत् ( L 3 )
A D1 after चत्वारिंशत् adds – शितिभ्रवश्च श्वेतास्तूपध्वस्ता यथाक्रमम् । कृष्णस्तथा च पाशृङ्गाः शुनासीरी वदेद्बुधः ।

5. S3 पाठस्तु– खड्गो ... पृषतः for 'खड्गो वैश्वदेवः' इति ।

8. V2 कृकलाशः for कृकलासः

20. V2 काण्ववेद° for शुक्लयजुः काण्वसंहिता; S3 om. °मन्त्र°

अ - 'खड्गो वैश्वदेवः'। खड्गमृगः Vवैश्वदेवः विश्वेदेवदेवत्यः। Vकृष्णः श्यामवर्णः। अन्तोदात्तः कृष्णशब्दो वर्णवचनः। Vश्वा सारमेयः। Vकर्णः मृगविशेषः। अन्तोदात्तत्वात्। अवयववाची कर्णशब्दस्तु "कर्णः स्वाङ्गे" (वाप्रा २.३१) इति प्रातिशाख्येनाद्युदात्तः। यथा "भद्रं कर्णेभिः" (कासं २७.११.८) इत्यादि। Vगर्दभः। Vतरक्षुः मृगादनः। Vते Vरक्षसां रक्षोभ्यः। Vसूकरः Vइन्द्राय। Vसिंहः Vमारुतः मरुद्देवतः। Vकृकलासः सरटः। Vपिप्पका पक्षिणी। Vशकुनिः पक्षी। ते त्रयः Vशरव्यायै देवतायै Vपृषतः मृगविशेष एकः विश्वेषां देवानां विश्वेभ्यः देवेभ्यः। तस्यै तस्यै देवतायै जुष्टं नियुनज्मीति प्रत्येक तेषु तेषु यूपेषु तेषु तेष्ववकाशेषु च नियोज्या इति भावः। अत्र द्वाविंशतिरेकादशिनः॥२२॥ सप्तविंशत्यधिकानि त्रीणि शतानि 'अश्वस्तूपरः' इत्याद्याः 'श्वेताः सौर्याः' इत्यन्ताः। (३२७)॥ वसन्ताय कपिञ्जलान् इत्याद्याः 'विश्वेषां देवानां पृषतः' इत्यन्ताः आरण्याः पशवः (२६०)॥ सर्वे मिलिताः पट्शतानि नवाधिकानि पशवो भवन्ति। (६०९)॥

(श्लोकश्च मामकाः - "षट्शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि।
अश्वमेधस्य यज्ञस्य नवभिश्चाधिकानि च॥" इति।)

तेष्वारण्याः सर्वे उत्स्रष्टव्याः न तु हिंस्या इति याज्ञिकसंप्रदायः। एषोऽर्थो ब्राह्मणेऽभिहितः- "प्रजापतिरकामयत उभौ लोकावभिजयेयं देवलोकं मनुष्यलोकं चेति स एतान् पशूनपश्यद्ग्रा। ग्राम्यांश्चारण्यांश्च तानालभत तैरिमौ लोकाववारुन्द्ध ग्राम्यैरेव पशुभिरिमं लोकमवारुन्धारण्यैरमुमयं वै लोको मनुष्यलोकोऽथासौ देवलोकः"।(शब्रा १३.२.४.१.) इत्यादिना॥५॥

(इति षड्विंशेऽष्टमोऽनुवाकः॥९॥)

इति श्रीमन्नागदेवभट्टात्मजेन श्रीमदनन्ताचार्येण विरचितायां काण्वसंहितावेदार्थदीपिकायां षड्विंशोऽध्यायः॥२६॥

~~~~~~~~~~~~~~~~~~~~

17. P2 after अनुवाकः। adds श्रीमद्धरये नमः॥
~~~~~~~~~~~~~~~~~~~~

# सप्तविंशोऽध्यायः

(प्रथमोऽनुवाकः।)

॥ हरिः ॐ ॥

**शादं॑ द॒द्भिरव॑कां दन्तमू॒लैर्मृदं॒ बस्वै॑स्ते॒गान् द॒ꣳष्ट्रा॑भ्या॒ꣳ**
**सर॑स्वत्या अग्रजि॒ह्वं जि॒ह्वाया॑ उत्सा॒दम्।**
**अ॒वक्र॒न्देन॒ ताल॑ु वाज॒ꣳ हनु॑भ्याम॒प आ॒स्ये॑न॒ वृष॑णमा॒ण्डाभ्या॑म् ॥१॥**

शाद॑म्। द॒द्भिरिति॑ द॒त्ऽभिः। अव॑काम्। द॒न्त॒मू॒लैरिति॑ द॒न्त॒ऽमू॒लैः।
मृद॑म्। बस्वै॑ः। ते॒गान्। द॒ꣳष्ट्रा॑भ्याम्।
सर॑स्वत्यै। अ॒ग्र॒जि॒ह्वमित्य॑ग्र॒ऽजि॒ह्वम्। जि॒ह्वाया॑ः। उ॒त्सा॒दमि॒त्यु॑त्ऽसा॒दम्।
अ॒व॒क्र॒न्देनेत्य॑व॒ऽक्र॒न्दे॑न। ता॒लु॑। वाज॑म्। हनु॑भ्या॒मिति॒ हनु॑ऽभ्याम्।
अ॒पः। आ॒स्ये॑न। वृष॑णम्। आ॒ण्डाभ्या॑म्॥ ङ्यूः ॥१॥

आ - 'शादं दद्भिः'। अत्र या या देवतास्तास्ताः स्वभागाभिधेयेन समर्धयन्ति। 'शादं दद्भिः' इति। इयमपि श्रुतिः देवतास्वाहादिना चोदनां विदधाति। "देवताऽश्वाङ्गेभ्यो जुहोत्यमुष्मै स्वाहेति प्रतिदेवतं शादप्रभृतित्वगन्तेभ्यः" (काश्रौ २०.८.४) इति। देवताः दत्ताऽऽहुत्यादिभिः प्रीणाति। अत्र 'शादम्' इति द्वितीयया विभक्त्या भोक्त्रीदेवता निर्दिश्यते। 'दद्भिः' इति। अश्वाङ्गाभिधानं तृतीयया करणविभक्त्या निर्दिश्यते। एवं विभक्त्योरर्थवत्त्वं भवति। युक्तं च होमकाले अङ्गाभिधानं देवतायै होमः। तथा च सर्वाभ्यो देवताभ्योऽश्व आलभ्यते। यत्राधिपत्यं कुर्युः या एव देवता अपि भागास्ता भागधेयेन वर्धयेत्। "शादं दद्भिरवकां दन्तमूलैरित्याज्यमवदानी कृत्वा प्रत्याख्यायन् देवताभ्य आहुतीर्जुहोति" (शब्रा १३.३.४.१) इत्यादि श्रुतेः॥

अस्याध्यायस्य ऋषिः प्रजापतिरेव। सामान्यतस्त्वधिकृत्य सर्वमन्त्राणां लिङ्गोक्तदेवत्या शक्वरी। प्रतिमन्त्रं यजूंषि वा। शादो नाम देवताविशेषः। 'शद् शातने'। Vशादं कृष्णदन्तं Vदद्भिः अश्वस्य दन्तैः प्रीणाति। "आज्यमवदानी कृत्वा प्रत्याख्यायन् आहुतीर्देवताभ्यो जुहोति"

9. S3 पाठस्तु - शादं ... आण्डाभ्यामिति for **'शादं दद्भिः' इति**; S3 om **शादं दद्भिः**
10. S3 om. **इयमपि श्रुतिः।**
12. V2 **कृत्वा** for **भोक्त्री**
13. V2 **कारणं°** for **करण°**
17. S3 **अधिकस्य** for **अधिकृत्य**

देवताहोममन्त्राः]

(शब्रा १३.३.४.१) इति श्रुतेः। शादं दद्भिः स्वाहा। [V]अवकां वेतसशाखां हरितां तां देवतां [V]दन्तमूलैः स्वाहा। 'मृदं बर्स्वैः'। 'स्वाहा' इत्येवमेव प्रयोगः कार्यः। होमकाले चतुर्थ्यन्तता। प्राक्तने काले द्वितीयान्तता। तदा प्रीणातीति प्रयोगः। क्वचिच्च केवला देवता भवन्ति। यथा 'शुक्लाय स्वाहा कृष्णाय स्वाहा' इति। [V]मृदं देवतां [V]बर्स्वैः मृदुभूताङ्गैः प्रीणामि। 'तेगान् दंष्ट्राभ्याम्। [V]दंष्ट्राभ्यां दंष्ट्रीभूतदन्ताभ्यां [V]तेगान् देवतां प्रीणाति। [V]सरस्वत्यै [V]अग्रजिह्वं स्वाहा। सरस्वत्यै अग्रजिह्वं प्रीणाति। [V]जिह्वायाः जिह्वया इति व्यत्ययः। [V]उत्सादं देवतां प्रीणाति। [V]अवक्रन्देन [V]तालु देवतां प्रीणाति। क्रन्दिगति(!)शोषणयोः [V]वाजं देवतां [V]हनुभ्यां प्रीणाति। [V]अपः देवता [V]आस्येन प्रीणाति। [V]वृषणम् [V]आण्डाभ्यां प्रीणाति॥ १॥

~~~~~~~~~~~~~~~~~~~~

**अ – अथ सप्तविंशेऽध्याये आज्यमेवाश्वाङ्गत्वेन परिकल्प्य शादादिदेवता होमादिकमभिधीयते। तथा च कात्यायनः - "स्विष्टकृद्वनस्पत्यन्तरे शूल्यं हुत्वा देवताऽश्वाङ्गेभ्यो जुहोत्यमुष्मै स्वाहेति प्रतिदेवतं शादप्रभृतित्वगन्तेभ्यो विमुखाच्च परेभ्यः" (काश्रौ २०.८.४,५) इति। स्विष्टकृद्-वनस्पत्योरन्तरे वनस्पतियागानन्तरं स्विष्टकृद्यागात् पूर्वं शूल्यं शूले श्रपितं मांसं 'प्राजापत्योऽश्वः' इति वचनात् प्रजापतये हुत्वा 'अमुष्मै स्वाहा' इति प्रतिदैवतं शादादित्वगन्तेभ्यो देवताऽश्वाङ्गेभ्यः देवताभ्योऽश्वाङ्गेभ्यश्च घृतं जुहुयात्। अनादेशे द्रव्यस्य घृतस्योक्तत्वात्। तत्र 'शादं दद्भिः' इत्यादिः 'पृथिवीं त्वचा' इत्यन्तः संहिताभागो ब्राह्मणरूपः। शादादयो देवाः। दन्तादीन्यङ्गानि। ततश्चतुर्गृहीतमाज्यं गृहीत्वा 'शादाय स्वाहा दद्भ्यः स्वाहा,' 'अवकायै स्वाहा' '। दन्तमूलेभ्यः स्वाहा 'इत्यादि पृथिव्यै स्वाहा त्वचे स्वाहा इत्यन्तं जुहुया इतित्येकः पक्षः शाखान्तरोदितः॥**

**कात्यायनपक्षे तु - 'शादं दद्भिः प्रीणयामि स्वाहा' इत्यादिहोममन्त्राः। देवता तु द्वितीयया निर्दिष्टा। अश्वाङ्गं भोग्यं तृतीयया करणविभक्त्या निर्दिष्टम्। क्वचित् केवला देवतैव। यथा - 'शुक्लाय स्वाहा, कृष्णाय स्वाहा' इत्यादौ। क्वचिदन्यविभक्त्यैव द्रव्यदेवतानिर्देशः। यथा-'अग्नेः पक्षतिर्वायोर्निपक्षतिः' इत्यादौ। तथा च ब्राह्मणम् - "शादं दद्भिरवकां दन्तमूलैरित्याज्यमवदानी कृत्वा प्रत्याख्यायन् देवताभ्य आहुतीर्जुहोति। या एव देवता अपिभागास्ता भागधेयेन समर्धयति" (शब्रा १३.३.४.१) इति। आख्यायाख्याय देवता इति प्रत्याख्यायमित्यर्थः। 'शादं दद्भिः'। अस्याध्यायस्य प्रजापतिः ऋषिः। लिङ्गोक्तानि दैवतानि सर्वाणि यजूँषि। [V]दद्भिः अश्वदन्तैः [V]शादं देवं प्रीणयामि। [V]दन्तमूलैः [V]अबकां देवतां प्रीणयामि। [V]बर्स्वैः दन्तपीठैः [V]मृदं देवतां प्रीणयामि। बर्स्वं स्याद्दन्तपीठिका इत्यभिधानम्। [V]दंष्ट्राभ्यां [V]तेगाम् देवतां प्रीणयामि। [V]अग्रजिह्वं विभक्तिव्यत्ययः। जिह्वाग्रेण [V]सरस्वत्यै सरस्वतीं प्रीणयामि। [V]जिह्वायाः जिह्वया [V]उत्सादं देवं प्रीणयामि। [V]तालु तालुना [V]अवक्रन्देन अवक्रन्दं देवं प्रीणयामि। [V]हनुभ्यां [V]वाजं देवं प्रीणयामि। [V]आस्येन [V]आपः प्रीणयामि। [V]अण्डाभ्यां [V]वृषणम् इन्द्रं प्रीणयामि। "वासवो वृत्रहा वृषा" (अको १.१.४२) इत्यभिधानम्। देवतान्तरं वा॥१॥**

~~~~~~~~~~~~~~~~~~~~

1. V2 हरितमा for हरितां;
2. V2 बरस्वैः for बर्स्वैः
4. S3 om. second दंष्ट्राभ्यां
5. V2 after जिह्वं adds जिह्वां
6. V2 जिह्वायां जिह्वयाः for जिह्वाया जिह्वया।
8. V2 after प्रीणाति adds : जिह्वयां व्यत्ययः
26. M4 पीठका for °पीठिका

[देवताहोममन्त्राः

**आदित्यान् श्मश्रुभिः पन्थानं भ्रूभ्यां द्यावापृथिवी वर्तोभ्यां विद्युतं कनीनिकाभ्याम्। शुक्लाय स्वाहा कृष्णाय स्वाहा पार्याणि पक्ष्माण्यवार्या इक्षवोऽवार्याणि पक्ष्माणि पार्या इक्षवः ॥२॥ (१)**

आदित्यान्। श्मश्रुभिरिति श्मश्रुऽभिः। पन्थानम्। भ्रूभ्याम्। द्यावापृथिवी इति द्यावापृथिवी। वर्तोभ्यामिति वर्तःऽभ्याम्। विद्युतमिति विऽद्युतम्। कनीनकाभ्याम्। शुक्लाय। स्वाहा। कृष्णाय। स्वाहा। पार्याणि। पक्ष्माणि। अवार्याः। इक्षवः। अवार्याणि। पक्ष्माणि। पार्याः। इक्षवः ॥ त्र्यः ॥ २ ॥ (१)

आ – 'आदित्यान् श्मश्रुभिः' इति। लिङ्गोक्तदेवत्यानि यजूंषि। [V]आदित्यान्[V]श्मश्रुभिः। 'स्वाहा,' 'प्रीणाति' सर्वत्रप्रयोगः। [V]पन्थानं देवतां [V]भ्रूभ्याम्। [V]द्यावापृथिवी देवते [V]वर्तोभ्याम् अङ्गविशेषाभ्याम्। [V]विद्युतं देवतां[V]कनीनकाभ्याम् नेत्रमध्यस्थकृष्णरूपाभ्यामवराभ्याम्। [V]शुक्लाय [V]स्वाहा। [V]कृष्णाय [V]स्वाहा। [V]पार्याणि परस्या देवताया नयनोपरिभागस्थानि [V]पक्ष्माणि पार्याणि। [V]अवार्या [V]इक्षवः। अवार्या अवराङ्गेषु भवा इक्षवो देवताः। [V]अवार्याणि [V]पक्ष्माणि। अवरेष्वङ्गेषु जातानि अवराङ्गसंबन्धीनि पक्ष्माणि। रोमावल्यवधिकानि अवार्याणि पक्ष्माणि। तेभ्यः स्वाहा इति शेषः। [V]पार्याः [V]इक्षवः देवताः॥ २ ॥ (१)

**अ – 'आदित्यान् श्मश्रुभिः'। [V]श्मश्रुभिः [V]आदित्यान् प्रीणयामि। [V]भ्रूभ्यां [V]पन्थानं प्रीणयामि। [V]वर्तोभ्याम्। वर्ताः पक्ष्मपङ्क्तिः। ताभ्यां [V]द्यावापृथिवी द्यावापृथिव्यौ प्रीणयामि। [V]कनीनकाभ्यां नेत्रगतकृष्णगोलकाभ्यां [V]विद्युतं प्रीणयामि। "तारकाक्ष्णः कनीनका" (अको २.६.९२) इत्यभिधानम्। 'शुक्लाय स्वाहा', 'कृष्णाय स्वाहा'। [V]शुक्लाय देवाय [V]स्वाहा सुहुतमस्तु। एवमन्यत्र। अत्र देवतैवाभिधीयते। न पशवङ्गम्। यद्वा- अश्वाङ्गमेव चतुर्थ्या निर्दिश्यते। "अनादेशे प्रजापतिः" इत्युक्तेः। "प्राजापत्योऽश्वः" (शब्रा १३.१.१.१) इति श्रुतेश्च। प्रजापतिर्देवोऽध्याहार्यः। एवं सति शुक्लेन प्रजापतिं प्रीणयामि। कृष्णेनाश्वाङ्गेन प्रजापतिं प्रीणयामि इति। [V]पक्ष्माणि [V]पार्याणि। विभक्तिव्यत्ययः। पक्ष्मभिर्नेत्रोपरिगतलोमभिः पार्या देवताः प्रीणयामि। 'इक्षवःअवार्याः'। [V]इक्षवः नेत्राधोभागलोमानि। तैः [V]अवार्या देवताः प्रीणयामि। अत्र विकल्पमाह - 'अवार्याणि पक्ष्माणि'। 'पार्या इक्षवः' इति व्याख्या पूर्ववत्। यद्वा- सदृशनामकं देवतान्तरं कथ्यते। तदा समुच्चयः ॥२॥**

**इति सप्तविंशे प्रथमोऽनुवाकः ॥१॥**

8. S3 पाठस्तु – आदित्यान् ... इक्षव इति for 'आदित्यान् श्मश्रुभिः' इति
25. P2 om. सप्तविंशे

(द्वितीयोऽनुवाकः।)

**वात॑ं प्राणेना॑पानेन नासि॑के उपयाममध॑रेणौष्ठे॑न सदुत्त॑रेण।
प्रकाशेनान्त॑रमनूकाशेन बाह्य॑ं निवेष्यं मूर्ध्ना
स्त॑नयित्नुं नि॑र्बाधेनाशनि॑ं मस्तिष्के॑ण विद्युत॑ं कनीन॑काभ्याम् ॥१॥**

~~~~~~~~~~~~~~~~~~~~

वात॑म्। प्राणेन॑। अपानेनेत्य॑पऽअनेन॑। नासि॑के इति नासि॑के। उपयाममित्यु॑पऽयामम्। अध॑रेण। ओष्ठे॑न। सत्। उत्त॑रेणेत्युत्ऽत॑रेण। प्रकाशेनेति॑ प्रऽकाशेन॑। अन्त॑रम्। अनूकाशेन॑। अनुकाशेनेत्य॑नुऽकाशेन॑। बाह्य॑म्। निवेष्यमिति॑ निऽवेष्यम्। मूर्ध्ना। स्तनयित्नुम्। निर्बाधेनेति॑ निःऽबाधेन॑। अशनि॑म्। मस्तिष्के॑ण। विद्युतमिति॑ विऽद्युत॑म्। कनीन॑काभ्याम् ॥ र्ति॒ः ॥१॥

~~~~~~~~~~~~~~~~~~~~

**आ** – 'वातं प्राणेन' इति। प्रतिमन्त्रं लिङ्गोक्तदेवत्यानि यजूंषि। Vवातं Vप्राणेन। वातं देवतां प्रीणाति। Vअपानेन Vनासिके तत्रत्यदेवते प्रीणाति। Vउपयामं देवताम् Vअधरेण Vओष्ठेन प्रीणाति। Vसत् Vउत्तरेण। सत् सता ओष्ठेन च। Vप्रकाशेन च Vअन्तरं देवतां प्रीणाति। Vअनूकाशेन पश्चाद्भाविप्रकाशेन Vबाह्यं बाह्यां नयसंबन्धिनीं देवतां प्रीणाति। Vनिवेष्यं देवतां Vमूर्ध्ना प्रीणाति। Vस्तनयित्नुं देवतां Vनिर्बाधेन शिरःकपालेन प्रीणाति। Vअशनिं देवतां Vमस्तिष्केण प्रीणाति। Vविद्युतं देवतां Vकनीनकाभ्याम् ॥३॥

~~~~~~~~~~~~~~~~~~~~

**अ – 'वातं प्राणेन'। अश्वस्य प्राणवायुना Vवातं प्रीणयामि। Vअपानेन Vनासिके देवते प्रीणयामि। Vअधरेण Vओष्ठेन Vउपयामं देवं प्रीणयामि। Vउत्तरेण ओष्ठेन Vसत् सत्संज्ञं देवं प्रीणयामि। Vप्रकाशेन अश्वस्योपरितनदेहप्रकाशेन Vअन्तरं प्रीणयामि। Vअनूकाशेन। "उपसर्गस्य घञ्यमनुष्ये बहुलम्" (पा ६.३.१२२) इति दीर्घः। अनूकाशेन अधस्तनदेहप्रकाशेन Vबाह्यं देवं प्रीणयामि। Vमूर्ध्ना मस्तकेन Vनिवेष्यं देवं प्रीणयामि। Vनिर्बाधेन। निश्चितं बाध्यत इति निर्बाधः। शिरोऽस्थिमध्यसंलग्नो मज्जाभागः। तेन निर्बाधेन Vस्तनयत्नुं देवं प्रीणयामि। मस्तके भवं मस्तिष्कं शिरोमध्यस्थजर्जरमांसपिण्डम्। "तिलकं क्लोम मस्तिष्कं गोर्दं किट्टं मलोऽस्त्रियाम्" (अको २.६.६५) इत्यभिधानम्। 'मस्तकमज्जा' इति क्षीरस्वामी च। तेन Vमस्तिष्केण Vअशनिं देवं प्रीणयामि। Vकनीनकाभ्यां Vविद्युतं प्रीणयामि ॥१॥**

~~~~~~~~~~~~~~~~~~~~

10. S3 पाठस्तु - वात° ... कनीनकाभ्यामिति for 'वातं प्राणेन' इति
11. 11. V2 अधरेणोष्ठेन for अधरेण ओष्ठेन
13. 19. V2 निवेष्यं for निवेष्पं°
17. M4 तत्सन्तं for सत्संज्ञं
19. P2 M4 निवेष्यं for निवेष्पं
20. M4° भावः for °भागः

कर्णा॑भ्याꣳश्रोत्रꣳश्रोत्रा॑भ्यां कर्णौ॑ तेदनी॑मधर
कण्ठेनापः शुष्ककण्ठेनं॑ चित्तं मन्या॑भिः।
अदि॑तिꣳशीर्ष्णा निर्ऋ॑तिं निर्ज॑र्जल्येन
शीर्ष्णा सं॑क्रोशैः प्राणान् रेष्माणं॑ꣳस्तुपेनं॑ ॥२॥(२)॥

कर्णा॑भ्याम्। श्रोत्र॑म्। श्रोत्रा॑भ्याम्। कर्णौ॑। तेदनीम्। अधरकण्ठेनेत्य॑धरऽकण्ठेन॑। अपः। शुष्ककण्ठेनेति॑ शुष्कऽकण्ठेन॑। चित्तम्। मन्या॑भिः। अदि॑तिम्। शीर्ष्णा। निर्ऋ॑तिमिति निःऽऋ॑तिम्। निर्ज॑र्जल्येनेति निःऽजर्ज॑ल्येन। शीर्ष्णा। संक्रोशैरिति॑ सम्ऽक्रोशैः। प्राणान्। रेष्माण॑म्। स्तुपेन॑॥ म्यौं॥ २॥(२)॥

आ – 'कर्णाभ्याꣳ श्रोत्रम्' इति। प्रतिमन्त्रं लिङ्गोक्तदेवत्यानि यजूंषि। vकर्णाभ्यां vश्रोत्रं देवतां प्रीणाति। vश्रोत्राभ्यां vकर्णौ देवते प्रीणाति। vतेदनीं देवताम् vअधरकण्ठेन प्रीणाति। vअपः देवताः vशुष्ककण्ठेन प्रीणाति। vचित्तं देवतां vमन्याभिः अन्तःकरणवृत्तिभिः प्रीणाति। vअदितिं देवतां vशीर्ष्णा प्रीणाति। vनिर्ऋतिं vनिर्जर्जल्येन केसरशून्यावयवेन प्रीणाति। vशीर्ष्णा vसंक्रोशैः vप्राणान् प्रीणाति। vरेष्माणं देवतां vस्तुपेन प्रीणाति॥ ४॥

अ – 'कर्णाभ्यांꣳश्रोत्रम्'। vकर्णाभ्याम् अश्वकर्णशष्कुलीभ्यां vश्रोत्रं देवं प्रीणयामि। अत्र श्रोत्रदेवस्तदभिमानी दिगात्मकः। एवमुत्तरत्रापि योज्यम्।vश्रोत्राभ्यां श्रोत्रेन्द्रियाभ्याम्। अधिष्ठानभेदात् द्वित्वम्। vकर्णौ देवौ प्रीणयामि। vअधरकण्ठेन कण्ठाधोभागेन vतेदनीं देवतां प्रीणयामि। शुष्कश्चासौ कण्ठश्च शुष्ककण्ठः। कण्ठनिमांसदेशः। तेन vशुष्ककण्ठेन vअपः देवताः प्रीणयामि। "पश्चाद्ग्रीवा सिरा मन्या" (अको २.६.६५) इत्यभिधानात् ग्रीवा पश्चाद्भागे कृकाटिकायां सिरा मन्या इत्युच्यन्ते। "संज्ञायां समजनि°" (पा ३.३.९९) इति क्यच्। vमन्याभिः ग्रीवापश्चाद्भागनाडीभिः vचित्तं देवं प्रीणयामि। vशीर्ष्णा शिरसा vअदितिं देवतां प्रीणयामि। vनिर्जर्जल्येन नितरां जर्जरीभूतेन शिरोभागेन vनिर्ऋतिं देवं प्रीणयामि। सम्यक् क्रोशन्ति शब्दायन्त इति संक्रोशानि। गच्छतोऽश्वस्य यान्यङ्गानि शब्दायन्ते तैः vसंक्रोशैः vप्राणान् देवान् प्रीणयामि। vस्तुपेन। स्तुप उच्छ्राये। उच्छ्रितेन शिखाभूतेनाङ्गेन vरेष्माणं देवं प्रीणयामि ॥२॥

इति सप्तविंशे द्वितीयोऽनुवाकः ॥२॥

6. Kumbhakonam edition निर्जल्येन for निर्जर्जल्येन
9. S3 पाठस्तु – कर्णाभ्यां ... स्तुपेनेति for 'कर्णाभ्याꣳ श्रोत्रम्' इति
12. D1 निर्जर्जल्पेनेति निःऽजर्जल्पेन for निर्जर्जल्येनेति निः जर्जल्येन
13. V2 स्तूपेन for स्तुपेन

(तृतीयोऽनुवाकः।)

**मशकान् केशैरिन्द्रँ स्वपसा वहेन बृहस्पतिँ शकुनिसादेन कूर्मान्। शफैराक्रमणँ स्थूराभ्यामृक्षलाभिः कपिञ्जलान् ॥१॥**

---

मशकान्। केशैः। इन्द्रम्। स्वपसेति सुऽअपसा। वहेन। बृहस्पतिम्। शकुनिसादेनेति शकुनिऽसादेन। कूर्मान्। शफैः। आक्रमणमित्याऽक्रमणम्। स्थूराभ्याम्। ऋक्षराभिः। कपिञ्जलान् ॥ ङ्लीं ॥ १ ॥

---

**आ** – 'मशकान् केशैः'। प्रतिमन्त्रं लिङ्गोक्तदेवत्यानि यजूंषि। Vमशकान् देवताः Vकेशैः प्रीणाति। Vइन्द्रं देवतां Vस्वपसा प्रीणाति। Vवहेन वहनस्थानवशेन Vबृहस्पतिं प्रीणाति। Vशकुनिसादेन आरोहस्थानेन पृष्ठभागेन Vकूर्मान् प्रीणाति। Vशफैः खुरैः Vआक्रमणं प्रीणाति। Vस्थूराभ्याम् Vऋक्षलाभिः च वल्गनैरुपलक्षिताभ्यां स्वरोपरिभाषाभ्यां Vकपिञ्जलान् (प्रीणाति)॥ ५ ॥

---

**अ – 'मशकान् केशैः'। Vकेशैः स्कन्धस्थरोमभिः Vमशकान् देवान् प्रीणयामि। Vस्वपसा। अप इति कर्मनाम। शोभनमपः कर्म पर्याणधारणनरवाहनादिकं यस्य सः स्वपाः। अप गतावित्यस्माद-सुन्प्रत्ययः। तेन स्वपसा Vवहेन स्कन्धेन Vइन्द्रं प्रीणयामि। शकुनिः पक्षी। तद्वत् सादो गमनं शकुनिसदः। षद्लृ विसरणगत्यवसादनेष्वित्यस्मात् घञ्। वेगवत् कूर्दनम्। तेन Vबृहस्पतिं प्रीणयामि। Vशफै खुरैः। "शफं क्लीबे खुरः पुमान्" (अको २.८.४९) इत्यभिधानम्। Vकूर्मान् देवान् प्रीणयामि। Vस्थूराभ्यां स्थूलाभ्याम्। रलयोरभेदात्। स्थूलाभ्यां गुल्फाभ्याम् Vआक्रमणं देवं प्रीणयामि। Vऋक्षलाभिः ऋक्षराभिः गुल्फाऽधस्थनाडीभिः Vकपिञ्जलान् देवं प्रीणयामि ॥१॥**

---

7. S3 **पाठस्तु – मशकान् ... कपिञ्जलानिति** for **'मशकान् केशैः'**; V2 after **मशकान्** adds: **मशकान् कोशैः।**

[देवताहोममन्त्राः

**जवं जङ्घाभ्यामध्वानं बाहुभ्यां जाम्बीलेनारण्यमग्निमतिरुग्भ्याम्।**
**पूषणं दोर्भ्यामश्विना अꣳसाभ्याꣳरुद्रꣳ रोराभ्याम् ॥२॥(३)॥**

जवम्। जङ्घाभ्याम्। अध्वानम्। बाहुभ्यामिति बाहुऽभ्याम्।
जाम्बीलेन। अरण्यम्। अग्निम्। अतिरुग्भ्यामित्यतिरुक्ऽभ्याम्।
पूषणम्। दोर्भ्यामिति दोःऽभ्याम्। अश्विनौ। अꣳसाभ्याम्।
रुद्रम्। रोराभ्याम्॥ टुं॥ २॥ (३)॥

**आ** - 'जवं जङ्घाभ्याम्' इति। लिङ्गोक्तदेवत्यानि यजूंषि प्रतिमन्त्रम्। [v]जवं [v]जङ्घाभ्यां प्रीणाति। [v]अध्वानं बाहुभ्यां प्रीणाति। [v]जाम्बीलेन [v]आरण्यं प्रीणाति। [v]अग्निम् [v]अतिरुग्भ्यां प्रीणाति। [v]पूषणं [v]दोर्भ्यां प्रीणाति। [v]आश्विनौ अंसाभ्या प्रीणाति। [v]रुद्रं रोराभ्यां संधिभ्यां प्रीणाति॥ ६॥

**अ** - 'जवं जङ्घाभ्याम्'। जानुनोर्मध्यभागौ जङ्घे उच्येते। ताभ्यां [v]जवं देवं प्रीणयामि। [v]बाहुभ्यां जान्वोरूर्ध्वभागाभ्याम् [v]अध्वानं देवं प्रीणयामि। [v]जाम्बीलेन। जम्बीरं जम्बीरतरोः फलम्। पूर्ववत्। तदाकारोऽश्वजानुमध्यभागो जाम्बीरस्तेन। [v]अरणयम्। अरण्याभिमानी देवं प्रीणयामि। [v]अतिरुग्भ्याम्। अत्यन्तं रोचते तौ अतिरुचौ, जानुदेशौ ताभ्याम् [v]अग्निं देवं प्रीणयामि। [v] दोर्भ्याम् अग्रपादयोर्जान्वधोभागाभ्यां [v]पूषणं देवं प्रीणयामि। [v]अंसाभ्यां स्कन्धाभ्याम् [v]अश्विनौ देवौ प्रीणयामि। [v]रोराभ्याम् अंसग्रंथिभ्यां [v]रुद्रं प्रीणयामि ॥२॥

इति (सप्तविंशे) तृतीयोऽनुवाकः ॥३॥

7. S3 पाठस्तु - जवं ... रोराभ्यामिति for 'जवं जङ्घाभ्याम्' इति; S3 प्रतिमन्त्रं लिङ्गोक्तानि यजूंषि for लिङ्गोक्तदेवत्यानि यजूंषि प्रतिमन्त्रम्।
13. M4 आरण्यम् for अरणयम्

**अग्नेः पक्षतिर्वायोर्निपक्षतिरिन्द्रस्य तृतीयाऽपां चतुर्थी।**
**अदित्यै पञ्चमीन्द्राण्यै षष्ठी मरुतांᳬ सप्तमी बृहस्पतेरष्टमी।**
**अर्यम्णो नवमी धातुर्दशमीन्द्रस्यैकादशी**
**वरुणस्य द्वादशी यमस्य त्रयोदशी ॥१॥(४) ॥**

~~~~~~~~~~~~~~~~~~~~

अग्नेः। पक्षतिः। वायोः। निपक्षतिरिति निऽपक्षतिः। इन्द्रस्य। तृतीया। अपाम्। चतुर्थी। अदित्यै। पञ्चमी। इन्द्राण्यै। षष्ठी। मरुताम्। सप्तमी। बृहस्पतेः। अष्टमी। अर्यम्णः। नवमी। धातुः। दशमी। इन्द्रस्य। एकादशी। वरुणस्य। द्वादशी। यमस्य। त्रयोदशीति त्रयःऽदशी ॥ ज्रं ॥ १ ॥ (४)॥

~~~~~~~~~~~~~~~~~~~~

**आ** - अथ षष्ठीविभक्त्या द्रव्यदेवतयोः संबध्यभिध्यानपूर्वकं मन्त्राः प्रवर्तन्ते। 'अग्नेः पक्षतिः' इति प्रतिमन्त्रं लिङ्गोक्तदेवतानि यजूँषि। Vअग्नेः Vपक्षतिः पक्षलक्षणं स्वाहा। "पक्षमूलं तु पक्षतिः" (अको २.५.३६) इति वा। Vवायोः Vनिपक्षतिः। निघर्षणं निपक्षतिः स्वाहा। Vइन्द्रस्य Vतृतीया। सा पक्षतिरावृता चेत् Vतत्रापि Vइन्द्रस्य Vतृतीया स्वाहा' इति सर्वत्रानुषङ्गः श्रुत्या कृतः। "अमुष्मै स्वाहेति जुह्वत्संचक्षीत"(शब्रा १३.३.५.२) इति श्रुतेः। Vअपां देवतानां Vचतुर्थी। Vअदित्यै अदित्याः देवतायाःVपञ्चमी। Vइन्द्राण्यै इन्द्राण्याःVषष्ठी। Vमरुतां देवतानां Vसप्तमी। Vबृहस्पतेः Vअष्टमी। बृहस्पतिदेवतायाः अष्टमी। Vअर्यम्णः देवतायाः Vनवमी। Vधातुः देवतायाः Vदशमी। Vइन्द्रस्य परमैश्वर्ययुक्ताया देवतायाः Vएकादशी। Vवरुणस्य देवतायाः Vद्वादशी। Vयमस्य देवतायाःVत्रयोदशी। स्वाहेति ॥१॥(७)॥

~~~~~~~~~~~~~~~~~~~~

**अ - 'अग्नेः पक्षतिः'। अत्र षष्ठ्यन्त्येन देवतोद्देशः। प्रथमान्तेन अश्वाङ्गोद्देशः। ततोऽस्त्वि - त्यध्याहारः। 'अस्तिभवतिवृतिकृतीनां सर्वत्रानुप्रयोगः' इति वचनात्। Vअग्नेः देवस्य Vपक्षतिः अस्तु। यद्वा-विभक्तिव्यत्ययेन पक्षत्या अग्निं प्रीणयामीत्यादि योज्यम्। "पक्षमूलं तु पक्षतिः" (द्र अको २.५.३६) इत्यभिधानात्। "पक्षात्तिः" (पा ५.२.२५) इति मूलार्थे तिप्रत्ययः। पक्षस्य पार्श्वस्य मूलभूतान्यस्थीनि वङ्क्रिशब्दवाच्यानि पक्षतिरित्युच्यन्ते। तानि च प्रतिपार्श्वं त्रयोदश भवन्ति। "षड्विंशतिरस्य वङ्क्रयः" (तैब्रा ३.६.६.३) इति श्रुतेः। अत्र पक्षशब्दस्य पार्श्ववाचित्वे तु "बले काले पतत्रे च रुचौ पार्श्वे प्रकल्पिते"**

~~~~~~~~~~~~~~~~~~~~

10. S3 पाठस्तु - अग्नेः ... त्रयोदशीति for 'अग्नेः पक्षतिः' इति ; S3 om. प्रतिमन्त्रं ... यजूंषि
23. M4 वरुचौ for च रुचौ ; P2 रुचेः for रुचौ

[देवताहोममन्त्राः

इत्यभिधानं प्रमाणम् अङ्गानां क्रमेण देवतासंबन्धं वक्ति । तत्रादौ दक्षिणपार्श्वास्थिदेवता आह । [v]पक्षतिः अश्वस्य प्रथममुपरिस्थं दक्षिणपार्श्वास्थि अग्नेः अस्तु । एवमुत्तरत्रापि । नीचा पक्षतिः निपक्षतिः । पक्षतिद्वितीयं दक्षिणपार्श्वास्थि [v]वायोः । [v]इन्द्रस्य [v]तृतीया [v]अपां [v]चतुर्थी । [v]अदित्यै [v]पञ्चमी। [v]इन्द्राण्यै [v]षष्ठी । [v]मरुतां [v]सप्तमी । [v]बृहस्पतेः अष्टमी । [v]अर्यम्णः [v]नवमी । [v]धातुः [v]दशमी । [v]इन्द्रस्य [v]एकादशी । [v]वरुणस्य [v]द्वादशी । [v]यमस्य [v]त्रयोदशी । पक्षतिरिति सर्वत्र अनुषञ्जनीयम् । अत्र सर्वत्र षष्ठी चतुर्थ्यर्थे ॥१॥

इति (सप्तविंशे) चतुर्थोऽनुवाकः॥४॥

(पञ्चमोऽनुवाकः।)

इन्द्राग्न्योः प॑क्षतिः सर॑स्वत्यै निप॑क्षतिर्मि॒त्रस्य॑ तृतीया सोम॑स्य चतुर्थी।
निर्ऋ॑त्यै पञ्चम्यग्नीषोम॑योः षष्ठी सर्पाणा॑ꣳसप्तमी विष्णो॑रष्टमी।
पूष्णो न॑वमी त्वष्टु॑र्दशमीन्द्र॑स्यैकादशी वरु॑णस्य द्वादशी यम्यै त्र॑योदशी।
द्यावा॑पृथिव्योर्दक्षि॑णं पार्श्वं विश्वे॑षां देवानामुत्त॑रम् ॥१॥(५)॥

इन्द्राग्न्योः। पक्षतिः। सर॑स्वत्यै। निप॑क्षतिरिति निऽप॑क्षतिः।
मित्रस्य॑। तृतीया॑। सोम॑स्य। चतुर्थी।
निर्ऋ॑त्या इति निःऽऋ॑त्यै। पञ्चमी। अग्नीषोम॑योः। षष्ठी।
सर्पाणा॑म्। सप्तमी। विष्णो॑ः। अष्टमी।
पूष्णः। नवमी। त्वष्टु॑ः। दशमी। इन्द्र॑स्य। एकादशी।
वरु॑णस्य। द्वादशी। यम्यै। त्रयोदशीति॑ त्रयःऽदशी।
द्यावा॑पृथिव्योः। दक्षि॑णम्। पार्श्वम्। विश्वे॑षाम्। देवाना॑म्। उत्त॑रम्॥ प्रिं॥१॥(५)॥

**आ** - 'इन्द्राग्न्योः पक्षतिः' इति। प्रतिमन्त्रं लिङ्गोक्तदेवत्यानि यजूँषि। [v]इन्द्राग्न्योः देवतयोः [v]पक्षतिः। [v]सरस्वत्यै देवतयोः [v]निपक्षतिः। [v]मित्रस्य देवतायाः [v]तृतीया। [v]सोमस्य देवतायाः [v]चतुर्थी। [v]निर्ऋत्यै देवतायै [v]पञ्चमी। [v]अग्नीषोमयोः देवतयोः [v]षष्ठी। [v]सर्पाणां देवतानां [v]सप्तमी। [v]विष्णोः [v]अष्टमी। [v]पूष्णः देवतायाः [v]नवमी। [v]त्वष्टुः देवतायाः [v]दशमी। [v]इन्द्रस्य देवतायाः [v]एकादशी। [v]वरुणस्य देवतायाः [v]द्वादशी। [v]यम्यै यमसंबन्धिन्यै देवतायै [v]त्रयोदशी। [v]द्यावापृथिव्योः देवतयोः [v]दक्षिणं [v]पार्श्वम्। [v]विश्वेषां देवानाम् [v]उत्तरं पार्श्वम्॥८॥

1. P2 M4 **°पार्श्वस्थ°** for **°पार्श्वास्थि°**

20. **पाठस्तु - इन्द्राग्न्योः ... उत्तरमिति** for **'इन्द्राग्न्योः पक्षतिः' इति ।**

देवताहोममन्त्राः]

अ - 'इन्द्राग्न्योः पक्षतिः'। अत्र वामपार्श्वास्थिदेवता उच्यन्ते । vपक्षतिः । प्रथममुपरिस्थं वामपार्श्वास्थि vइन्द्राग्न्योः देवतयोरस्तु । vसरस्वत्यै vनिपक्षतिः । vमित्रस्य vतृतीया। vसोमस्य vचतुर्थी। vनिर्ऋत्यै vपंचमी । vअग्नीषोमयोः vषष्ठी । vसर्पाणां vसप्तमी । vविष्णोः vअष्टमी । vपूष्णः vनवमी । vत्वष्टुः vदशमी । vइन्द्रस्य vएकादशी । vवरुणस्य vद्वादशी । vयम्यै vत्रयोदशी । यमस्य स्वसा यमी । ऋग्वेदे यमयमीसंवादे यमीशब्दस्य तत्रैव रूढेः । त्रयोदशी पक्षतिर्यम्यै । अत्र चतुर्थी प्रथमार्थे इति केचित्। तथात्वे प्रक्रमभङ्गः क्लिष्टकल्पनं च । अथ समस्तयोः पार्श्वयोर्देवता आह; 'द्यावा' इति । vदक्षिणं vपार्श्वं vद्यावापृथिव्योः अस्तु । vउत्तरं वामपार्श्वं vविश्वेषां vदेवानाम् अस्तु ॥१॥

इति (सप्तविंशे) पञ्चमोऽनुवाकः ॥५॥

(षष्ठोऽनुवाकः।)

मरुतां॑स्स्कन्धा विश्वे॑षां देवानां॑ प्रथमा कीक॑सा
रुद्राणां॑ द्वितीयाऽऽदित्यानां॑ तृतीयां॑ वायोः पुच्छ॑मग्नीषोम॑योर्भास॑दौ।
क्रुञ्चौ श्रोणिं॑भ्यामिन्द्राबृहस्पती ऊरुभ्यां॑ मित्रावरु॑णा
अल्गाभ्यां॑माक्रम॑ण॑स्स्थूराभ्यां बलं कुष्ठां॑भ्याम् ॥१॥(६)॥

मरुतां॑म्। स्कन्धाः। विश्वे॑षाम्। देवानां॑म्। प्रथमा। कीक॑सा।
रुद्राणां॑म्। द्वितीयां॑। आदित्यानां॑म्। तृतीयां॑। वायोः। पुच्छ॑म्। अग्नीषोम॑योः। भास॑दौ।
क्रुञ्चौ। श्रोणिं॑भ्यामिति श्रोणिं॑ऽभ्याम्। इन्द्राबृहस्पती इतीन्द्राबृहस्पती।
ऊरुभ्यामित्यूरुऽभ्यां॑म्। मित्रावरु॑णौ। अल्गाभ्यां॑म्। आक्रम॑णमित्याऽक्रम॑णम्।
स्थूराभ्यां॑म्। बलं॑म्। कुष्ठां॑भ्याम् ॥ दुः ॥ १ ॥ (६) ॥

आ - 'मरुता॑स्स्कन्धाः' इति। प्रतिमन्त्रं लिङ्गोक्तदेवत्यानि यजूंषि। vमरुतां देवतानां vस्कन्धाः। vविश्वेषां vदेवानां vप्रथमा vकीकसा। प्रथममस्थि vरुद्राणां देवतानां vद्वितीया च कीकसा। vआदित्यानां vतृतीया। vवायोः देवतायाः vपुच्छम्। vअग्नीषोमयोः देवतयोः vभासदौ पश्चिमसक्थ्याख्यावयवौ। vक्रुञ्चौ vश्रोणिभ्यां प्रीणाति। vइन्द्राबृहस्पती vऊरुभ्यां प्रीणाति। vमित्रावरुणौ vअल्गाभ्यां प्रीणाति। vआक्रमणं vस्थूराभ्यां प्रीणाति। vबलं vकुष्ठाभ्यां सूक्ष्मस्थूराभ्यां प्रीणाति ॥ ९ ॥

19. S3 पाठस्तु - मरुतां ... कुष्ठाभ्यामिति for 'मरुता ॐ स्कन्धाः' इति ।

[देवताहोममन्त्राः

अ- अथ अङ्गान्तराणां देवता आह। vमरुतां vस्कन्धाः। स्कन्धाः मरुद्भ्यः सन्तु। स्कन्धैर्मरुतो देवान् प्रीणयामीति वा। विभक्तिव्यत्ययः पूर्ववत्। अथाश्वपुच्छोपरितिस्त्रोऽस्थिपङ्क्तयः सन्ति। तासां देवता आह। 'विश्वेषाम्' इति। "कीकसं कुल्यमस्थि च" (अको २.६.६८) इत्यभिधानात् कीति कसति शब्दं करोतीति कीकसमस्थि। vप्रथमा vकीकसा। "सुपां सुलुक्" (पा. ७.१.३९)। पूर्वसवर्णदीर्घात् प्रथमानि कीकसानि। पुच्छोपरिस्थाद्या पङ्क्तिरित्यर्थः। vविश्वेषां देवानाम्। vद्वितीया अस्थिपङ्क्तिः vरुद्राणाम्। vतृतीया अस्थिपङ्क्तिः vआदित्यानाम्। vपुच्छं vवायोः। vभासदौ। भासेते इति भासदौ - नितम्बौ। "नितम्बो भासदो मतः" इत्यभिधानात्। vअग्नीषोमयोः vश्रोणिभ्यां दक्षिणवामाभ्यां कटि - भ्याम्। "कटिः श्रोणिः ककुद्मती" (अको २.६.७४) इत्यभिधानम्। क्रुञ्चौ देवौ प्रीणयामि। vइन्द्राबृहस्पती ऊरुभ्यां प्रीणयामि। अलजमित्यर्थं गच्छतः ऊरुभ्यां संयोगं प्राप्नुतस्तौ अल्गौ वङ्क्षणौ ऊरुसंधी। वर्णलोप आर्षः। ताभ्याम् vअल्गाभ्यां vमित्रावरुणौ प्रीणयामि। vस्थूराभ्याम्। रलयोरभेदात् स्थूलाभ्यां नितम्बाधोभागाभ्याम् vआक्रमणं देवं प्रीणयामि। vकुष्ठाभ्याम्। 'कुष निष्कर्षे'। कुष्येते तौ कुष्ठौ। कूपकौ। आवर्तावित्यर्थः। ताभ्यां vबलं देवं प्रीणयामि ॥१॥(६)॥

इति सप्तविंशे षष्ठोऽनुवाकः ॥६॥

(सप्तमोऽनुवाकः।)

पू॒षणं॑ व॒नि॒ष्ठुना॑ऽन्धा॒हीन्त्स्थू॒लगु॒दया॑ स॒र्पान्
गुदा॑भिर्वि॒हृत॑ आ॒न्त्रैर॒पो व॒स्तिना॒ वृष॑णमा॒ण्डाभ्या॑म्।
वाजि॑न॒ꣳ शेपे॑न प्र॒जाꣳ रेत॑सा॒ चाषा॑न् पि॒त्तेन॑
प्र॒दरा॑न् पा॒युना॑ कू॒ष्माञ्छ॑कपि॒ण्डैः ॥१॥(७)॥

पू॒षण॑म्। व॒नि॒ष्ठुना॑। अ॒न्धा॒हीनित्य॑न्ध॒ऽअ॒हीन्। स्थू॒ल॒गु॒दयेति॑स्थू॒ल॒ऽगु॒दया॑। स॒र्पान्। गुदा॑भिः। वि॒हृ॒त इति॑ वि॒ऽहृ॒तः॑। आ॒न्त्रैः। अ॒पः। व॒स्तिना॑। वृष॑णम्। आ॒ण्डाभ्या॑म्। वाजि॑नम्। शेपे॑न। प्र॒जामिति॑ प्र॒ऽजाम्। रेत॑सा। चाषा॑न्। पि॒त्तेन॑। प्र॒द॒रानिति॑ प्र॒ऽद॒रान्। पा॒युना॑। कू॒ष्मान्। श॒क॒पि॒ण्डैरिति॑ श॒क॒ऽपि॒ण्डैः॥ द्विः ॥ १ ॥ (७)॥

आ - 'पूषणं वनिष्ठुना' इति। लिङ्गोक्तदेवत्यानि यजूंषि। vपूषणं vवनिष्ठुना आन्त्रेण प्रीणाति। vअन्धाहीन् देवताः vस्थूलगुदया प्रीणाति। vसर्पान् देवताः vगुदाभिः प्रीणाति। vविहृतः देवताः vआन्त्रैः प्रीणाति। vअपः देवताः प्रीणाति। vवस्तिना। वस्तिर्नाभेरधः प्रदेशः। vवृषणम्

२3. S3 पाठस्तु - पूषण° ... शकपिण्डैरिति for 'पूषणं वनिष्ठुना' इति।

देवताहोममन्त्राः]

Vआण्डाभ्याम् प्रीणाति। Vवाजिनं देवतां Vशेपेन प्रीणाति। Vप्रजां देवतां Vरेतसा प्रीणाति। Vचाषान् देवताः Vपित्तेन प्रीणाति। Vप्रदरान् देवताः Vपायुना प्रीणाति। Vकूश्मान् देवताः Vशकपिण्डैः शकृत्पिण्डै; प्रीणाति ॥ १० ॥

~~~~~~~~~~~~~~~~

अ - 'पूषणं वनिष्ठुना'। वनति संभजतीति वनिष्ठुः स्थूलान्त्रम्, तेन Vपूषणं देवं प्रीणयामि। "गुदं त्वपानं पायुर्ना" (अको २.६.७३) इत्यभिधानम्। स्थूला चासौ गुदा च। स्त्रीत्वं छान्दसम्। तया Vस्थूलगुदया। गुदस्य स्थूलभागेन। Vअन्धाहीन् अन्धसर्पान् प्रीणयामि। Vगुदाभिः स्थूलगुदव्यतिरिक्तैर्गुदभागैः Vसर्पान् प्रीणयामि। "अन्त्रं पुरीतत्" (अको २.६.६६) इत्यभिधानम्। 'अम् गतौ भजने शब्दे च' अस्मात् त्रप्रत्ययः। अमति भजत्यनेनान्नमित्यन्त्रम्। अन्त्रे भवा आन्त्राः; अन्त्रसंबन्धिनो मांसभागास्तैः, Vविहृतः देवान् प्रीणयामि। Vअपः Vवस्तिना। "वस्तिर्नाभेरधो द्वयोः" (अको २.६.७३) इत्यभिधानम्। वसति मूत्रं यस्मिन्निति वस्तिः। नाभेरधो वर्तमानं मूत्रपुटम्। तेन अपः देवताः प्रीणयामि। "मुष्कोऽण्डकोशो वृषणः" (अको २.६.७६) इत्यभिधानम्। अण्ड एव आण्डः। Vआण्डाभ्यां लिङ्गोभयपार्श्वस्थमांसपिण्डाभ्यां Vवृषणं देवं प्रीणयामि। Vशेपेन। "शिश्नो मेढ्रं मेहनशेफसी" (अको २.६.७६) इत्यभिधानात्। 'शित्र् निशाने'। शिनोति भगमिति शेपः। सान्तोऽदान्तश्च। शेपेन शिश्नेन Vवाजिनं प्रीणयामि। "शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च" (अको २.६.६२) इत्यभिधानम्। 'रिङ् स्रवणे'। रीयते स्रवतीति रेतो वीर्यम्। तेन Vरेतसा Vप्रजां प्रीणयामि। Vचाषान् Vपित्तेन। पतति संम्रते इति पित्तम्। धातुविशेषः। तेन चाषान् प्रीणयामि। Vप्रदरान् Vपायुना। पाति मलोत्सर्गमिति पायुर्गुदम्। उक्तातिरिक्तम्। तेन गुदतृतीयभागेन प्रदरान् प्रीणयामि। Vकूश्मान् Vशकपिण्डैः। "शको देशे नृपे विशि" इत्यभिधानात्। विशि विष्ठायामित्यर्थः। शकस्य विष्ठायाः पिण्डैः कूश्मान् प्रीणयामि ॥१॥

इति (सप्तविंशे) सप्तमोऽनुवाकः॥७॥

~~~~~~~~~~~~~~~~

(अष्टमोऽनुवाकः।)

इन्द्र॑स्य क्रो॒डोऽदि॑त्यै पाज॒स्यं॑ दि॒शां ज॒त्रवोऽदि॑त्यै भ॒सत्।
जी॒मूता॑न् हृदयौप॒शेना॒न्तरि॑क्षं पु॒रीतता॑ ॥१॥

~~~~~~~~~~~~~~~~

इन्द्र॑स्य। क्रो॒डः। अदि॑त्यै। पा॒जस्य॑म्। दि॒शाम्। ज॒त्रवः॑। अदि॑त्यै। भ॒सत्। जी॒मूता॑न्। हृ॒द॒यौ॒प॒शेन॑। अ॒न्तरि॑क्षम्। पु॒री॒तता॑। पु॒रि॒त॒तेति॑ पु॒रि॒ऽत॒ता॑ ॥ स्तिं ॥ १ ॥

~~~~~~~~~~~~~~~~

1. M4 om. **शेपेन**
17. M4 °**तृतीयेन** for °**तृतीयभागेन**

**आ** - 'इन्द्रस्य क्रोळः' इति। प्रतिमन्त्रं लिङ्गोक्तदेवत्यानि यजूंषि। vइन्द्रस्य देवतायाः vक्रोळः क्षुरविशेषः। vअदित्यै देवतायै vपाजस्यम्। अत्र वर्णव्यत्ययः। पादस्यम्। पादासनमित्यर्थः। vदिशां देवतानां vजत्रवः । vअदित्यै देवतायै vभसत्। vजीमूतान् देवताः vहृदयौपशेन प्रीणाति। vअन्तरिक्षं देवतां vपुरीतता सर्वनाडीभूतेन ॥ ११॥

**अ** - 'इन्द्रस्य क्रोळः'। पुनर्देवे षष्ठी। अङ्गे प्रथमा विभक्तिः। "न ना क्रोडं भुजान्तरम्" (अको २.६.७७) इत्यभिधानम्। क्रुड घनत्वे। क्रुडतीति क्रोडः। घनो वक्षो मध्यभागः। सः vइन्द्रस्य अस्तु। डस्य ळत्वं छान्दसम्। 'अदित्यै पाजस्यम्'। पाज इति बलनाम। पाजसे बलाय हितं vपाजस्यम्। बलकरमङ्गम्। यद्वा- पादा अस्यन्ते यस्मिन्निति पाजस्यम्; खुराग्रम्। तत् vअदित्यै अस्तु। 'दिशा' जत्रवः। "संधी तस्यैव जत्रुणी" (अको २.६.७८) इत्यभिधानात्। अंसकक्षयोः संधिर्जत्रु। पुंस्त्वमार्षम्। दिग्भ्यः vजत्रवः सन्तु। 'अदित्यै भसत्'। 'भस भर्त्सनदीप्त्योः'। बभस्ति दीप्यत इति vभसत्। लिङ्गाग्रम्। तत् vअदित्यै अस्तु। 'जीमूतान् हृदयौपशेन'। पुनर्देवे द्वितीया अङ्गे तृतीया। हृदये उपसिनोतीति हृदयौपसत्। हृदयस्थं मांसपिण्डम्। तेन vजीमूतान् देवान् प्रीणयति। vपुरीतता। पूर्यत इति पुरीतत् हृदयाच्छादकमन्त्रम्। "अन्त्रं पुरीतत्" (अको २.६.६६) इत्यभिधानम्। तेन vअन्तरिक्षं देवं प्रीणयति ॥ १॥

**नभं उदर्येण चक्रवाकौ मतंस्नाभ्यां दिवं वृक्काभ्यां गिरीन् प्लाशिभिः।**
**उपलान् प्लीह्ना वल्मीकान् क्लोमभिर्ग्लौभिर्गुल्मान् हिराभिः स्रवन्तीः।**
**ह्रदान् कुक्षिभ्याꣳ समुद्रमुदरेण वैश्वानरं भस्मना ॥२॥(८)॥**

नभः। उदर्येण। चक्रवाका इति चक्रऽवाकौ। मतंस्नाभ्याम्।
दिवम्। वृक्काभ्याम्। गिरीन्। प्लाशिभिरिति प्लाशिऽभिः।
उपलान्। प्लीह्ना। वल्मीकान्। क्लोमभिरिति क्लोमऽभिः।
ग्लौभिः। गुल्मान्। हिराभिः। स्रवन्तीः।
ह्रदान्। कुक्षिभ्यामिति कुक्षिऽभ्याम्। समुद्रम्। उदरेण।
वैश्वानरम्। भस्मना॥ त्रिः ॥ २॥(८)॥

1. S3 पाठस्तु - इन्द्रस्य ... पुरीततेति for 'इन्द्रस्य क्रोळः' इति
3. V2 vपसेन for vपशेन
5. M4 अङ्गेन for अङ्गे
12. M4 हृदिस्थं for हृदयस्थं

**आ** - 'नभ उदर्येण' इति। लिङ्गोक्तदेवत्यानि यजूंषि । Vनभः देवताम् Vउदर्येण प्रीणाति। Vचक्रवाकौ देवते Vमतस्नाभ्यां प्रीणाति। Vदिवं देवतां Vवृक्काभ्याम् अग्रमांसाभ्यां प्रीणाति। Vगिरीन् देवतां Vप्लाशिभिः प्रीणाति। Vउपलान् देवताः Vप्लीहा प्रीणाति। Vवल्मीकान् Vक्लोमभिः मस्तिष्कैः प्रीणाति। Vग्लौभिः Vगुल्मान् देवताः प्रीणाति। Vहिराभिः Vस्रवन्तीः देवताः प्रीणाति। Vहृदान् देवताः Vकुक्षिभ्यां प्रीणाति। Vसमुद्रं देवताम् Vउदरेण प्रीणाति। Vवैश्वानरं देवतां Vभस्मना प्रीणाति॥ १२॥

**अ - 'नभ उदर्येण' । 'उदरे भवमुदर्यम्, उदरस्थं मांसम्, तेन । Vनभः देवं प्रीणयति । "शरीरावयवाद्यत्" (पा ५.१.६) इति यत्प्रत्ययः । Vचक्रवाकौ देवौ Vमतस्नाभ्याम् । ग्रीवाऽधस्थितहृदयोभयपार्श्वस्थिताभ्यामस्थिभ्यां प्रीणयति ।V दिवं Vवृक्काभ्यां प्रीणयति । "वुक्काऽग्रमांसम्" ( अको २.६.६४ ) इत्यभिधानम् । 'वृक आदाने' । वृक्यते स्वादुतया गृह्यत इति वृक्का । अयं स्त्रीलिङ्गः इति क्षीरस्वामी । कुक्षिस्थौ मांसगोलकावाम्रफलाकृती वृक्काविति याज्ञिका वदन्ति । Vगिरीन् Vप्लाशिभिः प्रीणयति । प्रकर्षेणाश्नन्त्यन्नानीति प्लाशयः । शिश्नमूलनाड्यः । रलयोरैक्याल्लकारः । तन्नाडिद्वारैवान्नरसस्य देहे संचार इति सूदशास्त्रोक्तेः ।Vउपलान् Vप्लीहा प्रीणयति। "गुल्मस्तु प्लीहा पुंसि" (अको २.६.६६) इत्यभिधानम् । हृदयवामभागे शिथिलो मांसभागः फुप्फुससंज्ञः प्लीहा । नकारान्तोऽयम् । Vवल्मीकान् Vक्लोमभिः प्रीणयति । "तिलकं क्लोम" ( अको २.६.६५ ) इत्यभिधानम् । "उदर्यो जलाधारः हृदयदक्षिणप्रदेशः क्लोमा । वामप्रदेशः प्लीहा" इति क्षीरस्वामी । "क्लोमा गलनाड इति कर्काचार्यः । Vग्लौभिः Vगुल्मान् प्रीणयति । ग्लायन्ति श्राम्यन्तीति ग्लावो हृदयनाड्यः । Vहिराभिः Vस्रवन्तीः प्रीणयति । हरन्त्यन्नरसमिति हिरा अन्नवाहिन्यो नाड्यः । Vहृदान् Vकुक्षिभ्यां प्रीणयति । "पिचण्डकुक्षी जठरोदरं तुन्दम्" (अको २.६.७७) इत्यभिधानात् जठरस्य दक्षिणवामभागौ कुक्षी । Vसमुद्रम् Vउदरेण प्रीणयति । Vवैश्वानरं देवं Vभस्मना अश्वाङ्गोत्थेन प्रीणयति ॥ २॥**

**इति सप्तविंशे अष्टमोऽनुवाकः॥८॥**

1. S3 पाठस्तु - नभ उदर्येण ... भस्मनेति for 'नभ उदर्येण' इति
4-5. S3 om. हिराभिः ... उदरेण प्रीणाति
13. P2 M4 पुप्फस° for फुप्फुस°
16. M4 शाम्यन्ति for श्राम्यन्ति

(नवमोऽनुवाकः।)

**विधृ॑तिं नाभ्या॑ घृतꣳरसे॑नापो यू॒ष्णा**
**मरी॑चीर्विप्रुड्भिर्नी॑हारमू॒ष्मणा॑ शी॒नँ वस॑या प्रुष्वा॑ अश्रु॑भिः।**
**ह्रादुनी॑र्दूषिका॑भिर॒स्ना रक्षा॑ꣳसि चि॒त्राण्यङ्गै॒र्नक्ष॑त्राणि रू॒पेण॑**
**पृथि॒वीं त्वचा॑ जुम्ब॒काय॒ स्वाहा॑ ॥१॥९॥**

विधृ॑तिमिति॒ विऽधृ॑तिम्। नाभ्या॑। घृ॒तम्। रसे॑न। अ॒पः। यू॒ष्णा।
मरी॑चिः। वि॒प्रुद्भिरिति॑ वि॒प्रुट्ऽभिः॑। नी॒हा॒रम्। ऊ॒ष्मणा॑।
शी॒नम्। वस॑या। प्रु॒ष्वाः॑। अश्रु॑भि॒रित्यश्रु॑ऽभिः।
ह्रा॒दुनीः॑। दू॒षिका॑भिः। अ॒स्ना। रक्षा॑ꣳसि। चि॒त्राणि॑। अङ्गैः॑। नक्ष॑त्राणि। रू॒पेण॑।
पृ॒थि॒वीम्। त्व॒चा। जु॒म्बकाय॑। स्वाहा॑। ड्रैः ॥१॥(९)॥

**आ** - 'विधृतिं नाभ्या' इति। लिङ्गोक्तदेवत्यानि यजूंषि। [v]विधृतिं नाम देवतां [v]नाभ्या प्रीणाति। [v]घृतं देवतां [v]रसेन प्रीणाति। [v]अपः देवताः [v]यूष्णा उष्णरसेन प्रीणाति। [v]मरीचिः देवताः [v]विप्रुड्भिः प्रीणाति। [v]नीहारम् [v]ऊष्मणा प्रीणाति। [v]शीनं देवतां [v]वसया प्रीणाति। [v]प्रुष्वाः देवताः [v]अश्रुभिः प्रीणयामि। [v]ह्रादुनीः देवताः [v]दूषिकाभिः नेत्रजलैः प्रीणाति। [v]अस्ना 'रक्षांसि'। [v]रक्षांसि देवताः [v]अस्ना प्रीणयामि। [v]चित्राणि [v]अङ्गैः प्रीणयामि। [v]नक्षत्राणि देवताः [v]रूपेण प्रीणाति। [v]पृथिवीं देवतां [v]त्वचा प्रीणयामि। पृथिवीं त्वचा स्वाहा इति सर्वत्रानुषङ्गः कार्यः। एतान्युक्तान्यश्वाङ्गदेवतानाम् अश्वाङ्गनामानि च निगमनिरुक्तनिघण्ट्वादिप्रसिद्ध्या ज्ञातव्यानि। अवभृथे उत्तमामाहुतिं जुहोति [v]जुम्बकाय [v]स्वाहा इति। वरुणदेवत्या द्विपदा। ओदन्यो मुण्डिभऋषिः। ब्रह्महत्यायाः प्रायश्चित्तादौ विनियोगः। [v]जुम्बकाय वरुणाय स्वाहेति सर्वं हुतमस्तु। "वरुणो वै जुम्बकः" (शब्रा १३.३.६.५) इति श्रुतेः। य एनां चाघनाशिनीमन्तर्जले जपेत् स सर्वाघविनिर्मुक्तो भवति॥ १३ ॥

11. S3 **पाठस्तु - विधृति ... स्वाहेति** for **'विधृतिं नाभ्या' इति।**
12. V2 **पूष्णा** for **यूष्णा**
18. S3 **उत्तमा** for **उत्तमाम्**

देवताहोममन्त्राः ]

अ - 'विधृतिं नाभ्या'। Vनाभ्या उदरस्थग्रन्थिना Vविधृतिं देवं प्रीणयामि। 'घृतं रसेन'।

रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः ।
शृङ्गारादिरसे वीर्ये देहधात्वम्बुपारदे ॥ इति विश्वकोशात् ।

Vरसेन वीर्येण धातुविशेषेण वा Vघृतं देवं प्रीणयामि। Vअपः Vयूष्णा प्रीणयामि। यूषः क्वथितो रसः। "पद्दन्" (पा. ६.१.६३) इत्यादि(ना) यूषन्नादेशः। Vयूष्णा पक्वान्नरसेन Vअपःदेवताः प्रीणयामि। Vमरीची Vविप्रुड्भिः प्रीणयामि। "पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियः" (अको १.१०.६) इत्यभिधानात् विप्रुषो वसाबिन्दवः। Vनीहारम् Vऊष्मणा प्रीणयामि। 'ऊष्माणस्तु निदाघोष्णग्रीष्माः बाष्पसहा अपि' इति विश्वकोशात् । ऊष्मणा शरीरगतेनोष्णेनेत्यर्थः । Vशीनं Vवसया प्रीणयामि । "मेदस्तु वसा वपा" (अको २.६.६४) इत्यभिधानात् । वस्ते मांसमिति वसा । "शुद्धमांसस्य यः स्नेहः सा वसेत्यभिधीयते" इति वैद्यकम् । वसया मांसस्नेहेनेत्यर्थः ।Vप्रुष्वा Vअश्रुभिः प्रीणयामि । अश्रुभिर्नेत्राम्बुभिः। Vह्रादुनीः Vदूषिकाभिः प्रीणयामि । नेत्रमलैः । "दूषिकानेत्रयोर्मलम्" (अको २.६.६७) इत्यभिधानम् । Vअस्ना Vरक्षांसि प्रीणयामि । अस्ना असृजा । "रुधिरेऽसृग्लोहितास्त्ररक्तक्षतजशोणितम्" (अको २.६.६४) इत्यभिधानम् । अस्यते न सृज्यते वा इत्यसृक् रुधिरम् । "पद्दन्°" (पा ६.१.३३) इत्यसृज असन्नादेशः । Vचित्राणि Vअङ्गैः प्रीणयामि । अङ्गैः पूर्वानुक्तावयवैः । Vनक्षत्राणि Vरूपेण प्रीणयामि । "रूपं स्वभावे सौन्दर्ये नाणके पशुशब्दयोः" ( द्र अको १.५.७ ) इति विश्वकोशोक्तेः । Vरूपेण सौन्दर्येण Vपृथिवीं Vत्वचा प्रीणयामि । त्वचा चर्मणा पृथिवीं देवीं प्रीणयामि । स्वाहेत्येवंरूपैर्मन्त्रैः तत्तदश्वावयवत्वेन कल्पितमाज्यं जुहुयात् । अत्र अग्निं᳟हृदयेनाशनिं᳟ हृदयाग्रेण" इत्यादि "द्यावापृथिवीभ्यां᳟ स्वाइत्यन्ता अप्याज्याहुतीर्जुहुयात् । "विमुखाच्च परेभ्यः" (काश्रौ २०.८.५) इति कात्यायनोक्तेः । विमुखसंज्ञैषामनुक्रमणिकातो (का सर्वा ४.८) ज्ञेया ।

कात्यायनः - "अवभृथेष्ट्यन्तेऽप्सु मग्नस्य पिङ्गलखलतिविक्लिधशुक्लस्य मूर्धनि जुहोति जुम्बकाय स्वाहेति" (काश्रौ २०.८.१६)। अवभृथयागान्ते जले मग्नस्य पिङ्गाक्षस्य खल्वाटस्य दन्तुरस्य अतिगौरस्यैवंविधस्य पुंसो मूर्धनि सकृद्गृहीतमाज्यमध्वर्युरुत्थितो जुहोति । "जुम्बकाय स्वाहा" इति । वरुणदेवत्या द्विपदा यजुः । औदन्यमुण्डिभदृष्टा । ब्रह्महत्यादिप्रायश्चित्ते च विनियुक्ता । यथाह हारीतः -

"जम्बका नाम गायत्री वेदे वाजसनेयके ।
अन्तर्जले सकृज्जप्त्वा ब्रह्महत्यां व्यपोहति" ॥ इति।

'जुबि निरसने' । वुन् । जुम्बति पापानि निरस्यतीति Vजुम्बकः वरुणः।
"वरुणो वै जुम्बकः" (शब्रा १३.३.७.५) इति श्रुतेः । तस्मै 'जुम्बकाय स्वाहा' सुहुतमस्तु॥ १॥

इति (सप्तविंशे) नवमोऽनुवाकः ॥९॥

8. M4 ग्रीवाः for ग्रीष्माः

(दशमोऽनुवाकः।)

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेकं आसीत्।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥१॥
यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम॥२॥

हिरण्यगर्भः सम् ॥ य॥ - यः प्राणतः ॥ य ॥२॥

आ - 'हिरण्यगर्भः' इति। चतस्रः कायाः (? कदेवत्याः)
त्रिष्टुभः ऋषिर्हिरण्यगर्भः ॥१४॥
'यः प्राणतः' इति। द्वौ व्याख्यातौ ॥१५॥

अ - 'हिरण्यगर्भः सम्'। चतस्रः कदेवत्याः त्रिष्टुभः प्रजापतिसुतहिरण्यगर्भदृष्टाः प्राजापत्यपशूनामश्वादीनां याज्यापुरोनुवाक्याः। तत्र 'हिरण्यगर्भः' 'यः प्राणतः' - इति द्वे ऋचौ पञ्चविंशे व्याख्याते ॥१-२॥

यस्येमे हिमवन्तो महित्वा यस्य समुद्रꣳरसया सहाहुः।
यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ॥३॥

यस्य । इमे। हिमवन्त इति हिमऽवन्तः। महित्वेति महिऽत्वा।
यस्य। समुद्रम्। रसया। सह। आहुः।
यस्य। इमाः। प्रदिश इति प्रऽदिशः। यस्य ।बाहू इति बाहू।
कस्मै । देवाय। हविषा।विधेम ॥धों॥३॥

आ - 'यस्येमे' इति। ᵛयस्य कशब्दवाच्यस्य प्रजापतेः हिमवत्प्रभृतयः शैलादयः पर्वताः ᵛमहित्वा माहात्म्यम्। महित्वं महाभाग्यं विभूतिश्च। 'यस्य समुद्रं रसया सहाहुः'। ᵛयस्य संबन्धिनं

7. S3 पाठस्तु - हिरण्यगर्भः ... विधेमेति for 'हिरण्यगर्भः', इति; S3 कार्याः for कायाः
8. S3 पाठस्तु - यः प्राणो ... विधेमेति for 'यः प्राणतः' इति; S3 om. द्वौ व्याख्यातौ
18. S3 तृतीयपाठस्तु - स्येमे ... विधेमेति for 'यस्येमे' इति ।
19. S3 भूतिश्च for विभूतिश्च ।

अश्वादीनां याज्यापुरोऽनुवाक्याः]

$^{v}$समुद्रं $^{v}$रसया $^{v}$सह। रसतेः शब्दकर्मण एतद्रूपम्। रसा नाम नदी वाक्प्रवाहरूपा। तया रसया सह इमां विभूतिम् $^{v}$आहुः। पश्यन्त इव द्विपदः। यद्वा- यस्य संबन्धिनं समुद्रं समुद्रकार्यतया सहितं करणरूपं समुद्रं जगत्कार्यसहितं स्थूलकारणरूपं समुद्रम्। "एतस्माद्वै समुद्रात् सर्वे देवाः सर्वाणि भूतानि समुद्द्रवन्ति" (शब्रा १४.२.२.२) इति समुद्रो मूलकारणम्। तं समुद्रं रसया शब्दविद्यया सह स्थितं नामरूपयोर्वाच्यवाचकभावेन सदा साहित्यप्रसिद्धेश्च। अत एवंविधं समुद्रम् आहुः श्रुतयः। 'यस्येमाः प्रदिशो बाहू'। $^{v}$यस्य $^{v}$इमाः $^{v}$प्रदिशः $^{v}$बाहू विराड्रूपाभिप्रायेण। तस्यै प्रजापतये $^{v}$देवाय देवनादिगुणयुक्ताय $^{v}$हविषा $^{v}$विधेम हविर्दध्म इति॥ १६॥

~~~~~~~~~~~~~~~~~~~~

अ - 'यस्येमे'। वयं $^{v}$कस्मै प्रजापतये $^{v}$देवाय $^{v}$हविषा $^{v}$विधेम। द्वितीयार्थे तृतीया। हविर्ददुमः। कशब्दस्य सर्वनामत्वमार्षम्। "प्रजापतिर्वैकः" (शब्रा १३.५.३.३) इति श्रुतेः। $^{v}$इमे $^{v}$हिमवन्तः बहुवचनमाद्यर्थे। "अर्धर्चाः पुंसि" (पा २.४.३१) इतिवत्। हिमाचलप्रभृतयः पर्वताः। प्रथमा द्वितीयार्थे। "सुपां सुपो भवन्ति" इति वचनात्। इमान् हिमवत्प्रभृत्यद्रीन् $^{v}$यस्य प्रजापतेः $^{v}$महित्वा महित्वम्। विभक्तेः पूर्वसवर्णदीर्घः। महिमानमाहुः। बुधा इति शेषः। $^{v}$रसया पृथिव्याः $^{v}$सह सहितान्। "भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिरा" (अको २.१.२) इत्यभिधानात्। यद्वा- "रसा नदी। रसतेः शब्दकर्मणः" (निरु१२.२५) इति यास्कोक्तेः। रसया जलात्मकया नद्या। जातावेकवचनम्। नदीभिः सहवर्तमानं -$^{v}$समुद्रं च $^{v}$यस्य महित्वमाहुः। इमा प्रदिशः पूर्वाद्याः प्रकृष्टा दिशश्च यस्य महित्वमाहुः। $^{v}$यस्य $^{v}$बाहू भुजौ जगद्रक्षकावित्याहुः। यद्वा- रक्षकाणां पृथ्वादिराज्ञां बाहू यस्य महित्वमाहुरिति यथावस्थितेनान्वयः।

यद्यद् विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम्॥ (भगी १०.४१) इति भगवद्वचनात्॥३॥

~~~~~~~~~~~~~~~~~~~~

य आ॑त्म॒दा ब॑ल॒दा यस्य॒ विश्व॑ उ॒पास॑ते प्र॒शिषं॒ यस्य॑ दे॒वाः।
यस्य॑ छा॒याऽमृतं॒ यस्य॑ मृ॒त्युः कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम॥४॥(१०)॥

~~~~~~~~~~~~~~~~~~~~

यः। आ॒त्म॒दा इत्या॑त्म॒ऽदाः। ब॒ल॒दा इति॑ ब॒ल॒ऽदाः।
यस्य॑। विश्वे॑। उ॒पास॑त॒ इत्यु॑प॒ऽआस॑ते। प्र॒शिष॒मिति॑ प्र॒ऽशिष॑म्।
यस्य॑। दे॒वाः। यस्य॑। छा॒या। अ॒मृत॑म्। यस्य॑। मृ॒त्युः।
कस्मै॑। दे॒वाय॑। ह॒विषा॑। वि॒धे॒म॥ नों ॥४॥(१०)॥

~~~~~~~~~~~~~~~~~~~~

आ - 'य आत्मदाः' इति। vयः vआत्मदाः स्वतः प्रसिद्धाः। आत्मानं ददातीति आत्मदाः। प्रत्यगात्मभूते श्रीभगवति भक्तिज्ञानसंपन्नानां पुंसाम् आत्मदाः सायुज्यप्रदः। अथ सगुणोपासकानां सकामानां महात्मनां vबलदाः ऐश्वर्यादिबलप्रदः। 'यस्य विश्व उपासते प्रशिषम्'। vयस्य vप्रशिषं प्रशासनम् अनुशासनम् आज्ञा श्रुतिस्मृतिलक्षणं च vविश्वे मनुष्याः vउपासते। आह च -

यस्य ज्ञेयावधिज्ञानं शिष्यावधि च शासनम्।
कार्यावधि च कर्तृत्वं स स्वयंभूः पुनातु नः॥

किं च - vयस्य परमेश्वरस्य vछाया स्वरूपा श्रीभगवत्स्वरूपाकाराकारिता सम्यग्विद्या vअमृतम्। अमृतस्य मोक्षस्य साधनम्। vयस्य vमृत्युः। तद्विशिष्टज्ञानाभावो मृत्युः मरणादिरूपः संसारः। vकस्मै तस्मै परब्रह्मरूपाय प्रजापतये vहविषा हविः vविधेम हविर्विदध्म इति। "ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापि उपयन्ति" (बृहदारण्यको ४.४.१४) इति श्रुतेः॥ प्राजापत्यानां पशूनां याज्यानुवाक्याः ॥१६॥

~~~~~~~~~~~~~~~~~~~~

अ - 'यः आत्मदाः'।। vयः आत्मानं ददाति इति। vआत्मदाः। उपासकानां सायुज्यप्रदः। यश्च। vबलदाः देवादीनां जगद्रक्षणादिसामर्थ्यदाता। तथा vविश्वे सर्वे मनुष्याद्याः प्राणिनः । vयस्य vप्रशिषं प्रकृष्टशासनम्। v उपासते। तथा देवाः ब्रह्माद्या अपि । यस्य प्रशिषमुपासते। 'शासु अनुशिष्टौ'। अस्मात् क्विप्प्रत्यये "शास इदङ्हलोः" (पा ६.४.३४) इति शास्तेरच इकारे सस्य षत्वे च कृते रूपसिद्धिः। उक्तं हि -

"यस्य ज्ञेयावधि ज्ञानं शिष्यावधि च शासनम्।
कार्यावधि च कर्तृत्वं स स्वयंभूः पुनातु वः॥" इति।

"भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः" (तै उ २.८) इत्यादिश्रुतिश्च । किंच- vयस्य v छाया आश्रयणं ज्ञानपूर्वमुपासनम् । vअमृतं मुक्तिहेतुः साध्यसाधनयोरभेदव्यपदेशः । किं च - छायेत्यनुवर्तते । यस्य छाया तमः । तद्विषयकमज्ञानमिति यावत् । । vमृत्युः संसारहेतुः । "तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय" (श्वेताश्व ३.८) "तरति शोकमात्मवित्।"(छाउ ७.१.३) । "ये तद्विदुरमृतास्ते भवन्त्यथोत्तरे मृत्युमेवापि यन्ति" ( बृहदा उदा. ४.४.१४ ) इत्यादि श्रुतेः । एतादृशाय "कस्मै कं ब्रह्म" ( छांउ ४.१०.४) इति श्रुतेः । कशब्दः सुखादिवचनः । ज्ञानानन्दस्वरूपाय । vदेवाय vहविषा vविधेम ॥४॥

इति (सप्तविंशे) दशमोऽनुवाकः॥१०॥

~~~~~~~~~~~~~~~~~~~~

1. S3 पाठस्तु - य आत्मदा विधेमेति for 'य आत्मदाः' इति ।
13. M4 मनुष्याः for मनुष्याद्याः
15. M4 क्तिच् for क्विप्

पुरोडाशपशूनां याज्यानुवाक्याः ]

(एकादशोऽनुवाकः।)

**आ नो॑ भ॒द्राः क्रत॑वो यन्तु वि॒श्वतोऽद॑ब्धासो॒ अप॑रीतास उ॒द्भिद॑ः।**
**दे॒वा नो॒ यथा॒ सद॒मिद्वृ॒धे अस॒न्नप्रा॑युवो रक्षि॒तारो॑ दि॒वेदि॑वे ॥१॥**

---

आ। न॒ः। भ॒द्राः। क्रत॑वः। य॒न्तु। वि॒श्वत॑ः।
अद॑ब्धासः। अप॑रीतास॒ इत्यप॑रिऽइतासः। उ॒द्भिद॒ इत्यु॒त्ऽभिद॑ः।
दे॒वाः। न॒ः। यथा॑। सद॑म्। इत्। वृधे॑। अस॑न्।
अप्रा॑युव॒ इत्यप्र॑ऽआयुवः। र॒क्षि॒तार॑ः। दि॒वेदि॑व॒ इति॑ दि॒वेऽदि॑वे॥ त्यौं ॥१॥

---

**आ** - 'आ नो भद्राः' इति। याज्यानुवाक्या दशर्चः वैश्वदेवी जगत्यः गौतमः। 'आ नो भद्राः क्रतवो यन्तु'। vनः अस्माकं vभद्राः। 'भदि कल्याणे'। भन्दनीयाः स्तुत्याः भद्राः। vक्रतवः यज्ञाः तदर्थसंकल्पा वा। vविश्वतः सर्वतः यन्तु vआयन्तु आगच्छन्तु। vअदब्धासः। दब्धातिर्हिंसार्थः। अदब्धाः अनुपहिंसिताः। v अपरीतासः। 'इण् गतौ'। न परीताः अपरिगताः। केनचिदप्यपरिज्ञाताः। vउद्भिदः। भिदिर् विदारणे'। उद्भेत्तारः प्रकटीकर्तारः। अन्येषां यज्ञक्रतूनां संकल्पानां वा उद्भिदः। क्रतव आयन्त्विति संबन्धः। किं च - 'देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे'। अस्माकं vदेवाः इत्थमेव vअसन् स्युः। भूयासुरिति संबन्धः। कथमिति। vदिवेदिवे अहन्यहनि प्रतिदिनम्। सर्वदा vनः अस्माकं vसदम् vइत्। सदैव येन प्रकारेण vरक्षितारः भवन्ति। vयथा इति इवार्थे। vवृधे vनः अस्माकं वर्धनाय। vअप्रायुवः अप्रमाद्यन्तः प्रमादमकुर्वाणाः सन्तः। रक्षितारः असन् भूयासुरिति ॥१८॥

---

**अ-'आ नो भद्राः'। वैश्वदेवपशुवपापुरोडाशपशूनां याज्यानुवाक्या इमा दश ऋचो विश्वेदेवदेवत्या गौतमदृष्टाः। तत्राद्याः पञ्च जगत्यः। vक्रतवः यज्ञाः संकल्पा वा vनः अस्मान् प्रति vआ vयन्तु आगच्छन्तु। यज्ञकर्तारः सम्यक्संकल्पा वा वयं भवेमेत्यर्थः। कीदृशाः क्रतवः। vभद्राः भन्दनीया। 'भदि कल्याणे'। कल्याणकारिणः। vविश्वतः vअदब्धासः सर्वतोऽनुपहिंसिताः निर्विघ्ना इत्यर्थः। "आज्जसेरसुक्" (पा ७.१.५०)। vअपरीतासः। न परीताः अपरीताः। अपरिगताः केनापि न ज्ञाताः। फलानुमेया इत्यर्थः। इणगतावित्यस्मात् क्तः। ये गत्यर्थास्ते ज्ञानार्थाः। vउद्भिदः। उद्भिदन्ति प्रकटयन्ति ते उद्भिदः। यज्ञान्तराणां प्रकटीकर्तारः। किं च। vयथा येन प्रकारेण vदेवाः vनः अस्माकं सदम् vइत् सदैव वृधे वृद्ध्यै संपत्तये vअसन् भवन्ति। तथा क्रतवो न आयान्त्विति पूर्वेणान्वयः। सदमित्यव्ययं सदार्थे। vदेवाः कीदृशाः। vअप्रायुवः। प्रकर्षेण आयुवन्ति प्रमाद्यन्ति ते प्रायुवः। यौतेः क्विप्। तुगागमाभावः आर्षः। तादृशा न ते प्रायुवः, अनलसाः। vदिवेदिवे। दिवशब्दो दिनवचनः। दिनेदिने प्रत्यहं vरक्षितारः पालकाः॥१॥**

---

8. S3 पाठस्तु - आ नो... दिवेदिवे इति for 'आ नो भद्राः' इति
12. S3 om प्रकटीकर्तारः
17. S3 om. इति
27. M4 °वचनम् for °वचनः

[पुरोडाशपशूनां याज्यानुवाक्याः

देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो नि वर्तताम्।
देवानां सख्यमुप सेदिमा वयं देवा न आयुः प्र तिरन्तु जीवसे ॥२॥

देवानाम्। भद्रा। सुमतिरिति सुऽमतिः। ऋजूयताम्। ऋजुयतामित्यृजुऽयताम्
देवानाम्। रातिः। अभि। नः। नि। वर्तताम्।
देवानाम्। सख्यम्। उप। सेदिम। वयम्।
देवाः। नः। आयुः। प्र। तिरन्तु। जीवसे ॥ ग्राः ॥ २ ॥

आ - 'देवानां भद्रा सुमतिर्ऋजूयताम्' इति। ऋजुगामिनां ये यजमानस्य ऋजुभावं कर्तुं कामयन्ते ते देवाः ऋजूयन्तः। तेषां च $^v$ऋजूयताम् ऋजुगामिनां $^v$देवानां $^v$भद्रा कल्याणानि कार्याणि $^v$सुमतिः कल्याणमतिः। 'अभि नो नि वर्तताम्'। $^v$नः अस्मान् $^v$अभि प्रति आभिमुख्येन। निशं $^v$वर्तन्ताम्। $^v$देवानां $^v$रातिः। 'रा दाते'। रातिः दानं दानगुणः। नः अस्मान् अभितरां $^v$नि वर्तताम्। एवं लब्धगुणा यजमानाः $^v$वयं $^v$देवानां $^v$सख्यं सखिभावं सहैव स्थानत्वम् $^v$उप $^v$सेदिम प्राप्नुयाम। 'शद्लृविसरणगत्यवसादनेषु'। 'देवा नः'। ते $^v$देवाः $^v$नः देवभक्तानामस्माकम् $^v$आयुः समग्रमायुष्यं $^v$प्र $^v$तिरन्तु प्रयच्छन्तु। $^v$जीवसे बहुकालं जीवनाय ॥ १९ ॥

अ - 'देवानां भद्रा'। $^v$भद्रा कल्याणकारिणी $^v$देवानां $^v$सुमतिः शोभना बुद्धिः $^v$नः अस्मान् प्रति $^v$अभि $^v$नि वर्तताम् अस्मदाभिमुखी भवतु। कीदृशानां देवानाम्? $^v$ऋजूयताम्। दीर्घश्छान्दसः। ऋजु अवक्रं, यन्ति गच्छन्ति ते ऋजुयन्तः तेषाम्। ऋजूपपदादिणः शतृप्रत्ययः। अवक्रगामिनाम्। यद्वा - ऋजुमवक्रं साधुं यजमानं कामयन्ते ते ऋजूयन्ति। "सुप आत्मनः क्यच्" (पा ३.१.८)। ऋजूयन्तीत्यृजूयन्तस्तेषाम्। क्यजन्ताच्छतृ। साधुं कामयमानानामित्यर्थः। किं च - $^v$देवानां $^v$रातिः दानम्। रा दाने अस्मात् क्तिन्। $^v$नः अस्मान् अभि नि वर्तताम्। देवा अस्मभ्यम् इष्टं ददत्वित्यर्थः। देवेभ्यो लब्धाऽभिलाषा $^v$वयं $^v$देवानां $^v$सख्यं मैत्रीम् $^v$उप $^v$सेदिम प्राप्नुयाम। सदेर्लिटि उत्तमे बहुवचनम्। संहितायां दीर्घ आर्षः। $^v$देवाः $^v$नः अस्माकं सखीनां $^v$जीवसे जीवितुम्। तुमर्थे सेन्प्रत्ययः। $^v$आयुः $^v$प्र $^v$तिरन्तु वर्धयन्तु ॥२॥

7. S3 पाठस्तु - देवानां ... जीवस इति for 'देवानां ... ऋजूयताम्' इति।

पुरोडाशपशूनां याज्यानुवाक्याः]

**तान् पूर्व॑या नि॒विदा॑ हूमहे व॒यं भगं॑ मि॒त्रमदि॑तिं॒ दक्षं॑म॒स्रिधं॑म्।**
**अ॒र्य॒मण॒ꣳ वरु॒ण॒ꣳ सोमं॑म॒श्विना॒ सर॑स्वती नः सु॒भगा॒ मय॑स्करत् ॥३॥**

तान्। पूर्व॑या। नि॒विदेति॑ नि॒ऽविदा॑। हू॒म॒हे॒। व॒यम्।
भग॑म्। मि॒त्रम्। अदि॑तिम्। दक्ष॑म्। अ॒स्रिध॑म्।
अ॒र्य॒मण॑म्। वरु॑णम्। सोम॑म्। अ॒श्विना॑।
सर॑स्वती। नः॒। सु॒भगेति॑ सु॒ऽभगा॑। मयः॑। क॒र॒त्॥ द्व्यौं॥३॥

**आ** - 'तान् पूर्वया निविदा'। निविच्छब्दो वाग्वचनः। vवयं यजमानाः कथं vतान् देवान् vपूर्वया अनादिसिद्धया अकृत्रिमरूपया स्वयंभुवा vनिविदा वेदलक्षणया वाचा vहूमहे आह्वयामः। तान् देवान् पृथक् पृथक् विशिनष्टि। vभगं vमित्रं देवम् vअदितिं देवताम्। दक्षयतीति दक्षस्तम्। vअस्रिधम् अमृतसद्भावम्। अर्यम्णो विशेषणम्। vअर्यमणं देवम्। vवरुणं देवम्। vसोमं देवम्। vअश्विना अश्विनौ हूमह इति संबंधः। vसरस्वती vनः vसुभगा समग्रैश्वर्यादिगुणयुक्ता या सरस्वती। vमयः सुखं vकरत् सदा सुखं करोति। तामपि हूमह इति संबंधः ॥२०॥

**अ - 'तान् पूर्वया'। vपूर्वया प्राचीनया अकृत्रिमया। v निविदा वेदरूपया वाचा vवयं v तान् प्रसिद्धान् देवान् vहूमहे आह्वयामः। निविच्छब्दस्त्रयीवचनः। तान् कानित्यत आह- vभगं vमित्रम्। vअदितिं देवमातरम्। vदक्षं प्रजापतिम्। vअर्यमणम्। vवरुणं vसोमम् vअश्विना अश्विनौ एतान्। 'अस्रिधम्' इति भगादीनां विशेषणम्। न स्रेधते न च्योतते सोऽस्रित्। तम् vअस्रिधम् अमरत्वेन अच्युतसद्भावम्। किं च - शोभनं भगं भाग्यं यस्याः सा vसुभगा भजनीया vसरस्वती भगादिसहिता सती vनः अस्माकं vमयः vकरत्। मय इति सुखनाम। सुखं करोतु। लिङर्थे लिट्। "लेटोऽडाटौ" (पा ३.४.९४), "इतश्च लोपः परस्मैपदेषु" (पा ३.४.९७) इति इकारलोपः ॥३॥**

7. S3 पाठस्तु - तान्... करदिति for तान् पूर्वया निविदा
8. V2 हुवेम for हूमहे
15. S3 om अर्यमणम्

**तन्नो वातो मयोभु वातु भेषजं तन्माता पृथिवी तत् पिता द्यौः।**
**तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतं धिष्ण्या युवम्॥४॥**

~~~~~~~~~~~~~~~~~~

तत्। नः। वातः । मयोभ्विति मयःऽभु। वातु। भेषजम्।
तत्। माता। पृथिवी। तत्। पिता। द्यौः।
तत्। ग्रावाणः। सोमसुत इति सोमऽसुतः। मयोभुव इति मयःऽभुवः।
तत्। अश्विना। शृणुतम्। धिष्ण्या। युवम्॥ ङ्गः॥ ४॥

~~~~~~~~~~~~~~~~~~

आ - 'तन्नः' इति। 'तन्नो वातो मयोभु वातु भेषजम्'। Vतत्, यत् Vमयोभु सुखभावकं Vभेषजम् औषधं तत् Vभेषजं Vवातः वायुः Vवातु। Vनः अस्माकं वातु अनवरतं नयतु। वा गतिबन्धनयोः। Vतत् Vमाता। Vतत् औषधं निर्मात्री Vपृथिवी अनुवातु अनुगृह्णातु। Vतत् पिता Vद्यौः। तत् Vभेषजं पिता नः अस्माकं पालकः पिता द्यौः द्युलोकश्च अनुगृह्णातु। Vतत् Vग्रावाणः तद्भेषजं Vसोमसुतः सोमाभिषवकारिणः Vमयोभुवः सुखस्य भावयितारः ग्रावाणः अश्मादिरूपाः अनुगृह्णन्तु। 'तद् अश्विना शृणुतम्'। तत् भेषजम्। Vअश्विनौ Vशृणुतम्। श्रुत्वा चानुगृह्णीतम्। 'धिष्ण्या युवम्'। धिष्ण्यदेवते Vयुवं युवामश्विनौ शृणुतम्। श्रुत्वा च भेषजमनुगृह्णीतम्॥ २१॥

~~~~~~~~~~~~~~~~~~

**अ - 'तन्नः' । Vवातः वायुर्देवः Vनः अस्माकं Vभेषजं हितं यथा स्यात् तथा Vवातु । वा गतिबन्धनयोः । लोट् । प्रवातु । अनुगृह्णात्वित्यर्थः । किं भूतं भेषजम्? Vमयोभु । मयः सुखंभवति यस्मात् तत् मयोभुः । तथा Vमाता जगन्निर्मात्री Vपृथिवी Vतत् भेषजं वातु ददातु । धातोरनेकार्थत्वात् । तथा Vपिता पालकः Vद्यौः लोकः Vतत् वातु । तथा सोमं सुन्वन्तीति Vसोमसुतः सोमाभिषवकारिणः Vमयोभुवः सुखस्य दातारः Vग्रावाणः Vतत् भेषजं वान्तु । Vअत्र पृथिव्यादीनां चेतनव्यापाराभिमानिव्यपेक्षया हे Vअश्विना, अश्विनौ युवां Vधिष्ण्या धिष्ण्यौ अस्मद्धारकौ सन्तौ तत् वादिभ्यो भेषजप्रार्थनं Vशृणुतम् । युवामपि हितं प्रयच्छतमित्यर्थः॥४॥**

~~~~~~~~~~~~~~~~~~

13. S3 om. 'धिष्ण्या युवम्

पुरोडाशपशूनां याज्यानुवाक्याः ]

**त॒मीशा॑न॒ं जग॑तस्त॒स्थुष॒स्पति॑ं धिय॑ंजि॒न्वमव॑से हूमहे व॒यम्।**
**पू॒षा नो॒ यथा॒ वेद॑सा॒मस॑द्वृ॒धे र॑क्षि॒ता पा॒युरद॑ब्धः स्व॒स्तये॑॥५॥**

तम्। ईशा॑नम्। जग॑तः। त॒स्थुष॑ः। पति॑म्।
धि॒यं॒जि॒न्वमिति॑ धि॒य॒म्ऽजि॒न्वम्। अव॑से। हू॒म॒हे॒। व॒यम्।
पू॒षा। न॒ः। यथा॑। वेद॑साम्। अस॑त्। वृ॒धे।
र॒क्षि॒ता। पा॒युः। अद॑ब्धः। स्व॒स्तये॑॥ ॐ ॥५॥

आ - 'तमीशानम्' इति। [v]जगतः जङ्गमस्य [v]तस्थुषः स्थावरस्य स्थावरजङ्गमात्मकस्य जगतः [v]ईशानम्। 'ईश ऐश्वर्ये'। ईशानधर्मयुक्तमीश्वरं जगतः प्रतिपालकम्। [v]धियंजिन्वम्। जिन्वतिः प्रीणनार्थः। छान्दसं पदम्। धियं जिन्वतीति धियंजिन्वस्तं [v]धियंजिन्वम् धिया बुद्ध्या संकल्पमात्रेण जिन्वति प्रीणातीति धियंजिन्व इति वा। यद्वा- धिया कर्मणा जिन्वतीति तम्। ब्रूहि। प्रीणनकरमीशानं[v]वयं [v]हूमहे। [v]अवसे अवनाय तर्पणाय। किंच– 'पूषा नो यथा[v]वेदसामसद्वृधे'। [v]नः अस्माकं [v]वेदसां वेदान्तं धनानां वा [v]वृधे वर्धनाय च। अतिवृद्ध्यर्थं [v]यथा येन प्रकारेण [v]पूषा पोषकः [v]असत् स्यात् तथा मे 'रक्षिता पायुः' अदब्धः केनाप्यनुपहिंसितः सन् [v]पायुः विशेषतः पाता अस्माकं च [v]रक्षिता भव। [v]स्वस्तये अविनाशाय। एवंविधो यस्तमीशानम् 'अवसे हूमहे' इति संबन्धः॥ २२॥

**अ - 'तमीशानम्'। [v]वयं [v]तं प्रसिद्धम् [v]ईशानं रुद्रं देवम् [v]अवसे रक्षितुं [v]हूमहे आह्वयामः। कीदृशं तम्? [v]जगतः जङ्गमस्य [v]तस्थुषः स्थावरस्य भूतग्रामस्य [v]पतिं पालकम्। धियं बुद्धिं जिन्वति प्रीणयति अतः करणमलनिरासेनेति धियंजिन्वस्तं धियंजिन्वम्। अलुक्समासः। जिन्वतिः प्रीणनार्थः। [v]यथा येन प्रकारेण [v]पूषा पूर्णो देवः [v]नः अस्माकं सदमित् सदैव [v]वृधे वृद्ध्यै। 'वृधु वर्धने'। अस्माद् भावे क्विप्। [v]असत् भवेत्। कीदृग्वपुषा? [v]वेदसाम्। वेद इति धननाम। धनानां ज्ञानानां वा [v]रक्षिता [v]पायुः पुत्रादिपालकः। पातेरुप्रत्यये "आतो युक्चिण्कृतोः" (पा ७.३.३३) इति युगागमः। [v]अदब्धः। 'दम्भु रोधने'। केनाप्यनुपहिंसितः। [v]स्वस्तये कल्याणाय च भवेत् ॥५॥**

7. S3 **पाठस्तु - तमीशानं ... स्वस्तय इति** for **'तमीशानम्' इति**
9. S3 om. **धियंजिन्वस्तं**
22. M4 **रोदने** for **रोधने**

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥६॥

स्वस्ति। नः। इन्द्रः। वृद्धश्रवा इति वृद्धऽश्रवाः।
स्वस्ति। नः। पूषा। विश्ववेदा इति विश्वऽवेदाः।
स्वस्ति। नः। तार्क्ष्यः। अरिष्टनेमिरित्यरिष्टऽनेमिः।
स्वस्ति। नः। बृहस्पतिः। दधातु॥ ग्रं॥ ६॥

आ - 'स्वस्ति नः' इति। वैश्वदेवी विराट्। वृद्धः प्रवृद्धः श्रवः कीर्तिर्यस्य सः $^{v}$वृद्धश्रवाः प्रभूतधनः। $^{v}$नः अस्माकं $^{v}$स्वस्ति। अस भुवीत्यस्य सुपूर्वस्य रूपम्। शोभनसद्भावः स्वस्त्ययनं दधातु। 'स्वस्ति नः पूषा विश्ववेदाः'। विश्वं सर्वं वेदो धनं यस्य स तथा। स्वस्तीत्यविनाशिनाम। विश्वं वेत्ति वेदयतीति वा $^{v}$विश्ववेदाः। $^{v}$पूषा $^{v}$नः अस्माकं $^{v}$स्वस्ति दधातु स्थापयतु। 'स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः'। अनुपहिंसितरथनेमिः $^{v}$तार्क्ष्यः $^{v}$नः अस्माकं $^{v}$स्वस्ति $^{v}$दधातु । 'स्वस्ति नो बृहस्पतिः'। स्वस्ति दधातु ॥ २३ ॥

अ - 'स्वस्ति नः' । विराट्स्थाना । आद्यौ पादौ नववर्णौ तृतीयो दशवर्णः । चतुर्थो व्यूहेनैकादशवर्णः । "नवको वैराजस्त्रिष्टुभश्च" इति वचनात् ।$^{v}$इन्द्रः $^{v}$नः अस्मभ्यं $^{v}$स्वस्ति अव्ययम् अविनाशं शुभं दधातु । ददातु पोषयतु वा । कीदृगिन्द्रः ? $^{v}$वृद्धश्रवाः वृद्धं महत् श्रवः कीर्तिर्यस्य सः । तथा $^{v}$विश्ववेदाः पूर्णधनः पूर्णज्ञानो वा । $^{v}$पूषा देवः $^{v}$नः $^{v}$स्वस्ति दधातु । तथा अरिष्टा अनुपहिंसिता नेमिश्चक्रधारा पक्षो वा यस्य सः $^{v}$अरिष्टनेमिः । $^{v}$तार्क्ष्यः गरुडो विष्णुर्वा $^{v}$नः$^{v}$ स्वस्ति दधातु । तथा $^{v}$बृहस्पतिः देवगुरुः $^{v}$नः $^{v}$स्वस्ति $^{v}$दधातु । यद्वा- बृहतां महतां ब्रह्मादीनां बृहत्या वेदत्रय्याः वा पतिः परमात्मा नः स्वस्ति दधात्विति । "एष उ एव बृहस्पतिर्वाग्वै बृहती तस्याः एष पतिस्तस्मादु बृहस्पतिः" (शब्रा १४.४.१.२२) इति श्रुतेः ॥६॥

7. S3 पाठस्तु - स्वस्ति ... दधात्विति for 'स्वस्ति नः' इति
8. S3 om. प्रभूतधनः
19. M4 after बृहस्पतिः Ens. तपति

पुरोडाशपशूनां याज्यानुवाक्याः]

पृषंदश्वा मरुतः पृश्निंमातरः शुभँयावांनो विदथेषु जग्मंयः।
अग्निजिह्वा मनंवः सूरंचक्षसो विश्वें नो देवा अवसाऽऽगंमन्निह॥७॥

~~~~~~~~~~~~~~~~~~~~

पृषंदश्वा इति पृषंत्ऽअश्वाः। मरुतंः। पृश्निंमातर इति पृश्निंऽमातरः।
शुभँयावांन इतिं शुभंऽयावांनः। विदथेषु। जग्मंयः।
अग्निजिह्वा इत्यंग्निऽजिह्वाः। मनंवः। सूरंचक्षस इति सूरंऽचक्षसः।
विश्वें। नः। देवाः। अवंसा। आ। गमन्। इह॥ म्र्रें ॥७॥

~~~~~~~~~~~~~~~~~~~~

आ - 'पृषदश्वा मरुतः' इति। पृषतः बिन्दवः अश्वेषु येषां मरुतां ते Vपृषदश्वाः Vमरुतः। Vपृश्निमातरः पृश्निः द्यौर्गौर्वा माता येषां ते पृश्निमातरः। Vशुभंयावानः शुभं कर्तुं जनान् प्रति यान्ति ते शुभंयावानः। 'या प्रापणे'। "आतो मनिन्क्वनिप्वनिपश्च" (पा ३.२.७४) इति वनिप्। शुभप्रापकाः शुभंयावानः। Vविदथेषु यज्ञेषु Vजग्मयः गमनशीलाः मरुतः Vअवसा आहुतिलक्षणेनान्नेन निमित्तेन आहुताः सन्तः Vइह Vआगमन् आगच्छन्तु। किंच- अग्निर्जिह्वाः येषां ते Vअग्निजिह्वाः Vमनवः चतुर्दशमनवः इह नः आगमन् आगच्छन्तु। Vसूरचक्षसः सूर्यसंदर्शनात् सूर्यसंकाशाः। Vविश्वे Vदेवाः च अवसा इहागमन् आगच्छन्त्विति संबन्धः ॥ २४ ॥

~~~~~~~~~~~~~~~~~~~~

अ - 'पृषदश्वा मरुतः'। जगती मरुद्देवत्या। Vमरुतः Vदेवाः Vअवसा अन्नेन हविर्लक्षणेन हेतुना रक्षणहेतुना वा Vइह यज्ञे Vआगमन् आगच्छन्तु। कीदृशाः? Vपृषदश्वाः पृषत्यः पृषतीसंज्ञा अश्वा वडवा वाहनं येषां ते पृषदश्वाः। "पृषत्यो मरुतां वाहनानि" (निघण्टु १.१५) इति वचनात्। यद्वा - पृषतः शबला अश्वा येषां ते तथा। पृश्निरदितिर्माता जननी येषां ते Vपृश्निमातरः। शुभं कल्याणं यान्ति प्रापयन्तीति वा Vशुभंयावानः। या प्रापणे। अस्मात् "आतो मनिन्क्वनिप्वनिपश्च" (पा ३.२.७४) इति वनिप्प्रत्ययः। Vविदथेषु यज्ञगृहेषु Vजग्मयः गमनशीलाः। "आदृगमहन°" (पा ३.२.१७१) इति प्रत्ययः। अग्निर्जिह्वा भोजनसाधनं येषां ते Vअग्निजिह्वाः। "अग्निमुखा वै देवाः" (शब्रा १३.७.१.३) इति श्रुतेः। मन्यन्ते सर्वं जानन्तीति मनवः। 'मन अवबोधने'। अस्मादुप्रत्ययः। सूरः सूर्यश्चक्षुर्येषां ते। सूर्यं चक्षते पश्यन्ति इति वा Vसूरचक्षसः। "सूरसूर्यार्यमादित्य°" (अको १.३.२८) इत्यभिधानम्। सूर्यवच्चक्षते इति वा सूरचक्षसः। किंच- न केवलं मरुत आगच्छन्तु। किं तर्हि। Vविश्वे सर्वे देवाः चागमन् ॥७॥

~~~~~~~~~~~~~~~~~~~~

7. S3 पाठस्तु - पृषदश्वा ... गभन्निहेति for 'पृषदश्वा मरुतः' इति
12. S3 om. चतुर्दशमनवः ; V2 °सकाशाः for °संकाशाः

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः।
स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेम देवहितं यदायुः॥८॥

भद्रम्। कर्णेभिः। शृणुयाम। देवाः। भद्रम्। पश्येम। अक्षभिरित्यक्षऽभिः। यजत्राः। स्थिरैः। अङ्गैः। तुष्टुवाꣳसः। तुस्तुवाꣳस इति तुस्तुऽवाꣳसः। तनूभिः। वि। अशेम। देवहितमिति देवऽहितम्। यत्। आयुः॥ ट्रे॥८॥

**आ** - 'भद्रं कर्णेभिः' इति। देवी त्रिष्टुप्। हे [V]देवाः वेदेषु पुण्याः स्मृत्यादौ च सर्वतः यत् [V]भद्रं तत् भद्रं मङ्गलमनुकूलं [V]कर्णेभिः कर्णाभ्यां [V]शृणुयाम। [V]भद्रं सर्वप्रकारेण यद्भद्रं रूपं तद्भद्रं रूपं [V]अक्षभिः अक्षिभ्यां [V]पश्येम। [V]यजत्राः यजनीयाः। हे देवाः; भद्रं श्रुत्वा दृष्ट्वा च यजत्रा यजनशीला वयं भवेम। [V]स्थिरैः अशिथिलैः [V]अङ्गैः अवयवैः करणभूतैः [V]तुष्टुवांसः देवान् स्तुवन्तः 'तनूभिः व्यशेम देवहितं यदायुः'। आभिर्वर्तमानाभिः [V]तनूभिः भार्यापुत्रपौत्रादिवपुर्भिः सहिता एव [V]देवहितम्। देवे हितं प्रहितं [V]यत् [V]आयुः मनुष्याणां योग्यं शतसंवत्सरात्मकं यत् तदायुः विशेषतः [V]अशेम व्याप्नुयाम ॥ २५॥

**अ** - 'भद्रं कर्णेभिः। तिस्रस्त्रिष्टुभः। हे [V]देवाः, सर्वनिघातत्वादामन्त्रितमेतत्। [V]कर्णेभिः कर्णैः। "बहुलं छन्दसि" (पा. ७.१.१०) इति भिस ऐस्त्वाभावः। [V]भद्रं कल्याणकरं वाक्यं वयं [V]शृणुयाम। तथा हे [V]यजत्राः, यजतीति यजः यजमानस्तं त्रायन्त-इति यजत्राः यजमानपालका इत्यर्थः। [V]अक्षभिः नेत्रैः [V]भद्रं वयं [V]पश्येम। "बहुलं छन्दसि" (पा. ७.१.७६) इति हलादावपि अक्षिशब्दस्यानङ्गादेशः। यद्वा- अकारान्तः अक्षशब्दो नेत्रवाची। ऐसभाव आर्षः। किं च। [V]देवहितं देवेन ब्रह्मणा कृतं देवानां वा हितम्। देवोपासनोपयुक्तत्वात्। [V]यत् [V]आयुः जीवनं [V]तत् वयं [V]व्यशेम व्यश्नुवीमहि प्राप्नुयाम। कीदृशा वयम्? [V]स्थिरैः दृढैः [V]अङ्गैः करचरणाद्यवयवैः सहिताभिः [V]तनूभिः शरीरैः [V]तुष्टुंवांसः युष्मान् स्तुवन्तः। यद्वा- तायते कुलमेभिः इती तन्वः पुत्रादिप्रजास्ताभिः सहिता वयमिति। स्तवनमितरेन्द्रियव्यापारोपलक्षणम्। स्तोत्रादिकं कुर्वन्त इत्यर्थः। कर्णेभिरक्षभिरिति, बहुवचनं प्रजादिसाहित्यपरत्वेन समञ्जसम्॥८॥

6. S3 पाठस्तु - भद्रं कर्णेभिः ... आयुरिति for 'भद्रं कर्णेभिः' इति
8. S3 अक्षिभिः for अक्षभिः
10. S3 om. भार्या ... वपुर्भिः
13. M4 before second कर्णेभिः adds : भद्र°

पुरोडाशपशूनां याज्यानुवाक्याः]

शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम्।
पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥९॥

शतम्। इत्। नु। शरदः। अन्ति। देवाः। यत्र। नः। चक्र। जरसम्। तनूनाम्।
पुत्रासः। यत्र। पितरः। भवन्ति।
मा। नः। मध्या। रीरिषत। रिरिषतेति रिरिषत। आयुः। गन्तोः ॥ ग्नाः ॥ ९॥

आ - 'शतमित्'। वैश्वदेवी त्रिष्टुप्। 'शतमिन्नु शरदो अन्ति देवाः'। ($^{V}$देवाः) इत् अपि $^{V}$शरदः $^{V}$शतम्। शरदां संवत्सराणां शतमपि $^{V}$अन्ति। $^{V}$नु वितर्के। $^{V}$अन्ति अन्तिके। आकल्पकालम् इत्यभिप्रायः। अस्मदपेक्षितं भवथ। 'यत्रानश्चक्रा जरसं तनूनाम्'। $^{V}$यत्र यस्मिन् शरदः शते $^{V}$नः अस्माकं $^{V}$तनूनां शरीराणां $^{V}$जरसं जरा यूयं $^{V}$चक्र। करोतेर्लिण्मध्यमबहुवचनम्। चक्र कृतवन्तो जरानिमित्तायुः प्रदानात्। किं च। 'पुत्रासो यत्र पितरो भवन्ति'। $^{V}$यत्र शतायुषि विद्यमाने यजमानस्य $^{V}$पुत्रासः पुत्रा अपि $^{V}$पितरः $^{V}$भवन्ति। स्वयं पुत्रा अपि पुत्रवन्तो भवन्तीत्यर्थः। यद्वा-पुत्रा अग्नयः। ते हि यजमानस्य पितरो जनितारो भवन्ति। तदुक्तम्- "यत्र वै प्रजापतिः प्रजाः ससृजे" इत्युपक्रम्य "तं मा जनयित्वा बिभृहि" (शब्रा २.३.३.२) इति। 'यत्र पितरो भवन्ति'। इदमप्युक्तम्। "स यत्र म्रियते यत्रैनमग्नावभ्यादधति तदेषोऽग्नेरधि जायते स एष पुत्रः सन् पिता भवति" (शब्रा २.३.३.५) इति। अथवा यत्र शरदां शते पुत्राः और्ध्वदेहिकं कुर्वाणाः पितरो भवन्ति, पुत्राणां पुत्राः स्युरित्यर्थः। यतः शतमप्यल्पमतो ब्रूमः। हे देवाः, "मा नो मध्या रीरिषतायुर्गन्तोः"। $^{V}$नः अस्माकं $^{V}$गन्तोः गन्तुः गच्छतः। उक्तं च -

"संचिन्त्य संचिन्त्य तमुदग्रदण्डं मृत्युं मनुष्यस्य विचक्षणस्य॥
वर्षासु सिक्ता इव चर्मबन्धाः सर्वे प्रयत्नाः शिथिलीभवन्ति॥" इति।

वर्तमानस्य देहस्य स्थितिनिमित्तम् $^{V}$आयुः $^{V}$मध्या मध्ये $^{V}$रीरिषत्। रिषतिर्हिंसार्थः। आयुषो हिंसाखण्डनं वा कृषीष्ठाः ॥२६॥

7. S3 पाठस्तु - शतमित् ... गन्तोरिति for शतमित् ; S3 इव for इत्
9. V2 शतेन for शते; V2 चक्रा for चक्र ; S3 om. करोतेर्लिण्... वचनम्
20. V2 after मध्ये ins. अकाल एव

अ - 'शतमित्'। हे vदेवाः, vशतम् vइत् शतमपि vशरदः वत्सरान्। "संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः" (अको. १.४.२०) इत्यभिधानम्। "कालाध्वनोरत्यन्तसंयोगे" (पा २.३.५) इति द्वितीया विभक्तिः। शतवर्षपर्यन्तम्। यूयम् vअन्ति अन्तिके समीपे तिष्ठन्तीति शेषः। vयत्र शरच्छते vनः अस्माकं vतनूनां शरीराणां vजरसं जराम्। जराया जरसादेशः। यूयं vचक्र कृतवन्तः। युष्मत्प्रार्थना सत्येति भावेन भविष्यार्थेऽपि भूतार्थप्रयोगः। चक्रेति करोतेर्लिटि मध्यमपुरुषबहुवचनम्। "द्व्यचोऽतस्तिङः' (पा ६.३.१३५) इति। चक्रेत्यत्र संहितायां दीर्घः। "निपातस्य च" (पा ६.३.१३६) इति यत्रेत्यस्य दीर्घः। अस्मद्वार्धक्यावधि यूयं रक्षणार्थमस्मत्समीपे तिष्ठन्त्विति भावः। तथा vयत्र च अस्माकं जरायां vपुत्रासः अस्मत् पुत्राः vपितरः vभवन्ति। स्वपुत्राणामिति शेषः। यत्रास्माकं पौत्रा भवन्तीत्यर्थः। तावत्पर्यन्तं vमध्या मध्ये। "सुपां सुलुक्" (पा ७.१.३९) इति ङेराकारः। शतवर्षमध्ये vनः अस्माकम् vआयुः vमा vरीरिषत मा रीरिषत्। मा हिंसीष्ठ। दीर्घश्छान्दसः। रिषतेर्हिंसार्थस्य णिजन्तस्य चङि रूपम्। कीदृशमायुः? vगन्तोः। गन्तृ गमनशीलम्। शत्रन्तस्य गमेरसुन्प्रत्ययः। भवदाराधनं विना बहुकालजीवनं व्यर्थमिति भावः। तदुक्तम्-

संचिन्त्य संचिन्त्य तमुग्रदण्डं मृत्युं मनुष्यस्य विचक्षणस्य ॥
वर्षासु सिक्ता इव चर्मदण्डाः सर्वे प्रयत्नाः शिथिलीभवन्ति ॥ इति ॥९॥

**अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः।**
**विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् ॥१०॥(११)॥**

अदितिः। द्यौः। अदितिः। अन्तरिक्षम्।
अदितिः। माता। सः। पिता। सः। पुत्रः।
विश्वे। देवाः। अदितिः। पञ्च। जनाः।
अदितिः। जातम्। अदितिः। जनित्वमिति जनिऽत्वम् ॥ खौं ॥ १० ॥ (११) ॥

**आ** - मन्त्रदृक् स्तौति अदितिम् - 'अदितिर्द्यौः' इति। वैश्वदेवी त्रिष्टुप्। vद्यौः vअदितिः। 'दो अवखण्डने'। अखण्डिता अस्तु। vअन्तरिक्षम् vअदितिः अस्तु। vमाता पृथिवी च vअदितिः अस्तु। vपिता vसः द्युलोकः अदितिरस्तु। vसः vपुत्रः उभयोर्मध्यवर्ती प्रपञ्चः अदितिरस्तु। vविश्वे vदेवाः vअदितिः अदितयो भवन्तु। vपञ्च vजनाः इति मनुष्यनाम। अथवा पञ्चजना नाम केचन देवाः vअदितिः अदितयः अखण्डिता भवन्तु। किं बहुनोक्तेन। 'अदितिर्जातमदितिर्जनित्वम्'। vजातं जायमानं जनिष्यमाणं सर्वम् vअदितिः अस्त्विति। अथवा अनेनः मन्त्रेण अदितिर्नोच्यते। किंतु द्यौप्रभृतीन्येतानि अदितीनि महाभाग्ययुक्तानीति ॥ २७ ॥

9. M4 °वर्ण° for °वर्ष°

अ - 'अदितिर्द्यौः' । मन्त्रदृक् सर्वात्मकत्वेन अदितिं स्तौति । "अदितिरखण्डनात्" इत्युक्तेरदितिः परमात्मैव । [v]द्यौः स्वर्गः [v]अदितिः । तदुत्पन्नत्वात् तदाधारत्वाच्च । एवमग्रेऽपि । [v]अन्तरिक्षम् अदितिः। [v]माता जननी [v]अदितिः । [v]सः अदितिरेव [v]पिता । [v]सः एव [v]पुत्रः । [v]विश्वे [v]देवाः ब्रह्मादि सर्वे देवाश्च [v]अदितिः । [v]पञ्च [v]जनाः मनुष्या असुरा वा तेऽपि [v]अदितिः । यद्वा पञ्चजनाः प्राणादयः पञ्च अदितिरेव। "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितस्तमेव मन्य आत्मानं विद्वान् ब्रह्माऽमृतोऽमृतम्॥ प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः ॥" (बृहदारण्यको° ४.४.१७-१८) बृहदारण्यकात्। किं बहुना । [v]जातम् उत्पन्नं प्राणिजातं [v]जनित्वं जनिष्यमाणं सर्वं च [v]अदितिः एव । "ब्रह्मैवेदं सर्वम्" (छांउ ७.२५.१) इति श्रुतेः । यद्वा- द्यौः लोकोऽस्माकमदितिरखण्डितोऽस्तु इति योज्यम् । विश्वे देवा अदितिरदितयः सन्तु । वचनव्यत्ययः ॥१०॥

इति सप्तविंशे एकादशोऽनुवाकः ॥११॥

---

(द्वादशोऽनुवाकः।)

**मा नो॑ मि॒त्रो वरु॑णो अ॒र्य॒माऽऽयुरिन्द्र॑ ऋभु॒क्षा म॒रुत॒ः परि॑ ख्यन्।**
**यद्वा॒जिनो॑ दे॒वजा॑तस्य॒ सप्ते॑ः प्रव॒क्ष्यामो॑ वि॒दथे॑ वी॒र्या॑णि॥१॥**

---

मा । नः॒ । मि॒त्रः । वरु॑णः । अ॒र्य॒मा । आ॒युः । इन्द्रः॑ । ऋ॒भु॒क्षाः । म॒रुतः॑ । परि॑ । ख्यन् ।
यत् । वा॒जिनः॑ । दे॒वजा॑त॒स्येति॑ दे॒वऽजा॑तस्य । सप्तेः॑ ।
प्र॒व॒क्ष्याम॒ इति॑ प्र॒ऽव॒क्ष्याम॑ः । वि॒दथे॑ । वी॒र्या॑णि इत्यो॑ ॥ १ ॥

---

आ - षोडशभिः ऋग्भिः षोडश अग्निस्तोमीयान् जुहोति। 'मा नः' इति। अश्वस्तोमीयदेवत्यास्त्रिष्टुभः। दीर्घतमा ऋषिः। 'मा नो मित्रो वरुणः' इति। यच्छब्दयोगात् तृतीयपादादभिव्याख्यायते। 'यद्वाजिनो देवजातस्य सप्तेः प्रवक्ष्यामो विदथे वीर्याणि'। [v]देवजातस्य देवैर्जातस्य [v]वाजिनः वाजवतः [v]सप्तेः सर्तुः सरणस्य अश्वस्य [v]यत् [v]वीर्याणि यानि साध्यानि

---

4. M4 om. °सर्वे
5-6. M4 om. विद्वान् ... मृतम्
7. M4 om. किं बहुना
8. M4 तु for च
17. S3 पाठस्तु - मा नो ... वीर्याणीति for 'मा नः' इति
20. S3 om. सरणस्य

चरित्राणि Vविदथे यज्ञे Vप्रवक्ष्यामः उच्चारयामः। Vनः अस्माकमश्वस्य भाविवीर्याणि एते देवाः Vमा Vपरि Vख्यन्। अत्र परिपूर्वख्यायतेर्निन्दार्थत्वाम्। निन्दां मा कुर्युः। तान् विभजति। Vमित्रः मा परिख्यन्। Vवरुणः मा परिख्यन्। Vअर्यमा मा परिख्यन्। Vआयुः वकारलोपश्छान्दसः। वायुः Vइन्द्रः च Vऋभुक्षाः। देवानां निवासभूतः प्रजापतिरिन्द्रः Vमरुतः च एते देवाः मा परिख्यन्॥

अहरभिमानी देवो मित्रः। रात्र्यभिमानी वरुणः। तयोरन्तरालकालाभिमानी आदित्योऽर्यमा। एति सततं गच्छतीति आयुः वायुः। विशेषणं वा। मित्रादयः मा परिगर्हयन्तु। अस्माकं देवाः स्तुत्याः न त्वश्वादयः। तिर्यञ्चो यद्यपि गर्होचितास्तथाऽपि अश्वरूपेण देवानामेव स्तुतत्वान्मा परिख्यन्नित्यर्थः॥ २७॥

~~~~~~~~~~~~

अ - कात्यायनः - "मा नो मित्र इति च प्रत्यृचमनुवाकाभ्याम्" (काश्रौ २०.८.७) "मा नो मित्रः" "यदश्वस्य" इत्यनुवाकद्वयेन पूर्ववत् पूर्ववच्चतुर्गृहीतमाज्यं जुहोति प्रत्यृचमिति सूत्रार्थः॥

'मा नो मित्रः'। अश्वदेवत्यास्त्रिष्टुभो दीर्घतमो दृष्टाः। तत्र, 'एष छागः' 'यूपव्रस्काः' इति द्वे जगत्यौ। Vविदथे यज्ञे Vवाजिनः अश्वस्य Vवीर्याणि चरित्राणि Vयत् वयं Vप्रवक्ष्यामः उच्चारयिष्यामः। तत्र Vमित्रः दिवसस्य प्रथमाभिमानी देवः। Vवरुणः तृतीयभागाभिमानी। Vअर्यमा द्वितीयभागाभिमानी। आदित्यस्यैव तानि रूपाणि। वाति सततं गच्छतीति Vआयुः वायुः। वकारलोपश्छान्दसः। वा गतिबन्धनयोः। यद्वा- एति सर्वत्र गच्छतीति आयुः आयुष्यरूपो वायुः। इण् गतावित्यस्मात् औणादिको नुस्। Vइन्द्रः देवराजः। Vऋभुक्षाः इन्द्राणी। "ऋभुक्षास्तस्य तु प्रिया" (अको १.१.४४) इत्यभिधानम्॥

यद्वा - ऋभवो देवा क्षियन्ति निवसन्ति यस्मिन् स ऋभुक्षाः। सर्वदेवाधारः प्रजापतिः। यद्वा- इयर्ति व्याप्नोति सर्वमिति ऋभुक्षाः परमात्मा। अर्तेर्भुक्षिन्प्रत्ययः। "पथिमथ्यृभुक्षामात्" (पा ७.१.८५) इति सावाकारः। Vमरुतः अन्ये देवाश्च Vनः अस्मान् Vमा Vपरिख्यन् मा निन्दन्तु। अश्वादींस्तिर्यञ्च एते स्तुवन्तीति। किन्त्वस्वरूपेण परमात्मानमेव स्तुम इत्यतो मा परिख्यन् मा निन्दन्तु। कीदृशस्य? Vवाजिनः Vदेवजातस्य। देवात् सूर्याज्जातस्य। "सूरादश्वं वसवो निरतिष्ट" (कासं ३१.३.२) इति श्रुतेः। Vसप्तेः। 'सप संबन्धे'। सपति देवैः सह संबध्यत इति सप्तिस्तस्य। परिख्यन्नित्यत्र "अस्यतिवक्तिख्यातिभ्योऽङ्" (पा ३.१.५२) इति श्लेरङ्। "न माङ्योगे" (पा ६.४.७४) इत्यडभावः "माङिलुङ्" (पा ३.३.१७५) इत्यभूते लुङ्। परमात्मपक्षे वजनशीलो वाजी। सर्वगतस्तस्येत्यर्थः॥ वज गताविति धातुः। देवार्थं जातोऽवतीर्णः। देवानां जातं जननं यस्मादिति वा देवजातस्तस्य। अन्यत् सर्वं समानम्॥१॥

~~~~~~~~~~~~

1. S3 om. चरित्राणि

6-9. S3 om. अहरभि° ... परिख्यन्नित्यर्थः

18. M4 om. सः

21. P2 om. मा निन्दन्तु

26-27. M4 om. वज ...समानम्"

**यन्निर्णिजा रेक्ण॑सा प्रावृ॑तस्य रातिं गृ॑भीतां मु॑खतो नय॑न्ति।**
**सुप्रा॑ङजो मेम्य॑द्विश्वरू॑प इन्द्रापूष्णोः प्रियमप्ये॑ति पाथ॑ः ॥२॥**

यत्। निर्णिजा॑। निर्निजेति॑ निःऽनिजा॑। रेक्ण॑सा। प्रावृ॑तस्य।
रातिम्। गृभीताम्। मुखतः। नय॑न्ति।
सुप्राङिति सुऽप्राङ्। अजः। मेम्य॑त्। विश्वरू॑प इति॑ विश्वऽरू॑पः।
इन्द्रापूष्णोः। प्रियम्। अपि॑। एति। पाथ॑ः॥ द्वै ॥ २ ॥

**आ** - 'यन्निर्णिजा' इति। निर्णेजनेन उदकशौचेन। 'णिजिर् शौचे'। विहितशौचेन संस्कृतस्याश्वस्यालम्भकाले [V]यत् स्नपनमश्वस्य तदेतदुक्तम्। कथं भूतस्य? [V]रेक्णसा [V]प्रावृतस्य केसरदेशेषु खचितस्याश्वस्य। सौवर्णान् मणीन् केसरपुच्छेषु पत्न्य आवपन्ति। तदभिप्रायमेतत्। यत् स्नपनं कारयितुं [V]रातिं [V]गृभीताम् आज्यसक्तुधानालाजालक्षणैर्गृहीतां रातिं दानं [V]मुखतः [V]नयन्ति मुखाग्रे प्रापयन्ति। अश्वाय रात्रिहुतशेषं प्रयच्छन्तीत्येतदभिप्रायम्। किं च तदाश्वस्य [V]सुप्राङ् ललाटे बद्धः [V]अजः सुशोभनं प्रागञ्चतीति सुप्राङ्। [V]अजः [V]मेम्यत्। शब्दानुकारः। मे मे शब्दं कुर्वन्। [V]विश्वरूपः नानावर्णः। कृष्णग्रीवः आग्नेयाः। "कृष्णग्रीव आग्नेय रराटे पुरस्तात्" (कासं २६.१.१) इत्येतदभिप्रायम्। किं च [V]प्रियं [V]पाथः अन्नं पशुलक्षणम् [V]अपि [V]एति अभ्यागच्छति। यदिह पठ्यते - "सौमापौष्णः श्यामो नाभ्याम्" (कासं २६.१)। तदेवान्यस्यां श्रुतौ पठ्यते-"इन्द्रापौष्णः श्यामो नाभ्याम्" इति। तदयं मन्त्रोऽभिवदति- 'इन्द्रापूष्णोः प्रियमप्येति पाथः ॥ २८॥

**अ - 'यन्निर्णिजा'। [V]यत् यदा ऋत्विजः अश्वस्य [V]मुखतः। सार्वविभक्तिकस्तसिल्। मुखाग्रे [V]गृभीतां गृहीताम्। "हृग्रहोर्भश्छन्दसि" (पावा ३.१.८४) [V]रातिं दानम्। 'रा दाने'। अस्मात् स्त्रियां क्तिन्। आज्यसक्तुधानालक्षणं [V] नयन्ति प्रापयन्ति। अश्वाय रात्रिहुतशेषं प्रयच्छतीत्युक्तत्वात्। तदा सुष्ठु प्राञ्चति पूर्वं गच्छतीति [V]सुप्राङ्। [V]मेम्यत्। शब्दानुकरणमेतत्। मे मे इति शब्दं कुर्वाणः। [V]विश्वरूपः नानावर्णः। [V]अजः छागः [V]अपि [V]एति भक्षणायागच्छति। 'कृष्णग्रीव आग्नेयो रराटे पुरस्तात्' इत्यभिहितोऽज इत्यर्थः। किं च। [V]इन्द्रापूष्णोः। इन्द्रश्च पूषा चेन्द्रापूषणौ। "देवताद्वन्द्वे च" (पा ६.३.२६) इतीन्द्रपदस्य दीर्घः। तयोः [V]प्रियं [V]पाथः इष्टमन्नं नाभिबद्धाजलक्षणम्। तदप्येति। "सौमापौष्णः श्यामो नाभ्याम्" (कासं २६.१.१) इत्युक्तेः। हुतशेषं यदाश्वाय तदा ललाटनाभिबद्धावजौ भक्षणायागच्छत इति भावः।**

7. S3 पाठस्तु - यन्निर्णिजा ... पाथ इति for 'यन्निर्णिजा' हति
9. V2 मदभि° ... for तदभि°
14. S3 om. अभ्यागच्छति
23. M4 affter नाभि ins. हितोऽज इत्यर्थः

कीदृशस्याश्वस्य? Vनिर्णिजा निर्णेजनेन । निर्णेजनं निर्णिक् । तयेत्यर्थः । अङ्गप्रक्षालनेन Vप्रावृतस्य संस्कृतस्य। आलम्भनकाले स्नापितस्येत्यर्थः। णिजिर् शौचपोषणयोरित्यस्मात् संपदादित्वात् भावे क्विप्। तथा Vरेक्णसा प्रावृतस्य । रेक्ण इति धननाम । धनेन सौवर्णमणिलक्षणेन अलंकृतस्य । अश्वस्य सौवर्णान् मणीन् केसरपुच्छेषु पत्न्य आवपन्तीत्युक्तत्वात् । अयं मन्त्रः परमेश्वरार्चापरत्वेन योज्यः । यत् यदा एकान्तभक्ताः निर्णिजा कलशोदकस्नापनेन रेक्णसा अलंकारेण च प्रावृतस्य पूजितस्य हरेः मुखतः गृभीतां रातिं नैवेद्यलक्षणं नयन्ति तदा सुप्राङ् लक्ष्मीः । "उगितश्च" (पा ४.१.६) इति ङीपः अभावश्छान्दसः। अजः ब्रह्मा च । मेम्यत् । ममापि शेषभक्षणं भविष्यतीति वदन् Vएति आगच्छति । तथा विश्वरूपः रुद्रः अप्येति । "विश्वरूप सदाशिव । विश्वरूपाय वै नमो नमः । सर्वो वै रुद्रः" इति श्रुतेः। तथा इन्द्रापूष्णोः देवतयोः प्रियं पाथः । पाथ इत्यन्ननाम । इष्टमन्नं भवति । यत्र हरिर्भुङ्क्ते तत्र सर्वे देवा भुञ्जते शेषमिति भावः । उक्तं हि भागवते -

त्वयोपभुक्तस्रग्गन्धवासोऽलंकारचर्चिताः।
उच्छिष्टभोजना दासास्तव मायां जयेमहि।। इति।
यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोपशाखाः।
प्राणोपहारेण यथेन्द्रियाणि तथैव सर्वार्हणमच्युतेज्या।। (भाग पु ४.३१.४१) इति।
भक्तोपहतमन्नाद्यं यदा स्वीकुरुते हरिः।
लक्ष्म्यादयस्तदेप्सन्ति स्याम किं शेषभागिनः।। इति पञ्चरात्रे च ।।२।।

एष च्छागः पुरो अश्वेन वाजिना पूष्णो भागो नीयते विश्वदेव्यः।
अभिप्रियं यत् पुरोळाशमर्वता त्वष्टेदेनꣳ सौश्रवसाय जिन्वति ।।३।।

एषः। च्छागः। पुरः। अश्वेन। वाजिना।
पूष्णः। भागः। नीयते। विश्वदेव्य इति विश्वऽदेव्यः।
अभिप्रियमित्यभिऽप्रियम्। यत्। पुरोळाशम्। अर्वता । त्वष्टा।
इत्। एनम्। सौश्रवसाय। जिन्वति ॥ च्रौं ॥ ३ ॥

आ - 'एष छागः' इति। अश्वस्तोमीया जगती। Vएषः प्रकृतः Vछागः आग्नेयः Vपुरः अग्रतः स्थितः Vअश्वेन Vवाजिना सह स्थितः। Vपूष्णः च पोषकस्य अग्नेः Vभागः Vनीयते। प्राप्यते

1. M4 निर्णिजनं for निर्णेजनं
22. S3 पाठस्तु - एष छागः ... जिन्वतीति for 'एष छागः' इति, S3 प्रकृत्यैतः for प्रकृतः
23. S3 om. पोषकस्य अग्नेः

अश्वेन सह पर्यङ् एव। [v]विश्वदेव्यः। सर्वेभ्यो देवेभ्यश्च हितः। अस्मिन् काले [v]अभिप्रियं [v]यत् [v]पुरोळाशम् [v]अर्वता अश्वेन सहितं पुरोळाशं कर्तुं भागो नीयते। 'त्वष्टेदेनं सौश्रवसाय जिन्वति'। 'तक्षू तनूकरणे'। [v]त्वष्टा [v]इत् एव। [v]एनम् अश्वं त्वष्टाऽव जिन्वति । कस्मै फलाय? [v]सौश्रवसाय। श्रवः कीर्तिः, सुकीर्तिफलाय। ॥ २९ ॥

अ - 'एष छागः'। [v]यत् यदा। [v]एषः [v]छागः [v]वाजिना वेगवता [v]अश्वेन [v]पुरः पुरस्तात् [v]नीयते प्राप्यते। ललाटबद्धत्वात्। कीदृशः? [v]विश्वदेव्यः विश्वो यो देवेभ्यो हितः सर्वदेवार्हः। पुनः कीदृशः? [v]पूष्णः [v]भागः। पुष्णाति देवानिति पूषाऽग्निः, तस्य भागः भजनीयः। 'आग्नेयः रराट्' इत्युक्तत्वात् पूषशब्दोऽग्निपरः। अग्नेः सर्वदेवात्मकत्वेन विश्वदेव्यत्वम्। यद्वा- 'सौमापौष्णः श्यामो नाभ्याम्' त्युक्तत्वात् पूष्णो देवस्य भागोऽजः सोऽपि अश्वेन भक्षणसमये पुरो नीयते आकृष्यते। तदा [v]त्वष्टा [v]इत् त्वष्टैव प्रजापतिरेव [v]अर्वता अश्वेन सह [v]एनं छागं [v]जिन्वति प्रीणाति। किमर्थम्। [v]सौश्रवसाय। शोभनं श्रवः कीर्तिर्यस्य स सुश्रवाः। तस्य भावः सौश्रवसम्। तस्मै सौश्रवसाय सुकीर्तये। यज्ञे मृतानां स्वर्गाप्तेरुक्तवात्। कीदृशम्। [v]एनम् [v]अभिप्रियम्। समस्तात् देवानां प्रीणयितारम् इत्यर्थः। पुनः कीदृशम्? [v]पुरोळाशम्। 'दाशृ दाने'। पुरः पूर्वं दाश्यते दीयते स तथा तम्, पुरोडाशसदृशं वा ॥३॥

**यद्धविष्यमृतुशो देवयानं त्रिर्मानुषाः पर्यश्वं नयन्ति।**
**अत्रा पूष्णः प्रथमो भाग एति यज्ञं देवेभ्यः प्रतिवेदयन्नजः॥४॥**

यत्। हविष्यम्। ऋतुश इत्यृतुऽशः। देवयानमिति देवऽयानम्।
त्रिः। मानुषाः। परि। अश्वम्। नयन्ति।
अत्र। पूष्णः। प्रथमः। भागः। एति। यज्ञम्।
देवेभ्यः। प्रतिवेदयन्निति प्रतिऽवेदयन्। अजः॥ ङ्र्यौं॥ ४॥

**आ** - 'यद्धविष्यम्' इति। अश्वस्तोमीया त्रिष्टुप्। दीर्घतमाः। [v]यत् यदा [v]हविष्यं हविःसाधनभूतम् [v]अश्वं च [v]ऋतुशः ऋतौ ऋतौ विहितकाले [v]देवयानं मार्गमाश्रित्य [v]मानुषाः ऋत्विग्यजमानाः [v]त्रिः संस्कृतं स्नापनाभ्यञ्जनसुवर्णालंकारमणिवरैः तम् अश्वं त्रिः त्रिवारं

6. M4 om. **कीदृश ... पुनः**
13. M4 **पुरोलाश**° for **पुरोळाशं;**
20. S3 **यद्धविष्यम् ... अज इति** for **यद्धविष्यमिति**

Vपरि Vनयन्ति पर्यग्निं कुर्वन्तीत्यर्थः। ते Vअत्र अस्मिन् काले Vपूष्णः Vप्रथमः Vभागः Vअजः अजाख्यः Vप्रथमःभागः। Vयज्ञं Vदेवेभ्यः Vप्रतिवेदयन् देवान् परिज्ञापयन्निति। एषः अजः आगच्छतीति संबन्धः॥ ३०॥

**अ - 'यद्धविष्यम्'। Vमानुषाः मनुष्या ऋत्विजः Vयत् यदा Vअश्वं Vत्रिः Vपरि Vनयन्ति। वारत्रयं पर्यग्निकुर्वन्ति। कीदृशमश्वम्? Vहविष्यम् हविर्योग्यम्। Vऋतुशः। ऋतौ ऋतौ यज्ञकाले। Vदेवयानं देवानां प्रापणीयम्। देवेषु यानं गमनं यस्य तं वा। देवयानमार्गगामिनं वा। Vअत्र अस्मिन् पर्यग्निकाले Vपूष्णः पोषकस्य वृद्धस्याग्नेर्भागः। Vअजः Vप्रथमः पुरोगामी सन् Vएति गच्छति। "आग्नेयो अजः" (शब्रा २.१.४.३) इति श्रुतेः। "पूषाग्निरेव।" किं कुर्वन्? Vदेवेभ्यः Vयज्ञं Vप्रतिवेदयन् प्रख्यापयन्। 'पूष वृद्धौ' इति धातुः॥४॥**

**होताऽध्वर्युरावया अग्निमिन्धो ग्रावग्राभ उत शꣳस्ता सुविप्रः।
तेन यज्ञेन स्वरंकृतेन स्विष्टेन वक्षणा आ पृणध्वम्॥५॥**

होता। अध्वर्युः। आवया इत्याऽवयाः। अग्निमिन्ध इत्यग्निम्ऽइन्धः। ग्रावग्राभ इति ग्रावऽग्राभः। उत। शꣳस्ता। सुविप्र इति सुऽविप्रः। तेन। यज्ञेन। स्वरंकृतेनेति सुऽअरंकृतेन। स्विष्टेनेति सुऽइष्टेन। वक्षणाः। आ। पृणध्वम्॥ क्रूं॥ ५॥

**आ** - 'होताऽध्वर्युः' इति। पूर्ववत् त्रिष्टुप्। Vहोता Vअध्वर्युः च Vआवयाः। आवयति रचयतीति। आभिमुख्येन वयति तनोति कार्याणीत्यावयाः। Vअग्निमिन्धः अग्नेर्दीपकोऽग्नीत्। अग्नेः संदीपकः। Vग्रावग्राभः ग्रावग्राहः। सोमाभिषवग्रावग्रहणशीलः। Vउत अपि Vशꣳस्ता शंसनकर्ता शस्त्राणाम्। Vसुविप्रः शोभनार्थस्य विशेषतः परिपूरकः विप्रः। एते यूयं Vतेन Vस्वरंकृतेन सुष्ठु अरंकृतेन। Vस्विष्टेन साङ्गमनुष्ठितेन Vयज्ञेन। Vवक्षणाः इति नदीनाम। वक्षणा इति देवानां तृप्तिकरा नद्यः। ताः नदीः घृतपयोदधिपयस्यामांसपुरोडाशैर्मन्त्रैश्च Vआ Vपृणध्वं पूरणं कुरुध्वम्॥ ३१॥

7. M4 om. **वृद्धस्य**
16. S3 **पाठस्तु - होता... पृणध्वमिति** for **'होताऽध्वर्युः' इति।**
17. S3 om. **अग्नेर्दीपकोऽग्नीत्**
21. V2 **°पयस्याः** for **°पयस्या°**

अ - 'होताऽध्वर्युः' । होत्रादय ऋत्विजः । vतेन प्रसिद्धेन vयज्ञेन अश्वमेधेन वक्षणाः । वक्षणेति नदीनाम । घृतकुल्याद्या नदीः vआ vपृणध्वम् घृतदधिपयः पयस्यापुरोडाशमांसैः पूरयध्वम् । वहन्तीति वक्षणाः । अनेन अश्वमेधेन घृतकुल्यादिनदीभोगं साधयेत्यर्थः । कीदृशेन यज्ञेन ? vस्वरंकृतेन । रलयोरैक्यात् सुष्ठु अलंकृतेन विप्रहविर्दक्षिणादिभिः शोभितेन । स्विष्टेन साधु इष्टेन । के ऋत्विजस्तानाह- vहोता देवानामाह्वानकर्ता एकः । vअध्वर्युः अध्वरम् इच्छतीत्यध्वर्यति । "सुप आत्मनः क्यच्" (पा. ३.१.८)। "कव्यध्वरपृतनस्यर्चि लोपः" (पा ७.४.३९) इति टिलोपः । ततः "क्याच्छन्दसि" (पा. ३.२.१७०) इत्युप्रत्ययः (द्र पावा ३.२.७१) । अयमपरः । vआवयाः । आभिमुख्येनावयजतीत्यावयाः । श्वेतवाहोक्थशास्पुरोडाशावयजा डस्पदान्तः इति डस्प्रत्ययः । आवयाः प्रतिप्रस्थाता । तृतीयः । "अवे यजः" (पा ३.२.७२) इति ण्विन् टिलोपः । अग्निमिन्धे दीपयतीति vअग्निमिन्धः । अग्नित् । चतुर्थः। "भ्राष्ट्राग्न्योरिन्धे" (पावा ६.३.७०) इति मुमागमः । vग्रावग्राभः । ग्रव्णो गृह्णातीति ग्रावग्राहः । "हृग्रहोर्भश्छन्दसि" (पावा ३.१.८४) । ग्रावस्तोता। पंचमः । उत अपि vशंस्ता शंसति कर्मण्यण् । स्तौतीति शंस्ता । प्रशास्ता । षष्ठः । vसुविप्रः । शोभनो विप्रो मेधावी सुविप्रो ब्रह्मा । ब्रह्मा सर्वविद्यः। सर्वं वेदितुमर्हतीत्युक्तः । अयं सप्तमः । अनुक्तर्त्विगुपलक्षकः । ये ते यूयं तेन यज्ञेन वक्षणा आ पृणध्वमिति संबंधः ॥५॥

~~~~~~~~~~~~~~~~~~~~

यूपव्रस्का उत ये यूपवाहाश्चषालँ ये अश्वयूपाय तक्षति।
ये चार्वते पचनं संभरन्त्युतो तेषामभिगूर्तिर्न इन्वतु ॥६॥

~~~~~~~~~~~~~~~~~~~~

यूपव्रस्का इति यूपऽव्रस्काः। उत। ये। यूपवाहा इति यूपऽवाहाः।
चषालम्। ये। अश्वयूपायेत्यश्वऽयूपाय। तक्षति।
ये। च। अर्वते। पचनम्। संभरन्तीति समऽभरन्ति।
उतो इत्युतो। तेषाम्। अभिगूर्तिरित्यभिऽगूर्तिः। नः। इन्वतु ॥ घौं ॥ ६ ॥

~~~~~~~~~~~~~~~~~~~~

आ - 'यूपव्रस्का उत'। अश्वस्तोमीया जगती। ऋषिर्दीर्घतमाः। 'यूपव्रस्का उत ये यूपवाहाः'। vये vयूपवाहाः यूपप्रापकाः। ये च vयूपव्रस्काः यूपार्थं वृक्षच्छेदकाः। vचषालं यूपकटकम्। vये vअश्वयूपाय vतक्षति यूपार्थं ये तक्षणं कुर्वते। vये vच vअर्वते अश्वाय

~~~~~~~~~~~~~~~~~~~~

3-4. M4 om. घृत° ... शोभितेन ; M4 हे for के
8. M4 डस्य डान्तः, P2 डस्य दान्तः for डस्पदान्तः
13. M4 °लक्षणकः for °लक्षकः
21. S3 पाठस्तु - यूपव्रस्काः ... इन्वत्विति for यूपव्रस्का उत ।
22. S3 om. ये यूपवाहाः

Vपचनं Vसंभरन्ति संपादयन्ति। Vउतो अपि च Vनः अस्मत्संबन्धिनी Vतेषाम् ऋत्विजाम् Vअभिगूर्तिः। गूर्तिः । गुरी उद्यमने। उद्यमनम्। अभि अभितः उद्यमनम् । Vइन्वतु। 'इन्वतिः व्याप्तौ'। नः अस्मान् गूर्तिः इन्वतु व्याप्नोतु ॥ ३२॥

~~~~~~~~~~~~~~~~~~~~

**अ - 'यूपव्रस्का उत'। Vतेषाम् ऋत्विजाम् Vअभिगूर्तिः अभिगोरणमभिगूर्तिः उद्यमः। गुरी उद्यमने इति धातुः । Vनः अस्मान् Vइन्वतु प्रीणातु । व्याप्नोतु वा । अस्मद्यज्ञं सम्यक् कुर्वन्त्वित्यर्थः । हवि व्याप्तिपूरणयोरिति धातुः । लोट् शपि सति "इदितो नुम् धातोः" (पा ७.१.५८) इति नुमागमः । तेषां केषाम् । ये Vयूपव्रस्काः । यूपाय तरूं वृश्चन्ति छिन्दन्तीति यूपव्रस्काः । वर्णव्यत्ययः । Vउत अपि च। Vये Vयूपवाहाः। यूपं वहन्तीति यूपवाहाः। कर्मण्यण्। छिन्नयूपवाहकाः। Vये च Vअश्वयूपाय। अश्वसंबंधियूपार्थं Vचषालं Vतक्षति यूपाग्रभागे स्थाप्यं काष्ठं तक्षन्ति । वचनव्यत्ययः । "चषालो यूपकटकः" (अको २.७.१८) इत्यभिधानम् । तक्षू त्वक्षू तनूकरणे । Vउतो अपि च । Vये नराः Vअर्वते अश्वाय । "वाजिवाहार्वगन्धर्व॰:" (अको २.८.४४) इत्यभिधानम्। Vपचनम्। पच्यतेऽनेनेति पचनम्। पाकसाधनं काष्ठभाण्डादिकम् । Vसंभरन्ति आनीयैकत्र कुर्वन्ति । 'तेषामभिगूर्तिर्न इन्वतु' इति संबन्धः ॥६॥**

~~~~~~~~~~~~~~~~~~~~

**उप॑ प्रागा॑त् सु॒मन्मे॑ऽधायि॒ मन्म॑ दे॒वाना॒माशा॒ उप॑ वी॒तपृ॑ष्ठः।**
**अन्वे॑नं॒ विप्रा॒ ऋष॑यो मदन्ति दे॒वानां॑ पु॒ष्टे च॑कृमा सु॒बन्धु॑म् ॥७॥**

~~~~~~~~~~~~~~~~~~~~

उप॑। प्र। अ॒गा॒त्। सु॒मदिति॑ सु॒ऽमत्। मे॒। अ॒धा॒यि॒। मन्म॑।
दे॒वाना॑म्। आशाः॑। उप॑। वी॒तपृ॑ष्ठ॒ इति॑ वी॒तऽपृ॑ष्ठः।
अनु॑। ए॒न॒म्। विप्राः॑। ऋष॑यः। म॒द॒न्ति॒।
दे॒वाना॑म्। पु॒ष्टे। च॒कृ॒म॒। सु॒बन्धु॒मिति॑ सु॒ऽबन्धु॑म् ॥ ढः॥ ७॥

~~~~~~~~~~~~~~~~~~~~

**आ** - 'उप प्रागात्' इति। पूर्ववत् त्रिष्टुप्। 'उपप्रागात् सुमन्मेऽधायि। Vउप समीपे। Vसुमत् सुमनसा शोभनवानश्वः Vप्रागात्। 'अधायि मन्म'। Vमन्म इति मननम्। Vअधायि धृतम्। किं तदिति चेत्। 'देवानामाशाः'। Vदेवानाम् Vआशाः आशंसनानि अधायि। पशुरागच्छेदित्येवमादीनि

~~~~~~~~~~~~~~~~~~~~

1. S3 om. ऋत्विजां;
2. S3 om. गूतिः । गुरी उद्यमने
6. M4 before लोट् adds :- नः अस्मान् इन्वतु; M4 शषस इति for शपि सति ; V2 शप for शपि
19. S3 पाठस्तु-उप... सुबन्धुमिति for 'उप प्रागात्' इति
~~~~~~~~~~~~~~~~~~~~

मया धृतानि। vउप आगतः अश्वः पशुः vवीतपृष्ठः कामितपृष्ठः। अश्वपृष्ठस्तु सर्वैः काम्यते हि। अतो ब्रवीमि। 'अन्वेनꣳ विप्रा ऋषयो मदन्ति'। 'मदी हर्षे'। vएनम् अश्वं हृष्टम् vअनु vविप्राः कामितार्थपरिपूरकाः विप्राः मेधाविनः। vऋषयः क्रान्तदर्शिनः। vमदन्ति स्वयंहृष्टा भवन्ति अश्वं च मादयन्ति। vदेवानां vपुष्टे पोषणाय। vचकृम vसुबन्धुम्। अश्वं चकृम कृतवन्तो वयम् ॥ ३३ ॥

अ - 'उप प्रागात्'। vमन्म मननीयं फलम्। vसुमत् स्वयमेव vउप अस्मत्समीपे। vअगात् आगच्छतु। सुमदित्यव्ययं स्वयमित्यर्थे। "सुमत्स्वयमित्यर्थे" (नि ६.२२) इति यास्कोक्तेः। तच्च फलम्। vमे मया vअधायि। धृतमित्यर्थः। किं च। वीतम्। आरोहणार्थम्। सर्वैः कामितं पृष्ठं यस्य स vवीतपृष्ठः अयमश्वः vदेवानाम् vआशाः मनोरथान् पूरयितुम् vउप उपगच्छतु। उपेत्युपसर्गेण क्रियाव्यावृत्तिः। किं च vदेवानां vपुष्टे पोषणं पुष्टम्। भावे क्तः। निमित्ते सप्तमी देवपुष्टिनिमित्तं यमश्वं वयं vसुबन्धुम्। स्वर्गसाधनत्वात् शोभनं बन्धुं vचकृम कृतवन्तः। दीर्घः संहितायामार्षः। vएनम् अश्व vविप्राः मेधाविनः vऋषयः मन्त्रदर्शिनः vअनु vमदन्ति अनुमोदन्ताम्, तुष्यन्तु। लेट्। एतस्य ब्रह्मपरत्वमुक्तरीत्या योजनीयम्। सर्वैर्मननीयत्वान्मन्म ब्रह्म तत्। सुमत् स्वयं कृपया। उप अस्मदहृदय-समीपे अगादाच्छतु। तत् किम्? यन्मन्म vमे मया अधायि। कर्णामृतत्वेन सादरं पीतम्। 'धेट् पाने'। उपलक्षणम्। यः परमात्मा श्रवणमनननिदिध्यासनविषयीकृतः तस्य साक्षात्कारो ममास्त्विति भावः। कीदृशः? देवानामाशाः उप पूरयितुं वीतं दत्तं पृष्ठं येन कूर्मरूपेण स वीतपृष्ठः। अन्यत् पूर्ववत् ॥७॥

**यद्वा॒जिनो॒ दाम॑ सं॒दान॒मर्व॑तो॒ या शी॑र्ष॒ण्या॑ र॒श॒ना रज्जु॑रस्य।**
**यद्वा॑ घा॒स्य॒ प्रभृ॑त॒मा॒स्ये॒ तृ॒णꣳ सर्वा॒ ता ते॒ अपि॑ दे॒वेष्व॑स्तु ॥८॥(१२)॥**

यत्। वा॒जिनः॑। दाम॑। सु॒दान॒मिति॑ स॒म्ऽदान॑म्।
अर्व॑तः। या। शी॒र्ष॒ण्या॑। र॒श॒ना। रज्जुः॑। अ॒स्य॒।
यत्। वा॒। घ॒। अ॒स्य॒। प्रभृ॑त॒मिति॒ प्रऽभृ॑तम्। आ॒स्ये॑। तृण॑म्।
सर्वा॑। ता। ते॒। अपि॑। दे॒वेषु॑। अ॒स्तु॒॥ जीः॥ ८॥ (१२)॥

**आ** - 'यद्वाजिनः' इति। पूर्ववत् त्रिष्टुप्। vयत् vवाजिनः अश्वस्य यत् vदाम। दमनात् दाम। कथं भूतं दाम? vसंदानम्। संदानं पादबन्धनम्। यत् vअर्वतः। ऋ गतावित्यस्य रूपम्।

5. M4 आगात् for अगात्
22. S3 पाठस्तु - यद्वाजिनो... अस्त्विति for 'यद्वाजिनः' इति
23. V2 संघानं पाद° for संदानं पाद°

अर्वतः अश्वस्य Vया Vशीर्षण्या शिरसो योग्या Vरशना नियोजनीया। Vरज्जुः रज्जनार्था Vअस्य अश्वस्य। 'यद्वा घास्य प्रभृतमास्ये तृणम्'। Vयद् Vवा वर्णलोपश्छान्दसः (?) । आस्ये Vप्रभृतं प्रहृतम्। Vअस्य Vआस्ये मुखे Vयत् Vतृणं प्रभृतं भरितं हे अश्व, Vते तव । Vसर्वा Vता तानि सर्वाणि अपि Vदेवेषु। व्यत्ययः। देवेभ्यः Vअस्तु सन्त्विति व्यत्ययः ॥ ३४॥

**अ - 'यद्वाजिनः' Vवाजिनः वेगवतोऽश्वस्य Vयत् Vदाम। ग्रीवायां बद्धा Vरज्जुः। यच्च Vसंदानम्। पादबन्धनरज्जुः। Vया च Vशीर्षण्या। शीर्षे भवा शीर्षण्या। शिरसि बद्धा रज्जुः। शीर्षस्य शीर्षन्नादेशो "ये च तद्धिते" (पा ६.१.६१) इति। शिरसः "भवे छन्दसि" (पा ४.४.११०) इति यत्प्रत्ययः। "तित्स्वरितम्" (पा ६.१.१८५) इति स्वरितः। Vरशना रशनरूपा। कटिस्था या चास्य रज्जुः। Vवा अथवा Vअस्य अश्वस्य Vघ प्रसिद्धम्। Vआस्ये मुखे Vप्रभृतं प्रहृतं प्रक्षिप्तं Vयत् Vतृणम् अस्तीति सर्वशेषः। हे अश्व, Vते तव Vता Vसर्वा। तानि सर्वाणि देवेषु Vअस्तु सन्तु। वचनव्यत्ययः। देवोपयुक्तानि भवन्त्वित्यर्थः। "निशब्दो बहुलम्" ( वाप्रा ३.१८) इति प्रातिशाख्ये निलोपः ॥८॥**

**इति (सप्तविंशे) द्वादशोऽनुवाकः ॥१२॥**

(त्रयोदशोऽनुवाकः।)

**यदश्वस्य क्रविषो मक्षिकाऽऽश यद्वा स्वरौ स्वधितौ रिप्तमस्ति।**
**यद्धस्तयोः शमितुर्यन्नखेषु सर्वा ता ते अपि देवेष्वस्तु ॥१॥**

यत्। अश्वस्य। क्रविषः। मक्षिका। आश।
यत्। वा। स्वरौ। स्वधिता इति स्वऽधितौ। रिप्तम्। अस्ति।
यत्। हस्तयोः। शमितुः। यत्। नखेषु।
सर्वा। ता। ते। अपि। देवेषु। अस्तु॥ गिः ॥१॥

**आ** - 'यदश्वस्य' इति। अष्टावश्वस्तोमीयदेवत्यास्त्रिष्टुभः। दीर्घतमा ऋषिः। Vयत् Vअश्वस्य Vक्रविषः अपक्वमांसाङ्गम्। क्रव्यस्य मांसस्य। "क्रव्यं विकृताज्जायते" (नि ६.११) इति नैरुक्ताः। क्रयविक्रेता। "क्रविषः क्रयविक्रेता" इति नैरुक्ताः। यत् यतः अश्वस्य क्रविषः विक्रेता। यत् Vमक्षिका Vआश। 'अश भोजने'। अशितवती। 'यद्वा स्वरौ स्वधितौ रिप्तमस्ति'। Vयत्

20 S3 **पाठस्तु - यदश्वस्य... अस्त्विति** for **'यदश्वस्य' इति**
21-22 S3 om. **अपक्व°... जायते इति नैरुक्ताः**
23 V2 **स्वरुः** for **स्वरौ**

Vवा Vस्वरौ यूपशकलः स्वरूः। "यः प्रथमशकलः परापतत् स स्वरुः" (इति श्रुतेः)। तस्मिन् स्वरौ Vरिप्तं लिप्तम् Vअस्ति। यत् Vस्वधितौ। स्वधितिः क्षुरः। तत्र स्वधितौ रिप्तमस्ति। 'यद्धस्तयोः शमितुः'। Vयत् यावत् रिप्तं लिप्तम् अस्ति। Vशमितुः Vनखेषु च Vयत् लिप्तमस्ति। 'सर्वा ता ते'। हे अश्व, Vते संबन्धिनी Vसर्वा सर्वाण्यपि Vदेवेषु देवेभ्यः Vअस्तु। देवानामर्थाय भवन्तु॥ ३५॥

~~~~~~~~~~~~~~~~~~~~

**अ - 'यदश्वस्य'। Vमक्षिका Vअश्वस्य Vक्रविषः। क्रवि मांसम्। कर्मणि षष्ठी। Vयत् Vआश भक्षितवती। अश भोजने। Vवा अथवा। यत् मांसम्। Vस्वरौ स्वरुरित्युकारान्तोऽयम्। यज्ञायुधे पश्वञ्जनकाले Vरिप्तं लिप्तम् Vअस्ति। "स्वरुणा पशुमनक्ति" इति श्रुतेः। Vयत् Vस्वधितौ शासे लिप्तमस्ति। छेदनकालेऽवदानकाले च। Vयत् च Vशमितुः Vहस्तयोः लिप्तमस्ति। यच्च शमितुः Vनखेषु लिप्तमस्ति। हे अश्व, 'सर्वा ता ते अपि'। Vते तव Vता तानि सर्वाणि अपिV देवेषु Vअस्तु सन्तु॥१॥**

~~~~~~~~~~~~~~~~~~~~

**यदूव॑ध्यमु॒दर॑स्याप॒वाति॒ य आ॒मस्य॑ क्र॒विषो॑ ग॒न्धो अस्ति॑।**
**सु॒कृ॒ता तच्छ॑मि॒तार॑ः कृण्वन्तू॒त मेध॑ꣳ शृ॒तपा॑कं पचन्तु ॥२॥**

~~~~~~~~~~~~~~~~~~~~

यत्। ऊव॑ध्यम्। उ॒दर॑स्य। अ॒प॒वातीत्य॑प॒ऽवाति॑।
यः। आ॒मस्य॑। क्र॒विष॑ः। ग॒न्धः। अस्ति॑।
सु॒कृ॒तेति॑ सु॒ऽकृ॒ता। तत्। श॒मि॒तार॑ः। कृ॒ण्व॒न्तु॒।
उ॒त। मेध॑म्। शृ॒तपा॒क॒मिति॑ शृ॒त॒ऽपा॒क॑म्। प॒च॒न्तु॒॥ दैं॥ २॥

~~~~~~~~~~~~~~~~~~~~

**आ** - 'यदूवध्यम्' इति। Vयत् Vऊवध्यम् भक्षितम् उदरस्थमर्धपक्वमन्नम् ऊवध्यमित्युच्यते। Vउदरस्य मध्यस्थं यत् ऊवध्यम् Vअपवाति। अप अपपूतं पृथग्भूतं वाति गन्धयति। 'य आमस्य क्रविषो गन्धो अस्ति'। Vयः च Vआमस्य अक्वस्य Vक्रविषः Vगन्धः मांसगन्धः Vअस्ति। 'सुकृता तच्छमितारः'। Vसुकृता सुकृतानि Vतत् तानि। Vशमितारः तानि सुकृतानि सुसंस्कृतानि Vकृण्वन्तु कुर्वन्तु। Vउत अपि च 'मेधं शृतपाकं पचन्तु'। Vमेधं शुद्धं यथा भवति तथा Vशृतपाकं संपूर्णपाकं यथा भवति तथा Vपचन्तु॥

~~~~~~~~~~~~~~~~~~~~

4 M4 om. **हे अश्व**

16 S3 **पाठस्तु- यदूवध्यम्... पचन्त्विति** for **'यदूवध्यम्' इति।**

20 S3 om. **संपूर्णपाकं**
~~~~~~~~~~~~~~~~~~~~

अ - 'यदूवध्यम्'। Vउदरस्य Vऊवध्यम् ईषज्जीर्णतृणपुरीषं Vयत् Vअपवाति अपगच्छति बहिर्याति। भक्षितमपक्वमाशयस्थम् ऊवध्यमित्युच्यते। तथा- Vआमस्य अपक्वस्य Vक्रविषः मांसस्य Vयः Vगन्धः लेशः Vअस्ति। घृतगन्धिभोजनमित्यादौ गन्धशब्दस्य महाभाष्ये (मभा ५.४.१३६) लेशपरत्वेन व्याख्याततत्वात्। Vशमितारः विशसितारः देवाः Vतत् ऊवध्यादि सर्वं Vसुकृता सुकृतं सुसंस्कृतं Vकृण्वन्तु कुर्वन्तु। Vउत अपि च Vमेधं मेध्यम् अश्वम्। तद्धितलोपश्छान्दसः। Vशृतपाकं यथा स्यात् तथा Vपचन्तु। शृतः योग्यः पाको यस्मिन् कर्मणि यथा तथेत्यर्थः। अतिपक्वमीषत् पक्वं च न कुर्वन्त्वित्यर्थः ॥२॥

यत् ते गात्रा॑द॒ग्निना॑ प॒च्यमा॑नाद॒भि शूलं॒ निह॑तस्याव॒धाव॑ति।
मा तद्भूम्या॒मा श्लि॑ष॒न्मा तृणे॑षु दे॒वेभ्य॒स्तदु॒शद्भ्यो॑ रा॒तम॑स्तु ॥३॥

यत्। ते॒। गात्रा॑त्। अ॒ग्निना॑। प॒च्यमा॑नात्। अ॒भि। शूल॑म्।
निह॑त॒स्येति॒ निऽह॑तस्य। अ॒व॒धा॒व॒तीत्य॑व॒ऽधाव॑ति।
मा। तत्। भूम्या॑म्। आ। श्लि॒ष॒त्। मा। तृणे॑षु।
दे॒वेभ्य॑ः। तत्। उ॒शद्भ्य॒ इत्यु॒शत्ऽभ्य॑ः। रा॒तम्। अ॒स्तु॥ ठाः॥ ३॥

आ - 'यत् ते गात्रात्' इति। हे अश्व, Vअभि Vशूलं Vनिहतस्य शूलमभि निहतस्य अश्वस्य, Vते तव Vअग्निना Vपच्यमानात् Vगात्रात् अव अवयुतात् Vयत् Vधावति। यत् उद्गत्याधावति गच्छति Vमा Vभूम्याम् Vआश्लिषत्। Vतत् मा संविद्धादिकं भूम्याम् आश्लिषत् भूमिं मा आश्रयेत्। 'श्लिष आलिङ्गने'। मा श्लिषत्। Vमा तृणेषु आश्लिषत्। किं तु 'देवेभ्यः तदुशद्भ्यो रातमस्तु'। Vतत् Vउशद्भ्यः। 'वश कान्तौ'। कामयमानेभ्यः Vदेवेभ्यः Vरातं दत्तम् Vअस्तु॥ ३६॥

अ - 'यत् ते गात्रात्'। हे अश्व, Vअग्निना Vपच्यमानात् Vते तव Vगात्रात् शरीरात् Vयत् अर्थात् ऊष्मा रसो वा Vअवधावति अधस्तादुगच्छति। तथा Vनिहतस्य निःशेषेण हतस्य Vयत् अङ्गं Vशूलम् अभि धावति। शूलेन पाके क्रियमाणे यन्निर्गच्छतीत्यर्थः। Vतत् निर्गतमुष्मादिकं Vभूम्यां Vमा Vआश्लिषत्। भूम्यामाश्लिष्टं माऽभूत्। 'श्लिष आलिङ्गने'। अस्मात् पुरीषादित्वाच्च्लेरङ्। "न माङ्योगे" (पा ६.४.७४) इत्यड्भावः। तथा Vतृणेषु अपि माऽऽश्लिषत्। विशसनसमये बहिर्लग्नं माऽस्तु। किं तर्हि? Vतत् पतितं तृणलग्नं च सर्वं Vदेवेभ्यः Vरातं दत्तम् Vअस्तु। 'रा दाने'। कीदृशेभ्यः। Vउशत्भ्यः। उशन्ति कामयन्ते ते उशन्तः, तेभ्यः। हविः कामयमानेभ्यः। 'वश कान्तौ'। अस्माल्लटः शत्रादेशः। संप्रसारणम्॥ ३॥

13. S3 निहितस्य for निहतस्य
15. S3 om. मा
20. निर्गमम् for निर्गतम्

**ये वा॒जिनं॑ परि॒प॒श्य॑न्ति प॒क्वं य ई॑मा॒हुः सु॑र॒भिर्नि॒र्हरे॒ति॑।**
**ये चार्व॑तो मा॑ꣳसभि॒क्षामु॒पास॑त उ॒तो तेषा॑म॒भिगू॑र्तिर्न इन्वतु॥४॥**

~~~~~~~~~~~~~~~~

ये। वा॒जिन॑म्। प॒रि॒पश्य॒न्तीति॑ प॒रि॒ऽपश्य॑न्ति। प॒क्वम्।
ये। ई॒म्। आ॒हुः। सु॒र॒भिः। निः। ह॒र॒। इति॑।
ये। च॒। अर्व॑तः। मा॒ꣳस॒भि॒क्षामिति॑ मा॒ꣳस॒ऽभि॒क्षाम्। उ॒पास॑त॒ इत्यु॑प॒ऽ आस॑ते।
उ॒तो इत्यु॒तो। तेषा॑म्। अ॒भिगू॑र्ति॒रित्य॒भिऽगू॑र्तिः। न॒ः। इ॒न्व॒तु॒॥ प्राः॥ ४॥

~~~~~~~~~~~~~~~~

**आ** - 'ये वाजिनम्' इति। Vये Vपक्वं सन्तं Vवाजिनम् अश्वं Vपरिपश्यन्ति। 'य ईमाहुः सुरभिर्निर्हरेति। Vईम्इति छान्दसं पदम्। इमं वाजिनं Vये Vआहुः किमिति Vसुरभिः अयमश्वः पक्वः सुरभिर्जातः तं Vनिर्हर। हर इतिशब्दः प्रकारवचनः। Vइति Vये Vच Vअर्वतः अश्वस्य संबन्धिनीं मांसभिक्षां भिक्षायां वा Vउपासते प्रार्थयन्ते। Vउतो अपि Vतेषाम् Vअभिगूर्तिः Vनः Vइन्वतु। तेषामुद्यमो नः व्याप्नोतु। वयं देवानामनन्यभूता इत्यर्थः॥ ३७॥

~~~~~~~~~~~~~~~~

**अ - 'ये वाजिनम्'। Vये जनाः Vपक्वं Vवाजिनम् अश्वं Vपरिपश्यन्ति।अयं पक्वः इति जानन्ति। Vये Vईम्। ईमित्यव्ययं चार्थे। ये च जनाःVसुरभिःसुगन्धःहेतुगर्भं विशेषणम्। सुरभित्वात् पाको जातः। अतो हे पाचक, Vनिर्हर अग्नेः सकाशात् उत्तारय इति Vआहुः। तथा Vये च जनाः Vअर्वतः अश्वस्य Vमांसभिक्षाम् Vउपासते। हुत शिष्टमांसयाचनां कुर्वते। Vउतो अपि च Vतेषां पाकद्रष्टादिजनानाम् Vअभिगूर्तिः उद्यमः Vनः अस्मात् Vइन्वतु प्रीणयतु। यद्वा अयं मन्त्रो देवपरो व्याख्येयः। ये देवाः पक्वं वाजिनं परिपश्यन्ति; कदा होष्यत्यध्वर्युरिति। ये च देवा विलम्बं दृष्ट्वा सुरभिः सुश्रुतो जातोऽस्मभ्यं निर्हर देहीत्याहुः। ये च देवा अर्वतो मांसभिक्षामुपासते मांसं याचन्ते तेषामभिगूर्तिः संकल्पः नोऽस्मान् प्रीणयतु सुफलो भवतु॥४॥**

~~~~~~~~~~~~~~~~

7. S3 **पाठस्तु - ये वाजिनं... इन्वत्विति** for **'ये वाजिनम्' इति**
10. V2 **च** for **वा**
19. M4 **सफलो** for **सुफलो**

**यन्नीक्ष॑णं माꣳस्पच॑न्या उखाया या पात्रा॑णि यूष्ण आसेच॑नानि।
ऊष्मण्या॑पिधाना॑ चरूणाम॒ङ्काः सूनाः परि॑ भूषन्त्यश्व॑म्॥५॥**

यत्। नीक्ष॑णमिति॑ निऽईक्ष॑णम्। माꣳस्पच॑न्याः। उखाया॑ः। या। पात्रा॑णि। यूष्णः। आसेच॑नानीत्याऽसेच॑नानि। ऊष्मण्या॑। अपिधानेत्य॑पिऽधाना॑। चरूणाम्। अङ्काः। सूनाः। परि॑। भूषन्ति। अश्व॑म्॥ णें॥ ५॥

**आ** - 'यन्नीक्षणम्'। ऋष्यादिकं पूर्ववत्। नितरामीक्ष्यते शृताशृतमिति Vयत्। Vउखायाः ईक्षणम्। कीदृशायाः? Vमाꣳस्पचन्याः अकारलोपश्छान्दसः मांसपाककर्त्र्याः स्थाल्याः पाकपरीक्षार्थमवलोकनम्। तथा Vया यानि च Vपात्राणि Vयूष्णः वसायाः। यूषशब्दस्य यूषन्नादेशः। षष्ठ्येकवचने उपधालोपश्छान्दसः। यूष्णः पाककाले उखायां पच्यमाने (? मानायाम्) Vआसेचनानि। आसिच्यन्ते येषु तानि। Vऊष्मण्या ऊष्मन् शब्दस्य धारणार्थे यत् प्रत्ययः ऊष्मण्यानि धारणानि उदञ्चनानि। Vअपिधाना। ऊष्मातिरोधायिका चरूणां चरुस्थालीनाम् अपिधाना पिधानपात्राणि। Vअङ्काः चिह्नरूपाः। शरीरवचनो वा अङ्कशब्दः। उक्तं च-

विश्वासप्रतिपन्नस्य वञ्चने का विदग्धता।
अङ्कमारुह्य सुप्तस्य हन्तुः किं नाम पौरुषम्॥ (इति)।

Vसूनाः स्वधित्यादयः खण्डितावयवरूपम् Vअश्वं Vपरिभूषन्ति अलंकुर्वन्ति ॥ ३८ ॥

**अ - 'यन्नीक्षणम्'। एते वक्ष्यमाणाः Vअश्वं Vपरिभूषन्ति अलंकुर्वन्ति। स्वस्वव्यापारेण पाकं साधयन्तीत्यर्थः। भूष अलंकारे भौवादिकः। एते के। तानाह। Vमांस्पचन्याः। मांसं पच्यते यस्यां सा मांस्पचनी, तस्याः। मांसपाकाधिकरणभूतायाः Vउखायाः स्थाल्याः Vयत् Vनीक्षणं नितरामीक्षणम्। पाकनिष्पत्त्यर्थं पुनःपुनर्दर्शनम्। "करणाधिकरणयोश्च" (पा ३.३.११७) इति ल्युट्।**

**लुम्पेदवश्यमः कृत्ये तुंकाम मनसोरपि।
समो वा हिततयोर्मांसस्य पचि युङ्घञोः॥**

**इति 'मांसशब्दस्याकारलोपः। "टिड्ढाणञ्"- (पा ४.१.१५) इति ङीप्। तथा Vयूष्णः पक्वरसस्य Vआसेचनानि। आसिच्यन्ते येषु तानि आसेचनसाधनानि। Vया यानि Vपात्राणि। "पद्दन्"- (पा ६.१.६३) इति यूषशब्दस्य यूषन्नादेशः। यानि Vचरूणां मांसपूर्णपात्राणाम् Vअपिधाना अपिधानानि**

7 S3 यन्नीक्षण° ... अश्वमिति for यन्नीक्षणम्
10 V2 ऊष्ण° for ऊष्म°
16 S3 रूपाः for °रूपम्

अग्निस्तोमीयमन्त्राः]

आच्छादनपात्राणि। कीदृशानि तानि। vऊष्मण्या। ऊष्माणं वारयन्ति तान्यूष्मण्यानि। निलोप आर्षः। ऊष्मन्-शब्दाद्वारणार्थे यत्प्रत्ययः। आच्छादने सति ऊष्मा न बहिर्यातीत्यर्थः। "तित्स्वरितम्" (पा ६.१.१८५) इत्यन्तस्वरितः। किं च। vअङ्काः चिह्नानि चिह्नसाधनानि हृदयाद्यवयवज्ञापकानि वेतसमयानि। तथा vसूनाः। विशसन-कारणीभूताः स्वधितादयश्चैते अश्वं परिभूषयन्तीति संबन्धः॥५॥

मा त्वाऽग्निर्ध्व॑नयीद्धूमग॑न्धिर्मोखा भ्राज॑न्त्यभि वि॑क्त जघ्रिः।
इष्टं वीतमभिगू॑र्तं वषट्कृतं तं देवासः प्रति॑ गृभ्णन्त्यश्व॑म्॥६॥

मा। त्वा। अग्निः। ध्वनयीत्। धूमग॑न्धिरिति॑ धूमऽग॑न्धिः।
मा। उखा। भ्राज॑न्ती। अभि। वि॑क्त। जघ्रिः।
इष्टम्। वीतम्। अभिगू॑र्तमित्यभिऽगू॑र्तम्। वष॑ट्कृतमिति वष॑ट्ऽकृतम्।
तम्। देवास॑ः। प्रति॑। गृभ्णन्ति। अश्व॑म्॥ ढः॥ ६॥

**आ** - 'मा त्वाऽग्निर्ध्वनयीत्'। हे अश्व, vत्वा त्वाम् vअग्निः श्रपणाग्निः vमा vध्वनयीत्। ध्वनिः शब्दः। ध्वनिं मा कारयेत्। 'धूमगन्धिर्मा'। vधूमगन्धिः अल्पधूमावृतः। अग्निः त्वां दहत्य(पि) धूमावरणो माऽस्तु। 'उखा भ्राजन्त्यभि विक्त'। भ्राजृ दीप्तौ। vभ्राजन्ती अग्निना दीप्ता अपि vउखा सर्वतः विविक्तं मा कुरु। विचिर् पृथग्भावे। vअभि प्रदीपितं पृथग्भूतम् उद्भावय। vजघ्रिः जिघ्रन्ती। उखा गन्धघ्राणमकरोत्। vइष्टं यागेन समलंकृतम्। vवीतं कामितं जीवितम्। vअभिगूर्तम् अभ्युद्यतम्। vवषट्कृतम् अवदानकाले वषट्कारेण वषट्कृतम् vअश्वम्। vदेवासः देवाः प्रतिगृह्णन्तु। यद्वा - इष्टं प्रयाजैः वीतम् आप्रीभिः पर्यग्निकृतम्। अभिगूर्तं ये यजामह इत्यागूर्य युक्तं वषट्कृतं वषट्कारेण संस्कृतम्। एवं भूतम् vअश्वं देवासः देवाः vप्रतिगृभ्णन्ति प्रतिगृह्णन्ति॥ ३९॥

**अ** - 'मा त्वाऽग्निः'। हे अश्व, vअग्निः vत्वां vमा vध्वनयीत् ध्वनिं मा कारयतु। ध्वनौ सति पचनभाण्डभङ्गः स्यात्। दह्यमानं मांसं सिमसिमेति शब्दं यत् करोति तन्मास्त्वित्यर्थः। "नोनयतिध्वनयत्ये°" (पा ३.१.५१) इत्यादिना ण्यन्तात् चङ्प्रतिषेधात् च्लेः सिजेव। "ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्" (पा ७.२.५) इति वृद्ध्यभावः। vधूमगन्धिः। धूमस्य गन्धो लेशो यत्र सः। अल्पधूमवानित्यर्थः। "अल्पाख्यायाम्" (पा ५.४.१३६) इति गन्धादिकारः। किं च - vभ्राजन्ती अतितापेन दीप्यमाना vउखा स्थाली vमा vअभि vविक्त मा चलतु। ओविजी भयचलनयोरित्यस्माल्लुङि तङि "झलो झलि" (पा ८.२.२६) इति सिलोपे विक्तेति रूपम्। कीदृश्युखा? vजघ्रिः जिघ्रति गन्धमिति जघ्रिः। "आदृगम°" (पा ३.२.१७१) इति किन्प्रत्ययः। आघ्रणमत्राधिष्ठातृदेवतापेक्षया। vतम्एवंविधम् vअश्वं त्वां vदेवासः देवाः vप्रतिगृभ्णन्ति प्रतिगृह्णन्तु। कीदृशं त्वाम्? vइष्टम्। प्रयाजैः vवीतम्। आप्रिभिः पर्यग्निकृतम्। vअभिगूर्तम्। ये यजामहे इत्यागूर्योक्तम्। vवषट्कृतम् वषट्कारेण संस्कृतम्॥६॥

4. M4 स्वधितयः for स्वधितादयः
11. S3 पाठस्तु - मा त्वाग्निर्... अश्वमिति for 'मा त्वाऽग्निर्ध्वनयीत्'।
15. S3 om. कामितं

**नि॒क्रम॑णं नि॒षद॑नं वि॒वर्त॑नं॒ यच्च॒ पड्वी॑श॒मर्व॑तः।**
**यच्च॑ प॒पौ यच्च॑ घा॒सिं॑ ज॒घा॒स॒ सर्वा॒ ता ते॒ अपि॑ दे॒वेष्व॑स्तु ॥७॥(१३)॥**

नि॒क्रम॑ण॒मिति॑ नि॒ऽक्रम॑णम्। नि॒षद॑नम्। नि॒सद॑न॒मिति॑ नि॒ऽसद॑नम्।
वि॒वर्त॑न॒मिति॑ वि॒ऽवर्त॑नम् । यत्। च॒ । पड्वी॑शम्। अर्व॑तः।
यत्।च। प॒पौ।यत्।च॒।घा॒सिम्। ज॒घास॑।
सर्वा॑। ता।ते॒।अपि॑। दे॒वेषु॑। अ॒स्तु॒॥टाः॥७॥(१३)॥

आ - 'निक्रमणं निषदनम्'। स्थानात् निष्क्रमणम्। 'क्रमु पादविक्षेपे'। नितरां निष्क्रमणम्। vअर्वतः अश्वस्य पादविन्यासचालने। vनिषदनं तत्रैव निवासः। vविवर्तनं तत्रापि भ्रमणम्। vयत् vच vपड्वीशम्। पादबन्धनम्। vयत् vच पपौ। उदकं यत् पीतवान्। 'यच्च घासिं जघास'। vघासिं घासं कवलं vजघास। घस्लृ अदने। कवलं भक्षितवान्। 'सर्वा ता ते अपि देवेष्वस्तु'। vता तानि vसर्वा सर्वाणि हे अश्व, vते तव संबन्धीनि vअपि vदेवेषु देवेभ्यः vअस्तु सन्तु ॥४०॥

**अ - 'निक्रमणं निषदनम्।' vयत् vनिक्रमणं नितरां क्रमणं यद्वा - नितरां क्रमते यत्र तत् निक्रमण-स्थानम्। एवमग्रेऽपि। vनिषदनम् सम्यगुपवेशनम्। तत्स्थानं वा। vविवर्तनं विविधं वर्तनं लुंठनम् तत् स्थानं वा। भावे अधिकरणे च सर्वत्र ल्युट्। vयत् vच vअर्वतः अश्वस्य vपड्वीशम्। पादेषु विशति तत् पड्वीशम् पादबन्धनसूत्रम्। वर्णव्यत्ययश्छान्दसः।**

**किं च - अयमश्वः vयत् vच जलादि vपपौ। vयत् vच vघासिं घासम्। अकारस्येकारः आर्षः। अदनीयं तृणादिकं vजघास भक्षितवान्। 'घस्लृ अदने लिट्। हे अश्व, vसर्वा vता vते सर्वाणि तव तानि क्रमणादीनि vदेवेषु vअस्तु सन्तु। देवार्थस्यास्याश्वस्य रोमादीनामपि निरर्थकत्वं माऽस्तु इति भावः ॥७॥**

**इति (सप्तविंशे) त्रयोदशोऽनुवाकः ॥१३॥**

7. S3 पाठस्तु - निक्रमण° ... अस्त्विति for 'निक्रमणं निषदनम्।'
8. V2 °विन्यासः for °विन्यास°
10. S3 after जघास adds :- इदानीं पञ्च। सुगव्यं नः शोभनगमनं नः अस्माकं वाजी करोतु। स्वस्त्यां शोभनश्व्यं च करोतु। पुंसः पुत्रान् करोतु। दुहितरः तत्पुत्राः पुत्रशब्देनोच्यन्ते इति। अतो विशेषणं पुंसः पुत्रान्। उत अपि च। विश्वायुषं सर्वस्य पोषकं रयिं धनं करोतु।अनागास्त्वं नो।
11. S3 om. सर्वा
14. M4 वर्तमानं for वर्तनं

(चतुर्दशोऽनुवाकः।)

**यदश्वा॑य॒ वास॑ उपस्तृ॒णन्त्य॑धीवा॒स॒ᳫं या हिर॑ण्यान्यस्मै।**
**सं॒दा॒नमर्व॑न्तं॒ पड्वी॑शं प्रि॒या दे॒वेष्वा या॑मयन्ति ॥१॥(१४)॥**

~~~~~~~~~~~~~~~~~~~~

यत्। अश्वा॑य। वासः॑। उ॒प॒स्तृ॒णन्तीत्यु॑प॒ऽस्तृ॒णन्ति॑।
अ॒धी॒वा॒सम्। या। हिर॑ण्यानि। अ॒स्मै॒।
सं॒दा॒नमिति॑ स॒म्ऽदान॑म्। अर्व॑न्तम्। पड्वी॑शम्।
प्रि॒या। दे॒वेषु॑। आ । या॒म॒य॒न्ति॒। य॒म॒य॒न्तीति॑ यमयन्ति ॥ हूं ॥ १ ॥ (१४) ॥

~~~~~~~~~~~~~~~~~~~~

**आ** - 'यदश्वाय' इति। [v]यत् [v]अश्वाय संज्ञप्यमानाय अश्वाय यत् [v]वासः वस्त्रम् [v]उपस्तृणन्ति आच्छादयन्ति। [v]अधीवासम् वाससः उपरि यानि [v]हिरण्यानि भूषणानि [v]अस्मै अश्वाय उपस्तृणन्ति। संदीयते अनेनेति [v]संदानम्। अवखण्डनसाधनवन्तम् [v]अर्वन्तम्। व्यत्ययः। अर्वते। [v]पड्वीशम् पादवासः। [v]प्रिया। एतानि प्रियाणि भवन्ति। देवेभ्यः प्रजापतये च [v]आयामयन्ति आवहन्ति आगमयन्ति ॥ ४१ ॥

~~~~~~~~~~~~~~~~~~~~

**अ - 'यदश्वाय'। ऋत्विजः [v]अश्वाय [v]अधीवासम्। अधि अधिकत्वेन उपरि वा अस्य आच्छाद्यते येन तदधीवासम्। दीर्घश्छान्दसः। [v]वासः वस्त्रम् [v]उपस्तृणन्ति आच्छादयन्ति। स्तृञ् आच्छादने। क्रयादिगणः। तथा [v]या यानि [v]हिरण्यानि मणिमालारूपाणि अवदानार्थे सौवर्णशलाकानि वा उपस्तृणन्ति। [v]अस्मै [v]अश्वाय। तथा [v]अर्वन्तम्। अर्वतः। षष्ठ्यर्थे द्वितीया। [v]संदानम् शिरोबन्धनम्। [v]पड्वीशम् पादबन्धनं च अस्ति। एतानि सर्वाणि [v]प्रिया प्रियाणि कृत्वा [v]देवेषु आ [v]यामयन्ति आगमयन्ति प्रापयन्ति। यामयन्तीति दीर्घश्छान्दसः। "अधीवासमित्येके" (वाप्रा ५.२३) इति प्रातिशाख्येन प्रकृतिदीर्घत्वात् अधीवासम् इति पदं काण्वमते पदपाठे न द्विरार्तते। उपस्तृणन्ति इत्येकं पदम्। यद्वृत्तयोगेन निपातानामाख्यातपदेन सह समासात्। एवं यत्र यत्र यद्वृत्तयोगस्तत्राप्येवमेव ज्ञातव्यम् ॥१॥**

**इति (सप्तविंशे) चतुर्दशोऽनुवाकः ॥१४॥**

~~~~~~~~~~~~~~~~~~~~

8. S3 **पाठस्तु - यदश्वाय ... यामयन्तीति** for **'यदश्वाय' इति।**
10. S3 **°साधनम्** for **°साधनवन्तम्**
13. P2 **अधिकत्वे** for **अधिकत्वेन** ; M4 om. **उपरि वा अस्य।**

(पञ्चदशोऽनुवाकः।)

**इमा नु कं भुवना सीषधामेन्द्रश्च विश्वे च देवाः।**
**आदित्यैरिन्द्रः सगणो मरुद्भिरस्मभ्यं भेषजा करत्।**
**यज्ञं च नस्तन्वं च प्रजां चादित्यैरिन्द्रः सह सीषधाति ॥१॥**

इमा। नु। कम्। भुवना। सीषधाम। सीसधामेति सीसधाम।
इन्द्रः। च विश्वे। च । देवाः।
आदित्यैः। इन्द्रः। सगण इति सऽगणः। मरुद्भिरिति मरुत्ऽभिः।
अस्मभ्यम्। भेषजा। करत्।
यज्ञम्। च। नः। तन्वम्। च। प्रजामिति प्रऽजाम्। च।
आदित्यैः। इन्द्रः। सह। सीषधाति। सीसधातीति सीसधाति॥ भ्रोः॥ १॥

**आ** - 'इमा नु कम्' इति। द्विपदा विराड्वैश्वदेवी। ᵛइमा ᵛनु ᵛकम् इति निपातसमाहारोऽनर्थकः। इमा छान्दसं पदम्। इमा इमानि भुवनानि भूतजातानि ᵛसीषधाम, अतिशयेन साधयामः। 'इन्द्रश्च विश्वे च देवाः'। विश्वैर्देवैश्च सहितः। ᵛआदित्यैः च सहितः। ᵛमरुद्भिः च गणैः सहितः ᵛइन्द्रः ᵛअस्मभ्यं ᵛभेषजा भेषजानि ᵛकरत् अकरोत् करोतु। 'यज्ञं च' । इमं ᵛयज्ञं ᵛनः अस्माकं ᵛतन्वं शरीरं ᵛच ᵛप्रजां ᵛच ᵛआदित्यैः सहितः ᵛइन्द्रः ᵛसीषधाति अवश्यं साधयति साधनं करोतु॥ ४२॥

**अ - कात्यायनः - "इमा नु कमिति च द्विपदाः" (काश्रौ २०.८.११)। अयस्मयपात्रेण अश्वलोहितहोमान्तरम् 'इमा नु कम्' इत्याद्याः षट् द्विपदाः जुहोति। कण्डिकाद्वयस्य षडर्धानि सन्ति। तैः षडाहुतीर्जुहोतीति सूत्रार्थः। इमा नु कम्। द्विपदाछन्दस्का विश्वेदेवदेवत्या आप्त्यपुत्रभुवनदृष्टास्तिस्त्र ऋचः। ᵛनु ᵛकम् एतौ निपातौ पादपूरणौ। ᵛइमा ᵛभुवना इमानि भुवनानि भूतजातानि वयं ᵛसीषधाम साधयामः। वशीकुर्म इत्यर्थः। साधयतेर्लुङि चङि उत्तमे बहुवचनम्। अडभाव आर्षः। अश्वमेधेन सर्वं वशीकुर्म इति भावः। किं च ᵛइन्द्रः। इदि परमैश्वर्ये। परमैश्वर्यवान्। ᵛसगण :। निजपरिवारैः सहितः इन्द्रः देवेशः।**

11. S3 पाठस्तु - इमा नु ...सीषधातीति for 'इमा नु कम्' इति।
15. S3 after साधयति adds : - अदितिः अदीनोऽश्वं करोतु। किं च क्षत्रं नः अस्माकं च न तां करोत्यर्थे च निः करोतु। हविष्मानश्वः सर्वे अश्वावयवा हवींषि

अश्वलोहितहोममन्त्राः ]

Vविश्वे Vदेवाः च Vआदित्यैः द्वादशादित्यैः Vमरुद्भिः एकोनपञ्चाशत् संख्यैश्चसहिताः सन्तः Vअस्मभ्यं Vभेषजा भेषजानि औषधानि हितानि अनिष्टनिवृत्तीष्टप्राप्तिरूपाणि Vकरत् कुर्वन्तु। किं च Vइन्द्रः Vआदित्यैः Vसह Vनः अस्माकं Vयज्ञम् अश्वमेधम्। Vतन्वं शरीरम्। Vप्रजां पुत्रादिरूपां च Vसीषधाति सादयतु नीरोगाः सुपुत्रादयो वयं यज्ञं सम्यक् कुर्म इति भावः ॥१॥

---

अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः।
वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमꣳ रयिं दाः।
तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥२॥ (१५) ॥

---

अग्ने त्वं। - ॥अ॥२॥(१५)॥

(शादं दद्भिर्द्वे ॥ वातं प्राणेन द्वे ॥ २ ॥ मशकान् केशैरिति च द्वे ॥ २ ॥ अग्नेः पक्षतिरेका ॥ १ ॥
इन्द्राग्न्योः पक्षतिरेका ॥ १ ॥ मरुताꣳस्कन्धाः एका ॥ १ ॥ पूषणँ वनिष्ठुनेत्येकैका ॥ १ ॥
इन्द्रस्य क्रोळो द्वे ॥ २ ॥ विधृतिमेका ॥ १ ॥ हिरण्यगर्भश्चतस्रः ॥ ४ ॥
आ नो दश ॥ १० ॥ मानोऽष्ट ॥ ८ ॥ यदश्वस्य सप्त ॥ ७ ॥
यदश्वायैका ॥ १ ॥ इमा नु कं द्वे ॥ २ ॥ पञ्चदशानुवाकेषु पञ्चचत्वारिंशत् ॥ ४५ ॥ )

इति शुक्लयजुर्वेदकाण्वसंहितायां सप्तविंशोऽध्यायः ॥ २७ ॥ हरिः ॐ ॥

---

आ - 'अग्ने त्वम्' इति। व्याख्यातो मन्त्रः ॥ ४५ ॥

इति (श्रीमत्परमहंसपरिव्राजकाचार्यश्रीवासुदेवसुरि श्रीकृष्णभक्तिसाम्राज्यस्य श्रीमज्जातवेदोपाध्यायस्य सूनुना चतुर्वेदिश्रीमदानन्दबोधभट्टोपाध्यायेन विरचिते शुक्लयजुः काण्वसंहितामन्त्रभाष्यसंग्रहे सप्तविंशोऽध्यायः ॥ २७ ॥

---

अ - 'अग्ने त्वम्'। एता अपि तिस्रो द्विपदाः। हे Vअग्ने, गार्हपत्य, Vत्वं Vनः अस्माकम् Vअन्तमः अन्तिकतमः। सदा अस्मत्समीपवर्ती भव। Vउत अपि च Vत्राता। त्रायते स त्राता पालयिता। Vशिवः शान्तः। Vवरूथ्यः वरूथः। पुत्रपौत्रादिसमूहः। तस्मै हितो वरूथ्यश्च भव। दीर्घः संहितायां छान्दसः।

---

15. S3 पाठस्तु - अग्ने त्वं सखिभ्य इति for अग्ने त्वम् इति।
17- 18. V2 काण्ववेद° for शुक्लयजुः काण्वसंहिता°;
21. S3 °संहितायाः for °संहितायां

[अश्वलोहितहोममन्त्राः

किं च- हे अग्ने, वसुः अस्मन्मित्रजनानां वासयिता । वसुश्रवाः । वसुना धनेन श्रवः कीर्तिर्यस्य स तथा। धनप्रदोऽयमित्येवमस्य कीर्तिर्महती । 'आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनात्' इति स्मरणात् । अग्निः अग्रगामी त्वम् । अच्छ स्वच्छभावेन नक्षि अस्मदीयं यागस्थानं प्रत्यागच्छ । नक्ष गताविति धातुः। नक्षेति वक्तव्ये इकार आर्षः। यदा यदा यागं कुर्मस्तदा तदा निर्मलत्वेनागच्छेत्यर्थः आगत्य च तृप्तःसन् द्युमत्तमं दीप्तिमन्तमतिशयेन। रयि धनं मानुषं दैवंज्ञानाख्यं च दाः देहि। व्यत्ययच्छान्दसः। किंच हे शोचिष्ठ, शोचिरिति दीप्तिनाम। अतिशयेन दीप्तीमान् । अतिशयार्थे इष्टन् प्रत्ययः । हे दीदिवः अतिशयेन सर्वस्य दीपक । अग्ने तं, पूर्वोक्तगुणविशिष्टं त्वा त्वां सुम्नाय सुखाय ईमहे शरणं प्रजामः। न केवलमात्मार्थे। किं तर्हि। सखिभ्यः । सखीनामर्थे च । त्वद्दत्तं धनं देवमित्रात्मोपकाराय भवन्त्विति तात्पर्यार्थः । एष एवार्थो ब्राह्मणे ऽभिहितः - ''पुरुषच्छन्दसं वै द्विपदा द्विपापद्वा अयं पुरुषः पुरुषानेवैतद् याचते'' (शब्रा २.३ .४.३३) इत्यादिवाक्येनेत्यलं विस्तरेण ॥२॥

इति (सप्तविंशे) पञ्चदशोऽनुवाकः ॥१५॥

इति श्रीमन्नागदेवभट्टात्मजेन श्रीमदनन्ताचार्येण विरचितायां वेदार्थदीपिकायां काण्वसंहिताभाष्ये सप्तविंशोऽध्यायः॥२७॥

अंनेन वेददीपेन मया नीराजितो हरिः।
मच्छ्रमं सार्थकीकृत्य मद्वंशं सर्वदाऽवतु॥
॥ ॐ ॥

6. M4 om. हे दीदिवः

7. P2 M4 for त्वं for तं

12. P2 om. °काण्व°

# अष्टाविंशोऽध्यायः

(प्रथमोऽनुवाकः।)

अ॒ग्निश्च॑ पृथि॒वी च॒ संन॑ते॒ ते मे॒ सं न॑मताम॒दो
वा॒यु॒श्चा॒न्तरि॑क्षं च॒ संन॑ते॒ ते मे॒ सं न॑मताम॒द
आ॑दि॒त्यश्च॒ द्यौश्च॒ संन॑ते॒ ते॑ मे॒ सं न॑मताम॒द
आप॑श्च॒ वरु॑णश्च॒ संन॑ते॒ ते मे॒ सं न॑मताम॒दः।
स॒प्त स॒ꣳ सदो॑ अ॒ष्टमी भू॑त॒साध॑नी॥१॥

अ॒ग्निः। च॒। पृ॒थि॒वी। च॒। संन॑ते॒ इति॒ सम्ऽ न॑ते। ते इ॒ति॒ ते। मे॒। सम्। न॒म॒ता॒म्। अ॒दः।
वा॒यु॒ः। अ॒न्तरि॑क्षम्। आ॒दि॒त्यः। द्यौः। आप॑ः। वरु॑णः॥
स॒प्त। स॒ꣳसद॒ इति॑ स॒म्ऽसद॑ः। अ॒ष्टमी। भू॒त॒साध॒नीति॑ भू॒त॒ऽसाध॑नी॥ द्रः॥१॥

**आ**- 'इषेत्वा' इति प्रारभ्य दर्शपूर्णमासाग्निहोत्रपशुचातुर्मास्याग्निष्टोमवाजपेयराजसूयाग्निचयनसौत्रामण्यश्वमेधसंबद्धा मन्त्रा व्याख्याताः। नामाख्यातोपसर्गनिपातजनिता वाक्यार्थाश्च। अथेदानीं खिलान्यनुक्रमिष्यामः। पूर्वं कथितुमुपक्रान्तं यन्निमित्तवशान्न कथितं सत्पश्चात् कथ्यते तत् खिलमिति। सर्वमेधपुरुषमेधप्रवर्ग्योपनिषत्संबद्धाः मन्त्राः व्याख्येयाः प्रसिद्धाः। ते इहोच्यन्ते। अत्र च ये यत्र संबद्धाः मन्त्राः ते तत्रैव नियुज्यन्ते। तथा च "अतिरात्र उत्तमः। सर्वस्तोमो ज्योतिर्गौरायुरभिजिद्विश्वजिन्महाव्रतमप्तोर्यामो वा। रात्रिपर्याया उत्तमोऽग्निष्टोमप्राजापत्यौ" इत्यादि (द्र काश्रौ २०.८.१२-१५) सूत्रात् गोसवादौ विनियुक्ताः। अत्र ये यत्र संबद्धा मन्त्रास्तेषां तदेवार्षम्। असंबद्धानामादित्य एव। "आदित्यानीमानि यजूंषीति वा आहुः। याज्ञवल्क्येन व्याख्यायन्ते" (बृउ ६.५.३) इति श्रुतेः। अविनियुक्तानां मन्त्राणां लैङ्गिको विनियोगः। लिङ्गं (नाम) प्रकाशनसामर्थ्यमुच्यते। यो हि यमर्थं वदितुं समर्थः स तत्र श्रुत्या विनियुज्यते। तद्यथा - 'अग्निश्च पृथिवी च' इति। लिङ्गोक्तदेवत्या धृतिर्यजुरन्ता। अत्र प्रजापतेरार्षम्। 'अग्निश्च पृथिवी च संनते'। संनमनं नाम संनतिः प्रह्वीभावः, आनुकूल्येन प्रवृत्तिः। नम् प्रह्वत्वे शब्दे। ते उभे ${}^{V}$संनते संनमनं प्राप्ते। अतो ब्रवीमि। 'ते मे सं नमताम्'। 'अदः' इति पुरुषादेर्विशेषनामोपलक्षणम्। द्वितीयान्तं चोपलक्षयति कर्माभावात्। एवमुत्तरेष्वपि योज्यम्। ${}^{V}$ते अग्निपृथिव्यौ ${}^{V}$मे मम ${}^{V}$अदः

21. S3 पाठस्तु - अग्निश्च ... भूतसाधनीति for 'अग्निश्च पृथिवी च' इति।
21-22. S3 om. अग्निश्च पृथिवी च संनते
23. S3 प्रब्रवीमि for ब्रवीमि

यत् ममाभिलषितम् अदस्ते Vसंनमताम्। णिचो लोपश्छान्दसः। संनमयताम्। स्ववशवर्तिनंकुरुतामित्यर्थः। तस्यैतदभिमुखमादाय यातीत्यर्थः। 'वायुश्चान्तरिक्षं च संनते'। यतश्च Vते उभे Vमे मम संनमयताम्। Vअदः तत् Vसंनमताम्। संनमयताम्। Vआदित्यःच Vद्यौः च Vसंनते अतः Vते उभे मम Vअदः Vसंनमताम् संनमयताम्। 'आपश्च वरुणश्च'। देवताऽभिप्रायेण द्विवचनम्। Vते देवते उभे मम Vअदः Vसंनमताम् संनमयताम्। किं च । 'सप्त संसदो अष्टमी भूतसाधनी'। संसाद्यन्ते संपद्यन्ते कार्याणि याभिरिति Vसंसदः Vसप्त। मनश्च बुद्धिश्च पञ्च बुद्धीन्द्रियाणि सप्त संसदः। Vअष्टमी Vभूतसाधनी। भूतानां सर्वकार्यसाधिनी वाक् अत्राष्टमी। "वाचा हि चीयत ऋचा यजूषा साम्नेति नु दैव्या अध मन्मनुष्या वाचा हेतीदं कुरुतेदं कुरुत" (शब्रा १०.५.१.१) इत्यादि श्रुतेः। यद्वा - सप्त संसदः अग्निवाय्वन्तरिक्षादित्यद्यावपोवरुणश्चेति। अष्टमी भूतसाधनी। पृथिवीभूतानां साधनी साधयित्री भूतानां सर्वप्राणिनामुत्पत्तिः। पृथिव्यायत्तत्त्वदर्शनादिति । अत्र वागेव अष्टमी भूतसाधनीति इममेव यज्ञमाश्रित्य प्रवर्तते ॥ १ ॥

~~~~~~~~~~~~~~~~~~~~

अ - सर्ववेदैकसंवेद्यं विष्णुं देवशिखामणिम् ।
देशतः कालतश्चैव गुणतोऽनन्तमाश्रये ॥१॥

'इषे त्वा' इत्यारभ्य दर्शपूर्णमासपितृयज्ञाग्निहोत्रतदुपस्थानचातुर्मास्यपशुज्योतिष्टोमवाजपेयराजसूयाग्निचिति सौत्रामणिअश्वमेधसंबन्धा मन्त्राः क्रमेण व्याख्याताः । अथेदानीं खिलमन्त्रा व्याखायन्ते। कात्यायनेन तेषां क्वचिद्विनियोगानुक्तेः। शाखान्तरे तु गोसवादौ विनियुक्ताः । तेषां विवस्वानृषिः। अन्यस्यानुक्तेः। "आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते" (बृह.५.५.३३) इति श्रुतेः। याज्ञवल्क्यो वा ऋषिः। 'अग्निश्च'। सप्तलिङ्गोक्तदेवत्यानि। चतस्र ऋग्गायत्र्यः। सप्त संसदः। आसुर्यनुष्टुप्। Vअग्निःVच Vपृथिवी Vच Vसंनते भवतः । संनमनं संनतम् । परस्परानुकूल्येन प्रवर्तनम्। यतोऽग्निपृथिव्यौ परस्परानुकूल्यवत्यौ अतोऽहं ब्रवीमि। Vते अग्निपृथिव्यौ Vमे मम Vअदःअमुकं वस्तु Vसंनमताम्। अन्तर्भावितण्यर्थः। संनमयताम्।मम वशवर्ती कुरुतामित्यर्थः। अद इति पुरुषादेर्नाम द्वितीयान्तं प्रयोज्यम्। णमु प्रह्वत्वे शब्दे।"छन्दस्युभयथा" (पा ३.४.११७) इति शपोऽप्यार्धधातुकत्वात् "णेरनिटि" (पा ६.४.५१) इति णिचो लोपे सति संनमतामिति रूपसिद्धिः। एवमुत्तरत्रापि। तथा Vवायुः Vच Vअन्तरिक्षं च उभे Vसंनते । Vते Vमे Vअदः Vसंनमताम्। तथा Vआदित्यः Vच द्यौः Vच संनते । ते उभे Vमे Vअदः Vसंनमताम् ।Vआपः Vच Vवरुणः Vच Vसंनते, संनतौ। "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" (पा २.४.२६) इत्युक्तेः पुंस्त्वे वक्तव्ये स्त्रीत्वमार्षम् । एवमष्टानां मध्ये Vसप्त Vसंसदः। परमात्मानं प्रत्युच्यते- हे परमात्मन् यस्य चिकीर्षोस्तव जगन्निर्माणे सप्त अग्निवाय्वन्तरिक्षादित्यद्युजल-

~~~~~~~~~~~~~~~~~~~~

12 P2 before सर्व° adds :- श्रीदेवदेवाय नमः।

20 P2 referring to परस्परानुकूल्यवत्यौ writes on the margin : आधाराधेयत्वेन

21 P2 °भूतं for °भावित°

वरुणाः संसदः । संसाद्यन्ते संपाद्यन्ते जगन्ति याभिरिति संसदः साधनानि । [V]अष्टमी पृथिवी तु [V]भूतसाधनी । भूतानि साधयति उत्पादयतीति भूतसाधनी । साधनानामेषामन्येषां चोत्पादिका । भूमिं विना भूतोत्पत्तेरसंभवात् । अथवा लुप्तोपमा अत्र । यथा अग्निश्चेति पृथिवी चेति उभे संनते परस्परेणानुकूले वर्तेते तथा अदो जगत् मे मह्यं संनमताम् अनुकूलमस्तु । लोडात्मनेपदे प्रथमपुरुषैकवचनम् । एवमुत्तरत्र योज्यम् । "अग्निः पृथिवीस्थानो वायुरन्तरिक्षस्थानः । सूर्यो द्युस्थानः" इति श्रुतेराधाराधेयभावः । यद्वा हे हरे, तव जगन्निर्माणे अष्टमी पृथिवी मूलप्रकृतिः । भूतसाधनी सूक्ष्मस्थूलरूपेण भूतोत्पादिका । अग्न्यादयः सप्त तु तव संसदः सभारूपाः अर्वाचीनाः सिंहासनप्राप्त्यनन्तरं राज्ञः सभ्या इव तदनन्तरा इत्यर्थः ॥१॥

**सकामाँ२ अध्वनस्कुरु संज्ञानमस्तु मेऽमुना।**
**यथेमाँ वाचं कल्याणीमावदानि जनेभ्यः ॥२॥**

सकामानिति सऽकामान् । अध्वनः । कुरु ।
संज्ञानमिति सम् ऽज्ञानम् । अस्तु । मे । अमुना ।
यथा । इमाम् । वाचम् । कल्याणीम् । आवदानीत्याऽवदानि । जनेभ्यः ॥ य्यीं ॥ २ ॥

**आ** - 'सकामाँ अध्वनस्कुरु' इति । वाग्देवत्यानुष्टुप् । ऋषिः प्रजापतिः । हे वाक्, [V]अध्वनः मार्गान् [V]सकामान् । काम्यत इति कामः । काम्यमानफलान्वितैः सहिताः मार्गाः सकामाः । तान् अध्वनः [V]कुरु । 'संज्ञानम् अस्तु मे अमुना' । अत्र व्यत्ययः । [V]अमुना अमुया मधुरया वाचा तया [V]मे मम [V]संज्ञानं सेम्यक् ज्ञानमस्तु । किं च 'यथेमां वाचं कल्याणीमावदानि जनेभ्यः' । [V]यथा येन प्रकारेण [V]इमां [V]कल्याणीं श्रीभगवद्विष्णुमयत्वेन मङ्गलात्मिकां कल्याणीम् । अनुद्वेगकरीं दीयतां भुज्यतामिति [V]वाचम् एव [V]आवदानि । [V]जनेभ्यः । जनेभ्योऽर्थाय प्रवक्ष्यामि । तथैव हे वाग्देवि, त्वं मम वाचं संपूरयेत्यर्थः ॥ २ ॥

**अ** - 'सकामाँ अध्वनस्कुरु' । प्राजापत्याऽनुष्टुब्वाग्देवत्या । यस्य जगन्निर्माणे पृथिव्यादयः कारणं सः स्वतन्त्रः कर्ता त्वम् [V]अध्वनः अस्मन्मार्गान् [V]सकामान् [V]कुरु । काम्यन्त इति कामाः, मनोरथास्तैः सहिताः सकामाः । येषु येषु मार्गेषु धर्मादिषु मया गम्यते तत्र तत्रास्मन्मनोरथप्राप्तिरस्त्वित्यर्थः॥

14 S3 पाठस्तु - सकामाँ ... जनेभ्य इति for 'स कामाँ अध्वनस्कुरु' इति

किं च - [v]अमुना मनोरथप्रापणेन [v]मे मम [v]संज्ञानं समीचीनं ज्ञानं परोक्षमपरोक्षं च [v]अस्तु। मनोरथप्राप्तिर्ज्ञानसाधनमस्तु इति भावः । [v]यथा येन प्रकारेण ज्ञानभक्तिवैराग्यात्मकेन जनेभ्यः शिष्यादिजनेभ्यः [v]इमां बुद्धिस्थां [v]कल्याणीं श्रीभगवद्विष्णुपरत्वेन मङ्गलात्मिकां [v]वाचम् अहम् [v]आवदानि सम्यग्वदामि। हे परमात्मन्, त्वं मदीयां वाचं तथैवानुगृहाण। यानहमुपदेक्ष्यामि तेऽपि त्वत्प्रसादात् ज्ञानिनो भूयासुरित्यर्थः। यत्तदोर्नित्यसंबन्धात् तथेत्यध्याहारः ।

यद्वा - हे परमेश्वर, यस्य तव अग्न्यादयः सप्त संसदः। पञ्च ज्ञानेन्द्रियाणि मनो बुद्धिश्चेति सप्तायतनानि अष्टमी भूतसाधनी भूतवशीकर्त्री वाक्। स त्वं नः अध्वनः सकामान् कुरु। अमुना कामेन संज्ञानमस्त्विति योजनीयम्। एषोऽर्थो बृहदारण्यकेऽभिहितः । तदेष श्लोको भवति - "अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपम्। तस्यासत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदानेति ॥ अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इतीदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपमिति। प्राणा वै यशो विश्वरूपम्। प्राणानेतदाह। तस्यासत ऋषयः सप्ततीर इति। प्राणा वा ऋषयः प्राणानेतदाह। वागष्टमी ब्रह्मणा संविदानेति। वाग्घ्यष्टमी ब्रह्मणा संवित्ते" (बृउ २.२.३ ) इति।

~~~~~~~~~~~~~~~~~~~~~~

ब्रह्मराजन्या॑भ्या॒ꣳ शूद्राय॒ चार्या॑य च॒ स्वाय॒ चार॑णाय च ।
प्रि॒यो दे॒वाना॒ं दक्षि॑णायै दा॒तुरि॒ह भू॑यासम॒यं
मे॒ काम॒ः समृ॑ध्यता॒मुप॑ मा॒ऽदो न॑मतु ॥३॥(१)॥

~~~~~~~~~~~~~~~~~~~~~~

ब्र॒ह्म॒रा॒ज॒न्या॑भ्याम्। शू॒द्राय॑ । च॒ । अर्या॑य । स्वाय॑। अर॑णाय।
प्रि॒यः । दे॒वाना॑म्। दक्षि॑णायै । दा॒तुः। इ॒ह । भू॒या॒स॒म्।
अ॒यम्। मे॒ । काम॑ः। सम्। ऋ॒ध्य॒ता॒म्। उप॑ । मा॒। अ॒दः। न॒म॒तु॒ ॥ हाः ॥ ३ ॥ (१)॥

~~~~~~~~~~~~~~~~~~~~~~

आ - के ते जनाः इत्याह - 'ब्रह्मराजन्याभ्याम्' इति। अत्र अर्धश्चैको मन्त्रो लिङ्गोक्तदेवत्या गायत्री। एकमन्त्रपक्षे वाग्देवत्या गायत्रीप्रगाथः। [v]ब्रह्मराजन्याभ्यां ब्राह्मणक्षत्रियाभ्यां यत् ब्रवीमि तदाह। इमां वाचं कल्याणीमावदानि । [v]शूद्राय[v]च इमां कल्याणीं वाचमवदानि। [v]अर्याय[v]च वैश्याय [v]च इमां वाचं कल्याणीम् आवदानि। [v]स्वाय आत्मीयाय [v]अरणाय रक्षित्रे [v]च इमां कल्याणीमेव वाचमवदानि॥

~~~~~~~~~~~~~~~~~~~~~~

1 M4 om. **समीचीनं ज्ञानं।**

19 S3 **पाठस्तु - ब्रह्म ... चारणाय चेति** for **'ब्रह्मराजन्याभ्याम्' इति**

'प्रियो देवानाम्' इति । लिङ्गोक्तदेवत्या अनवसाना अनुष्टुप्। ऋषिस्तु लौगाक्षिः। 'प्रियो देवानाम्'। पूर्वत्र यथा सत्यवादित्वं मे मम तथैव [v]देवानां [v]प्रियः अहं देवेभ्य इमां कल्याणीमेव वाचमवदानि। दक्षिणायै दातुः । [v]दातुः दानं कुर्वतो यजमानस्य [v]दक्षिणायै दक्षिणाप्रदानाय कल्याणीमेव वाचमवदानि। 'इह भूयासम्'। [v]इह येषु प्रवृत्तिविषयेषु अहं [v]भूयासं येन कल्याणवादी भूयासं भवेयम्। 'अयं मे मम कामः समृध्यताम्'। [v]अयम् इति कामनाग्रहणम्। तद्यथा (अयं) ग्रामलाभकामोऽस्मै [v]मे [v]समृध्यताम् । 'उप माऽदो नमतु'। [v]अदः इति इष्ट(म्) उच्यते। तद्यथा [v]उपनमतु देवदत्तः मां प्रति। अदः यः मम कामो भवति। सः तत्कामं मां प्रति स्वयमेव उपनमतु। स्वयमेव समीपमागच्छतु ॥ ३ ॥

~~~~~~~~~~~~~~~~~~~~~~

अ - 'ब्रह्मराजन्याभ्यां॑शूद्राय' । अत्रार्धऋक् । लिङ्गोक्तदेवत्या गायत्री । द्वितीयार्धऋक् मध्येऽवसानरहिता अनुष्टुप् लौगाक्षिदृष्टा। पूर्वर्चि जनेभ्य इत्युक्तम्। केभ्य इत्यत आह - [v]ब्रह्मराजन्याभ्याम्। ब्राह्मणाय क्षत्रियाय । [v]शूद्राय । [v]अर्याय वैश्याय "अर्यः स्वामिवैश्ययोः"(पा ३.१.१०३) इति निपातः। [v]स्वाय आत्मीयाय। [v]अरणाय पराय। नास्ति रणः शब्दः संग्रामो वा येन सह सोऽरण इति विग्रहः। रण शब्दे। चकारचतुष्टयं प्रत्येक क्रियान्वयार्थम्। यथा अहं ब्राह्मणादिभ्यः कल्याणीं प्रियां वाचमवदानि तथा [v]देवानाम् अहं [v]प्रियः प्रीतिपात्रं [v]भूयासं स्वर्गादौ । [v]इह अस्मिन् लोके [v]दक्षिणायै दक्षिणायाः आनतिसाधनभूतायाः [v]दातुः च प्रियः [v]भूयासम् । देवा दक्षिणादातारश्च मयि प्रीतिं कुर्वन्त्वित्यर्थः । किं च - [v]मे मम अयं [v]कामः [v]समृध्यताम् सफलो भवतु। किं च। [v]अदः इदं प्राणिजातं [v]मा माम् [v]उप [v]नमतु प्रणमतु, सर्वजगत्प्रियो भूयासमिति भावः ॥३॥

इति अष्टाविंशे प्रथमोऽनुवाकः ॥१॥

~~~~~~~~~~~~~~~~~~~~~~

1. S3 पाठस्तु - प्रियो ... नमत्विति for 'प्रियो देवानाम्' इति
3. S3 om. दक्षिणायै
5. S3 om. अयमिति ... समृध्यताम्; V2 अदः for अयम्
6. V2 असौ for अस्मै

(द्वितीयोऽनुवाकः।)

बृहस्पते अति यदर्यो अर्हाद् द्युमद्विभाति क्रतुमज्जनेषु ।
यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम्।
उपयामगृहीतोऽसि बृहस्पतये त्वैष ते योनिर्बृहस्पतये त्वा ॥१॥(२)॥

बृहस्पते । अति । यत्। अर्यः । अर्हात्।
द्युमदिति द्युऽ मत्। विभातीति विऽ भाति। क्रतुमदिति क्रतुऽमत्। जनेषु ।
यत्। दीदयत्। शवसा। ऋतप्रजातेत्यृतऽप्रजात। तत्। अस्मासु। द्रविणम्। धेहि। चित्रम्॥
बृहस्पतये। त्वा।एषः। ते। योनिः। बृहस्पतये। त्वा ॥ङे॥१॥(२)॥

आ - 'बृहस्पते अति'। अनेन बृहस्पतिदेवतायै ग्रहं गृह्णाति।'बृहस्पते अति' इति। गृत्समदः, ब्राह्मी त्रिष्टुप्। अयं मन्त्रः बृहस्पतेः स्वयमेवाह आर्षम्। हे [v]बृहस्पते, [v]अति [v]यत् [v]द्रविणं धनम् अतिविशिष्टं धनम् 'अस्मासु धेहि' इति संबन्धः। धनं तदुभयं विशिनष्टि। हे बृहस्पते, बृहतो महतः ऋग्वेदादेः पतिः। 'अति क्रतुमत् जनेषु'। अतिरतिशयार्थे । [v]यत् [v]अर्यः। अर्यशब्दः स्वामिवैश्ययोअर्वर्तते। अर्यशब्दः स्वामिन्यन्तोदात्तः, वैश्ये आद्युदात्तः। अर्यः नः ईश्वरो भवान् यत् ब्रह्म। तत् ब्रह्म अतिशयेन [v]अर्हात्। अर्ह पूजायाम्। पूजयेत्। किं लक्षणम् । 'द्युमद्विभाति क्रतुमज्जनेषु'। [v]द्युमत् अतिप्रकाशि ह्येतत्। [v]जनेषु सर्वजनानां हृदयेषु द्युमत् [v]विभाति दीप्यते। [v]यत् च [v]क्रतुमत्। 'बहुस्यां प्रजायेय' इत्यादिसंकल्पवत् यद्वस्तु जनेषु विभाति। [v]यत् वस्तु [v]शवसा बलेन स्वतेजसा सर्वं जगत् [v]दीदयत् दीपयति अतिशयेन प्रकाशयति । हे [v]ऋतप्रजात, यत्किंचिन्निमित्तीकृत्य ऋतान् परब्रह्मणः प्रजायत इति ऋतप्रजातः, तत्संबोधनम्। हे ऋतप्रजात, बृहस्पते अर्यो भवान् [v]तत् वस्तु अत्यर्थम् अर्हात् पूजयेत्। अतस्त्वम्। [v]अस्मासु [v]चित्रं विचित्रं बहुविधं द्रविणं [v]धेहि देहि स्थापय। द्रविणविशेषणत्वेन वा योजना। तत्र अर्हात् पूजयेत्। स्थापयेदित्यर्थः। तान्। उपयमतीत्युपयामः । तेन ग्रहेण [v]उपयामगृहीतः [v]असि। [v]बृहस्पतये बृहस्पत्यर्थम्। अतः [v]त्वा ग्रहं त्वां सादयामि इति संबन्धः। [v]एषः बृहस्पतिः [v]ते तव [v]योनिः। [v]बृहस्पतये त्वां ग्रहं गृह्णामीति शेषः ॥४॥

9. S3 पाठस्तु - बृहस्पते ... बृहस्पतये इति for बृहस्पते अति।
13. S3 om. अर्यशब्दः ... आद्युदात्तः।

अ - 'बृहस्पते अति'। ब्रह्मदेवत्या त्रिष्टुप् गृत्समददृष्टा। बृहस्पतिसवे बार्हस्पत्यग्रहग्रहणे अस्याः सोपयामायाः विनियोगः । ऋतात् सत्यात् ब्रह्मणः सकाशात् प्रजातं प्रकृष्टं जातं जन्म यस्य स ऋतप्रजातः। हे ᵛऋतप्रजात, ᵛबृहस्पते, अङ्गिरस परमात्मन् वा । ᵛचित्रं विचित्रं ᵛतत् ᵛद्रविणं धनम् ᵛअस्मासु यजमानेषु ᵛधेहि धारय । स्थापय देहीत्यर्थः। तत् किम्? ᵛअर्यः स्वामी श्रेष्ठः ᵛयत् धनम् ᵛअति अधिकम् ᵛअर्हात् अर्हति पूजयति। अर्ह पूजायाम् । "लेटोऽडाटौ" (पा ३.४.९४) इति आडागमः । "इतश्च लोपः परस्मैपदेषु" (पा ३.४.९७) इतीकारलोपः । अर्यशब्दः अन्तोदात्तत्वात् स्वामिवाचकः । वैश्यार्थक आद्युदात्तः । ईश्वरयोग्यं धनं देहीत्यर्थः । ᵛयत् च धनं ᵛजनेषु स्वमित्रादि जनेषु ᵛविभाति विविधं भासते । यच्च ᵛद्युमत् । द्यौः कान्तिरस्यास्तीति द्युमत् । उत्तमवर्णम् । "दिव उच्च" (पा ६.१.१३१) इत्युकारः । यत् ᵛक्रतुमत् क्रतुसाधनम् । ᵛयत् च ᵛशवसा बलेन सुखेन च ᵛदीदयत् दापयति प्रापयति । दापयति वा वृद्ध्यादिना धनान्तरं तद्दीदयत् । ईदृशं धनं धेहि । दय दानगतिहिंसादानेषु । अस्मात् णिजन्तात् शतृप्रत्ययेद्वित्वं च । हे ग्रह, त्वम् उपयामेन पात्रेण गृहीतोऽसि । ᵛबृहस्पतये अर्थाय ᵛत्वा त्वां गृह्णामि स्थापयामि । ᵛएषः ᵛते ᵛयोनिः स्थानं ᵛबृहस्पतये त्वां सादयामि । विभातीत्येकं पदम् । यद्वृत्तयोगात् समासः । यद्वा ब्रह्मपरमिदम्। तथा हि । हे बृहस्पते, अर्यः श्रेष्ठो ज्ञानी । यत् धनं ब्रह्मस्वरूपात्मकम् । "ब्रह्मैव वित्तं पुरुषस्य केवलम्" इति श्रुतेः। अति अर्हात् अत्यन्तमपेक्षते । यच्च द्युमत् प्रकाशवत् निर्दोषम्। यच्च क्रतुमत् सत्संकल्पं यज्ञप्रियं वा । यच्च जनेषु विभाति अन्तर्यामिरूपेण । यच्च शवसा स्वरूपबलेन दीदयत् सर्वगतं देदीप्यमानं वा । यच्च चित्रम्। मत्स्याद्यवताररूपेण । हे ऋतप्रजात, हे ब्रह्मज्ञानिन्, तत् द्रविणम् अस्मासु हृदये धेहि । न विनश्वरमिति भावः ॥१॥

इति (अष्टाविंशे) द्वितीयोऽनुवाकः ॥२॥

~~~~~~~~~~~~~~~~~~~~

(तृतीयोऽनुवाकः।)

**इन्द्र गोमन्निहा याहि पिबा सोमꣳ शतक्रतो । विद्यद्भिर्ग्रावभिः सुतम्।**
**उपयामगृहीतोऽसीन्द्राय त्वा गोमत एष ते योनिरिन्द्राय त्वा गोमते ॥१॥(३)॥**

~~~~~~~~~~~~~~~~~~~~

इन्द्र। गोमन्निति गोऽमन्। इह। आ। याहि। पिब। सोमम्। शतक्रतो इति शतऽक्रतो।
विद्यद्भिरिति विद्यत्ऽभिः। ग्रावभिरिति ग्रावऽभिः। सुतम्।
इन्द्राय। त्वा। गोमत इति गो ऽमते।
एषः। ते। योनिः। इन्द्राय। त्वा। गोमत इति गोऽमते॥ ष्र्यः ॥१॥(३)॥

~~~~~~~~~~~~~~~~~~~~

1. M4 om. °ग्रह°;
2. M4 सोमपाः for सोपयामायाः; M4 om. प्रकृष्टं जातं
~~~~~~~~~~~~~~~~~~~~

**आ** - 'इन्द्र गोमन्'। ऐन्द्री गायत्री यजुरन्ता। अगस्त्य ऋषिः। अनया [V]इन्द्राय [V]गोमते ग्रहो गृह्यते गोसवे आदित्यस्यार्षं याज्ञवल्क्यस्य वा। हे [V]इन्द्र, [V]गोमन्, गोभिः धेनुभिः स्तुतिभिर्वा संयुक्त [V]इह यज्ञे [V]आ [V]याहि आगच्छ। आगत्य च 'पिबा सोमम्'। [V]पिब। हे [V]शतक्रतो, बहुयज्ञकृत्। कथंभूतं [V]सोमम् इति। [V]विद्यद्भिः। दो अवखण्डने इत्यस्य रूपम्। विशेषेण द्यन्ति खण्डयन्ति ते विद्युतः। तैः विद्यद्भिः। [V]ग्रावभिः सोमाभिषवपाषाणविशेषैः। [V]सुतम् अभिषुतं पिबेति संबन्धः। [V]उपयामगृहीतः [V]असि [V]इन्द्राय [V]त्वा त्वां सादयामि। [V]एषः [V]ते [V]योनिः। अत एव [V]ते ग्रहं त्वाम् [V]इन्द्राय [V]गोमते गृह्णामि ॥५॥

**अ** - 'इन्द्र गोमन् ।' इन्द्रदेवत्या गायत्री रम्याक्षिदृष्टा। सो.मयागे गोसवयज्ञे ग्रहग्रहणे विनियुक्ता। शतं क्रतवो यस्य स शतक्रतुः, तत्संबोधनम्। हे [V]शतक्रतो, हे [V]गोमन्, गावः कामधेनवः स्वर्गाः। नेत्राणि वा किरणा वा यस्य स गोमान्। हे [V]इन्द्र, त्वम् [V]इह यज्ञे [V]आ [V]याहि आगच्छ। आगत्य च [V]सोमं [V]पिब। "द्व्यचोऽतस्तिङः"(पा ६.३.१३५) इति दीर्घः। कीदृशं [V]सोमम्? [V]विद्यद्भिः। विशेषेण द्यन्ति खण्डयन्ति ते विद्यन्तः, तैः। [V]ग्रावभिः अश्मभिः [V]सुतम् अभिषुतम्। दोऽवखण्डने। अस्मात् दैवादिकात् शतृप्रत्ययः। "ओतः श्यनि" (पा ७.३.७१) इत्योकारलोपः। हे ग्रह, त्वम् [V]उपयामगृहीतः [V]असि। [V]गोमते [V]इन्द्राय त्वां गृह्णामि सादयामि। [V]एषः [V]ते [V]योनिः [V]इन्द्राय [V]त्वा [V]गोमते इति ॥१॥

इति अष्टाविंशे तृतीयोऽनुवाकः।

(चतुर्थोऽनुवाकः।)

ऋतावा॑नं वैश्वान॒रमृ॒तस्य॒ ज्योति॑ष॒स्पति॑म्।अज॑स्रं घ॒र्ममी॑महे।
उ॒प॒या॒मगृ॑हीतोऽसि वैश्वान॒राय॑ त्वै॒ष ते॒ योनि॑र्वैश्वान॒राय॑ त्वा ॥१॥ ॥(४)॥

ऋ॒तावा॑नम्। ऋ॒तवा॑न॒मित्यृ॒तऽवा॑नम्। वै॒श्वा॒न॒रम्। ऋ॒तस्य॑। ज्योति॑षः। पति॑म्। अज॑स्रम् । घ॒र्मम्। ई॒म॒हे॒।
वै॒श्वा॒न॒राय॑। त्वा॒। ए॒षः। ते॒। योनिः॑। वै॒श्वा॒न॒राय॑। त्वा॒॥ गू ॥१॥

**आ** - 'ऋतावानं वैश्वानरम्'। 'वैश्वानरं हवामहे'। 'वैश्वानरस्य सुमतौ'। 'वैश्वानरो न ऊतये' इति चतस्रो वैश्वानरदेवत्याः। पुरोरुचः गायत्र्यौ त्रिष्टुप्। गायत्री च प्रथमयोः

1. S3 पाठस्तु इन्द्र... त्वा गोमत इति for इन्द्र गोमन्।
22. S3 पाठस्तु - ऋतावानं ... वैश्वानराय त्वेति for 'ऋतावानं वैश्वानरं' इति ।
16. V2 तिस्रो for चतस्रो

प्रादुराक्षिऋषिः। उत्तरयोः कुत्सः। Vऋतावानम् सत्यवन्तं यज्ञवन्तं Vवैश्वानरं वैश्वानरात्मकम्। Vऋतस्य सत्यस्य Vज्योतिषः आदित्यादिज्योतिषः Vपतिं स्वामिनं पालकं च Vअजस्रं निरन्तरम् अनुपक्षीणं वा Vघर्मम् अग्निरूपम्। "अग्निर्वै घर्मः" (शब्रा ११.६.२.२) इति श्रुतेः। घर्मकारणं वा Vईमहे पूजयामहे यज्ञसमाप्तिं गमिष्याम इति। Vउपयामगृहीतः Vअसि Vवैश्वानराय Vत्वा सादयामि। Vएषः Vते Vयोनिः Vवैश्वानराय ग्रहं त्वां गृह्णामि ॥ ६ ॥

**अ - 'ऋतावानं वैश्वानरम्'। द्वे गायत्र्यौ वैश्वानरदेवत्ये प्रादुराक्षिदृष्टे। पुरोऽनुवाक्ये। वयं Vवैश्वानरम् Vईमहे याचामः यज्ञसमाप्तिमिति शेषः। ईमहे द्रुतियाञ्चाकर्मसु पठितः। कीदृशं वैश्वानरम्? Vऋतावानम्। ऋतं सत्यं यज्ञो जलं वा अस्यास्तीति स ऋतवा तम्। "छन्दसि वनिप्वाच्यः" (पावा ५.२.१२२) इति वार्तिकेण वनिप्प्रत्ययः। दीर्घश्छान्दसः। Vऋतस्य सत्यस्याविनाशिनः Vज्योतिषः तेजसः Vपतिं पालकम्। तेजोऽधिष्ठानमित्यर्थः। Vअजस्रम् न जस्यति न नश्यतीत्यजस्रस्तम् अनुपक्षीणम्। जसु हिंसायाम्। "नमिकम्पि°" (पा ३.२.१६७) इति सूत्रेण रप्रत्ययः। Vघर्मम्। घृ क्षरणदीप्त्योः। जिघर्ति क्षरति जलमिति घर्मः, तम्। दीप्तं वा। उपयाम इति पूर्ववत् ॥१॥**

**इति अष्टाविंशे चतुर्थोऽनुवाकः।**

(पञ्चमोऽनुवाकः।)

**वैश्वानरꣳ हवामह ऋतस्य ज्योतिषस्पतिम्। अजस्रं घर्ममीमहे।
उपयामगृहीतोऽसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा ॥१॥(५)॥**

वैश्वानरम्। हवामहे। ऋतस्य। ज्योतिषः। पतिम्।
अजस्रम्। घर्मम्। ईमहे ॥ छ ॥१।(५)॥

**आ** - 'वैश्वानरं हवामहे' इति। Vवैश्वानरम् Vऋतस्य Vज्योतिषः Vपतिम्। Vवैश्वानरं Vहवामहे मन्त्रेणाह्वयामः। Vअजस्रं Vघर्मम् Vईमहे। अक्षरणं दीप्तं वा ईमहे याचामहे। यज्ञसमाप्तिमिति शेषः। सामर्थ्यात्। उपयामगृहीतोऽसि इति व्याख्यातसमानार्थः ॥७॥

**अ - 'वैश्वानरं हवामहे' इत्यादि 'वैश्वानराय त्वा' इत्यन्तो मन्त्रः पूर्ववद् व्याख्येयः ॥१॥**

**इति अष्टाविंशे पञ्चमोऽनुवाकः ॥५॥**

19. S3 पाठस्तु - वैश्वानरं ... वैश्वानराय त्वेति for 'वैश्वानरं हवामहे' इति।

(षष्ठोऽनुवाकः ।)

**वैश्वानरो नं ऊतय आ प्र यांतु परावतंः। अग्निरुक्थेन वाहंसा।**
**उपयामगृंहीतोऽसि वैश्वानरायं त्वैष ते योनिर्वैश्वानरायं त्वा ॥१॥(६)॥**

~~~~~~~~~~~~~~~~~~~~~~

वैश्वानरो नं ऊतय आ प्र यांतु परावतंः ॥ शो ॥
अग्निः । उक्थेनं । वाहंसा ॥ शी ॥ १ ॥ (६) ॥

~~~~~~~~~~~~~~~~~~~~~~

**आ** - 'वैश्वानरो न ऊतय आ प्र यातु परावतः' इति। परावतः इति दूरनाम। $^{V}$नः अस्माकम् $^{V}$ऊतये अवनाय $^{V}$परावतः दूरतः $^{V}$अग्निः $^{V}$वैश्वानरः $^{V}$आ $^{V}$प्रयातु आगच्छतु। केन निमित्तेन? 'अग्निः रुक्थेन वाहसा'। $^{V}$उक्थेन स्तोमेन। स्तोमो वाहन इत्युच्यते। $^{V}$वाहसा वाहननिमित्तभूतेन स्तोमभूतेन सोमपाननिमित्तं कृत्वेत्यर्थः आ प्रयात्विति। 'उपयामगृहीतोऽसि' इत्यादि व्याख्यातसमानार्थः ॥ २ ॥

~~~~~~~~~~~~~~~~~~~~~~

**अ** - 'वैश्वानरो न ऊतये' । गायत्री । $^{V}$नः अस्माकम् $^{V}$ऊतये अवनाय $^{V}$परावतः दूरदेशात् । $^{V}$वैश्वानरः $^{V}$अग्निः $^{V}$आ $^{V}$प्र यातु शीघ्रमायातु । केनेत्यत आह । $^{V}$वाहसा वाहनभूतेन $^{V}$उक्थेन स्तोमेन साधनेन । 'वाहिष्ठो वाहनं स्तोमो दूतो हवं नरा' इति स्तोमस्य अग्निवाहनत्वोक्तेः । । शेषं व्याख्यातम् ॥१॥

इति (अष्टाविंशे) षष्ठोऽनुवाकः ॥६॥

~~~~~~~~~~~~~~~~~~~~~~

6. S3 पाठस्तु - वैश्वानरो... वैश्वानराय त्वेति for 'वैश्वानरो... परावतः' इति।
8. S3 om. स्तोमेन, V2 after स्तोमेन adds:- सोमेन,
S3 om. स्तोमो ... उच्यते।
9. V2 सोमभूतेन for स्तोमभूतेन

(सप्तमोऽनुवाकः।)

वैश्वानरस्य॑ सुमतौ स्या॑म राजा हि कं॑ भुव॑नानामभिश्रीः ।
इतो जातो विश्व॑मिदं वि च॑ष्टे वैश्वानरो य॑तते सूर्ये॑ण॥
उपयामगृ॑हीतोऽसि वैश्वानराय॑ त्वैष ते योनिर्वै॑श्वानराय॑ त्वा ॥१॥(७)॥

वैश्वानरस्य॑। सुमता इति॑ सुऽमतौ।
स्याम। राजा॑। हि। कम्। भुव॑नानाम्। अभिश्रीरित्य॑भिऽश्रीः।
इतः। जातः। विश्व॑म्। इदम्। वि। चष्टे।
वैश्वानरः। यतते। सूर्ये॑ण॥ झैं ॥१॥(७)॥

आ - ^v^वैश्वानरस्य देवस्य ^v^सुमतौ शोभनमतौ ^v^स्याम। तस्य मङ्गलमतिविषया भवेम। कथंभूतो वैश्वानर इति। 'राजा हि कं भुवनानाम् अभिश्रीः' इति। हि प्रसिद्धौ। ^v^भुवनानां भूतजातानां सर्वेषां भूतजातानाम्। यः ^v^राजा स्वयं ^v^कं सुखात्मकः ^v^हि प्रसिद्धः। भुवनानाम् ^v^अभिश्रीः। सर्वतः सर्वप्रकारेण श्रीः संपत् संपद्रूपः शोभारूपः ऐश्वर्यरूपश्च यः। यद्वा - कं भुवनानामभिश्रीः। भुवनानां सर्वभूतानां रम्यभूतं कं सुखं परं ब्रह्म। तत् कम् अभिश्रीः। ब्रह्मस्वरूपं पिण्डीकृत्य शोभत इति अभिश्रीः। अभ्याश्रयणीयः सर्वोपकारत्वात्। एवम् ईश्वरो यः सः ^v^वैश्वानरः ^v^इतः अस्मात् देवतानिमित्तात् यो जगद्रक्षणमधिकृत्य ^v^जातः आविर्भूतः सन् ^v^इदं प्रतीयमानं ^v^विश्वं जगत् ^v^वि ^v^चष्टे अव्यवधानेन यः पश्यति विदधाति वा। यश्च 'यतते सूर्येण'। दीप्त्या यः ^v^सूर्येण सह ^v^यतते स्पर्धते। यद्वा- यः सूर्येण सूर्यरूपेण जगत् प्रकाशयितुं यतते। यस्तु प्रयत्नं करोति प्रकाशयतीव स वैश्वानरः तस्य वैश्वानरस्य सुमतौ स्यामेति संबन्धः। अत एव ^v^उपयामगृहीतः ^v^असि ^v^वैश्वानराय ^v^त्वा त्वां सादयामि। ^v^एषः ^v^ते ^v^योनिः। अतः त्वां ग्रहं गृह्णामीति ॥ ८ ॥

**अ - 'वैश्वानरस्य सुमतौ' । त्रिष्टुप् कुत्सदृष्टा वैश्वानरदेवत्या । वयं ^v^वैश्वानरस्य ^v^सुमतौ शोभनबुद्धौ ^v^स्याम भवेम । यद्वा- मतिरर्चनकर्मा । वैश्वानरस्य सुमतौ साध्वर्चने स्याम । कमिति निपातः पादपूरणः । ^v^हि यस्मात् कारणाद् ^v^वैश्वानरः ^v^इतः अरणेः ^v^जातः सन् ^v^इदं ^v^विश्वं सर्वं ^v^जगत् ^v^वि ^v^चष्टे। कर्मानुरूपं पश्यति । ^v^सूर्येण सह ^v^यतते सूर्यवद्रात्रौ प्रकाशयति सर्वम् । कीदृशः? ^v^राजा। राजते दीप्यते**

9. S3 before **वैश्वानरस्य** adds **पाठस्तु - 'वैश्वानरस्य ... वैश्वानराय त्वा 'इति**
21. M4 om. **वैश्वानरस्य ... °देवत्या**

स राजा । $^v$भुवनानां भूतजातानाम् $^v$अभिश्रीः आश्रयः । अभि समन्तात् श्रीयते सेव्यते लोकेनेत्यभिश्रीः। कर्मणि क्विप् । श्रिञ् सेवायाम् । शेषं स्पष्टम् । यद्वा -

अहं वैश्वानरोभूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ (भगी१५.१४) इति ।

भगवद्वचनात् वैश्वानरः श्रीभगवान् इतः अस्मिन् लोके जातः अवतीर्णः सन् सर्वमिदं विचष्टे। सम्यक् पश्यति । तत्तत्कर्मानुसारेण निग्रहानुग्रहं करोतीत्यर्थः। किं च - सूर्येण सूर्यरूपेण यतते। अन्यत्समानम्॥ १॥

इति (अष्टाविंशे) सप्तमोऽनुवाकः॥७॥

~~~~~~~~~~~~~~~~~~~~~~

(अष्टमोऽनुवाकः।)

**मरुत्वाँ२ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय।**
**आ सिञ्चस्व जठरे मध्वं ऊर्मिं त्वꣳ राजाऽसि प्रतिपत् सुतानाम्।**
**उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत**
**एष ते योनिरिन्द्राय त्वा मरुत्वते ॥१॥(८)॥**

~~~~~~~~~~~~~~~~~~~~~~

मरुत्वान् । इन्द्र। वृषभः। रणाय। पिब। सोमम्।
अनुष्वधम्। अनुस्वधमित्यनु ऽ स्वधम्। मदाय।
आ। सिञ्चस्व। जठरे। मध्वः। ऊर्मिम्।
त्वम्। राजा। असि। प्रतिपदिति प्रतिऽपत्। सुतानाम्। ढ्यों॥ १॥ (८)॥

~~~~~~~~~~~~~~~~~~~~~~

आ - 'मरुत्वाँ इन्द्र' इति। मारुत्वैन्द्री त्रिष्टुप्। हे $^v$मरुत्वान् $^v$इन्द्र, $^v$वृषभः श्रेष्ठः $^v$रणाय रणोपलक्षितयुद्धार्थिजनाय $^v$सोमं $^v$पिब। $^v$अनुष्वधम् अनुप्रति यज्ञं $^v$मदाय हर्षार्थम् । 'आ सिञ्चस्व जठरे मध्व ऊर्मिम्'। $^v$मध्वः सोमामृतस्य $^v$ऊर्मिं $^v$जठरे $^v$आसिञ्चस्व। $^v$त्वं च $^v$राजा $^v$असि $^v$प्रतिपत् $^v$सुतानाम्। सोमानां प्रतिपत् ज्ञाता स्वामी ।अत एव सोमं पिबेति संबन्धः। $^v$उपयामगृहीतः $^v$असि $^v$इन्द्राय $^v$त्वा $^v$मरुत्वते। $^v$एषः $^v$ते $^v$योनिः $^v$इन्द्राय $^v$त्वा $^v$मरुत्वते॥ १०॥

~~~~~~~~~~~~~~~~~~~~~~

18. S3 पाठस्तु - मरुत्वाँ ... मरुत्वत इति for 'मरुत्वाँ इन्द्र' इति

अ - मरुत्वाँ इन्द्र । मारुत्यैन्द्री त्रिष्टुप् पुरोरुक् । हे Vइन्द्र, मरुत्वान् मरुतो देवाः परिवारत्वेन विद्यन्ते यस्य स तथा । Vवृषभः देवश्रेष्ठस्त्वं रणाय । दैत्यैः सह युद्धाय युद्धार्थम् । Vमदाय हर्षाय Vअनुष्वधं प्रतियज्ञं Vसोमं Vपिब । पीत्वा च Vमध्वः मधुनः सोमामृतस्य Vऊर्मिम् उद्रेकं Vजठरे Vआसिञ्चस्व पीतः सोमस्त्वदुदरे जीर्णोऽस्त्विति भावः । यतः Vप्रतिपत् प्रतिपत्सु । "सुपां सुलुक् °" (पा ७.१.३९ ) इति विभक्तिलोपः । यज्ञतिथिषु Vसुतानां सोमानां Vत्वं Vराजा Vअसि । त्वमेव मुख्य भोक्ताऽसीत्यर्थः । शेषं व्याख्यातम् ॥१॥

इति (अष्टाविंशे) अष्टमोऽनुवाकः ॥

(नवमोऽनुवाकः।)

महाँ२ इन्द्रो वज्रहस्तः षोळशी शर्म यच्छतु । हन्तु पाप्मानँ योऽस्मान् द्वेष्टि।
उपयामगृहीतोऽसीन्द्राय त्वा षोळशिनं एष ते योनिरिन्द्राय त्वा षोळशिने॥१॥९॥

महान् । इन्द्रः । वज्रहस्त इति वज्रऽहस्तः । षोळशी । शर्म । यच्छतु ।
हन्तु । पाप्मानम् । यः । अस्मान् । द्वेष्टि ॥ ग्रां ॥ १ ॥ (९)।

आ - 'महाँ इन्द्रः' इति । माहेन्द्री पुरोरुक् गायत्री । एष ऋषिः Vमहान् मरुद्गणयुक्तः । Vइन्द्रः वज्रहस्तः वज्रबाहुः Vषोळशी । षोडशलिङ्गशरीरं यस्य स षोडशी । चन्द्ररूपेण षोडशकलासंपन्नो वा षोडशी । षोडशस्तोत्रसंपन्नो वा षोडशी । इन्द्रः Vशर्म सुखं Vयच्छतु 'हन्तु पाप्मानम्' । Vहन्तु अघं वृत्रादिकं वा हन्तु । पाप्मा रिपुः । Vयः Vअस्मान् Vद्वेष्टि तं हन्तु । Vउपयामगृहीतः Vअसि । उपयमनग्रहेण सोमस्त्वं गृहीतोऽसि । Vइन्द्राय Vत्वा Vषोळशिने Vइन्द्राय सोमं ग्रहं त्वां सादयामि । Vएषः Vते Vयोनिः । अत एव Vइन्द्राय Vत्वा Vषोळशिने । गृह्णामीति शेषः ॥ ११ ॥

अ - 'महाँ इन्द्रः'। महेन्द्रदेवत्या गायत्री वसिष्ठदृष्टा पुरोऽनुवाक्या । Vमहान् श्रेष्ठः । वज्रं हस्ते यस्य सः Vवज्रहस्तः । Vषोळशी । पञ्च प्राणाः दशेन्द्रियाणि मनश्चेति षोडशपदार्था लिङ्गशरीररूपा यस्य स तथा ईदृशम् Vइन्द्रः देवराजः Vशर्म सुखं Vयच्छतु ददातु किं च तं Vपाप्मानं पापिष्ठं Vहन्तु नाशयतु । सः कः? Vयः पाप्मा Vअस्मान् Vद्वेष्टि । कुमार्गे प्रवर्त्य अस्मन्नाशं चिकीर्षति । पाप्मशब्दः पुंल्लिङ्गः । "अस्त्री पङ्कं पुमान्" (अको १.४.२३) इत्यभिधानात् । शेषं पूर्ववत् ॥१॥

इति (अष्टाविंशे) नवमोऽनुवाकः ॥९॥

13. S3 महाँ इन्द्र ... षोळशिन इति for 'महाँ इन्द्रः' इति।

(दशमोऽनुवाकः।)

**अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः।
तमीमहे महागयम् ॥१॥(१०)॥**

अग्निः । ऋषिः । पवमानः ।
पाञ्चजन्य इति पाञ्चऽजन्यः । पुरोहित इति पुरःऽहितः ।
तम्। ईमहे । महागयमिति महाऽगयम् ॥ द्रों ॥१॥ (१०)

आ - 'अग्निर्ऋषिः', इति। आग्नेयी गायत्री पुरोरुक् ऋषिः वसिष्ठः। पुरोऽनुवाक्या। Vअग्निः Vऋषिः। अग्नेः रूपम् अग्निरिति श्रीसर्वज्ञो भगवानग्निः। मन्त्राणां द्रष्टा ऋषिः। पवते रूपं Vपवमानः इति। इतश्चेतश्च गच्छन् Vपाञ्चजन्यः। पञ्चजनाश्चत्वारो वर्णाः निषाद-पञ्चमा मनुष्याः। तेषां संबन्धी पाञ्चजन्यः। पूज्यत्वेनाग्नेस्तु विशिष्टसबंन्धोपपत्तेः। यःVपुरोहितः, पुरः अग्रे हितः पूज्यदेवतात्वेन विहितोऽग्निः, तमीमहे महागयम्। गय इति अपत्यनाम। महतः परब्रह्मणः गयः अपत्यं महागयस्तं Vमहागयम्। यद्वा-महांश्चासौ गयश्चेति महागयः। Vतं श्रीभगवन्तमग्निम् Vईमहे याचामहे ॥१२॥

**अ - 'अग्निर्ऋषिः'। अग्निदेवत्या गायत्री वसिष्ठ भारद्वाजदृष्टा पुरोवाक्। महान् गयः स्तुतिर्यस्य स महागयः। महाग्रहरूपो वा Vतं Vमहागयम् अग्निं वयम् Vईमहे याचामहे। स कः? यः अग्निः Vऋषिः मन्त्रद्रष्टा। Vपवमानः। पव गताविति धातुः। पवते सर्वत्र गच्छतीति पवमानः। यद्वा-पूङङ् शोधने। पवते शोधयतीति पवमानः पवित्रकर्ता। Vपाञ्चजन्यः पञ्चजनेभ्यो हितः। विप्रादयश्चत्वारो वर्णाः निषादश्चेति पञ्चजनाः। तेषां यज्ञसाधकत्वेन हितत्वात्। पञ्चमहाभूतस्थत्वात् पाञ्चजन्यो वा। Vपुरोहितः। पुरोऽग्रे हितो निहितः होमाद्यर्थं स्थापितः। दधातेर्निष्ठाप्रत्ययः॥१२॥ (१०)॥**

**इति (अष्टाविंशे) दशमोऽनुवाकः॥**

7. S3 अग्निर्ऋषिः ... महागयमिति for 'अग्निर्ऋषिः' इति।

(एकादशोऽनुवाकः।)

**अनुं वीरैरनुं पुष्यास्म गोभिरन्वश्वैरनु सर्वेण पुष्टैः।**
**अनुं द्विपदानु चतुंष्पदा वयं देवा नों यज्ञमृंतुथा नंयन्तु ॥१॥ (११)॥**

~~~~~~~~~~~~~~~~~~~~

अनुं। वीरैः। अनुं। पुष्यास्म। गोभिः। अश्वैः। सर्वेण। पुष्टैः।
द्विपंदेतिं द्विऽपदां। चतुंष्पदा। चतुंःपदेति चतुंःऽपदा।
वयम्। देवाः। नः। यज्ञम्। ऋतुथेत्यृंतुऽथा। नयन्तु॥ द्विं॥ १॥ ॥(११)॥

~~~~~~~~~~~~~~~~~~~~

आ - 'अनु वीरैः', इति। आशीर्देवत्या त्रिष्टुप्। मुद्गलो यज्ञपुरुषः। [v]अनु [v]वीरैः परिपुष्टैः वीरैः पुत्रैश्च वयम्[v]अनु [v]पुष्यास्म। पुष पुष्टौ। पुष्टा भवेम। [v]पुष्टैः[v]गोभिः वयमनु पुष्यास्म। [v]पुष्टैः [v]अश्वैः अनुपुष्यास्म। [v]अनु [v]सर्वेण। किं बहुना। पुष्टेन सर्वेण वयमनु पुष्यास्म। 'अनु द्विपदानु चतुष्पदा'। [v]द्विपदा द्विपदेन। [v]चतुष्पदा चतुष्पदेन च [v]वयम् [v]अनु पुष्यास्म। 'देवा नो यशम् ऋतुथा नयन्तु'। [v]नः अस्माकं [v]यज्ञं [v]देवाः [v]ऋतुथा। अत्र व्यत्ययः। ऋतुथा ऋतौ ऋतौ [v]नयन्तु प्रापयन्तु॥ १३॥ (११)

~~~~~~~~~~~~~~~~~~~~

अ - 'अनु वीरै'ः। आशीरियं देवदेवत्या त्रिष्टुप्। मुद्गलदृष्टा। वयं [v]वीरैः पुत्रैः [v]अनु [v]पुष्यास्म पुष्टा भवेम। "पुत्रो वै वीरः पुत्रं विदेय" (शब्रा ३.३.१.१२) इति श्रुतेर्वीरशब्दः पुत्रपरः। पुषेराशीर्लिङि उत्तमबहुवचनम्। तथा[v]गोभिः धेनुभिः त्रयीलक्षणाभिर्वाग्भिर्वा अनु पुष्यास्म। उपसर्गावृत्या क्रियापदावृत्तिः। तथा [v]अश्वैः अनुपुष्यास्म। [v]सर्वेण सर्वैः। वचनव्यत्ययः। [v]पुष्टैः समग्रैः गृहदासादिपदार्थैः [v]अनु पुष्यास्म। तथा। द्वौ पादौ यस्य स द्विपात्। तेन [v]द्विपदा मित्रादिमनुष्येण। [v]चतुष्पदा गजादिना च पुष्यास्मेति प्रत्येकमन्वयः। "पादोऽन्यतरस्याम्"(पा ४.१.८) इत्यन्तलोपः। "पादः पत्" (पा ६.४.१३०) इति पदादेशः। किंच। [v]ऋतुथा ऋतावृतौ काले काले देवाः [v]नः अस्मान् [v]यज्ञं [v]नयन्तु प्रापयन्तु। अस्माभिर्यज्ञं कारयन्त्वित्यर्थः॥११॥ (११)

इति (अष्टाविंशे) एकादशोऽनुवाकः॥११॥

~~~~~~~~~~~~~~~~~~~~

7. S3 अनु ... नयन्त्विति for 'अनु वीरैः' इति
16. M4 समर्थैः for समग्रैः
17. M4 om. चतुष्पदा ... ऋतुथा

(द्वादशोऽनुवाकः।)

**आ नो गोत्रा दर्दृहि गोपते गाः सम॒स्मभ्यं॑ स॒नयो॑ यन्तु वाजाः।**
**दि॒वक्षा॑ असि वृषभ स॒त्यशु॑ष्मो॒ऽस्मभ्य॑ सु मघवन् बोधि गो॒दाः॥१॥(१२)॥**

आ। नः। गो॒त्रा। दर्दृहि। गोपत इति॑ गोऽपते। गाः।
सम्। अ॒स्मभ्य॑म्। स॒नयः॑। य॒न्तु। वाजाः॑।
दि॒वक्षाः॑। अ॒सि। वृ॒ष॒भ। स॒त्यशु॒ष्म इति॑ स॒त्यऽशु॒ष्मः। अ॒स्मभ्य॑म्।
सु। म॒घ॒व॒न्निति॑ मघऽवन्। बो॒धि। गो॒दा इति॑ गो॒ऽदाः॥ ध्र॥ १॥ (१२)॥

अग्निश्च तिस्रः॥ ३॥ बृहस्पत एका॥ १॥ इन्द्रगोमन्नेका॥ १॥ ऋतावानमेका॥ १॥ वैश्वानरमेका॥ १॥ वैश्वानर एका। १॥ वैश्वानरस्य सुमतावेका॥ १॥ मरुत्वाꣳ२ इन्द्र एका॥ १॥ महाꣳ२इन्द्र एका॥ १॥ अग्निर्ऋषिरेका॥ १॥ अनु वीरैरेका॥ १॥ आ नो गोत्रा इत्येका॥ १॥ द्वादषानुवाकेषु चतुर्दश॥ १४॥

इति शुक्लयजुर्वेदकाण्वसंहितायाम् अष्टाविंशोऽध्यायः॥ २८॥

**आ** - 'आ नो गोत्रा' इति। इन्द्रदेवत्या त्रिष्टुप्। वसिष्ठः। 'आ नो गोत्रा दर्दृहि गोपते गाः'। हे vगोपते इन्द्र vनः अस्माकं vगोत्रा गोत्राणि। अपत्यप्रभृतीनि गोत्राणि प्रति vगाः गावः vदर्दृहि प्रेरय। दृह प्रपूरणे। 'समस्मभ्यꣳ सनयो यन्तु वाजाः'। अत्र व्यत्ययः। वाजानाम् अन्नानां vसनयः। सनयोऽन्नदानानि vअस्मभ्यं vयन्तु। अस्मदर्थं समागच्छन्तु। अन्नसमृद्धिर्भवेदित्यर्थः। हे vवृषभ, श्रेष्ठ, त्वं vदिवक्षाः vअसि। दिवो भोक्ता असि। द्युनिवासीति वा दिवो हर्षहेतुरिति वा। vसत्यशुष्मः। शुष्मेति बलनाम। अबाधितबलः। 'अस्मभ्यꣳसु मघवन्'। हे vमघवन् धनवन् vअस्मभ्यं vसु vगोदाः भव। शोभनवाक्प्रदो भव। एतद्विज्ञानं vबोधि अबोधि। त्वया ज्ञातं चेत् ज्ञात्वैतत्सर्वं प्रयच्छेत्यभिप्रायः॥ १४॥

इति (श्रीमत्परमहंसपरिव्राजकाचार्यश्रीवासुदेवपुरी श्रीकृष्णभक्तिसाम्राज्यस्य श्रीमज्ञातवेदोपाध्यायस्य सूनुना चतुर्वेदिश्रीमदानन्दबोधभट्टोपाध्यायेन विरचिते) शुक्लयजुःकाण्वसंहितामन्त्रभाष्यसंग्रहे अष्टाविंशोऽध्यायः॥ २८॥

13. S3 पाठस्तु - आ ना ... गोदा इति for 'आ नो गोत्रा' इति
15. V2 दुह for दृह
23. V2 om. शुक्लयजुः; V2 °काण्ववेद° for काण्वसंहिता

अ - 'आ नो गोत्रा'। इन्द्रदेवत्या त्रिष्टुप् वसिष्ठदृष्टा । पुरोऽनुवाक्या । हे [V]गोपते गवां स्तुतीनां किरणांना स्वर्गाणां वा पते इन्द्र, [V]नः अस्माकं [V]गोत्रा गोत्राणि पौत्रप्रभृत्यपत्यानि । [V]गाः त्रयीलक्षणा वाचश्च [V]दर्दृहि । अतिशयेन दृढीकुरू । दृहि दृढीकरणे । ह्वादिः । तथा [V]सनयः दानविषयाः । वाजाः [V]अन्नानि। अश्वा वा । [V]अस्मभ्यं संयन्तु अस्मदर्थं समागच्छन्तु। यद्वा । विभक्तिव्यत्ययेन वाजानां सनयो दानानि अस्मभ्यं संयन्त्विति योज्यम् । किं च । हे [V]वृषभ श्रेष्ठ [V]मघवन् इन्द्रत्वं दिवक्षसः दिवा भोक्ता असि। क्षै अदने।दिवशब्दो दिनवचनः दिवे दिवे इत्यादौ तथा दर्शनात् । [V]सत्यशुष्मः । शुष्मेति बलनाम । सत्यमेव शुष्मं यस्य सः तथा ।[V]असि ।[V]अस्मभ्यं [V]गोदाः चासि । गोशब्दस्य यावानर्थस्तत्प्रदोऽसि । किं च । नेदं प्रशंसामात्रम् । किं तर्हि । [V]सु सत्यमेवेति मया [V]बोधि अबोधि ज्ञातमिति भावः ॥१॥

इति (अष्टाविंशे) द्वादशोऽनुवाकः॥१२॥

इति श्रीमन्नागदेवभट्टात्मजेन श्रीमदनन्ताचार्येण विरचितायां वेदार्थदीपिकायां काण्वसंहिताभाष्ये अष्टाविंशोऽध्यायः॥२८॥

अनेन वेददीपेन मया नीराजितो हरिः।
मच्छ्रमं सार्थकीकृत्य मद्वंशं परिरक्षतु॥

10. M4 om. °देव°

# एकोनत्रिंशोऽध्यायः

(प्रथमोऽनुवाकः।)

**समांस्त्वाऽग्न ऋतवों वर्धयन्तु संवत्सरा ऋषंयो यानिं सत्या।**
**सं दिव्येनं दीदिहि रोचनेन विश्वा आ भाहि प्रदिशश्चतंस्रः॥१॥**

समाः। त्वा। अग्ने। ऋतवः। वर्धयन्तु। संवत्सराः। ऋषंयः। यानिं। सत्या।
सम्। दिव्येनं। दीदिहि। रोचनेनं।
विश्वाः। आ। भाहि। प्रदिश इति प्रऽदिशः। चतंस्रः॥ स्रों॥ १॥

**आ** – 'समास्त्वाऽग्ने' इति। ऋषिरग्निः कर्मांगभूतमग्निं स्तौति। 'समास्त्वाऽग्ने' इति। आग्निकोऽयमध्यायः। प्रजापतेरार्षम्। अग्निना दृष्टत्वात्। अग्निश्च। अत्रापि सामिधेन्यो नवाग्नेय्यस्त्रिष्टुभः प्राक् पीवो अन्नाया ऋषिरग्निः। 'समास्त्वाऽग्न ऋतवो वर्धयन्तु'। अत्र समाशब्दो मासवचनः। 'सवंत्सराः' इति संवत्सरस्य। स्वशब्देनोपादानात्। हे श्रीभगवन् vअग्ने, vत्वा त्वां vसमाः मासाःvवर्धयन्तु। vऋतवः वर्धयन्तु। ऋतवश्च त्वां वर्धयन्तु। vसंवत्सराः च त्वां वर्धयन्तु। vऋषयः सप्तर्षयः। "भरद्वाजः कश्यपो गौतमोऽत्रिश्च विश्वामित्रो जमदग्निर्वसिष्ठः सप्तमः स्मृतः" इति सप्तर्षयश्च त्वां वर्धयन्तु। प्राणादयो वा ऋषयः। vयानि vसत्या। यानि सत्यानि तानि च त्वां वर्धयन्तु। 'सं दिव्येन दीदिहि रोचनेन'। दिविभवेन vरोचनेन प्रकाशेन vसंदीदिहि दीप्यस्व। 'विश्वा आ भाहि प्रदिशश्चतस्रः'। vविश्वाः दिशः vआ vभाहि। vचतस्रः vप्रदिशः च आभाहि समन्तात् दीपयस्व। १॥

**अ** – **सर्ववेदैकसंवेद्यं विष्णुं देवशिखामणिम्।**
**देशतः कालतश्चैव गुणतोऽनन्तमाश्रये॥१॥**

**अयमध्यायः पञ्चचितिकस्याग्नेः संबंधिप्रजापतिना दृष्टा। तत्राद्या नव ऋचोऽग्निदेवत्यास्त्रिष्टुभोऽग्निना दृष्टाः। इष्टकापशौ समिध्यमानसमिद्वत्योरन्तराले एतासां विनियोगः। "पञ्चचितिकोऽग्निः - - - यावानग्निर्यावत्यस्य मात्रा" (शब्रा ६.३.१.२५) इति श्रुतेः। 'समास्त्वा'। अत्राग्निः ऋषिः। कर्माङ्गभूतमग्निं स्तौति। हे vअग्ने, vसमाः मासाः। संवत्सरस्य पृथग्वचनात् समाशब्दोऽत्र मासार्थकः।**

8. S3 **समास्त्वा ... चतस्र इति** for **'समास्त्वाऽग्ने' इति**; S3 om. **'समास्त्वाऽग्ने' इति।**
12. S3 om. **च**
18. P2 before **सर्व°** adds **श्रीदेवदेवाय नमः।**
21. M4 **समिधद्वयोः** for **समिद्वत्योः**

चैत्राद्या द्वादश मासाः । vऋतवः वसन्ताद्याः षट् । vसंवत्सराः षष्टिसंख्याः । अर्थात् तत्तदभिमानिदेवाः। vऋषयः मन्त्रद्रष्टारः । vयानि vसत्या सत्यानि । सत्यरूपामन्त्रा इत्यर्थः । एते सर्वे vत्वा त्वां vवर्धयन्तु इति प्रत्येकमन्वयः । त्वमप्येतैर्वर्ध्यमानः vदिव्येन दिविभवेन vरोचनेन प्रकाशेन vसंदीदिहि संदीप्यस्व । दीधातोः श्लौ लुकि रूपम् । "रुजादीनां दीर्घोऽभ्यासस्य" (पा ६.१.७) इत्यभ्यासदीर्घः । किं च । त्वं vविश्वाः सर्वाः vप्रदिशः विदिशः vचतस्रः दिशश्च vआभाहि दीपय । अन्तर्भूतो ण्यर्थः । भा दीप्तौ ॥१॥

~~~~~~~~~~~~~~~~~~~~

**सं चे॒ध्यस्वा॑ग्ने॒ प्र च॑ बोधयैन॒मुच्च॑ तिष्ठ मह॒ते सौभ॑गाय।**
**मा च॑ रिषदुपस॒त्ता तें॑ अग्ने ब्र॒ह्माण॑स्ते य॒शस॑ः सन्तु॒ माऽन्ये॥२॥**

~~~~~~~~~~~~~~~~~~~~

सम् । च॒ । इ॒ध्यस्व॑ । अ॒ग्ने॒ । प्र । च॒ । बो॒ध॒य॒ । एनम् ।
उत् । च॒ । ति॒ष्ठ॒ । म॒ह॒ते । सौभ॑गाय ।
मा । च॒ । रि॒ष॒त॒उ॒प॒स॒त्तेत्यु॑प॒ऽस॒त्ता । ते॒ । अ॒ग्ने॒ ।
ब्र॒ह्माण॑ः । ते॒ । य॒शस॑ः । स॒न्तु॒ । मा । अ॒न्ये ॥ सूः ॥ २ ॥

~~~~~~~~~~~~~~~~~~~~

**आ** -'सं चेध्यस्वाग्ने'। हे श्रीभगवन् vअग्ने, vसम् vइध्यस्व दीप्यस्व। 'प्र च बोधयैनम्'। vएनं यजमानं vबोधय। अवगमय vच। यद्वा एतत्सर्वं विज्ञापय। 'उच्च तिष्ठ महते सौभगाय'। त्वं vच vउत्तिष्ठ। उद्गतज्वालो भव। vमहते vसौभगाय अस्माकं महत्सौभाग्यसिद्धये। 'मा च रिषदुपसत्ता ते अग्ने'। श्रीभगवन् vअग्ने, vते तव vउपसत्ता उपसदनस्य कर्ता vमा vरिषत् मा हिंसीत् । 'ब्रह्माणः ते यशसः सन्तु'। vब्रह्माणाः त्वदीया ऋत्विजः। यजमानस्य vयशसः यशस्विनः। मत्वर्थीयप्रत्यय प्रत्ययलोपश्छान्दसः। vसन्तु भवन्तु। 'माऽन्ये'। अस्मदीयेभ्यः vअन्ये अयज्वानः यशस्विनः vमा भवन्तु॥ २॥

~~~~~~~~~~~~~~~~~~~~

**अ** - 'सं च', । "व्यवहिताश्च" (पा. १.४ ८२) इति पाणिन्युक्तरुपसर्गक्रिययोर्व्यवधानेऽप्यन्वयकाले संनिधातव्यम् । हे अग्ने, त्वं vसमिध्यस्व vच दीप्यस्व । व्यत्ययेन श्यन् । vएनं यजमानं vप्रबोधय vच ज्ञानिनं कुरु । अग्निश्चेतव्य इति । किं च। vमहते vसौभगाय ऐश्वर्याय vउत्तिष्ठ vच । यजमानायैश्वर्यं दातुमुद्यमं कुर्वित्यर्थः । अपि च । हे vअग्ने, vते तव vउपसत्ता । उपसीदतीत्युपसत्ता त्वत्सेवकः। vमा vरिषत् vच मा नश्यतु । रुष रिष हिंसायाम् । किं च vते तव vब्रह्मणः ब्राह्मणा ऋत्विग्यजमानाः vयशसः यशोरूपाः । यद्वा यशस्विनः vसन्तु । मत्वर्थीयप्रत्ययलोपः । 'माऽन्ये'। vअन्ये अयज्वानः vमा यशसः vसन्तु ॥२॥

~~~~~~~~~~~~~~~~~~~~

3. M4 दीप्यस्व for संदीप्यस्व
5. M4 दिशश्चतस्रो दिशो विदिशश्च for विदिशश्चतस्रो दिशश्च ।
13. S3 पाठस्तु - सं चेध्यस्व ... मान्य इति for 'सं चेध्यस्वाग्ने'
~~~~~~~~~~~~~~~~~~~~

त्वामग्ने वृणते ब्राह्मणा इमे शिवो अग्ने संवरणे भवा नः।
सपत्नहा नो अभिमातिजिच्च स्वे गये जागृह्यप्रयुच्छन् ॥३॥

---

त्वाम्। अग्ने। वृणते। ब्राह्मणाः। इमे।
शिवः। अग्ने। संवरण इति सम्ऽवरणे। भव। नः।
सपत्नहेति सपत्नऽहा। नः। अभिमातिजिदित्यभिमातिऽजित्। च।
स्वे। गये। जागृहि। अप्रयुच्छन्नित्यप्रऽयुच्छन्॥ ध्यो ॥३॥

---

आ - 'त्वामग्ने' इति। श्रीभगवन् vअग्ने vइमे vब्राह्मणाः ऋत्विगादयः vत्वाम् एव स्वपुरुषार्थसिद्ध्यर्थं vवृणते। त्वमस्माकं सर्वपुरुषार्थसाधक इति वरणं कुर्वते। वृ संवरणे । यत एवमतस्त्वां प्रार्थये। 'शिवः अग्ने संवरणे भवा नः'। हे श्रीभगवन् vअग्ने, अस्माकं ब्राह्मणैः सह vसंवरणे त्वं vशिवः शान्तः vभव। 'सपत्नहा नो अभिमातिजित् च' इति। अस्माकं vसपत्नहा। सपत्नः शत्रुः, तं हन्तीति सपत्नहा। सपत्नघातको भव। vअभिमातिजित् vच। अभिमातिः प्राकृतः शत्रुः तं जयतीति vअभिमातिजित् vच भव। किं च। 'स्वे गये जागृह्यप्रयुच्छन्' । vस्वे स्वकीये vगये गृहे अपत्ये वा vजागृहि vअप्रयुच्छन् । युच्छी प्रमादे। अप्रमाद्यन्। जागृहि । जागृ निद्राक्षये। जागृहि अनिद्रो भव ॥३॥

---

**अ - 'त्वामग्ने' । हे vअग्ने, vइमे vब्राह्मणाः ऋत्विजः vत्वा त्वां vवृणते । वृङ् संभक्तौ । यागाय भजन्ति । अतो हे vअग्ने, vसंवरणे ब्राह्मणैः सहैकस्मिन् वरणे सति vनःअस्माकं vशिवः शान्तः vभव। "द्व्यचोऽतस्तिङः" (पा ६.३.१३५) इति दीर्घः। किंच । vनः अस्माकं vसपत्नहा vअभिमातिजित् vच भव । अभिमातिरपि शत्रुस्तत एवं व्याख्या । सपत्नानां हन्ता भव । हतावशिष्टानां जेता च भव । अपि च vस्वे vगये निजे गृहे vजागृहि सावधानो भव । मम गृहे चोराद्युपद्रवो माऽस्त्वित्यर्थः । किं कुर्वन् ? vअप्रयुच्छन् अप्रमाद्यन् ॥३॥**

---

7. **S3 पाठस्तु - त्वामग्ने ... अप्रयुच्छन्निति** for **'त्वामग्ने' इति।**

**इहैवाग्ने अधि॑ धारया र॒यिं मा त्वा नि क्र॑न्पूर्व॒चितो॑ निका॒रिण॑ः।**
**क्षत्रम॑ग्ने सुयम॑मस्तु तुभ्य॑मुपस॒त्ता व॑र्धतां ते अनिष्टृतः ॥४॥**

~~~~~~~~~~~~~~~~~~~~

इ॒ह। ए॒व। अ॒ग्ने। अधि॑। धा॒र॒य। र॒यिम्।
मा। त्वा॒। नि। क्र॒न्। पू॒र्व॒चित॒ इति॑ पू॒र्व॒ऽचित॑ः। नि॒का॒रिण॒ इति॑ नि॒ऽकारिण॑ः।
क्षत्रम्। अ॒ग्ने। सु॒यम॒मिति॑ सु॒ऽयम॑म्। अ॒स्तु। तुभ्य॑म्।
उ॒प॒स॒त्तेत्यु॑प॒ऽस॒त्ता। व॒र्ध॒ता॒म्। ते॒। अनि॑ष्टृतः। अनि॑स्तृ॒तै॒ इत्यनि॑ ऽ स्तृतः॥ ण्या॥ ४॥

~~~~~~~~~~~~~~~~~~~~

**आ** - 'इहैव' इति। हे श्रीभगवन् V अग्ने V इह V एव कर्मण्येव वर्तमानानामअस्माकम्। V अधि धारया रयिम्'। V अधि V रयिं समग्रं धनं यागादिसाधनभूतं धनं V धारय । अस्मभ्यं प्रयच्छेत्यर्थः। किं च । 'मा त्वा नि क्रन् पूर्वचितः निकारिणः' । पूर्वमग्निं ये चिन्वन्तीति V पूर्वचितः । केचन यजमानाः अग्निं त्वां V मा V नि V क्रन्। नीचैर्मा कुर्वन्। V निकारिणः ये स्वभावत एव अन्यं नीचैः कुर्वन्तीति ते निकारिणः । ते च पूर्वचितं त्वां मा निक्रन् निक्रामन् इति। किं च । 'क्षत्रमग्ने सुयममस्तु तुभ्यम्'। हे श्रीभगवन्, V अग्ने, इदं V क्षत्रं क्षत्रियजातिमात्रं V तुभ्यं युष्मदर्थं V सुयमं सुष्ठु यमं संनियमसंपन्नम् V अस्तु। 'उपसत्ता वर्धतां ते अनिष्टृतः'। उपसदनं करोतीति V उपसत्ता । V ते तव यजमानः । स्तृ हिंसायाम्। V अनिष्टृतः अहिंसितः सन् उपसत्ता V वर्धताम् ॥ ४॥

~~~~~~~~~~~~~~~~~~~~

**अ - 'इहैव'। हे V अग्ने, V इह V एव अस्मास्वेव यजमानेषु V रयिं धनं त्वम् V अधि V धारय अधिकं देहि। किं च। पूर्वं चिन्वन्तीति V पूर्वचितः। पूर्वमग्निं चितवन्तः। स एव V निकारिणः नितरां यज्ञकरणशीलाः V त्वा त्वां V मा V नि V क्रन् मा नीचैः कुर्वन्तु। माऽवजानन्त्वित्यर्थः। करोतेः शपि लुप्ते लङि प्रथमबहुवचने रूपम्। किं च - हे V अग्ने, V क्षत्रं क्षत्रजातिः V तुभ्यं V सुयमम् V अस्तु। सुष्ठु यमो नियमो यस्य तत्। त्वदर्थं नियमयुक्तमस्तु। यद्वा - तुभ्यं तव सुखेन यन्तुं शक्यं सुयमम्। सुखेन वश्यं कर्तुं शक्यमस्तु । "ईषद्दुःसुषु" (पा ३.३.१२६) इति सुपूर्वाद्यमेः खल्प्रत्ययः। अपि च V ते तव V उपसत्ता सेवकः V अनिष्टृतः अनुपहिंसितः सन् V वर्धताम्। धनपुत्रपश्वादिभिरेधताम्। स्तृञ् हिंसायां निष्ठाप्रत्ययः ॥४॥**

~~~~~~~~~~~~~~~~~~~~

**क्ष॒त्रेणा॑ग्ने॒ स्वायुः सꣳरभस्व मि॒त्रेणा॑ग्ने मि॒त्रधेये॑ यतस्व ।**
**स॒जा॒ताना॑ं मध्यम॒स्था ए॑धि॒ राज्ञा॑मग्ने विह॒व्यो॑ दीदिही॒ह ॥५॥**

~~~~~~~~~~~~~~~~~~~~

क्षत्रेण॑ । अ॒ग्ने॒। स्वायुरिति॑ सुऽआयु॑ः। सम् । र॒भ॒स्व॒।
मि॒त्रेण॑। अ॒ग्ने॒। मि॒त्रधे॑य॒ इति॑ मि॒त्रऽधेये॑। य॒त॒स्व॒।
स॒जा॒ता॒ना॒मिति॑ स॒ऽजा॒ताना॑म्। म॒ध्य॒म॒स्था इति॑ म॒ध्य॒म॒ऽस्थाः । ए॒धि॒।
राज्ञा॑म् । अ॒ग्ने॒ । वि॒ह॒व्य॒ इति॑ वि॒ऽह॒व्य॑ः । दी॒दि॒हि॒ । इ॒ह ॥ वै॑ ॥ ५॥

~~~~~~~~~~~~~~~~~~~~

7. S3 पाठस्तु - इहैव ... अनिष्टृत इति for 'इहैव' इति

**आ** - 'क्षत्रेणाग्ने'। हे श्रीभगवन् $^{v}$अग्ने, $^{v}$क्षत्रेण क्षतात् त्राणलक्षणेन स्वात्मानं संपाद्य $^{v}$स्वायुः। सुशोभनमायुः यस्य स स्वायुः। वकारलोपश्छान्दसः। सुवायुः वायुसखा इत्यर्थः। स्वायुः $^{v}$सꣳरभस्व। रभ राभस्ये। संभ्रमं कुरु। 'मित्रेणाग्ने मित्रधेये यतस्व'। श्रीभगवन्$^{v}$अग्ने, $^{v}$मित्रेण सूर्येण स्वात्मानं संपाद्य $^{v}$मित्रधेये। एवं मित्राणि धीयन्ते यस्मिन्। मित्रार्थं धारणीये $^{v}$यतस्व यत्नं कुरु। किं च। $^{v}$सजातानां समानजन्मनां $^{v}$मध्यमस्थाः मध्यमस्थानम् $^{v}$एधि भव। किं च। हे श्रीभगवन् $^{v}$अग्ने, $^{v}$राज्ञां $^{v}$विहव्यः। राज्ञां संबन्धि बहुविधहव्यसंपन्नः सन् $^{v}$इह यज्ञगृहे $^{v}$दीदिहि। दीधीट् दीप्तिदेवनयोरिति। दीप्यस्व। राजानोऽपि यज्वानो भवन्त्वित्यभिप्रायः ॥५॥

~~~~~~~~~~~~~~~~~~~~

**अ - 'क्षत्रेणाग्ने'। हे $^{v}$अग्ने, त्वं $^{v}$क्षत्रेण क्षत्रियेण राज्ञा। क्षतात् त्राणेन वा। $^{v}$स्वायुः शोभनमायुः। अस्मज्जीवनं $^{v}$संरभस्व वर्धयस्व। रभ राभस्ये। किं च। हे $^{v}$अग्ने, $^{v}$मित्रेण मित्रजनेन सूर्येण वा। सहितः सन् $^{v}$मित्रधेये $^{v}$यतस्व। धारयितुं योग्यं धेयम्। मित्रस्य यजमानस्य धेयं कार्यं यागलक्षणं तत्र यत्नं कुर्वित्यर्थः।**

**अपि च - $^{v}$सजातानां समानजन्मनाम्। $^{v}$मध्यमस्थाः। मध्यमे तिष्ठन्तीति क्विप्। मध्यस्थः। $^{v}$एधि भव। अस भुवीत्यस्य लोण्मध्यमैकवचनम्। तव समानजाता अपि यज्वानो भवन्त्वित्यर्थः। यद्वा- सजातानामग्न्यन्तराणां मध्यमस्थाः $^{v}$एधि। न त्वेक एव। किं च। हे $^{v}$अग्ने $^{v}$इह यज्ञगृहे $^{v}$दीदिहि दीप्यस्व। दी दीप्तिदेवनयोः। व्यत्ययेन शपः श्लुः। रुजादित्वादभ्यासदीर्घः। कीदृशस्त्वम्। $^{v}$राज्ञां $^{v}$विहव्यः। कर्तरि षष्ठी। राजाभिर्विविधं हूयते आहूयते वा विहव्यः ॥५॥**

~~~~~~~~~~~~~~~~~~~~

**अति निहो अति स्रिधोऽत्यचित्तिमत्यरातिमग्ने।**
**विश्वा ह्यग्ने दुरिता सहस्वाथाऽस्मभ्यꣳ सहवीरꣳ रयिं दाः ॥६॥**

~~~~~~~~~~~~~~~~~~~~

अति। निहः। अति। स्रिधः। अति। अचित्तिम्। अति। अरातिम्। अग्ने।
विश्वा। हि। अग्ने। दुरितेति दुःऽइता। सहस्व।
अथ। अस्मभ्यम्। सहवीरमिति सहऽवीरम्। रयिम्। दाः॥ झौं ॥६॥

~~~~~~~~~~~~~~~~~~~~

**आ** - 'अति निहः' इति। हे श्रीभगवन् $^{v}$अग्ने, $^{v}$अति $^{v}$निहः। नि पूर्वस्य हन्तेः रूपं निहः। निहन्तॄन् $^{v}$अति अतिक्रम्य अति $^{v}$स्रिधः। स्रेधतिस्तु निकृन्ततिकर्मा। अतिस्रिधः निकृन्तन्तं

~~~~~~~~~~~~~~~~~~~~

1. S3 पाठस्तु - क्षत्रेणाग्ने ... दीदिहीहेति for क्षत्रेणाग्ने
2. V2 सवायुः for सुवायुः
22. S3 पाठस्तु - अति निह ... रयिं दा इति for 'अति निहः' इति।
23. V2 स्तुतिकृन्तति °for °स्तु निकृन्तन्ति°
~~~~~~~~~~~~~~~~~~~~

बाधकान् अतिक्रम्य Vअति Vअचित्तिम् अन्यमनस्कतां चित्तशून्यताम् अतिक्रम्य Vअति Vअरातिम्। अरातिम् अदानम् अदातारं च अतिदानशून्यं चातिक्रम्य Vविश्वा विश्वानि हि Vदुरिता दुरितानि Vसहस्व Vहि। Vअथ अनन्तरम् Vअस्मभ्यं Vसहवीरं सुपुत्रं Vरयिं धनं Vदाः दद्याः ॥ ६ ॥

~~~~~~~~~~~~~~~~~~~~

अ - 'अति निहः'। हे Vअग्ने, Vहि निश्चितम्। Vविश्वा विश्वानि सर्वाणि Vदुरिता दुरितानि पापानि त्वं Vसहस्व। अभिभवा निवर्तयेत्यर्थः। किं कृत्वा निघ्नन्ति Vनिहः तान् शत्रून् Vअति अतिक्रम्य। निपूर्वाद्धन्तेः क्विप्। स च ङित्। ङित्वात् टिलोपे रूपम्। "दृष्टानुविधयश्छन्दसि" इति वचनात्। स्रेधतिः कुत्सतिकर्मा। स्रेधन्तीति Vस्रिधः। स्रिध कुत्सायाम्। क्विप् कुत्सिताचारानतिक्रम्य। Vअचित्तिम् Vअति। अन्यमनस्कतां मूर्खं वा अतिक्रम्य। न रातिर्दानं यस्य सः Vअरातिः तम् अरातिम् अदातारमतिक्रम्य। यज्ञप्रतिबन्धकानतिक्रम्य पापं जहीत्यर्थः। किं च। Vअध अथ। धकार आर्षः। अनन्तरम्। Vअस्मभ्यं Vसहवीरम्। वीरैः पुत्रैः सहितं Vरयिं Vदाः देहि। लुङ्। अडभाव आर्षः ॥६॥

~~~~~~~~~~~~~~~~~~~~

**अनाधृष्यो जातवेदा अनिष्टृतो विराळग्ने क्षत्रभृद्दीदिहीह।**
**विश्वा आशाः प्रमुञ्चन् मानुषीर्भियः शिवाभिरद्य परि पाहि नो वृधे ॥७॥**

~~~~~~~~~~~~~~~~~~~~

अनाधृष्यः। जातवेदा इति जातऽवेदाः। अनिष्टृतः। अनिस्तृत इत्यनिःऽस्तृतः। विराडिति विऽराट्। अग्ने। क्षत्रभृदितिक्षत्रऽभृत्। दीदिहि। इह। विश्वाः। आशाः। प्रमुञ्चन्निति प्रऽमुञ्चन्। मानुषीः। भियः। शिवाभिः। अद्य। परि। पाहि। नः। वृधे॥ श्र्यों ॥७॥

~~~~~~~~~~~~~~~~~~~~

आ - 'अनाधृष्यो जातवेदाः'। हे श्रीभगवन् Vअग्ने, यस्त्वम् Vअनाधृष्यः। केनापि खलेन धर्षयितुमशक्यः अनाधृष्यः। Vजातवेदाः। जातं जातं वेत्ति वेदयतीति वा जातवेदाः। Vअनिष्टृतः। स्तृ हिंसायाम्। अनुपहिंसितः। विशेषेण राजत इति Vविराट्। विराडिति ईश्वरनाम। ईश्वरः। Vक्षत्रभृत्। क्षत्रं बिभर्तीति क्षत्रभृत्। अतस्तं त्वां ब्रवीमि। 'दीदिहीह विश्वा आशा'। Vइह यज्ञकर्मणि वर्तमानस्त्वं Vविश्वाः Vआशाः दिशः। Vदीदिहि दीप्यस्व। किं कुर्वन्? 'प्रमुञ्चन् मानुषीर्भियः'। व्यत्ययः। मनुष्यसंबन्धिनी Vभियः भयानि Vप्रमुञ्चन्। Vशिवाभिः दीप्तिभिः

~~~~~~~~~~~~~~~~~~~~

1. S3 विप्र° for चित्त°
2. M4 after दुरितानि adds. तानि
17. S3 पाठस्तु - अनघृष्यो ... वृध इति for अनाधृष्यो जातवेदाः
~~~~~~~~~~~~~~~~~~~~

प्रमोचयन् व्याजयन् दीदिहि। किं च। 'अद्य परि पाहि नो वृधे'। vनः अस्मान् vअद्य अस्मिन् अहनि परितः सर्वतः vपाहि परिरक्ष। कस्मै? vवृधे। अस्माकमभिवृद्धये ॥७॥

अ – 'अनाधृष्यो जातवेदाः'। हे vअग्ने, vइह कर्मणि वर्तमानस्त्वं vविश्वाः vआशाः दिशः vदीदिहि प्रकाशय। कीदृशस्त्वम्? vअनाधृष्यः न आधृष्यः पराभवितुमशक्यः अनाधृष्यः। ञिधृषा प्रागल्भ्ये। vजातवेदाः। जातं वेदो धनं ज्ञानं वा यस्य यस्मद्वा सः। vअनिष्टृतः। न हिंसितः केनापि। स्तृञ् हिंसायाम्। विविधं राजते सः vविराट्। क्षत्रं बिभर्तीति vक्षत्रभृत्। किं च। मानुषीः मनुष्यसंबन्धिनीः भियः जन्मजरामृतिदैन्यशोकादिकाः मनुष्यकृतोपद्रवान् वा vप्रमुञ्चन् निवर्तयन् vशिवाभिः। दीप्तिभिरिति शेषः। vअद्य vवृधे वृद्धये vनः अस्मान् vपरि vपाहि। वर्धनम् वृध्, तस्यै वृधे। वृधु वर्धने। संपदादित्वाद्भावे क्विप् ॥७॥

बृह॑स्पते सवितर्बो॒धयै॑न॒ꣳ सꣳशि॑तं चित्सं॑त॒राꣳ सꣳ शि॑शाधि।
व॒र्धयै॑नं म॒ह॒ते सौभ॑गा॒य विश्वे॑ ए॒न॒मनु॑ मदन्तु दे॒वाः ॥८॥

बृह॑स्पते। स॒वि॒तः। बो॒धय॑। ए॒न॒म्। सꣳशि॑त॒मिति॒सम्ऽशि॑तम्। चि॒त्।
स॒न्त॒रामिति॑ स॒म्ऽत॒राम्। सम्। शि॒शा॒धि।
व॒र्धय॑। ए॒न॒म्। म॒ह॒ते। सौभ॑गाय। विश्वे॑। ए॒न॒म्। अनु॑। म॒द॒न्तु। दे॒वाः॥ छों ॥८॥

आ - 'बृहस्पते सवितः'। अत्र बृहस्पत्यादयः शब्दाः मुख्यवृत्त्या लक्षणया परमात्मभूतं श्रीभगवन्तम् अग्निमेव अभिदधते। vबृहस्पते बृहतो वेदादेः पते श्रीभगवन्अग्ने vसवितः सर्वप्राणिनां प्रसवकर्तः। 'बोधयैनम्'। vएनं यागादिकं कुर्वाणं यजमानं vबोधय। अज्ञानविषयं यत्किंचित् तत् सर्वमवगमय। कथं भूतमिति। vसंशितं vचित् अव्यर्थे। संशितव्रतं सम्यक् नियमव्रतमपि यजमानं vसंतराम् अतितराम् अत्यर्थं vसम् vशिशाधि। छान्दसं पदम्। अनु शाधि शिक्षय। किं च। 'वर्धय एनम्'। vएनं यजमानं vवर्धय। पुत्रपशुधनादिप्रदानेन अभिवर्धय। vमहते vसौभगाय। vमहते सुभगत्वाय। किं च। अग्निसमीपं वर्तमानाः vविश्वे सर्वे vदेवाः vएनं श्रीभगवदनुगृहीतं हृष्टं यजमानं दृष्ट्वा vअनु vमदन्तु हृष्टा भवन्तु। यद्वा-अनुमादयन्तु। अत्र बृहस्पतिसवितृशब्दाभ्यां सामिधेन्यङ्गभूतोऽग्निरेव अभिहितः। अथ वा वाक्यद्वयं कृत्वा मन्त्रौ योजनीयः ॥८॥

15. S3 पाठस्तु - बृहस्पते ... देवा इति for बृहस्पते सवितः
21. V2 दृष्टं for हृष्टं

अ - 'बृहस्पते सवितः' । Vसवितः सर्वप्रेरक, हे Vबृहस्पते, बृहतां वाचां पतेऽग्ने, बृहस्पतिसवितृशब्दाभ्यां सामिधेन्यङ्गभूतोऽग्निरुच्यते । Vएनं यजमानं त्वं Vबोधय कर्मभिज्ञं कुरु । न केवलमेतदेव । अपि तर्हि । 'संशितं चित्' । चिदप्यर्थे । सम्यक् शिक्षितमपि एनं Vसंतराम् अतितरां Vम् Vम्शिशाधि शिक्षय । शासेः शपः श्लौ द्वित्वम् । छान्दसमभ्यासस्येत्त्वम् । संतरामित्यामन्तमव्ययम्। उत्कृष्टज्ञानिनं कुरु । अपि च Vमहते Vसौभगाय ऐश्वर्याय Vएनं Vवर्धय । तथा Vविश्वे सर्वे Vदेवाः Vएनम् Vअनु Vमदन्तु तृप्ताः हृष्टा वा भवन्तु ॥८॥

---

**अमुत्रभूयादध यद्यमस्य बृहस्पते अभिशस्तेरमुञ्चः।**
**प्रत्यौहतामश्विना मृत्युमस्माद्देवानामग्ने भिषजा शचीभिः ॥९॥**

---

अमुत्रभूयादित्यमुत्र ऽ भूयात् । अध । यत् । यमस्य ।
बृहस्पते । अभिशस्तेरित्यभिऽशस्तेः । अमुञ्चः ।
प्रति । औहताम् । अश्विना । मृत्युम् । अस्मात् । देवानाम् ।
अग्ने । भिषजा । शचीभिः ॥ जें ॥ ९ ॥

---

आ - 'अमुत्रभूयात्' इति। हे Vबृहस्पते, श्रीभगवन्नग्ने, Vअमुत्रभूयात् इति छान्दसं पदम्। अमुत्र अमुष्मिन् लोके यच्छरीरं भूयात् उत्पद्यते। Vअध छान्दसो धकारः। अध Vयत् शरीरं Vयमस्य सदने भूयात् । किं च हे Vबृहस्पते, Vअभिशस्तेः अभिशंसनात् जनापवादात् Vअमुञ्चः। अत्र व्यत्ययः । मोचय। किंच- 'प्रत्यौहतामश्विना मृत्युमस्माद्देवानाम्'। भिषजौ अश्विनौ देवौ Vअस्मात् यजमानात् Vमृत्युं Vप्रत्यौहतां प्रतिपूरयताम्। यजमानादन्यत्र नीयतामित्यर्थः। कैरिति। हे श्रीभगवन् Vअग्ने, Vशचीभिः विहितकर्मभिः Vमृत्युं प्रत्यौहताम् ॥ ९ ॥

---

अ - 'अमुत्रभूयादध'। हे Vबृहस्पते, त्वं Vअमुत्रभूयात् Vअमुञ्चः। अमुत्र परलोके भवनममुत्रभूयम्। "भुवो भावे" (पा ३.१.१०७) इति क्यप्। परलोकभवनान्मरणात् अमुञ्चः मुञ्च। रक्षेत्यर्थः लकारव्यत्यय आर्षः। Vअध। अथानन्तरम्। Vयत् Vयमस्य भयं नरकपातादि तस्मादपि मुञ्च। भयमित्यध्याहार्यम् । किं च Vअभिशस्तेः अभिशापादपि लोकापवादादपि मुञ्च । अथ च। Vदेवानां भिषजौ अश्विनौ। आकार आर्षः। Vअस्मात् यजमानात् Vमृत्युं Vप्रत्यौहतां Vशचीभिः अस्मत्कृतकर्मभिः कृत्वा ॥९॥

---

2. 2M4 च for त्वं
13. S3 पाठस्तु - अमुत्र ... शर्चीभिरिति for 'अमुत्र भूयात्' इति
19. M4 अथ for अध

**उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम्।**
**देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥१०॥ (१)॥**

---

उद्वयम् ॥१०॥ (१)॥

---

आ - 'उद्वयम्' इति। व्याख्यातो मन्त्रः ॥१०॥ (१)॥

---

अ - 'उद्वयम्'इत्येषा द्वाविंशे व्याख्याता ॥१०॥ (१)॥

इति एकोनत्रिंशे प्रथमोऽनुवाकः ॥१॥

---

(द्वितीयोऽनुवाकः।)

**ऊर्ध्वा अस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचीᳬष्यग्नेः।**
**द्युमत्तमा सुप्रतीकस्य सूनोः॥१॥**

---

ऊर्ध्वाः । अस्य । समिध इति सम्ऽइधः । भवन्ति । ऊर्ध्वा । शुक्रा । शोचीᳬषि । अग्नेः । द्युमत्तमेति द्युमत्ऽतमा । सुप्रतीकस्येति सुऽप्रतीकस्य । सूनोः ॥ ढां ॥ १ ॥

---

आ - 'ऊर्ध्वा अस्य' इति। द्वादशर्चमाप्त्यमौष्णिहं विषमपदं प्राजापत्यमाग्नेयं च। अग्निश्च प्रजापतिश्चानेन संस्क्रियत इति । "यदग्निरपश्यत् तेनाग्नेय्यम्। यत् प्रजापतिंसमैन्ध तेन प्राजापत्याः" (शब्रा ६.२.१.२७) इति श्रुतेः। अग्निरत्र ऋषिः । प्रजापतिश्चाग्निरूपेण स्तूयते। ᵛऊर्ध्वाः ᵛअस्य ᵛअग्नेः प्रजापतिरूपेण संस्तूयमानस्य ऊर्ध्वाः प्राणाः देवयानमार्गगामिनः ᵛसमिधः भवन्ति। हे श्रीभगवन्नग्ने सामधेनीप्रकरणस्याग्नेयत्वात्। 'ऊर्ध्वा शुक्रा शोचींष्यग्नेः'। ᵛऊर्ध्वाः ऊर्ध्वाणि ᵛशुक्रा शुक्राणि ᵛशोचींषि ᵛअग्नेः अर्चींषि तन्वन्ति। ᵛद्युमत्तमा द्युमत्तमानि भवन्ति। अतिदीप्तिमत्तमानि भवन्ति । किं च- ᵛसुप्रतीकस्य शोभनावयवस्य कल्याणावयवसंपन्नस्य ᵛसूनोः यजमानस्य सुतो य इत्थंभूतोऽग्निस्तं वयं स्तुम इति वाक्यशेषः ॥ १ ॥

---

4. S3 पाठस्तु - उद्वयं ... उत्तममिति for 'उद्वयम्' इति; S3 before मन्त्रः adds :अयं
12. S3 पाठस्तु - ऊर्ध्वा अस्य ... सूनोरिति for 'ऊर्ध्वा अस्य' इति।

अ - 'ऊर्ध्वा अस्य' । द्वादशाप्रीदेवत्याः उष्णिहो विषमपदा अग्निना दृष्टाः । अत्र अग्निः प्रजापतित्वेन स्तूयते । तेन प्राजापत्या अपि । तथा च ब्राह्मणम् - "ता आग्नेय्यः प्राजापत्याः। यदग्निरपश्यत् तेनाग्नेय्यो यत् प्रजापतिमाप्रीणंस्तेन प्राजापत्याः" (द्र शब्रा ६.२.१.२७ ) इति । vअस्य vअग्नेः vसमिधः vऊर्ध्वा । ऊर्ध्वं देवलोकगामिन्यः vभवन्ति । न केवलमत्रैव दह्यन्ति । तथा vशुक्रा शुक्लानि शुद्धानि vशोचींषि तेजांस्यपि vऊर्ध्वा ऊर्ध्वाणि भवन्ति । कीदृशानि? vद्युमत्तमा द्युमत्तमानि । द्यौः दीप्तिः प्रकाशो विद्यते येषां तानि द्युमन्ति । अत्यन्तं द्युमन्ति द्युमत्तमानि । कीदृशस्याग्नेः? vसुप्रतीकस्य शोभनमुखस्य वायोः । vसूनोः पुत्रस्य । "वायोरग्निः सहसस्पुत्र" इति श्रुतेः । "मुखं प्रतीकम्" इत्युक्तेः प्रतीकशब्दो मुखवचनः ॥

यद्वा- द्वयमप्यग्नेर्विशेषणम् । सुमुखस्य तथा यजमानपुत्रस्येति "स यदेनं जनयति तेनास्यैष सूनुः" (शब्रा ६.२.१.३२) इति ब्राह्मणाद्यजमानपुत्रोऽग्निः । यतो यज्ञे यजमानादग्निरुत्पद्यते । य ईदृशस्तं स्तुम इति शेषः ॥१॥

त॒नू॒नपा॒दसु॑रो वि॒श्ववे॑दा दे॒वो दे॒वेषु॑ दे॒वः।
प॒थो अ॑नक्तु॒ मध्वा॑ घृ॒तेन॑ ॥२॥

तनू॒नपा॒दिति॒ तनू॒ऽनपा॑त्। असु॑रः। वि॒श्ववे॑दा॒ इति॑ वि॒श्वऽवे॑दाः। दे॒वः। दे॒वेषु॑। दे॒वः। प॒थः। अ॒न॒क्तु। मध्वा॑। घृ॒तेन॑॥ ज्ञं॥ २॥

आ - 'तनूनपादसुरः'। vतनूनपात् अपत्यनाम। अत्रायमग्निर्वा तनूनपात्। अत्र तु वायोः पुत्रोऽग्निस्तनूनपात्। vअसुरः सः अग्निः। असुः प्राणो वायुः तत्र स्वे करणे रमत इति असुरोऽग्निः। vविश्ववेदाः सर्वज्ञः। vदेवः vदेवेषु मध्ये अग्निरेवातितरां देवनादिगुणयुक्तः vदेवः अतएव सोऽग्निर्देवः। vपथः यज्ञमार्गान् vमध्वा मधुना vघृतेन च vअनक्तु अञ्जयतु। एवंविध यज्ञमार्गानुरञ्जकोऽयमग्निरित्यग्निः स्तूयते॥ १२॥

अ - 'तनूनपादसुरः' । दीव्यतीति vदेवः अग्निः । vमध्वा मधुना मधुरेण vघृतेन vपथः यज्ञमार्गान् vअनक्तु । 'मध्वा' इत्यत्र नुमभावः । अनित्यमागमशासनइत्युक्तेः । पथोऽनक्त्वित्यत्र "प्रकृत्याऽन्तः पादमव्यपरे" (पा ६.१.११५) इति संध्यभावः । यज्ञे बहु घृतमस्तु । येन मार्गा अपि

5. M4 दशभिः for दीप्तिः
16. S3 पाठस्तु - तनूनपाद्... घृतेनेति for तनूनपादसुरः

घृताभ्यक्ताः स्युरिति भावः । कीदृशः Vदेवः ? Vतनूनपात् तनूनामपां नपात् पौत्रः । अद्भ्यो वृक्षा जायन्ते। तेभ्योऽग्निरित्यपां पौत्रः। यद्वा - तनूनां प्राणिशरीराणां नपात् रक्षकः । अपान्न भवतीति नपात् । द्वौ नञौ सातिशयं प्रकृतमर्थं गमयत इत्युक्तेः । अत्यन्तं रक्षक इत्यर्थः । पा रक्षण इत्यस्मात् क्विप् । "ह्रस्वस्य पिति कृति तुक्" (पा ६.१.७१), "अन्येभ्योऽपि दृश्यते"(पा ३.२.१७८) इति तुक् । Vअसुरः असवोऽस्य अस्माद्वा सन्तीत्यसुरः । प्राणवान् प्राणदाता वा । मत्वर्थे रप्रत्ययः । असुषु लोकप्राणेषु रमतीति वा असुरः । रमु क्रीडायामित्यस्मात् औणादिकोऽप्रत्ययः । प्राणविगमेऽग्नेरभावात् । Vविश्ववेदाः संपूर्णधनः Vदेवेषु अपि Vदेवः दीप्तिमान् श्रेष्ठः ॥२॥

~~~~~~~~~~~~

मध्वा॑ य॒ज्ञं न॑क्षसे प्री॒णा॒नो न॒रा॒शꣳसो॑ अग्ने।
सु॒कृद्दे॒वः स॑वि॒ता वि॒श्ववा॑रः॥३॥

~~~~~~~~~~~~

मध्वा॑। य॒ज्ञम्। न॒क्ष॒से। प्री॒णा॒नः। न॒रा॒शꣳसः॑। अ॒ग्ने।
सु॒कृदिति॑सु॒ऽकृत्। दे॒वः। स॒वि॒ता। वि॒श्ववा॑र॒ इति॑ वि॒श्वऽवा॑रः॥ ज्ञां॥ ३॥

~~~~~~~~~~~~

आ - 'मध्वा यज्ञं नक्षसे'। हे Vअग्ने, यस्त्वं Vमध्वा। मधुरया घृतसंयुक्तया मध्वा Vयज्ञं Vनक्षसे यज्ञं व्याप्नोषि। नक्षतिर्व्याप्तिकर्मा। Vप्रीणानः प्रीतिं कुर्वाणः। नरैः शंसत इतिVनराशंसः। Vसुकृत् शोभनकृत्। Vदेवः Vसविता प्रसविता Vविश्ववारः। विश्ववरणीयः विश्ववारः। स त्वं नक्षसे इति संबन्धः ॥१३॥

~~~~~~~~~~~~

अ - 'मध्वा यज्ञम्' । हे Vअग्ने, त्वं Vमध्वा स्वादुना । घृतेनेति शेषः । Vयज्ञं Vनक्षसे व्याप्नोषि। नक्षतिर्व्याप्तिकर्मा। कीदृशस्त्वम्? प्रीणीतेऽसौVप्रीणानः। देवादींस्तर्पयन्। Vनराशंसः। नरैः ऋत्विग्भिराशंस्यते स्तूयते सः। Vसुकृत् शोभनकारी। Vदेवः दीप्तिमान्। Vसविता। षू प्रसवे। विश्वस्योत्पादकः। विश्वेन व्रियते सेव्यते सः Vविश्ववारः, विश्वं वृणोत्यङ्गीकरोतीति वा। तथा कर्मण्यण् ॥३॥

~~~~~~~~~~~~

12. S3 पाठस्तु - मध्वा ... विश्ववार इति for 'मध्वा यज्ञं नक्षसे'।
13. V2 आप्नोति for °व्याप्ति°
17. P2 कीदृक् for कीदृशः
~~~~~~~~~~~~

अच्छायमेति शवसा घृतेनेळानो वह्निर्नमसा।
अग्निꣳ स्रुचो अध्वरेषु प्रयत्सु॥४॥

---

अच्छ। अयम्। एति। शवसा। घृतेन। ईळानः। वह्निः। नमसा।
अग्निम्। स्रुचः। अध्वरेषु। प्रयत्स्विति प्रयत्ऽसु॥ गिं ॥४॥

---

**आ** -'अच्छायम्' इति। 'अच्छायम्'। Vअच्छ निर्मल। हे निर्मलस्वरूप, Vअयम् अग्निर्भगवान् Vएति आगच्छति। कथंभूतो भगवानिति। 'शवसा घृतेन'। Vशवसा बलेन प्रज्ञाबलयुक्तेन Vघृतेन Vईळानः स्तुवन् Vवह्निः हविः वोढा वहनसमर्थः। Vनमसा अन्नेन हविर्लक्षणेन निमित्तेन Vअग्निम् उद्दिश्य Vस्रुचः गृहीत्वा Vअध्वरेषु यज्ञेषु Vप्रयत्सु प्रवर्तमानेषु सत्सु अग्निरेतीति संबन्धः ॥१४॥

---

**अ** - 'अच्छायम्'। Vअयम् अध्वर्युः Vअध्वरेषु यज्ञेषु Vप्रयत्सु प्रवर्तमानेषु सत्सु। यती प्रयत्ने। अस्मात् क्विप्। Vअच्छ Vएति। अभ्येति। "अच्छाभेराप्तुमिति शाकपूणिः" (नि ५.२८) इति यास्कोक्तेः। कीदृशः? Vशवसा ज्ञानबलेन Vईळानः ईडानः। Vअग्निं स्तुवानः। शव इति बलनाम। ईट्टे इति ईडानः। ळत्वं छान्दसम्। ईड स्तुतौ। अस्माच्छानच्। Vवह्निः। वहति यज्ञभारमिति वह्निः। यज्ञनिर्वाहकः। किं कृत्वा? Vघृतेन Vनमसा। नम इत्यन्ननाम। घृतरूपेण अन्नेनोपलक्षिताः Vस्रुचः जुह्वाद्याः हस्ताभ्यां गृहीत्वेति शेषः। अत्र स्रुक्शब्दो द्वितीयान्तत्वादाद्युदात्तः "सावेकाचस्तृतीयादिर्विभक्तिः" (पा ६.१.१६८) इति पाणिन्युक्तेः ॥४॥

---

स यक्षदस्य महिमानमग्नेः स ईं मन्द्रा सुप्रयसः।
वसुश्चेतिष्ठो वसुधातमश्च ॥५॥

---

सः। यक्षत्। अस्य। महिमानम्। अग्नेः। सः। ईम्। मन्द्रा। सुप्रयस इति सुऽप्रयसः।
वसुः। चेतिष्ठः। वसुधातम इति वसुऽधातमः। च॥ छ्रीं ॥५॥

---

**आ** - 'स यक्षदस्य' [इति]। यः अत्रान्वयः क्रमेण व्याख्यातः। Vवसुः वासयिता Vचेतिष्ठः अतिशयेन चेतयिता। यः Vच Vवसुधातमः वसूनां धनानां दातृतमः पोषकाणां मध्ये अतीव पोषकः धारकश्च। यः स वसुधातमो योऽग्निः तस्याग्निः Vमहिमानं माहात्म्यं तत् यः प्रकृतो यजमानः Vसः Vयक्षत्। कथं भूतस्याग्नेरिति। Vसः Vई Vमन्द्रा Vसुप्रयसः। प्रय इत्यन्ननाम। सु शोभनं यत् हविर्लक्षणमन्नं यस्य स सुप्रयास्तस्य अग्नेरन्नरूपा मन्द्रा। व्यत्ययः। मदनीयान्यन्नानि यजमानो यक्षदिति अग्निः स्तूयते ॥१५॥

---

5. S3 पाठस्तु - **अच्छायम् ... प्रयत्स्विति** for **'अच्छायम्' इति।**
20. S3 पाठस्तु - **स यक्षदस्य ... वसुधातमश्चेति** for **'स यक्षदस्य'**

अ - 'स यक्षत्' । vसः अध्वर्युः vअस्य अग्नेः vमहिमानं vयक्षत् यजतु । "सिब्बहुलं लेटि" (पा ३.१.३४), "लेटोऽडाटौ" (पा ३.४.९४), "इतश्च लोपः परस्मैपदेषु" (पा ३.४.९७) इति सूत्रैर्यक्षदिति सिध्यति । vसः vईम् स एव । vमन्द्रा मन्द्राणि मदजनकानि हवींषि च यक्षत् ददातु । यज दाने । कीदृश्यस्याग्नेः । vसुप्रयसः । प्रय इत्यन्ननाम । शोभनानि प्रयांसि यस्य स सुप्रयास्तस्य । अथ कस्माद्देवतान्तरं परित्यज्य अग्नेर्महिमानं यजत्वित्यत आह - यतोऽसौ महिमा vवसुः वासयिता vचेतिष्ठः अत्यन्तं चेतयिता । vवसुधातमः vच वसूनां धनानां दातृतमः । क्विबन्तात् तमप् ॥५॥

---

द्वारो॑ दे॒वीरन्व॑स्य॒ विश्वे॑ व्र॒ता द॑दन्ते अ॒ग्नेः।
उ॒रु॒व्यच॑सो॒ धाम्ना॒ पत्य॑मानाः ॥६॥

---

द्वारः॑। दे॒वीः। अनु॑। अ॒स्य॒। विश्वे॑। व्र॒ता। द॒द॒न्ते॒। अ॒ग्नेः।
उ॒रु॒व्यच॑स॒ इत्यु॑रु॒ऽव्यच॑सः। धाम्ना॑। पत्य॑मानाः॥ ङाम् ॥६॥

---

आ - 'द्वारो देवीः' इति। vअस्य vअग्नेः संबन्धीनि vविश्वे विश्वानि vव्रता व्रतानि कर्माणि vदेवीः देवतात्मिकाः vद्वारः vददन्ते। दद दाने। कथंभूता द्वारः। vउरुव्यचसः बहुव्यञ्जनाः बहुगन्तृमत्यः। vधाम्ना यज्ञविशिष्टस्थानेन निमित्तेन ऋत्विक्संबन्धिना vपत्यमानाः गम्यमानाः देवीः या इत्थंभूता यज्ञगृहद्वारः ता अग्निसंबन्धिस्तुतिद्वारा यज्ञः स्तूयते ॥१६॥

---

अ - 'द्वारो देवीः' । vद्वारः देव्यःvअस्य vअग्नेः । vव्रता व्रतानि कर्माणि vददन्ते धारयन्ति । दद दाने धृतौ चेति धातुः । vअनु पश्चात् । vविश्वे सर्वे देवाः, अग्निव्रतानि ददन्ते । कीदृश्यो द्वारः? vउरुव्यचसः उरु विशालं व्यचोऽवकाशो यासां ताः, विशालमध्याः । तथा - vधाम्ना तेजसा vपत्यमानाः परिपक्वाः । तेजोविशेषयुक्ता इत्यर्थः । यद्वा धाम्ना स्थानेन पच्यमानाः पक्वाः । ऋत्विजां यथेच्छं स्थानं ददाना इत्यर्थः। "धाम स्थाने च तेजसि" इति अभिधानम् । पत्यमाना इति शाखान्तरपाठः । तत्र पत्यन्ते ईशते इति पत्यमानाः । स्थानैरैश्वर्यं कुर्वाणा इत्यर्थः । ताः स्तुम इति शेषः ॥६॥

---

11. S3 पाठस्तु - द्वारो... पत्यमाना इति for 'द्वारो देवीः' इति।
16. M4 विश्वे for सर्वे
18. Anantabhatta reads पच्यमानाः and interpretes accordingly.

**ते अस्य योषणे दिव्ये न योनां उषासानक्तां।**
**इमं यज्ञमवतामध्वरं नः ॥७॥**

~~~~~~~~~~~~~~~~~~~~~

ते इति ते। अस्य। योषणे इति योषणे। दिव्ये इति दिव्ये। न। योनौं। उषासानक्तां। उषसानक्तेत्युषसानक्तां। इमम्। यज्ञम्। अवताम्। अध्वरम्। नः॥ ति ॥७॥

~~~~~~~~~~~~~~~~~~~~~

आ - 'ते अस्य योषणे दिव्ये न'। Vअस्य अग्नेः Vउषासानक्ता। उषः प्रत्युषः। नक्तं रात्रिः। Vते उभे Vदिव्ये दिवि भवे। Vन इव स्थिते। अस्य अग्नेः Vयोषणे भार्ये। Vयोनौ। योनिशब्दोऽत्र स्थानवचनः। योनौ स्थितस्याग्नेः योषणे। 'इमं यज्ञम्'। Vनः अस्माकम् Vइमं Vयज्ञम् Vअवतां रक्षताम्। किं च? Vअध्वरं। धृ कौटिल्ये। अकुटिलम् इमं यज्ञं संपादयन्तमिति शेषः। अथ यज्ञाध्वरयोः सामान्यविशेषभावो वा ॥१७॥

~~~~~~~~~~~~~~~~~~~~~

अ - 'ते अस्य'। उषाश्च नक्ता च Vउषासानक्ता। उषसानक्ते अहोरात्रदेव्यौ। उषस् शब्दस्य द्वन्द्वसमासे उषसादेशः। Vनः अस्माकम् Vइमं Vयज्ञम् Vअवतां रक्षताम्। कीदृश्यौ ? Vते Vअस्य अग्नेः Vयोषणे। भार्यास्थानीये Vदिव्ये दिवि भवे। Vन शब्द इवार्थः। दिव्ये भार्ये इव। कीदृशस्याग्नेः? Vयोनौ गार्हपत्यस्थाने स्थितस्येति शेषः। कीदृशं यज्ञम्? Vअध्वरम्। सोमयागादिरूपम्। यद्वा- धृ कौटिल्ये। न ध्वरतीति अध्वरः। तम् अकुटिलं शास्त्रोक्तमित्यर्थः ॥७॥

~~~~~~~~~~~~~~~~~~~~~

**दैव्यां होतारा ऊर्ध्वमध्वरं नोऽग्नेर्जिह्वामभि गृणीतम्।**
**कृणुतं नः स्विंष्टिम् ॥८॥**

~~~~~~~~~~~~~~~~~~~~~

दैव्यां। होतारा। ऊर्ध्वम्। अध्वरम्। नः। अग्नेः। जिह्वाम्। अभि। गृणीतम्। कृणुतम्। नः। स्विंष्टिमिति सुऽइंष्टिम्॥ गिं ॥८॥

~~~~~~~~~~~~~~~~~~~~~

6. S3 पाठस्तु - ते अस्य ... अध्वरं नः इति for 'ते अस्य योषणे दिव्ये न'; V2 after° नक्ता adds : उषसा । उषसादेशे द्वन्द्वे
9. S3 om. धृ कौटिल्ये । अकुटिलम्
12. M4. P2 इदं for इमं

आ - 'दैव्या होतारा'। vदैव्या vहोतारा देवसंबन्धिनौ होतारौ vऊर्ध्वम् उत्कृष्टं vनः अस्माकम् vअध्वरम् ऊर्ध्वं कृणुतम्। किं च-vअग्नेः vजिह्वाम् vअभि आभिमुख्येन vगृणीतम् स्तुवीयाताम्। vकृणुतं vनः अस्माकं vस्विष्टिं शोभनेष्टिमतीं यज्ञक्रियां कृणुतं कुरुतम् ॥८॥

---

अ - 'दैव्या होतारा'। अयं चाग्निरसौ च मध्यमो वायुरित्येतौ। हे दैव्यौ, होतारौ अग्निवायू युवां vनः अस्माकं vस्विष्टिं शोभनं यागं vकृणुतम् कुरुतम्। सुपूर्वाद्यजतेर्धात्वर्थे। स्त्रियां क्तिन्। "व्रश्चभ्रस्ज°" (पा ८.२.३६) इति षत्वम्। किं च। vनः अस्माकम् vअध्वरं यज्ञम् vऊर्ध्वं vकृणुतम्। देवलोकगामिनं कुरुतम्। अपि च। vअग्नेः 'जिह्वां vकाली कराली'इत्यादिसप्तसंख्यादिगुणयुक्तत्वेन vअभिगृणीतम् वर्णयतम्। समीची वह्निज्वालेति स्तुतिमित्यर्थः ॥८॥

---

**तिस्रो देवीर्बर्हिरेदꣳ सदन्त्विळा सरस्वती भारती।**
**मही गृणाना ॥९॥**

---

तिस्रः। देवीः। बर्हिः। आ। इदम्। सदन्तु। इळा। सरस्वती। भारती। मही। गृणाना॥ सां ॥९॥

---

आ - 'तिस्रो देवीः' इति। vतिस्रः देवताः। कास्ता इति। vइळा पृथिवीस्थाना। vसरस्वती मध्यमस्थाना। द्युस्थाना vभारती। vमही महती vगृणाना स्तुवन्ती। (मही) गृणानेत्यतयोः प्रत्येकं संबन्धः। vमही गृणाना स्तुतीः कुर्वाणाः अग्निं स्तुवन्ती vइदं प्राकृतं vबर्हिः। उपलक्षितं प्राज्ञं यज्ञस्थानम् vआ vसदन्तु आसीदन्तु प्राप्नुवन्ति (?न्तु) ॥९॥

---

अ - 'तिस्रो देवीः'। विभक्तिव्यत्ययः। vतिस्रः देव्यः। vइदं vबर्हिः। जातावेकवचनम्। एषु बर्हिषु vआ vसदन्तु आसीदन्तु। छान्दसः। सीदादेशाभावः। "व्यवहिताश्च" (पा १.४.८२) इति सूत्रेण आङा सह क्रियापदव्यवधानं छान्दसम्। तिस्रः। का इत्यत आह। vइळा इडा पृथिवीस्थाना। सरस्वती अन्तरिक्षस्थाना vभारती द्युस्थाना। vमही महती गृणाना स्तोत्रं कुर्वाणेति विशेषणद्वयं तिसृणामपि ॥९॥

---

1. S3 पाठस्तु - दैव्या ... स्विष्टिमिति for 'दैव्या होतारा'
3. S3 after 'स्विष्टि°' adds: शोभनेष्टि°
13. S3 पाठस्तु -- तिस्रो... गृणानेति° for 'तिस्रो देवीः' इति ।
16. S3 om. आ सदन्तु

तन्नस्तुरीपमद्भुतं पुरुक्षु त्वष्टां सुवीरंम्।
रायस्पोषं वि ष्यंतु नाभिंमस्मे ॥१०॥

तत्। नः। तुरीपंम्। अद्भुतम्। पुरुक्षु। त्वष्टां। सुवीरमितिंसुऽवीरंम्।
रायः। पोषंम्। वि। स्यतु। नाभिंम्। अस्मे इत्यस्मे॥ छी ॥१०॥

आ - 'तन्नस्तुरीपम्' इति। vतत् vनः। तत् vरायः vपोषम् vनाभिं प्रति vविष्यतु। विशेषेण स्यतु इति संबन्धः। स्यतिरुपसृष्टौ विमोचने च। रायस्पोषं विशिनष्टि। vतुरीपम् तूर्णमश्नुते। vअद्भुतम् आश्चर्यरूपं vपुरुक्षु पुरुषु बहुषु। क्षि निवासगत्योः। पुरुषु क्षीयते इति। पुरुक्षु बहुषु निवासवत्सु vसुवीरं सुवीर्यम् अग्नेः सामर्थ्यं रूपम्। रायस्पोषम् अति पुष्टम्। राये vअस्मे अस्मभ्यम् अस्मदर्थे तुरीपं तूर्णम् अतिशीघ्रं vत्वष्टा दारिद्र्यतनूकरणे। कर्ता श्रीभगवानग्निः नाभिं मध्यस्थानविशेषे स्यतु पूर्वस्थानं विमोचयतु। अस्मत्समीपस्थानमुपसृजतु स्पृशतु। अग्निपूजार्थं समग्रं धनम् अस्मत्समीप एव तिष्ठत्वित्यभिप्रायः। यद्वा- जलसंघातः प्रार्थ्यते। त्वष्टा नः अस्मदर्थं तं जलोघं तुरीपं तूर्णं व्यापकम् अद्भुतम् महत्त्वात्। 'पुरुक्षु' बहूनां निवासभूतं बहुगर्जितशब्दं वा। रुक्षु शब्दे। सुवीर्यं रायस्पोषहेतुभूतं 'नाभिं' राष्ट्रमध्यं प्रति अस्मासु मुञ्चतु ॥२०॥

अ - 'तन्नः' । vत्वष्टा देवः vतत् प्रसिद्धं vरायः धनस्य vपोषं पुष्टिम् vअस्मे अस्माकं vनाभिं प्रति vविष्यतु विमुञ्चन्तु । नाभौ मुक्तमुत्सङ्गे पततीति भावः । "षोऽन्तकर्मणि"; "ओतः श्यनि" (पा ७.३.७१) इत्योकारलोपः । "स्यतिरुपसृष्टो विमोचने" (नि १.१७) इति यास्कोक्तेर्मोचनार्थः । कीदृशं रायस्पोषम्, vनः अस्माकं vतुरीपम् । तुरा वेगेन आप्नोतीति तुरीपस्तम्। द्वीपमितिवद्रूपसिद्धिः । शीघ्रं प्राप्तम् ।vअद्भुतं महत् । vपुरुक्षु पुरुषु बहुषु क्षियति निवसतीति पुरुक्षु । क्षियतेरौणादिको डुप्रत्ययः । शोभना वीराः पुत्रा यस्मिंस्तत् vसुवीरम् ॥१०॥

5. S3 पाठस्तु-तन्नस्तुरीपम्... अस्मै इति for 'तन्नस्तुरीपम्' इति ।
7. S3 om. तूर्णमश्नुते

**वन॑स्प॒तेऽव॑ सृज॒ ररा॑ण॒स्त्मना॑ दे॒वेषु॑।**
**अ॒ग्निर्ह॒व्यꣳ श॑मि॒ता सू॑दयाति ॥११॥**

~~~~~~~~~~~~~~~~~~~~

वन॑स्पते। अव॑। सृ॒ज॒। ररा॑णः। त्मना॑। दे॒वेषु॑।
अ॒ग्निः। ह॒व्यम्। श॒मि॒ता। सू॒द॒या॒ति॥ षं ॥११॥

~~~~~~~~~~~~~~~~~~~~

**आ -** 'वनस्पते'। हे $^v$वनस्पते, $^v$रराणः हवींषि रममाणः। यद्वा- रा दाने। रराणः ददानः। $^v$त्मना आत्मना रराणः। $^v$हव्यं हविः साधनयोग्यं वस्तुजातम् $^v$अव $^v$सृज। स्रुङ्मुखतः। अवाचीनं क्षिप्रं प्रेरय। छान्दसः। $^v$देवेषु देवान् प्रतीत्यर्थः। $^v$अग्निः हव्यं $^v$शमिता शमित्रकर्मकर्ता अग्निः हव्यं $^v$सूदयाति। सूद क्षरणे। संस्कारं करोति च। अतो हे वनस्पते, अवसृजेति संबन्धः ॥२१॥

~~~~~~~~~~~~~~~~~~~~

**अ - 'वनस्पते'। यतः $^v$शमिता शामित्रकर्मकर्ता $^v$अग्निः $^v$हव्यं मांसादिकं सूदयाति सूदयति संस्करोति। "लेटोऽडाटौ" (पा ३.४.९४) इत्याडागमः। आहातो $^v$हे वनस्पते, वनस्पतिजन्यस्रुगादिकः। 'अद्रिरसि' इतिवत्। तत्संस्कृतं हव्यं त्वम् $^v$अवसृज। मुखतोऽवाचीनं क्षिप। कीदृशस्त्वम्? $^v$त्मना आत्मनैव $^v$देवेषु $^v$रराणः हविर्ददानः। रा दाने। अस्मात् कानच्। "मन्त्रेष्वाङ्यादेरात्मनः" (पा ६.४.१४१) इत्याकारलोपः ॥११॥**

~~~~~~~~~~~~~~~~~~~~

**अग्ने॒ स्वाहा॑ कृणुहि जातवे॑द॒ इन्द्रा॑य ह॒व्यम्।**
**विश्वे॑ दे॒वा ह॒विरि॒दं जु॑षन्ताम् ॥१२॥ (२)॥**

~~~~~~~~~~~~~~~~~~~~

अग्ने॑। स्वाहा॑। कृ॒णु॒हि॒। जा॒त॒वे॒द इति॑ जातऽवेदः। इन्द्रा॑य। ह॒व्यम्।
विश्वे॑। दे॒वाः। ह॒विः। इ॒दम्। जु॒ष॒न्ता॒म् ॥ गां॥ १२॥ (२)॥

~~~~~~~~~~~~~~~~~~~~

**आ -** 'अग्ने स्वाहा' इति। हे श्रीभगवन् $^v$अग्ने, हे $^v$जातवेदः $^v$इन्द्राय श्रीभगवते $^v$हव्यं $^v$कृणुहि कुरुष्व। $^v$विश्वे $^v$देवाः इन्द्र त्वयोपकृतं $^v$हविः $^v$इदं विश्वे देवाः च $^v$जुषन्ताम् सेवन्ताम्। $^v$स्वाहा इति होमार्थः॥ १२॥ (२)॥

~~~~~~~~~~~~~~~~~~~~

**अ - 'अग्ने स्वाहा'। हे $^v$जातवेदः, $^v$अग्ने, $^v$हव्यं $^v$इन्द्राय $^v$स्वाहा $^v$कृणुहि स्वाहाकारेण प्रयच्छ। किं च $^v$विश्वे $^v$देवाः सर्वे देवाः $^v$इदं $^v$हविः $^v$जुषन्ताम् सेवन्ताम् ॥१२॥ (२)॥**

**इति एकोनत्रिंशे द्वितीयोऽनुवाकः॥**

~~~~~~~~~~~~~~~~~~~~

5. S3 om. **वनस्पते ... सूदयातीति** for **'वनस्पते'।**
19. S3 **अग्ने ... जुषन्तामिति** for **'अग्ने स्वाहा' इति।**

(तृतीयोऽनुवाकः।)

**पीवों अन्ना रयिवृधः सुमेधाः श्वेतः सिंषक्ति नियुतांमभिश्रीः।**
**ते वायवे समनसो वि तंस्थुर्विश्वेन्नरः स्वपत्यानिं चक्रुः ॥१॥**

~~~~~~~~~~~~~~~~~~~~~~

पीवों अन्नानितिपीवंःऽ अन्नान्। रयिवृध इतिं रयिऽवृधः। सुमेधा इतिंसुऽमेधाः। श्वेतः।
सिषक्ति। सिसक्तीतिंसिसक्ति। नियुतामितिंनिऽयुतांम्। अभिश्रीरित्यंभिऽश्रीः।
ते। वायवें। समंनसइतिसऽमंनसः। वि। तस्थुः।
विश्वां। इत्। नरंः। स्वपत्यानीतिंसुऽअपत्यानिं। चक्रुः। ढर्ये ॥१॥

~~~~~~~~~~~~~~~~~~~~~~

**आ** - 'पीवो अन्ना रयिवृधः' इत्याः षट् याज्यानुवाक्याः वायव्यः। 'पीवो अन्ना' 'राये नु' इति च द्वे वायुदेवत्ये अनुष्टुभौ। ऋषिर्वसिष्ठः। Vपीवोअन्नान्। पीवः पुष्टम् अन्नं येषां ते पीवो अन्नाः, तान्। नकारलोपः "प्रकृत्याऽन्तःपादमव्यपरे" (पा ६.१.११५) इति। पीवो अन्नानिति अत्र प्रकृतिभावः। पीत्वा अन्नान्। ये रयिं धनं वर्धयन्ति ते Vरयिवृधः तान्, Vसुमेधाः शोभनप्रज्ञो वायुः। Vश्वेतः, शुक्लो हि वायुः । Vसिषक्ति। षच समवाये। समवायीकरोति। सेवते। Vनियुताम्। यु मिश्रणे। मिश्रयताम्। मिश्रीभावमापन्नानामश्वानां मध्ये अभितः शोभते श्रयत इतिVअभिश्रीः। वायुः सिषक्तीति संबन्धः। 'ते वायवे समनसो वि तस्थुः'। ये Vसमनसः समनस्काः वशीकृतमनसः Vनरः मनुष्याः ऋत्विग्यजमानाः Vविश्वा Vइत् । अपि विश्वानि Vस्वपत्यानि। अत्र लक्षणा। शोभनानाम् अपत्यानां यानि कर्माणि मातापित्रोः परिचरणादीनि तान्यपि Vवायवे Vचक्रुः कुर्वन्ति। ते वायुभावेन वायोरग्नेः एव Vवितस्थुः। एवंविधो वायुः हविर्लक्षणान् रसान् पीत्वा सिषक्ति। धनानि विद्धिं कर्तुं समवायीकरोत्वित्यर्थः ॥२३॥

~~~~~~~~~~~~~~~~~~~~~~

**अ - अथैनं वायवे नियुत्वते शुक्लं तूपरमालभते इति विहितस्य वायव्यपशोः पीव इत्याद्याः षड् याज्यानुवाक्याः। 'पीवोअन्ना रयिवृधः'। द्वे वायुदेवत्ये। त्रिष्टुभौ वासिष्ठ्यौ। "शुक्लो हि वायुः" (शब्रा ६.२.२.७) इति श्रुतेः। Vश्वेतः वायुः यान् नियुतः अश्वान् Vसिषक्ति सेवते। सचतिः सेवनार्थः। Vते नियुतः Vसमनसः समानमनस्काः सन्तः Vवायवे वाय्वर्थं Vवितस्थुः विशेषेण तिष्ठन्ति। कीदृशान् नियुतः? Vपीवो अन्नान् पीवः पुष्टमन्नं येषां तान्। "प्रकृत्याऽन्तःपादमव्यपरे" (पा ६.१.११५) इति**

~~~~~~~~~~~~~~~~~~~~~~

8. S3 पाठस्तु-पीवो अन्ना ... चक्रुरिति for **पीवो अन्ना रयि वृधः।**
13. S3 सर्वतः for **सेवतेः**; V2 **शोभने** for **शोभते।**

संध्यभावः। "रयिवृधे च" (वाप्रा ३.१३७) इति प्रातिशाख्येन नकारलोपः संहितायाम् । vरयिवृधः । धनं वर्धयन्ति तान् । कीदृशः ? vश्वेतः । vसुमेधाः शोभनवृद्धिः । vनियुताम् vअभिश्रीः । नितरां रथादना यूयन्ते युज्यन्त इति नियुतः । तेषाम् अश्वानाम् अभिश्रीयत इत्यभिश्रीः । अन्याश्वानामाश्रणीयः । यु मिश्रणयोरित्यस्मात् क्विप् । "ह्रस्वस्य पिति कृति°" (पा ६.१.७१) इति तुक् । एवमश्वे वायुना सेविते सति । vनरः मनुष्याः ऋत्विजः । vविश्वा vइत् । सर्वाण्येव स्वपत्यानि शोभनापत्यप्रापकाणि vचक्रुः । कर्माणीति शेषः ॥१॥

राये नु यं जज्ञतू रोदसीमे राये देवी धिषणा धाति देवम्।
अध वायुं नियुतः सश्चत स्वा उत श्वेतं वसुधितिं निरेके ॥२॥

राये। नु। यम्। जज्ञतुः। रोदसी इति रोदसी। इमे इतीमे।
राये। देवी। धिषणा। धाति। देवम्।
अध। वायुम्। नियुत इति निऽयुतः। सश्चत। स्वाः। उत। श्वेतम्।
वसुधितिमिति वसुऽधितिम्। निरेके ॥छ ॥२॥

आ - 'राये नु यं जज्ञतू रोदसीमे'। vइमे vरोदसी द्यावापृथिव्यौ vयं वायुं vनु क्षिप्रं vजज्ञतुः जनयतुः। कस्मै vराये धनाय। उदकलक्षणाय धनाय। 'राये देवी धिषणा धाति देवम्'। vधिषणा धियं बुद्धिं कर्म वा सनोतीति धिषणा वाक्। vदेवी हिरण्यगर्भबुद्ध्यभिमानिनी देवता धिषणा तन्मध्यस्थाना वा धिषणा देवी देवनादिगुणयुक्ता यं vदेवं वायुं vधाति। वर्णलोपश्छान्दसः। धाति दधाति धारयति। 'अध वायुं नियुतः सश्चत स्वाः'। vअध अथ अनन्तरं vवायुं vनियुतः अश्वाः vस्वाः स्वकीयाः अश्वाः vउत अपि vश्वेतं वायुं vवसुधितिं वसुधनम् उदकलक्षणं धनं वा धारयितारम्। उदकलक्षणधनस्य धारकम्। vनिरेके जनैराश्रितप्रदेशे अवस्थितमपि वायुं vसश्चत। सश्चतिः सेवाकर्मा। सश्चत सेवां कुरुत ॥२४॥

अ - 'राये नु'। vइमे vरोदसी द्यावापृथिव्यौ vयं वायुं vजज्ञतुः उत्पादयामासतुः। vनु क्षिप्रम्। किमर्थम्? vराये धनाय मेघोदकरूपाय । किं च । धियं सनोतीति vधिषणा वाक् । vदेवी । vदेवं दीप्यमानत्वाद्वायुं vधाति दधाति । शपः श्लुः । द्वित्वाभावश्छान्दसः । vराये धनाय । रोदस्योः सद्भावेऽपि वायुं विना जगद्धारणाशक्तेर्वायुरुत्पादितः । उत्पन्नं च तं वेदरूपं वाग्देवी दधातीति भावः । "वायोरियं

13. S3 राये नु... निरेके इति for 'राये... रोदसीमे'।
14. V2 after कस्मै adds: इति; V2 जग्मतुः for जज्ञतुः;
18. V2 तु for उत V2 after वा adds वस्तुधितिं
22. S3 om. धियं ... वाक्। देवी

वायव्यपशोः याज्यानुवाक्याः]

विभूतिर्या त्रयी विद्या" इति श्रुतेः। 'रोदसीमे' इत्यत्र संधिरार्षः। Vअध अथ। धकारश्छान्दसः। उत्पत्त्यनन्तरमेव उत निश्चितं Vस्वाः निजाः नियुतः श्वाः Vवायुं Vसश्चत आसेवन्त। षश्च सेवने अडभाव आर्षः। पुरुषव्यत्ययः। कुत्र? Vनिरेके। निर्गतः रेकः रेचनं शून्यत्वं यस्मात् तादृशे। बहुजनकीर्णे स्थाने इत्यर्थः। कीदृशं वायुम् Vश्वेतं वर्णतः। Vवसुधितिम्। वसुनो धितिर्धारणं यत्र तम्। मेघादिद्वारा धनस्य धारयितारम् ॥२॥

वायुरग्रेगा यज्ञप्रीः साकं गन्मनसा यज्ञम्।
शिवो नियुद्भिः शिवाभिः ॥३॥

वायुः। अग्रेगा इत्यग्रेऽगाः। यज्ञप्रीरिति यज्ञऽप्रीः। साकम्। गन्। मनसा। यज्ञम्। शिवः। नियुद्भिरिति नियुत्ऽभिः। शिवाभिः॥ ङ्यं ॥३॥

आ - 'वायुरग्रेगाः'। वायुदेवत्या गायत्री। वातीति Vवायुः। अग्रे गच्छतीति Vअग्रेगाः। देवानामग्रणीः। Vयज्ञ प्रीः यज्ञप्रियः। Vनियुद्भिः अश्वविशेषैः। Vशिवाभिः शान्ताभिर्देवताभिश्च Vसाकं सह Vमनसा मनोदेशे Vगन् आगच्छतु ॥२५॥

अ - 'वायुरग्रेगाः'। वायुदेवत्या गायत्री। Vवायुः Vशिवाभिः कल्याणरूपाभिः Vनियुद्भिः अश्वाभिः कृत्वा Vमनसा Vसाकं चित्तेन सह सादरं Vयज्ञं Vगन् गच्छतु आगच्छतु। कीदृशः? अग्रे गच्छतीति Vअग्रेगाः। "विड्वनोरनुनासिकः स्यात्" (पा ६.४.४१) इत्याकारः। यज्ञेन प्रीयत इति Vयज्ञप्रीः। प्रिञ् तर्पणे। Vशिवः कल्याणरूपः ॥३॥

प्र याभिर्यासि दाश्वांसमच्छा नियुद्भिर्वाय इष्टये दुरोणे।
नि नो रयिं सुभोजसं युवस्व नि वीरं गव्यमश्व्यं च राधः ॥४॥

प्र। याभिः। यासि। दाश्वांसम्। अच्छ। नियुद्भिरिति नियुत्ऽभिः।
वायो इति वायो। इष्टये। दुरोणे।
नि। नः। रयिम्। सुभोजसमितिसुऽभोजसम्। युवस्व।
नि। वीरम्। गव्यम्। अश्व्यम्। च। राधः॥ य्वा॥४॥

2. M4 om. वायुं
10. S3 पाठस्तु-वायुरग्रेगा... शिवाभिरिति for 'वायुरग्रेगाः'
14. M4 गच्छन् for गन्

**आ** - 'प्र याभिः' इति। वायुदेवत्या त्रिष्टुप्। "अच्छाभेराप्तुमिति शाकपूणिः (नि ५.२८)। हे Vवायो, Vदाश्वाꣳसं दानशीलम्। Vअच्छ आप्तुं Vयाभिः Vनियुद्भिः अश्वैः Vप्रयासि। Vइष्टये यागाय यागं कर्तुं Vदुरोणे यागगृहे स्थितं सुभोजसम्। सुखेन भुज्यतामिति यः सह वदति सः सुभोजास्तं Vसुभोजसं यजमानम्। ताभिः नियुद्भिः सहितस्त्वं प्रयासि। 'नि नो रयिꣳ सुभोजसं युवस्व'। यु मिश्रणे। निपूर्वस्य युवतेर्दानार्थत्वम्। नि युवस्व Vरयिं Vनः अस्मभ्यं धनं देहि। किं च। Vनि वीरं पुत्रं च Vनियुवस्व देहि। Vगव्यं गोभ्यो हितम्। Vअश्व्यम् अश्वेभ्यो हितम्। अश्व्यं च Vराधः सादय ॥ २६ ॥

**अ** - 'प्र याभिः। वायुदेवत्या त्रिष्टुप् वसिष्ठदृष्टा। हे Vवायो, त्वं Vयाभिः Vनियुद्भिः अश्वाभिः Vइष्टये यागाय Vदुरोणे। दुरोणमिति गृहनाम। यज्ञगृहे वर्तमानं Vदाश्वासं हविर्दत्तवन्तं यजमानम् Vअच्छ अभिमुखं Vप्र यासि गच्छसि। दीर्घः संहितायामार्षः। "निपातस्य च" (पा ६.३.१३६) इति सूत्रेण। "व्यवहिताश्च" (पा १.४.८२) इति प्रेण यासीत्यस्य व्यवधानेऽपि संबन्धः। ताभिः नियुद्भिः अस्मच्छालामागत्य Vनः अस्मभ्यम्। सुष्ठु भुज्यत इति सुभोजास्तं Vसुभोजसं Vरयिं Vनियुवस्व देहि। नियौतिर्दानार्थः। व्यत्ययेन शप्प्रत्ययः। सुभोजसमित्यत्र कर्मणि भुजेरसुन्प्रत्ययः। किं च। Vवीरं पुत्रम्। Vगव्यं गोसंबन्धि। Vअश्व्यम् अश्वसंबन्धि। गोऽश्वरूपं Vराधः धनं च नि युवस्व। राध इति धननाम ॥४॥

**वायो ये तेँ सहस्रिणो रथाँसस्तेभिरा गँहि।**
**नियुत्वान्त्सोमँपीतये ॥५॥**

वायो इति वायोँ। ये। ते। सहस्रिणँः। रथाँसः। तेभिँः। आ। गहि।
नियुत्वाँन्। सोमँपीतय इति सोमँऽपीतये॥ ज्यं ॥५॥

**आ** - 'वायो ये' इति। वायुदेवत्या गायत्री। हे Vवायो Vये Vते तव। ये Vसहस्रिणः सहस्रसंख्याताः Vरथासः रथाः अतिरथाः सन्ति Vतेभिः तैः रथैः करणभूतैः युक्तः Vनियुत्वान्। नियुत्वान् इतीश्वरनाम। ईश्वरो वायुस्त्वम् Vआगहि आगच्छ। Vसोमपीतये। यज्ञे सोमपानार्थम् ॥ २७ ॥

1. S3 पाठस्तु - प्र याभिः ... राध इति for 'प्र याभिः' इति।
2. V2 दाश्वानाहं दानशीलं for दाश्वांसं दानशीलम्
9. S3 दुरणः for दुरोणम्
19. S3 पाठस्तु - वायो ... 'पीतय इति for 'वायो ये' इति।

वायव्यपशोः याज्यानुवाक्याः]

अ - 'वायो ये'। वायुदेवत्या गायत्री । हे Vवायो Vते तव Vसहस्त्रिणः सहस्त्रसंख्याकाः Vये Vरथासः रथाः सन्ति । Vतेभिः तैः रथैः Vआगहि आगच्छतु । अनुनासिकलोपादिश्छान्दसः । किमर्थम् Vसोमपीतये सोमपानाय । कीदृशस्त्वम् । Vनियुत्वान् । सहस्त्रसंख्यातः अधिका Vनियुतः अश्वा यस्य सः तथा ॥ ५ ॥

~~~~~~~~~~~~~~~~~~~~~~~~~

**एकंया च दशभिंश्च स्वभूते द्वाभ्यांमिष्टयें विꣳशती चं।**
**तिसृभिंश्च वहंसे त्रिꣳशतां च नियुद्भिर्वाय इह ता वि मुंञ्च ॥६॥**

~~~~~~~~~~~~~~~~~~~~~~~~~

एकंया। च। दशभिरितिंदशऽभिंः। च। स्वभूत इतिं स्वऽभूते
द्वाभ्यांम्। इष्टयें। विꣳशती। च।
तिसृभिरितिं तिसृऽभिंः। च। वहंसे। त्रिꣳशतां। च। नियुद्भिरितिंनियुत्ऽभिंः।
वायो इतिं वायो। इह। ता। वि। मुञ्च ॥ बः ॥ ६ ॥

~~~~~~~~~~~~~~~~~~~~~~~~~

आ - 'एकया च' इति। वायुदेवत्या त्रिष्टुप्। हे Vवायो, Vस्वभूते स्वकीये जगति अवान्तरभेदेन यज्ञादिस्थाने यानि पात्राणि Vएकया नियुता त्वं Vवहसे। Vदशभिः Vच Vनियुद्भिः यानि पात्राणि त्वं वहसे। Vद्वाभ्यां नियुद्भ्यां यानि पात्राणि त्वं Vवहसे। Vविंशती Vच विंशत्या च नियुद्भिः यानि पात्राणि त्वं वहसे। Vतिसृभिः नियुद्भिः यानि पात्राणि त्वं वहसे। Vत्रिंशता नियुद्भिः अश्वैः यानि पात्राणि त्वं वहसे। कस्मै इति। Vइष्टये यागाय। Vइह यज्ञगृहे तानि पात्राणि त्वया सह। Vता Vवि Vमुञ्च ॥ २८ ॥

~~~~~~~~~~~~~~~~~~~~~~~~~

अ - 'एकया च'। वायुदेवत्या त्रिष्टुप् । स्वा निजा भूतिः समृद्धिः यस्य सः स्वभूतिः । तत्संबोधनम् । हे Vस्वभूते Vवायो । Vएकया अश्वया क्वचित् दशभिः क्वचिद् Vद्वाभ्यां क्वचिद् Vविंशती विंशत्या । पूर्वसवर्णदीर्घः । क्वचित् Vतिसृभिः क्वचित् Vत्रिꣳ शता च । Vनियुद्भिः अश्वाभिः कृत्वा Vइष्टये यज्ञाय त्वं यानि धनसंभृतपात्राणि Vवहसे Vता तानि पात्राणि Vइह अस्मद्यज्ञे Vवि Vमुञ्च । पञ्च चकाराः समुच्चयार्थाः ॥६॥

~~~~~~~~~~~~~~~~~~~~~~~~~

14. S3 पाठस्तु-एकया ... मुञ्चेति for 'एकया च' इति ।
18. S3 om. इति
~~~~~~~~~~~~~~~~~~~~~~~~~

**नियुत्वान् वाय आ गह्ययꣳ शुक्रो अयामि ते।**
**गन्ताऽसि सुन्वतो गृहम् ॥७॥**

नियुत्वान्। वायो इति वायो। आ। गहि। अयम्। शुक्रः। अयामि। ते।
गन्ता। असि। सुन्वतः। गृहम्॥ स्तिं ॥७॥

आ - 'नियुत्वान् वायो' इति। वायुदेवत्या गायत्री। गृत्समदः। इत उत्तरमनुयाजाः। हे श्रीभगवन् Vवायो Vगन्ता Vअसि Vसुन्वतः, Vगृहम्। सोमाभिषवं कुर्वतो यजमानस्य गृहं प्रति आ गन्ताऽसि। अतस्त्वां ब्रवीमि। 'नियुत्वान् वायो'। हे वायो, नियुत्वानितीश्वरवचनः। हे ईश्वर, मरुद्गणलक्षणः नियुतोऽस्य सन्तीति Vनियुत्वान् मरुद्गणवान्। स्वगणसंपन्नः त्वम् अश्ववांश्च Vआगहि आगच्छ। Vअयं च त्वं Vशुक्रः वस्तुतः शुद्धः Vअयामि। अय पय गतौ। पुरुषव्यत्ययः। अयासि। Vते त्वदीयं गृहं गच्छसि॥ २९॥

अ - 'नियुत्वान् वायो'। वायव्या गायत्री। गृत्समदः। इत आरभ्य अनुवाकसमाप्तिपर्यन्तम् ऋचौ वायव्येष्टका पशुपक्षे वपादीनां याज्यापुरोऽनुवाक्यात्वेन विनियुक्ताः। हे Vवायो यतः Vसुन्वतः यजमानस्य Vगृहं प्रति त्वं Vगन्ता Vअसि गमनशीलोऽसि। तृन्नन्तोऽयमाद्युदात्तत्वात्। अतः Vनियुत्वान् अश्ववान् सन् Vआगहि आगच्छ। शपो लुक्। Vअयं Vशुक्रः ग्रहः Vते त्वदर्थे एनम् Vअयामि गृह्णामि। अय गतौ। यद्वा- अयं शुक्रः ग्रहः ते त्वां प्रति अयामि अयतु प्राप्नोतु। लकारपुरुषव्यत्ययः। शुक्रादिग्रहाणां त्वमेव पात्रमिति भावः। ग्रहणे अध्वर्य्यपेक्षया होतृवचनं ग्राहयिष्यामीत्यर्थः ॥७॥

**वायो शुक्रो अयामि ते मध्वो अग्रं दिविष्टिषु।**
**आ याहि सोमपीतये स्पार्हो देव नियुत्वता ॥८॥**

वायो इति वायो। शुक्रः। अयामि। ते। मध्वः। अग्रम्। दिविष्टिषु।
आ। याहि। सोमपीतय इति सोमऽपीतये। स्पार्हः। देव। नियुत्वता ॥ जीं॥ ८॥

5. S3 पाठस्तु - नियुत्वान् गृहमिति for 'नियुत्वान् वायो' इति।

वायव्यपशोः याज्यानुवाक्याः]

**आ** - 'वायो शुक्रः' इति । वायुदेवत्या अनुष्टुप् पुरुमीढः। हे $^{v}$वायो, $^{v}$शुक्रः शुक्रग्रहः अहम् $^{v}$अयामि $^{v}$ते । द्वितीयार्थे। ते त्वां प्रति अयामि गच्छामि । कथं भूत इति। $^{v}$मध्वः $^{v}$अग्रं मधुरसानामग्रं सारभूतो ग्रहः $^{v}$दिविष्टिषु द्युसंबन्धिषु यज्ञेषु स्थितस्त्वं च $^{v}$आयाहि $^{v}$सोमपीतये सोमपानाय आगच्छ। $^{v}$नियुत्वता वायुना $^{v}$स्पार्हः स्पृहणीयः शुद्धग्रहः मध्वङ्गभूतोऽहं हे $^{v}$देव वायुं त्वां आयामीति संबन्धः ॥ ३० ॥

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

अ - 'वायो शुक्रः'। वायव्यानुष्टुप् पुरुमीढाजमीढदृष्टा। हे $^{v}$वायो अयं $^{v}$शुक्रः ग्रहः $^{v}$ते त्वदर्थम् अध्वर्युणा $^{v}$अयामि त्वां ग्राहयिष्यामि। त्वां प्रति अयामि आगच्छतु वा। कीदृशः शुक्रः ? $^{v}$दिविष्टिषु $^{v}$मध्वः $^{v}$अग्रम्। सारः। द्यौः इष्यते प्रार्थ्यते याभिस्ताः दिविष्टयो यज्ञाः। "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति श्रुतेः। तेषु दिविष्टिषु $^{v}$मध्वःमधुनो रसस्य अग्रं सारभूत इत्यर्थः। किं च। हे देव, वायो, $^{v}$नियुत्वता अश्ववता रथेन $^{v}$सोमपीतये त्वम् $^{v}$आयाहि। कीदृशस्त्वम्? $^{v}$स्पार्हः स्पृहायोग्यः। कदेदम् आयास्यतीति यजमानादिभिः स्पृहणीय इत्यर्थः ॥८॥

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

**आ नो नियुद्भिः शतिनीभिरध्वरं सहस्रिणीभिरुप याहि यज्ञम् ।**
**वायो अस्मिन्त्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः ॥९॥**

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

आ। नः । नियुद्भिरिति नियुत्ऽभिः। शतिनीभिः। अध्वरम्।
सहस्रिणीभिः। उप। याहि। यज्ञम्।
वायो इति वायो । अस्मिन् । सवने । मादयस्व।
यूयम्। पात। स्वस्तिभिरितिस्वस्तिऽभिः। सदा । नः ॥ ङ्यों ॥ ९ ॥

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

**आ** - 'आ नः' इति । वायुदेवत्या त्रिष्टुप् अजमीढः । हे श्रीभगवन् $^{v}$वायो, $^{v}$नः अस्माकं $^{v}$यज्ञम् $^{v}$नियुद्भिः $^{v}$शतिनीभिः इति। शतानि यानि नियुत्सु युज्यन्ते तानि नियुतः शतिन्यः। ताभिः शतिनीभिः नियुद्भिः। $^{v}$सहस्रिणीभिः। सहस्राणि यानि नियुत्सु विद्यन्ते ता नियुतः सहस्रिण्यः। ताभिः सहस्रिणीभिः नियुद्भिः वाहनैः सह स्वतः $^{v}$आ $^{v}$उप $^{v}$याहि। बहूनां वाहनानामपि तर्पणाय यजेमेत्यभिप्रायः । वायो अस्मिन् सवने मादयस्व। हे वायो $^{v}$अस्मिन् $^{v}$सवने तृतीये $^{v}$मादयस्व। इदानीमृत्विजः आह। 'यूयं पात'। ऋत्विजः $^{v}$यूयं $^{v}$नः अस्मान् $^{v}$सदा सततं $^{v}$स्वस्तिभिः अविनाशैः स्वस्तिदानैः $^{v}$पात पालयत ॥ ३१ ॥

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

1. S3 पाठस्तु - वायो ... नियुत्वतेति for 'वायो शुक्रः' इति
2. S3 om. इति
18. S3 पाठस्तु- आ नो ... सदा न इति for 'आ नः' इति। ; S3 अग्ने for वायो
20. S3 युज्यन्ते for विद्यन्ते
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

[वायव्यपशोः याज्यानुवाक्याः

अ - 'आ नः'। वायुदेवत्या त्रिष्टुबजमीढ़ दृष्टा। हे $^{v}$वायो, $^{v}$नियुद्भिः अश्वाभिः $^{v}$नः अस्माकम् $^{v}$अध्वरम् $^{v}$उप $^{v}$याहि। कीदृशीभिः? $^{v}$शतिनीभिः $^{v}$सहस्रिणीभिः। शतं सहस्रं च संख्या विद्यते यासां ताभिः। वयं त्वद्बहुवाहनतृप्तौ समर्था इति भावः। एत्य च $^{v}$अस्मिन् $^{v}$सवने तृतीये $^{v}$मादयस्व तृप्यस्व। अन्त्यपादेन ऋत्विजः प्रार्थ्यन्ते। हे ऋत्विजः $^{v}$स्वस्तिभिः कल्याणैः कर्मभिः $^{v}$यूयं $^{v}$नः अस्मान् $^{v}$सदा $^{v}$पात रक्षत ॥९॥

~~~~~~~~~~~~~~~~~~~~~~~~

**तव॑ वाय ऋतस्प॒ते॒ त्वष्टु॑र्जामातरद्भुत।**
**अव॒ाꣳस्या वृणीमहे ॥१०॥ (३)**

~~~~~~~~~~~~~~~~~~~~~~~~

तव॑। वा॒यो॒ इति॑ वायो। ऋ॒त॒स्प॒ते॒। ऋ॒त॒प॒त॒ इत्यृ॑तऽ पते। त्वष्टुः॑। जा॒मा॒तः॒। अ॒द्भु॒त॒। अवा॑ꣳसि। आ। वृ॒णी॒म॒हे॒॥ छौं ॥१०॥

~~~~~~~~~~~~~~~~~~~~~~~~

आ 'तव वायो' इति। वायुदेवत्या गायत्री। ऋषिरङ्गिराः। हे $^{v}$वायो, ऋतः। ऋ गतौ। क्विपि कृते ऋत इति भवति। तस्य ऋतस्य। सत्योदकयज्ञवचनः ऋतशब्दः। पतिशब्दस्य सुडागमः। ऋतशब्देन यज्ञधनान्युच्यन्ते। हे $^{v}$ऋतस्पते, हे $^{v}$त्वष्टुः $^{v}$जामातः त्वष्टुर्दुहितुः पते त्वष्टुरादित्यस्य जामातः। आदित्यादप आदाय गर्भयति। ततो विपुषो जायन्ते। अतो वायुर्जामाता त्वष्टुः। हे वायो, हे $^{v}$अद्भुत, अद्भुतपूर्व तव संबन्धिनीति $^{v}$अवाँसि अन्नानि हविर्लक्षणानि $^{v}$आ $^{v}$वृणीमहे। होमार्थं वृणीमह इति ॥३२॥

~~~~~~~~~~~~~~~~~~~~~~~~

अ - 'तव वायो'। गायत्री। आङ्गिरसव्यश्वदृष्टा। हे $^{v}$वायो, हे $^{v}$ऋतस्पते, सत्यस्य पालक। सुडागम आर्षः। हे $^{v}$त्वष्टुः $^{v}$जामातः आदित्यादप आदाय वायुर्गमयति। ततो वृष्टिर्भवतीति। वायुरादित्यस्य जामाता। यद्वा त्वष्टुः प्रजेश्वरस्य जामातः। हे $^{v}$अद्भुत आश्चर्यरूप। $^{v}$तव $^{v}$अवाँसि अन्नानि रक्षणानि वा वयम् $^{v}$आ $^{v}$वृणीमहे प्रार्थयामहे ॥१०॥

इति एकोनत्रिंशे तृतीयोऽनुवाकः॥३॥

~~~~~~~~~~~~~~~~~~~~~~~~

10. S3 पाठस्तु - तव वृणीमह इति for 'तव वायो' इति। S3 after गतौ adds: क्विबन्तस्य
17. M4 जामातरः for जामातः, M4 वायु° for वायुः
18. M4 om. जामाता। यद्वा त्वष्टुः प्रजेश्वरस्य
19. M4 om. प्रार्थयामहे
~~~~~~~~~~~~~~~~~~~~~~~~

(चतुर्थोऽनुवाकः।)

**हिरण्यगर्भ इत्येषः। येन द्यौरुग्रा पृथिवी चं दृळ्हा**
**येन स्वः स्तभितं येन नाकः।**
**यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥१॥**

~~~~~~~~~~~~~~~~~~~~

हिरण्यगर्भ इतिं हिरण्यऽगर्भः। इतिं । एषः । येनं । द्यौः । उग्रा। पृथिवी। च। दृळ्हा।
येनं। स्वरिति स्वः। स्तभितम् । येनं। नाकः।
यः। अन्तरिक्षे । रजसः। विमान इति विऽमानः।
कस्मै। देवायं। हविषा । विधेम। च्चौं॥१॥

~~~~~~~~~~~~~~~~~~~~

आ -'हिरण्यगर्भ इत्येषः' । सर्वेषां भूतानामपरोक्षतया अवभासमानः यः परमात्मा स एव Vहिरण्यगर्भः भगवानाह - 'येन द्यौः' इति 'यं क्रन्दसी' इति च द्वे काप्यौ। Vहिरण्यगर्भः ऋषिः। Vयेन परमेश्वरेण Vद्यौः द्युस्थानं Vदृळ्हा स्थिरीकृता। Vपृथिवी अतिविस्तीर्णा पञ्चाशत्कोटिगुणिता Vउग्रा सर्वजननिवासभूमित्वेन सर्वेषामनुग्रहकारिका स्थिरायिता । 'येन स्वः स्तभितं येन नाकः'। स्वर्गो लोक तत्रत्यः प्राणिसमूहविशेषः । तत्रापि नाकः अकं दुःखं न विद्यते यत्र स नाकः। भोगस्थानविशेषः Vस्तभितं Vस्वः पूर्वक्लृप्तस्थाने एव स्थिरीकृतमित्यर्थः। नाकोऽपि तथैव स्थभितः। Vयः स्वतः सिद्धः परमेश्वरः। Vअन्तरिक्षे लोके स्थाने द्युमण्डले Vरजसः निमित्तात् परमतेजोरूपत्वेन। विमानः विगतपरिमाणः। निः सीमार्थो विगताभिमानो वा जगदुत्पत्त्यादि कुर्वन्नपि अयमहं जगत्कर्तेत्यभिमानशून्यो यः प्रसिद्धः तस्मै Vकस्मै Vदेवाय Vहविषा Vविधेम ॥ ३ ॥

~~~~~~~~~~~~~~~~~~~~

**अ - 'हिरण्यगर्भ इत्येषः' । 'हिरण्यगर्भः सम्', 'यः प्राणतः', 'यस्येमे', 'य आत्मदाः', इत्येषः चतुर्ऋचोऽनुवाकोऽत्र अध्येतव्यः । यद्वा- सर्वेषां भूतानाम् अपरोक्षतया अवभासमान एष आदित्य हिरण्यगर्भः । हिरण्यं हिरण्मयं ब्रह्माण्डं गर्भे यस्य परमात्मनः स हिरण्यगर्भः ब्रह्माण्डाश्रयः । ''यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं प्रोतम्'' (द्र शब्रा १४.६.८.३) इत्यादि श्रुतेः ।**

~~~~~~~~~~~~~~~~~~~~

9. S3 before हिरण्य° adds: पाठस्तु
10. S3 पाठस्तु - येन द्यौरुग्रा...विधेमेति for 'येन द्यौः' इति ।
12. V2 जनन° for °जन°; V2 °ग्र.ह° for °ग्रह°
13. V2 तत्र for यत्र
15. S3 प्रसिद्धः for सिद्धः
17. S3 om. कस्मै

"यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥" (भगी १५.१२)

इत्यादिस्मृतिश्च। परमात्मैवेति मन्त्रद्रष्टा प्रजापतिराह। सर्वात्मकत्वात् तस्येति वाक्यार्थः। गायत्रं यजुरिदम्। तस्यै-(व) परमात्मनो लक्षणमुच्यते।

'येन द्यौः' कदेवत्याश्चतस्त्रास्त्रिष्टुभो हिरण्यगर्भदृष्टाः । ᵛयेन परमात्मना ᵛद्यौः ᵛउग्रा उत्कृष्टा कृता । ᵛच परम् । ᵛपृथिवी पञ्चाशत्कोटियोजनविस्तीर्णा भूः येन दृळ्हा दृढा स्थिरा कृता । ᵛयेन ᵛस्वः देवस्थानं ᵛस्तभितं धृतम् । ᵛयेन ᵛनाकः च स्तभितः । कं सुखं तद्विरुद्धमकं दुःखम् । न विद्यते अकं यस्य स नाकः । दिविषदां समूहः । सोऽपि येन धृत इत्यर्थः । ᵛयः ᵛअन्तरिक्षे स्थितात् नानात्वेन उपलभ्यमानात् ᵛरजसः सकाशात् ᵛविमानः विगतपरिमाणः । "यः पार्थिवानि विममे रजांसि" (शब्रा ३.५.३.२१) इति श्रुतेः । कदाचित् पृथिवीरजांसि मातुं शक्यन्ते । परमेश्वरमाहात्म्यं न कदापीति भावः । ईदृशाय ᵛकस्मै ज्ञानानन्दस्वरूपाय "कं ब्रह्म" (छांउ ४.१०.४) इति श्रुतेः । ᵛदेवाय क्रीडादिगुणसंपन्नाय परमात्मने वयं ᵛहविषा हविः ᵛविधेम दद्मः । विभक्तिव्यत्ययः । विदधातिर्दानार्थः ॥१॥

~~~~~~~~~~~~~~~~~~~~~~

**यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने।
यत्राधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम॥२॥**

~~~~~~~~~~~~~~~~~~~~~~

यम्। क्रन्दसी इति क्रन्दसी। अवसा। तस्तभाने इति तस्तभाने।
अभि। ऐक्षेताम्। मनसा। रेजमाने इति रेजमाने।
यत्र। अधि। सूरः। उदित इत्युत्ऽइतः। विभातीति विऽभाति॥ फीं॥ ॥२॥

~~~~~~~~~~~~~~~~~~~~~~

आ - 'यं क्रन्दसी अवसा तस्तभाने' [इति]। ᵛअवसा बलेन स्वस्थाने ᵛतस्तभाने। स्तभिस्कभि प्रतिस्तम्भने । प्रतिस्तम्भमापद्यमाने स्वस्थाने वर्तमाने । ᵛरेजमाने ऋचं दीप्तिम् आप्नुवाने वा । ᵛक्रन्दसी । क्रन्दिन् गतिशोषणयोः । द्यावापृथिव्यौ ᵛयं देवं ᵛमनसा ᵛअभि ऐक्षेताम्। 'यत्राधि सुर उदितो विभाति'। ᵛयत्र यस्मिन् परमे तेजसि ᵛअधि ᵛउदितः लीलया आविर्भूतः अधीश्वरः ᵛसूरः सूर्यः ᵛविभाति उद्भासयति। ᵛकस्मै ᵛदेवाय ᵛहविषा ᵛविधेम ॥ ३४॥

~~~~~~~~~~~~~~~~~~~~~~

12. M4 P2 विधयतिः for विदधातिः
18. S3 पाठस्तु - यं क्रन्दसी... विधेमेति for यं...तस्तभाने
19. V2 ऋग्दीप्ति for ऋचं दीप्तिम्

याज्यानुवाक्याः]

अ - 'यं क्रन्दसी'।Vक्रन्दसी द्यावापृथिव्यौ । क्रन्दसी इति द्यावापृथिवीनाम। Vमनसा यं परमात्मानम् Vअभि Vऐक्षेताम् प्रतीक्षां कुर्वाते । द्यावापृथिव्योर्विद्यमानाः सर्वे प्राणिनो यमुपजीव्य तिष्ठन्तीत्यर्थः । कीदृश्यः Vअवसा । यत् कल्पितेनान्येन Vतस्तभाने । स्व स्वस्थाने वर्तमाने स्तम्भु रोधने। अस्मात् कानच् । अभ्यासद्वित्वमार्षम् । अत एव Vरेजमाने शोभमाने । राजृ दीप्तौ । एत्वाभ्यासश्चार्षः॥

किं च । यत्र यस्मिन् परमात्मतेजसि Vअधि Vउदितः अधिकृत्य उत्थितः Vसूरः सूर्यः Vविभाति विविधं भासते । Vकस्मै ज्ञानानन्दस्वरूपाय तस्मै देवाय Vहविषा Vविधेम ।एषोऽर्थो बृहदारण्यकेऽभिहितः- "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः । एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः" ( बृउ ३.८.९) इत्यादि ॥२॥

~~~~~~~~~~~~~~~~~~~~

**आपो॑ ह॒ यद्बृ॑ह॒तीर्विश्व॒माय॒न् गर्भ॒ं दधा॑ना ज॒नय॑न्तीर॒ग्निम्।**
**ततो॑ दे॒वाना॒ꣳ सम॑वर्त॒तासु॒रेक॒ः कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥३॥**

~~~~~~~~~~~~~~~~~~~~

आप॑ः । ह॒ । यत् । बृ॒ह॒तीः । विश्व॑म् । आय॑न् । गर्भ॑म् । दधा॑नाः । ज॒नय॑न्तीः । अ॒ग्निम् ।
तत॑ः । दे॒वाना॑म् । सम् । अ॒व॒र्त॒त । असु॑ः । एक॑ः ॥ षें ॥ ३ ॥

~~~~~~~~~~~~~~~~~~~~

**आ** - 'आपो ह यत्'। प्रजापतिर्देवत्या त्रिष्टुप्। ऋषिर्हिरण्यगर्भः "आपो ह वा इदमग्रे सलिलमेवास" (शब्रा ११.१.६.१) इत्येतद्ब्राह्मणं निदानभूतमनयोः कण्डिकयोः ।'आपो ह यद् बृहतीर्विश्वमायन् गर्भं दधानाः'। Vआपः भूतसूक्ष्माणि ब्रह्माण्डगर्भं Vदधानाः धारयन्त्यः। 'जनयन्तीरग्निम्'। अग्निशब्दोऽत्र हिरण्यवचनः। हिरण्यं हिरण्मयम्। Vगर्भं जनयिष्यन्तः । आपः Vविश्वं सर्वम् आत्मत्वेन स्वकार्यत्वेन च Vआयन् । कारणत्वेन सर्वकार्यव्याप्ताः। 'ततो देवानां समवर्ततासुरेकः'। Vततः जगद्बीजभूतात् गर्भात् Vदेवानां ब्रह्मादीनां 'समवर्ततासुरेकः' प्रथमम् Vअसुः प्राणात्मकः Vएकः वायुः Vसमवर्तत समजायत । य एवंविधो हिरण्यगर्भः तस्मै Vकस्मै देवाय Vहविषा Vविधेम इति संबन्धः॥ ३५ ॥

~~~~~~~~~~~~~~~~~~~~

3. M4 यावत् for यत्
14. S3 पाठस्तु - आपो ह... विधेमेति for आपो ह यत्

अ - 'आपो ह यत्' । "आपो ह वा इदमग्रे सलिलमेवास" (शब्रा ११.१.६.१) इति ब्राह्मणमेतयोः कण्डिकयोः निदानभूतं बोध्यम्।ह प्रसिद्धौ आवृत्तिः vयत् यस्मात् । यत् यदा। पूर्वमित्यर्थः। vआपः जलानि vविश्वं सर्वम्, vआयन् सर्वभावेन स्वयमेवासन्। "आप एवेदमग्र आसुः" इति श्रुतेश्च । कीदृश्य आपः? vबृहतीः बृहत्यः बहुलाः । विभक्तिव्यत्ययः । vगर्भं हिरण्यगर्भलक्षणं ब्रह्माण्डं vदधानाः धारयन्त्यः । अत एव vअग्निं vजनयन्तीः । अग्निं सर्वचेष्टकं हिरण्यगर्भं जनयन्त्यः । उत्पादयिष्यन्तः। vततः गर्भान् संवत्सरोषितान् । vदेवानाम् vअसुः प्राणरूपः vएकः हिरण्यगर्भः vसमवर्तत उदपद्यत । यतः तस्मै vकस्मै vदेवाय vहविषा vविधेम ॥३॥

यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीर्यज्ञम्।
यो देवेष्वधि देव एक आसीत् कस्मै देवाय हविषा विधेम।
मा नो हिꣳसीज्जनिता यः पृथिव्या यो वा दिवꣳ सत्यधर्मा जजान
यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम।
प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम्॥४॥ (४)॥

यः। चित्। आपः। महिना। पर्यपश्यदिति परिऽअपश्यत्।
दक्षम्। दधानाः। जनयन्तीः। यज्ञम्।
यः। देवेषु। अधि। देवः। एकः। आसीत्॥
बृहतीः। जजान।
विश्वा। जातानि॥ ग्रोः ॥४॥

**आ -** 'यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीर्यज्ञम्'। दक्ष वृद्धौ। शीघ्रार्थे च। Vदक्षम् अभिवर्धमानं गर्भं Vदधानाः धारयन्तीः Vयज्ञम् अग्निं Vजनयन्तीः Vआपः अपः। Vयः Vमहिना स्वमाहात्म्येन स्थितः। स्वतः प्रसिद्धो यः Vपरिअपश्यत् सर्वतोऽपश्यत्। किं च। Vयः Vदेवेषु ब्रह्मादिषु Vअधि ऐश्वर्ये सर्वं कर्तुं समर्थः। अधीश्वरः Vदेवः Vएकः सजातीयः देवतान्तररहितः। विजातीयस्तु दूरतो निरस्त एष एवं यः देवेषु अधि देव एक आसीत्। Vतस्मै Vकस्मै आनन्दात्मकाय प्रजापतये Vदेवाय Vहविषा Vविधेम इति संबन्धः॥

'मा नो हिंऽसीत्' इति । प्रजापते न त्वद्' इति। एतौ मन्त्रौ व्याख्यातौ॥ ३६॥

---

**अ -** 'यश्चित्' चिदप्यर्थः। Vयः देवान्तर्यामी Vमहिना स्वमहिम्ना। Vआपः। विभक्तिव्यत्ययः। अपः पूर्वोक्ताः Vपर्यपश्यत् सर्वतो ददर्श। कीदृशीरपः? Vदक्षम् कुशलं समर्थम्। ब्रह्माण्डं Vदधानाः। Vयज्ञं Vजनयन्तीः जनयन्त्यः। यज्ञशब्देन तत्कर्ता हिरण्यगर्भ उच्यते। किं च। Vयश्च Vदेवेषु मध्ये Vअधि अधिकः Vएकः Vमुख्य Vआसीत्। "यो नः पिता" (कास १८.२७) इत्यादिश्रुतिरत्र प्रमाणम्। तस्मै 'कस्मै देवाय हविषा विधेम' इति पूर्ववत्॥

किं च। 'मा नो हिंऽसीत्' इति । स परमात्मा Vनः अस्मान् Vमा Vहिंऽसीत् मा हिनस्तु स्वस्याभजनेन । विध्वस्तान् मा करोत्वित्यर्थः। स कः? Vयः Vपृथिव्याः Vजनिता उत्पादकः। वा शब्दश्चार्थः। Vयः Vवा यश्च। Vसत्यधर्मा। सत्यः धर्मो यस्य सः तथा। अवितथधारणशक्तिः सन् Vदिवं द्युलोकं Vजजान जनयामास।अन्तर्भूतण्यर्थः। "धर्मादनिच् केवलात्" (पा ५.४.१२४) इति धर्मशब्दादनिच्प्रत्ययः। Vयः Vच Vचन्द्राः आह्लादकारिणीः। Vबृहतीः Vअपः प्रथमः प्रथमाः सृष्ट्यन्तरात् पूर्वाः सतीः Vजजान जनयामास। प्रथम इत्यत्र वचनलिङ्गव्यत्ययः। "अप एव ससर्जाग्रे तासु वीर्यमवासृजत्" इति भागवतात्। यद्वा प्रथमो मुख्य इति विशेषणम्। तस्मै कस्मै देवाय हविषा विधेम। किं च 'प्रजापते न' प्रजापतिशब्देन सर्वप्रजापालकः परमात्मा संबोध्यते। व्याख्यातं पञ्चविंशे। Vविश्वा Vजातानि इत्यत्र पाठः। सर्वाणि भूतानां जातानीति तदर्थः॥४॥

इत्येकोनत्रिंशे चतुर्थोऽनुवाकः॥४॥

---

1. S3 यश्चिदापो ... रयाणाम् इति for 'यश्चिदापो... यज्ञम्';
   V2 आसीत् कस्मै... विधेमेति for यश्चिदापो ... यज्ञम्।
2. V2 यज्ञे for यज्ञम्; V2 जनयत for जनयन्तीः S3 पाठस्तु-मानो... विधेम। प्रजापते... रणीयाम्॥ for 'मा नो हिसीत्' इति॥
7. प्रजापते न त्वदिति ; V2 'मा मा हिंसीत्' इत्यत्र जजानेति पाठः।
   प्रजापते न त्वत्। विश्वा जानानीति पाठः for मानो ... त्वदिति; S3 om. एतौ मन्त्रौ व्याख्यातौ

17-18. M4 om. प्रथमः प्रथमाः ... अवासृजत्

(पञ्चमोऽनुवाकः।)

अग्न आयूंꣳषि पवस आ सुवोर्जमिषं च नः।
आरे बांधस्व दुच्छुनांम्।।१।।
अग्ने पर्वस्व स्वपां अस्मे वर्चः सुवीर्यम्।
दर्धद्रयिं मयि पोषम्।।२।।
अग्निर्ऋषिः पर्वमानः पाञ्चंजन्यः पुरोहितः।
तमींमहे महागयम्।।३।।

~~~~~~~~~~~~~~~~~~~~

अग्न आयूंꣳषि। आ।।१।। ।।३७।।
अग्ने पर्वस्व । अ।।२।। ।।३८।।
अग्निर्ऋषिः। अ।।३।। ।।३९।।

~~~~~~~~~~~~~~~~~~~~

आ - 'अग्न आयूंषि' - 'अग्ने पवस्व' - अग्निर्ऋषिः - इति त्रयो मन्त्रा पूर्वं व्याख्याताः।। ३७-३९।।

~~~~~~~~~~~~~~~~~~~~

अ - 'अग्न आयूंषि'। एता अपि याज्यापुरोऽनुवाक्याः। द्वयमाग्नेयं गायत्रं प्राजापत्यम्। हे vअग्ने त्वम् vआयूंषि आयुः प्रापकाणि विहितकर्माणि vपवसे स्वभावादेव कारयसे। अतोऽहं ब्रवीमि। vऊर्जं देवान्नम्। vइषं पितृमनुष्याद्यन्नं च vनः अस्मभ्यम्। vआ vसुव प्रेरय देहीत्यर्थः। एवम् इष्टं संप्रार्थ्य अनिष्टनिवृत्तिं याचते। vदुच्छुनाम्। दुष्टा श्वान इवेति दुच्छुनाः, तेषाम्। कर्मणि षष्ठी। वर्णविपर्यय आर्षः। यज्ञविघातकानसुरान् ग्राम्याञ्छत्रूंश्च। vआरे दूरे vबाधस्व अपगमय, स्थापय। बाधृ लोडने। ।।१।।

'अग्ने पवस्व'। हे vअग्ने vस्वपाः। अप इति कर्मनाम। शोभनं कर्म यस्य सः स्वपाः। त्वम् vअस्मे अस्मभ्यं vसुवीर्यं शोभनसामर्थ्योपेतं vवर्चः ब्रह्मवर्चसं vपवस्व प्रवर्तय। देहीत्यर्थः पवतिरत्रान्तर्भूतण्यर्थः। प्रवृत्त्यर्थः। किं कुर्वन्? vमयि यजमाने vरयिं धनं पोषं शरीरादिपुष्टिं vदधत् धारयन्। भोज्यं भोजनशक्तिं च प्रयच्छेत्यर्थः।।२।।

'अग्निर्ऋषिः। पूर्वाध्याये व्याख्याता।।३।।

~~~~~~~~~~~~~~~~~~~~

11. S3 एते for त्रयो
16. M4 श्वानश्च for श्वान इवेति ;

**अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः।**
**ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः॥४॥**

~~~~~~~~~~~~~~~~~~~~~~

अभि। त्वा। शूर। नोनुमः। अदुग्धा इवेत्यदुग्धाःऽइव । धेनवः।
ईशानम्। अस्य। जगतः। स्वर्दृशमितिस्वः ऽ दृशम्। ईशानम्। इन्द्र। तस्थुषः। च्रीं ॥ ४॥

~~~~~~~~~~~~~~~~~~~~~~

आ - 'अभि त्वा' इति। ऐन्द्रः प्रगाथः। छन्दसां ग्रथनं प्रगाथः। इन्द्रदेवत्या बृहती। ऋषिर्वसिष्ठः। हे vशूर, हे इन्द्र, श्रु गतौ। vत्वा vअभि vनोनुमः। नु स्तुतौ। स्नेहरसयुक्तैः स्तोत्रैः शस्त्रैश्च अभिष्टुमः। 'अदुग्धा इव धेनवः' । नवप्रसूता गावः vधेनवः। vअदुग्धाः। अकृतदोहाः वत्सवत्यो यथा स्नेहपूर्णैर्हुंकारैः वत्समाह्वयन्ति तथा वयमिन्द्रं नोनुमः। कथंभूतमिति । vईशानम् vअस्य प्रतीयमानस्य विश्वस्य vजगतः जङ्गमस्य vतस्थुषः स्थावरस्य इत्युभयात्मकस्य vईशानम्। vस्वर्दृशं स्वयंप्रकाशरूपमिन्द्रं त्वामभि नोनुम इति संबन्धः ॥ ४० ॥

~~~~~~~~~~~~~~~~~~~~~~

अ - 'अभि त्वा शूर' । द्वयं बृहतीसतोबृहतीछन्दस्कं प्रगाथसंज्ञं वसिष्ठदृष्टमिन्द्रदेवत्यम्। "रथन्तरं दक्षिणे पक्षे" (शब्रा ९.१.२.३६) इति श्रुतेः । "नान्योऽध्वर्योर्गायेत्" (शब्रा ९.१.२.४३) इत्यध्वर्योः सामगानं विहितम्। तत्रेमाः साम्नां योनयः ऋचः पठ्यन्ते । तत्रैन्द्रः प्रगाथो रथन्तरस्य योनिः । हे vशूर, आरब्धकार्यान्तगामिन्, हे इन्द्र, वयं vत्वा त्वाम् vअभि vनोनुमः अभिमुखाः त्वदेकचित्ता भूत्वा अत्यन्तं स्तुमः । णु स्तुतौ। यङ्लुगन्तः । तत्र दृष्टान्तमाह । vअदुग्धाः । दोहनं दुग्धम् । नास्ति दुग्धं यासां ता अदुग्धाः । भावे क्तः। धेनवः गावः वत्सान् प्रति इव स्थिताः । यथा अदोहिता गावो वत्सान् प्रति औत्सुक्येन हम्भारवं कुर्वन्ति तथा वयमुच्चैरभिमुखं त्वां स्तुम इत्यर्थः । कीदृशं त्वाम्? vअस्य vजगतः जङ्गमवर्गस्य vईशानं प्रभुं नियन्तारम् । vस्वर्दृशम् । स्वः पश्यतीति स्वर्दृक् तम् । यद्वा-स्वः स्वस्थः आदित्यः । तद्वदालोकान्तरमनपेक्ष्य सर्वं पश्यतीति स्वर्दृक् तम् । "तमेव भान्तमनुभाति सर्वं यस्य भासा सर्वमिदं विभाति" (मुंडको २.२.११) इति श्रुतेः । तस्थुषः स्थावरस्यापि vईशानम् सर्वनियामकमित्यर्थः॥४॥

~~~~~~~~~~~~~~~~~~~~~~

5. S3 पाठस्तु-अभि त्वा... तस्थुष इति for 'अभि त्वा' इति ।
17. M4 कुम्भा° for हम्भा°

[याज्यापुरोऽनुवाक्याः

**न त्वावाँ २ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।**
**अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥५॥**

न त्वावानिति त्वाऽवान्। अन्यः । दिव्यः। न। पार्थिवः। न। जातः। न। जनिष्यते। अश्वायन्तः । अश्वयन्त इत्यश्वऽयन्तः। मघवन्निति मघऽवन्। इन्द्र। वाजिनः। गव्यन्तः। त्वा। हवामहे ॥ ह्वो ॥ ५ ॥

आ - 'न त्वा वाम्' । ऐन्द्री सतोबृहती वसिष्ठः। हे Vमघवन् धनवन्, हे Vइन्द्र, Vअन्यः Vदिव्यः। दिवि भवः Vपार्थिवः च Vत्वावान्। त्वत्सदृशो नास्तीति शेषः। Vन च Vजातः पूर्वं त्वत्सदृशः जातोऽपि नास्ति । Vन च Vजनिष्यते। नोत्पत्स्यते च । अतो वयं त्वां Vहवामहे आह्वयामहे। किं च। वयम् Vअश्वायन्तः अश्वान् कामयमानाः हे Vइन्द्र, Vवाजिनः हविर्लक्षणान्नवन्तः Vगव्यन्तः गोभ्यो हितं गव्यम्। तद्वन्तो वयं यजमानाः इन्द्रं त्वां हवामहे आह्वयामः॥ ४१॥

**अ - 'न त्वावान्'। हे Vमघवन् Vइन्द्र, दिवि भव Vदिव्यः पृथिव्यां भवः Vपार्थिवः च कोऽपि Vत्वावान् त्वत्सदृशः अन्यो नास्तीति शेषः। न च Vजातः। न Vजनिष्यते न उत्पस्यते। त्वया सह सादृश्येन अस्ति स त्वावान् इति विग्रहः। सादृश्यार्थेऽत्र वतुप्प्रत्ययः। "दृष्टानुविधिश्छन्दसि" (द्र पा १.१.६) इति पाणिनिस्मृतेः। अतः कारणात् Vत्वा त्वां Vहवामहे आह्वयामः। कीदृशा वयम् ? Vअश्वायन्तः। आत्मनः अश्वानिच्छन्तीत्यश्वयन्तः। दीर्घश्छान्दसः। अश्वान् कामयमानाः। Vगव्यन्तः। आत्मनो गा इच्छन्तीति गव्यन्तः, गोकामाः। "सुप आत्मनः क्यच्" (पा ३.१.८) "अश्वाघस्यात्" (पा ७.४.३७) इति क्यचि आत्मन्। ततः शतृप्रत्ययः। Vवाजिनः। तुभ्यं दातुमन्नवन्तः। शीघ्रगामिनो वा। अत ऐहिकामुष्मिकान् कामान् देहीत्यर्थः ॥५॥**

**त्वामिद्धि हवामहे सातौ वाजस्य कारवः ।**
**त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥६॥**

त्वाम्। इत्। हि। हवामहे । सातौ । वाजस्य । कारवः । त्वाम्। वृत्रेषु। इन्द्र। सत्पतिमिति सत्ऽपतिम्। नरः। त्वाम्। काष्ठासु। अर्वतः॥ गूं ॥ ६ ॥

6. **S3 पाठस्तु - न त्वावाम् ... हवामह इति** for **'न त्वावान्'**

**आ -** 'त्वामित्' । इन्द्रदेवत्याऽनुष्टुप्। बृहतो योनिः देवतादितुल्यम् । Vइत् एवार्थे। Vहि हेतौ। एवंविधस्त्वं हे Vइन्द्र, तस्मात् Vत्वाम् एव Vहवामहे आह्वयामः। कथंभूता इति। Vवाजस्य हविर्लक्षणान्नस्य हविषः Vसातौ। सातिर्लभः। अन्नस्य लाभे विषयभूते Vकारवः कर्तारः हविषः प्रदातारः Vनरः श्रुतिस्मृतिविहितकर्मानुष्ठानकारिणः ऋत्विग्यजमानाः वयं त्वामेव हवामहे। किंच। Vवृत्रेषु शत्रुषु हन्तव्येषु युद्धार्थमागतेषु सत्सु तैः प्रवर्तितरणे वर्तमानमपि Vत्वां हवामहे । हे इन्द्र, Vसत्पतिं सज्जनानां पतिं Vकाष्ठासु अतिदूरदेशेषु वर्तमानमपि Vत्वाम् आह्वयामहे। त्वदीयान् Vअर्वतः अश्वानपि हवामहे ॥ ४१॥

---

**अ - 'त्वामित्'**[1]**। ऋग्द्वयमैन्द्रं प्रगाथं (!) शंयुदृष्टम्। तत्रेयं बृहत्साम्नो योनिः। आद्या बृहती द्वितीया सतोबृहती। "बृहदुत्तरे पक्षे" (शब्रा ९.१.२.३७) इति श्रुतेः। अध्वर्युर्गायति। हे Vइन्द्र Vकारवः यज्ञक्रियाशीला Vनरः ऋत्विजो मनुष्या वयं 'त्वामित्'। इत्वार्थे। Vत्वाम्व हवामहे आह्वयामः। Vहि निश्चयेन। किं निमित्तम् । Vवाजस्य अन्नस्य Vसातौ पशुपुरोडाशाद्यन्नस्य विभक्तौ । देवेभ्यो हविर्दाननिमित्तमित्यर्थः । "षोऽन्तकर्मणि", "स्त्रियां क्तिन्" (पा ३.३.९४) "आदेच उपदेशेऽशिति (पा ६.१.४५) इति आत्वम्। आत्मनोऽन्नलाभार्थं वा। तथा Vवृत्रेषु पाप्मसु। पाप अनुनासिकः स्यात् । घातनिमित्तमित्यर्थः। "पाप्मा वै वृत्रो यो भूतेर्वारयित्वा तिष्ठति" (शब्रा ११.१.५.७) इति श्रुतेः। वृत्रशब्दः पापार्थः। तथा Vकाष्ठासु दिक्षु। दिग्विजयनिमित्तम्। "दिशस्तु ककुभः काष्ठाः" (अको १.२) इत्यभिधानम्। कीदृशं Vत्वाम्? Vसत्पतिम् सतां पालयितारम्। श्रुतिस्मृत्युक्ताचाररताः निषिद्धपरित्यागिनः सन्त इत्युच्यन्ते। तथा Vअर्वतः अर्वति। विभक्तिव्यत्ययः। अश्वप्राप्तिनिमित्तं च। Vत्वां शब्दावृत्तिः क्रियानुवृत्तिप्रदर्शनार्था ॥६॥**

---

**स त्वं नश्चित्र वज्रहस्त धृष्णुया महः स्तवानो अद्रिवः।**
**गामश्वं रथ्यमिन्द्र सं किर सत्रा वाजं न जिग्युषे॥७॥**

---

सः । त्वम्। नः। चित्र। वज्रहस्तेति वज्रऽहस्त। धृष्णुयेति धृष्णुऽया।
महः । स्तवानः। अद्रिव इत्यद्रिऽवः।
गाम्। अश्वम्। रथ्यम्। इन्द्र। सम्। किर। सत्रा। वाजम्। न। जिग्युषे॥ णौं॥ ७॥

---

1. S3 पाठस्तु - त्वामिद् ... अर्पत इति for त्वामित्
5. S3 trams. सत्सु after वर्तमानमपि
9. M4 तदुत्तरे for बहदुत्तरे; M4 गायत्री for गायति
13. S3 अनुनासिकस्यात् for अनुनासिकः स्यात्
18. M4 before क्रिया° adds. क्रियानुवृत्तिः

**आ** - 'स त्वम्' । हे $^{V}$चित्र, चायनीय, हे $^{V}$वज्रहस्त, हे $^{V}$अद्रिवः, अद्रिवन्, अद्रिसारमयं वज्रं तदस्यास्तीति संबोध्यते । यद्वा अद्रयः जेयत्वेन यस्य सन्ति (सः) अद्रिवान् । तत्संबुद्धिः $^{V}$त्वं $^{V}$धृष्णुया प्रसहनेन। $^{V}$महः तेजः महत्त्वेन च $^{V}$स्तवानः स्तूयमानः सन् इति । विकरणव्यत्ययः। $^{V}$गाम् $^{V}$अश्वं $^{V}$रथ्यं रथे साधुम् । हे $^{V}$इन्द्र, $^{V}$नः अस्मभ्यं $^{V}$सं किर, देहि। संकिरतिर्दानार्थः। अनेकदेशप्रकीर्णं देहीत्यर्थः। कथमिव। $^{V}$न इवार्थे। $^{V}$जिग्युषे जितवते अश्वाय हस्तिने वा। $^{V}$सत्रा त्राणं। रक्षणं त्रा। तत्सहितं $^{V}$वाजं $^{V}$न वाजमिव। वाजं यवसं दूर्वादि यथा दधुरेवं नः अस्मभ्यं देहि ॥ ४२ ॥

~~~~~~~~~~~~~~~~

**अ - 'स त्वं नश्चित्र' । हे $^{V}$चित्र, आश्चर्यरूप, वज्रं हस्ते यस्येति वज्रहस्तः । अद्रयो भेद्यत्वेन यस्य सन्तीत्यद्रिवान् । तत्संबोधनम् । हे $^{V}$अद्रिवः । "मतुवसोः रुश्छन्दसि" (पा ८.३.१) इति रुत्वम् । हे $^{V}$इन्द्र, $^{V}$सः $^{V}$त्वम् ईदृशस्त्वम् । $^{V}$नः अस्मभ्यम् । $^{V}$गां $^{V}$रथ्यं रथे साधुम् । रथं वोढुं समर्थम् $^{V}$अश्वं $^{V}$सं $^{V}$किर। असंकोचेन देहि । गामित्यादौ जातावेकवचनम् । कीदृशस्त्वम्? $^{V}$धृष्णुया धृष्णुना प्रागल्भ्येन $^{V}$महः महसा च $^{V}$स्तवानः अस्मान् पुरस्कुर्वाणः । महतः स्वभावोऽयम् । नीचमपि महयति । व्यत्ययेन स्तूयमान इति वा धृषेः क्नुप्रत्ययः । ततो विभक्तेर्यादेशः "सुपां सुलुक्" (पा ७.१.३९) इति सूत्रेण । धृष्णुना धृष्णुत्वेन। भावप्रधानो निर्देशः । महो महानिति इन्द्रविशेषणं वा महः शब्दः । क्लीबत्वे "महो नंपुसके" (वाप्रा २.३२) इति प्रातिशाख्येन आद्युदात्तत्वापत्तिः । कथमिव? 'जिग्युषे वाजं न ।' $^{V}$न इवार्थे । $^{V}$वाजम् इव । यथा $^{V}$जिग्युषे जितवते पुरुषाय अश्वाय गजाय अन्यस्मै वा $^{V}$सत्रा सत्रम् त्राणं त्रा रक्षणम्। तेन सहितम् । विभक्तेराकारः। वाजम् अन्नं तत्तदुचितं यथा प्रयच्छन्ति तथा अस्मभ्यं देहीत्यर्थः ॥७॥**

~~~~~~~~~~~~~~~~

**कया॑ नश्चि॒त्र आ भु॑वदू॒ती स॒दावृ॑धः॒ सखा॑ ।**
**कया॒ शचि॑ष्ठया वृ॒ता ॥८॥**

~~~~~~~~~~~~~~~~

कया॑ । नः॒ । चि॒त्रः । आ । भु॒व॒त् । ऊ॒ती । स॒दावृ॑ध॒ इति॑ स॒दाऽवृ॑धः । सखा॑ ।
कया॑ । शचि॑ष्ठया । वृ॒ता ॥ गां ॥८॥

~~~~~~~~~~~~~~~~

1. S3 पाठस्तु - स त्वं ... जिग्युषे इति for स त्वम् ; V2 after अद्रिवन् adds :- अदिवत् सारः वज्रो यस्यास्तीति
5 - 6. V2 'सत्राण°' for सत्रा । त्राणं
8. M4 °रूपं for °रूप ।

**आ** - 'कया नः'। वामदेव्यस्य योनिः। वामदेवऋषिः। "वामदेव्यमात्मन्" (शब्रा ९.१.२.३८) इति श्रुतेः। तिस्र ऐन्द्रो गायत्र्यः। अन्त्या पादनिचृत्। यस्य त्रयः पादाः सप्ताक्षराः सा पादनिचृत्। "त्रयः सप्तकाः पादनिचृत्" (कायस ५.२.४) इत्युक्तेः। vसदावृधः। सदा वर्धयितुर्विष्णोः vसखा इन्द्रः vकया ऊत्या केन तर्पणेन vनः अस्माकं vचित्रः चायनीयः vआ vभुवत् भूयात्। vकया vशचिष्ठया। शचीति कर्मनाम। मतुप्लोपः। अतिशयेन कर्मवत्या कया आवृता कर्मणा च चित्रो भूयात् ॥४३॥

~~~~~~~~~~~~~~~~~~~~

**अ - 'कया नः' । तिस्रो गायत्र्यः इन्द्रदेवत्याः वामदेवदृष्टाः वामदेव्यसाम्नो योनयः। "वामदेव्यमात्मन्" (शब्रा ९.१.२.३८) इति श्रुतेः । अन्त्या पादनिचृत् । सप्त सप्ताक्षरा त्रिपदा । अत्र पूर्वमन्त्रादिन्द्रपदमनुषञ्जनीयम् । इन्द्रः vकया vऊती ऊत्या अवनेन तर्पणेन प्रीणनेन वा । अवती तर्पयतीत्यूतिः। "ऊतियूतिजूतिसातिहेतिकीर्तयश्च" (पा ३.३.९.७) इति भावे निपातोऽयम्। vनः अस्माकं vसखा सहायः vआ भुवत् । आभिमुख्येन भवति । तथा vवृता । वर्तत इति वृत् । तया वृता । सर्वदा वर्तमानया । vकया vशचिष्ठया । अतिशयेन शचीति शचिष्ठा । तया अतिशयवत्या यागक्रियया तृप्तिभूतया अस्माकं vसखा भवति । तामूर्तिं शचिष्ठां च न जानीम इति शेषः । स्वकृपयैव अस्माकमिन्द्रः सहायो भवतीति तात्पर्यम् । शचीति कर्मनाम । ततः अतिशये इष्ठन्प्रत्यय :। कीदृश इन्द्रः? vचित्रः विचित्ररूपः vसदावृधः सदा वर्धत इति सदावृधः । "इगुपध°" (पा ३.१.१३५) इति कप्रत्ययः । सदावर्धमानः । ऊतीत्यत्र तृतीयैकवचनस्य "सुपां सुलुक्°" (पा ७.१.३९) पूर्वसवर्णता सवर्णदीर्घश्च । आ भुवदित्यत्र भवतेर्लेटि "इतश्च लोपः परस्मैपदेषु" (पा ३.४.९७) इतीकारलोपे कृते शपः छान्दसे ङित्त्वे सति धातोरुवङादेशे च रूपसिद्धिः ॥८॥**

~~~~~~~~~~~~~~~~~~~~

**कस्त्वा॑ स॒त्यो मदा॑ना॒ं मꣳहि॑ष्ठो मत्स॒दन्ध॑सः।
दृ॒ळ्हा चि॑दा॒रुजे॒ वसु॑ ॥९॥**

~~~~~~~~~~~~~~~~~~~~

कः । त्वा॒ । स॒त्यः । मदा॑नाम् । मꣳहि॑ष्ठः । म॒त्स॒त् । अन्ध॑सः ।
दृ॒ळ्हा । चि॒त् । आ॒रुजे॑ । वसु॑ ॥ हां ॥ ९ ॥

~~~~~~~~~~~~~~~~~~~~

1. S3 पाठस्तु - कया ... वृतेति for कया नः।
1. S3 om. वामदेव ऋषिः। वामदेव्यमात्मन्निति श्रुतेः।
14. M4 चन्द्रः चेन्द्रः for इन्द्रः

**आ** - 'कस्त्वा' । हे इन्द्र, Vअन्धसः सोमस्य Vकः अंशः Vसत्यः अवितथः त्वां Vमत्सत् मादयति मत्तं करोति। किंभूतः? मदानां मध्ये मंहिष्ठः अतिशयेन मदजनकः। येन मत्तः त्वं Vदृळ्हा Vचित् दृढान्यपि असुरवृन्दानि Vआरुजे आरुजसि । रुजो भङ्गे । Vवसु च ददासीति शेषः। यद्वा- दृढान्यपि (चिर-कालस्थायिनी) सुवर्णादीनि वसु वसूनि आरुजसि चूर्णयसि दानाय ॥ ४४ ॥

---

**अ** - 'कस्त्वा'। हे इन्द्र, अन्धसः Vअन्नस्य सोमरूपस्य कः अंशः Vत्वा त्वां Vमत्सत् मादयति मदं करोति। मदी हर्षे । "लेटोऽडाटौ" (पा ३.४.९४) इत्यडागमः । "सिब्बहुलं लेटि" (पा ३.१.३४) इति सिप्प्रत्ययः । "इतश्च-" (पा ३.४.९७) इति इकारलोपः कीदृशोंऽशः । Vमदानां Vमंहिष्ठः । मदयन्ति तानि मदानि हवींषि । तेषां मध्ये मंहिष्ठः श्रेष्ठः । अत्यन्तं मदजनकः । महि कान्तौ। चुरादिः । मंहयते इति मंही । अति मंही मंहिष्ठः । यद्वा - महि वृद्धौ । भ्वादिः । मंहते वर्धते स मंही । अतिमंहीति मंहिष्ठः । किं च । येन अंशेन मत्तस्त्वं Vदृळ्हा चित्। चिदप्यर्थः । ढस्य ळत्वं छान्दसम्। दृढान्यपि Vवसु। वचनव्यत्ययः । वसूनि कनकादीनि। Vआरुजे रुजो भङ्गे । पुरुषपदव्यत्ययः । आरुजसि चूर्णयसि। भङ्क्त्वा भङ्क्त्वा धनानि ददासीत्यर्थः । यद्वा - येन मत्तस्त्वं दृढान्यपि वसूनि Vआरुजे भञ्जनाय वर्तस इति शेषः । क्विबन्तः । आख्यातत्वे सर्वनिघातापत्तिः ॥९॥

---

**अ॒भी षु ण॒ः सखी॑नामवि॒ता ज॑रितॄ॒णाम्।**
**श॒तं भ॑वास्यू॒तयें॥१०॥**

---

अ॒भि। सु। । न॒ः। सखी॑नाम्। अ॒वि॒ता। ज॒रि॒तॄ॒णाम्।
श॒तम्। भ॒वा॒सि॒। ऊ॒तयें॥ शौं ॥१०॥

---

**आ** - 'अभी षुणः' । अभि आभिमुख्येन सुष्ठु च Vनः अस्माकं सखीनां सहस्थानधर्मयुक्तानां Vजरितृणां स्तोतृणाम् Vअविता पालयिता। Vभवेति वाक्यशेषः। त्वम् Vऊतये अवनाय Vशतं Vभवासि शतधा भवासि ॥ ४५ ॥

---

1. S3 पाठस्तु - कस्त्वा ... वस्विति for कस्त्वा।; V2 after हे इन्द्र adds : त्वा त्वां प्रति सत्यः अवितथः सन् मत्सत् अमत्सत् तव मदमकरोत्, V2 दृढा for दृळहा
3. V2 ऋजो for रुजो, and before ऋजो adds : रुजु रोगे ; S3 om. रुजो भल्गे, M4 om. इति
4. M4 om. चूर्णयसि
18. S3 पाठस्तु - अभीषु... ऊतय इति for अभी षु णः।

अ - 'अभी षुणः'। हे इन्द्र, त्वम् Vऊतये अस्मदवनाय रक्षणाय Vसु सम्यक् Vअभि आभिमुख्येन Vशतं Vभवासि भवसि "। लेटोऽडाटौ" (पा ३.४.९४)। शतशब्दो बहुवाची। पालनाय अनेकरूपो भवसीत्यर्थः। कीदृशस्त्वम्। सखीनां जरितृणां स्तोतृणां नः अस्माकम् ऋत्विग्यजमानानाम् अविता पालयिता। संहितायां "इकः सुञि" (पा ६.३.१३४) इति अभीत्यस्य दीर्घः। "सुञः" (पा ८.३.१०७) इति सुशब्दस्य षत्वम्। जरितेति स्तोतृनाम ॥१०॥

---

**य॒ज्ञाय॑ज्ञा वो अ॒ग्नये॑ गि॒रागि॑रा च॒ दक्ष॑से।**
**प्रप्र॑ व॒यम॒मृतं॑ जा॒तवे॑दसं प्रि॒यं मि॒त्रं न श॑ꣳसिषम् ॥११॥**

---

य॒ज्ञाय॑ज्ञे॒ति॑ य॒ज्ञाऽय॑ज्ञा। व॒ः। अ॒ग्नये॑। गि॒रागि॑रे॒ति॒गि॒राऽगि॑रा। च॒। दक्ष॑से। प्र प्रेति॒ प्रऽप्र॑। व॒यम्। अ॒मृत॑म्। जा॒तवे॑दस॒मिति॑जा॒तऽवे॑दसम्। प्रि॒यम्। मि॒त्रम्। न। श॒ꣳसि॒षम् ॥ तुं ॥११॥

---

आ - 'यज्ञायज्ञा वः' इति 'ऊर्जो नपातम्' इति च शंयुः बृहती अग्निदेवत्यौ ऋषिः भर्गः। यज्ञायज्ञियौ। सप्तम्येकवचनस्य स्थाने वीप्सार्थस्य पदस्य अभ्यासः। Vवः इति यजमानविषयो युष्मदर्थीयः। Vअग्नये इत्यत्र अग्निमिति व्यत्ययः। वाक्यसंयोगात्। 'गिरागिरा च' इति। Vगिरागिरा वीप्सा। अत्यर्थं भक्तियुक्तया स्तुतिलक्षणया वाचा। Vदक्षसे इति दक्षसामिति विभक्तिव्यत्ययः। अग्निविशेषणं चैतत्। दक्षसं शीघ्रकारिणम्। उत्साहयुक्तमग्निमिति। Vप्रप्र इति चाभ्यास उपसर्गः। Vप्रशंसिषम् इति । Vअमृतम् अमरणधर्माणं सुखात्मकं वा। Vजातवेदसं जातप्रज्ञानम्। Vप्रियम् आत्मभूतम्। Vमित्रम्। Vन इव। मित्रमिव। एवं वाक्यसंयोगात् द्वितीयया चतुर्थ्या व्यत्ययः। यज्ञे यज्ञे वः युष्मदर्थं यजमानार्थं सुदक्षसमग्निम्। कथं भूतम्? अमृतं प्रियं मित्रं न मित्रमिव स्थितम्। जातवेदसं सुदक्षसमग्निं स्तुतिलक्षणयाऽनया गिरा अग्निं त्वां Vवयं प्रशंसिषम्। प्रकर्षेण स्तुतिं कुर्महे ॥४६॥

---

अ - 'यज्ञायज्ञा वः'। द्वयं प्रगाथमाग्नेयं शंयुदृष्टम्। आद्या बृहती। द्वितीया सतोबृहती। "यज्ञायज्ञियं पुच्छम्" (ताण्ड्यब्रा ५.१.१८) इति श्रुतेः। इयमृक् यज्ञायज्ञियस्य साम्नो योनिः। Vयज्ञायज्ञा। वीप्सायां द्वित्वम्। सप्तम्यैकवचनस्य "सुपां सुलुक्" (पा ७.१.३९) इत्याकारः।

---

11. S3 पाठस्तु - यज्ञायज्ञा ... शꣳसिषमिति for 'यज्ञायज्ञा वः' इति।
16. S3 om. इति।

[v]वः इति द्वितीयाबहुवचनमेकवचनार्थे। यजमानविषयं वा। [v]अग्नये इति चतुर्थ्यैकवचनं द्वितीयैकवचनार्थे। [v]गिरागिरा वीप्सायां द्वित्वम्। [v]च पादपूरणः। [v]दक्षसे। चतुर्थी द्वितीयार्थे। [v]प्र प्र। "प्रसमुपोदः पादपूरणे" (पा ८.१.६) इति द्वित्वम्। तस्य च [v]शंसिषम् इति क्रियया संबन्धः। वयम् इति प्रथमाबहुवचनमेकवचनार्थे। तथा च एवं वाक्ययोजना। यज्ञायज्ञा यज्ञे यज्ञे अनेक यज्ञेषु। 'गिरा गिरा' अन्यया अन्यया स्तुत्या।हे अग्ने वः त्वाम्। यद्वा - वो युष्मदर्थे। अग्निं प्रप्र 'शंसिषम्'। पुनः पुनः स्तौमि। शंसु स्तुतौ। लुङ्। अडभाव आर्षः। कीदृशमग्निम्। दक्षसम्। दक्षतेरुत्साहार्थस्य धातोरसुन्प्रत्ययः। दक्षते उत्सहते स दक्षाः तम् उत्साहितम्। यद्वा दक्ष इति बलनाम। अन्तर्णीतमत्वर्थं द्रष्टव्यम्। दक्षसं बलवन्तम्। [v]अमृतम् अमरणधर्माणम्। [v]जातवेदसम्। जातं वेदो धनं ज्ञानं वा यस्मातम्। [v]प्रियं प्रीतिजनकम्। [v]न शब्द उपमार्थः। [v]मित्रं न मित्रमिव । यथा कश्चित् प्रियं मित्रं पुनः पुनः स्तौति तद्वदग्निं स्तौमीत्याशयः ॥११॥

ऊर्जो नपा॑तꣳ स हि॒नायम॑स्म॒युर्दाशे॑म ह॒व्यदा॑तये ।
भुव॒द्वाजे॑ष्ववि॒ता भुव॑द्वृ॒ध उ॒त त्रा॒ता त॒नूना॑म् ॥१२॥ (५)॥

ऊर्जः। नपा॑तम्। सः। हि॒न। अ॒यम्। अ॒स्म॒युरित्य॑स्म॒ऽयुः।
दाशे॑म। ह॒व्यदा॑तय॒ इति॑ ह॒व्यऽदा॑तये।
भुव॑त्। वाजे॑षु। अ॒वि॒ता। भुव॑त्। वृ॒धः। उ॒त। त्रा॒ता। त॒नूना॑म् ॥ झों ॥ १२ ॥ (५) ॥

आ - 'ऊर्जो नपातम्' इति। ऊर्ज इत्यनेन शब्देन ओषधिवनस्पतय उच्यन्ते। ओषधिवनस्पतिभ्यः एषोऽग्निर्जायते। ततोऽग्निः ऊर्जोऽभिधीयते। नपातम् अपत्यमित्युच्यते। [v]ऊर्जः [v]नपातम् अपत्यमग्निं [v]दाशेम। दाशतिर्दानार्थः। तत्र तु लक्षणया दानार्थमावाहनमभिधीयते। दाशेम ध्यायेम कस्मै। [v]ह व्यदातये। हव्यं हविर्योग्यं तस्य दातिर्दानम्। तस्यै दातये । हविषो दानायेत्यर्थः। अग्निमाहुवामहे इति संबन्धः। कुत इति। स हिनायमस्मयुः। [v] स अग्निः। [v]हिन इति हीत्यर्थः। स ह्ययमग्निः [v]अस्मयुः। इदंयुः इदं कामयमान इति। तम् अग्निं वयं पूज्यत्वेन कामयामहे। अग्निरध्यस्मान् कामयते। हविर्दानार्थमिति। अतः परस्परं पूज्यपूजकभावना अनयोः संबन्धात्। अतस्त्वां दाशेम। 'भुवद्वाजेष्वविता भुवद्वृधः'। हे श्रीभगवन्नग्ने, [v]वाजेषु अन्नेषु

3. P2 M4 **प्रशंसिषम्** for **शंसिषम्**; P2 **क्रिया**° for **क्रियया**
15. S3 **पाठस्तु - ऊर्जो नपातं ... तनूनामिति** for **'ऊर्जो नपातम्' इति**
19. V2 **हिना** for **हिन**
20. V2 after **पूज्यत्वेन** adds: **वयं**
22. V2 after **वृधः** adds: **इति**

**चित्यग्न्यभिमर्शनम्]**

हविर्लक्षणेषु विषयभूतेषु भवान् एक एव [V]अविता। अव रक्षणे। रक्षकः। [V] भुवत् अभवत्। किं च। 'वृध उत त्राता तनूनाम्' । अस्मदीयशरीराणां [V]वृधः अभिवृद्ध : [V]उत अपि त्वमेव [V]त्राता। त्वमेव परिपालकः। अतोऽग्निं त्वां दाशेमेति संबन्धः॥ ४७॥

~~~~~~~~~~~~~~~~~~~~

**अ - 'ऊर्जो नपातम्' । यजमानोऽध्वर्युं प्रार्थयते । हे अध्वर्यो, [V]सः त्वम् । [V] ऊर्जः [V]नपातम् अपां पौत्रमग्नि [V]हिन । हिनु तर्पय। हि गतौ वृद्धौ च । स्वादिः। लोट् । उकारस्याकार आर्षः । ऊर्क्शब्देनाप उच्यन्ते। अद्भ्यो वृक्षा जायन्ते । तेभ्योऽग्निरित्यपां पौत्रोऽग्निः । यद्वा - ऊर्ज बल प्राणनयोरिति धातोः क्विप् । ऊर्जो वायोनपातं पुत्रम् । "वायोरग्निः" इति श्रुतेः । यतोऽयमग्निः [V]अस्मयुः । अस्मान् इच्छतीत्यस्मयुः। "क्याच्छन्दसि" (पा ३.२.१७०) इत्युप्रत्ययः । अतो हव्यदातये हविषो दानाय [V]दा शेम संकल्पयामः। दाशृ दाने । अत्र संकल्पार्थः । यतोऽयमग्निः [V]वाजेषु अन्नेषु [V]अविता रक्षिता [V]भुवत् भवति । तथा [V]वृधः । वर्धनं वृत्। तस्याःवृधः । अविता भुवत् भवति । [V] उत अपि च । [V]तनूनां शरीराणा [V]त्राता रक्षिता भवति । बहुवचनं पुत्रभार्यादिशरीरपरम् । अग्निरस्माकम् अन्नशरीररक्षिता वर्धयिता अस्मान् कामयते । अतोऽस्मै हविर्दानाय संकल्पयामः ॥१२॥**

**इत्येकोनत्रिंशे पञ्चमोऽनुवाकः ॥५॥**

~~~~~~~~~~~~~~~~~~~~

**(षष्ठोऽनुवाकः।)**

**संवत्सरोऽसि परिवत्सरोऽसीदावत्सरोऽसीद्वत्सरोऽसि वत्सरोऽसि।**
**उषसस्ते कल्पन्तामहोरात्रास्ते कल्पन्तामर्धमासास्ते कल्पन्तां मासास्ते**
**कल्पन्तामृतवस्ते कल्पन्तां संवत्सरस्ते कल्पताम्॥१॥**

~~~~~~~~~~~~~~~~~~~~

संवत्सरः । असि। परिवत्सर इति परिऽवत्सरः ।
इदावत्सरः। इद्वत्सर इतीत्ऽवत्सरः । वत्सरः।
उषसः । ते। कल्पन्ताम् । अहोरात्राः । अर्धमासाइत्यर्धऽमासाः। मासाः।
ऋतवः। संवत्सरः । ते । कल्पताम् ॥ टें ॥१॥१॥

~~~~~~~~~~~~~~~~~~~~

**आ** - 'संवत्सरोऽसि' इति । संचितोऽग्निरनेन यजुषाऽभिमृश्यते। गायत्री वा त्रिष्टुप्। आत्मनः प्रगाथः अग्निदेवत्यः। संवत्सरादि पञ्चकयुगलक्षणमित्युक्तं ज्योतिःशास्त्रे । संवत्सरादयः इह अग्नि-रूपेणोच्यन्ते । हे श्रीभगवान्नग्ने, [V]संवत्सरः [V]असि। संवत्सरात्मकः कालावयवोऽसि।

~~~~~~~~~~~~~~~~~~~~

22. S3 पाठस्तु - संवत्सरोऽसि... कल्पतामिति for 'संवत्सरोऽसि' इति ; S3 om. संचितोऽग्निं... मृश्यते
~~~~~~~~~~~~~~~~~~~~

सम्यक् वत्सरो वत्सलः सर्वेषां प्रियरूपः। एव यश्च त्वं Vपरिवत्सरः असि। अयमपि कालावयवविशेषः। तथा यस्त्वम् Vइदावत्सरः Vअसि। अयमपि कालावयवविशेषः। यस्त्वम् Vइद्वत्सरः Vअसि । अयमपि कालावयवविशेषः। तथा यस्त्वं Vवत्सरः Vअसि । सर्वस्य सविताऽसि। कालावयवोऽसि। संपरिइदादयस्तूपसर्गाः। वत्सरशब्दैः नित्यसंबन्धात्। एते संवत्सरादयः के इत्याकाक्षायां श्रुतिः स्वयमेव तान् विशिनष्टि। 'उषसस्ते कल्पन्ताम्' । Vते Vउषसः संवत्सर इति Vकल्पन्ताम् । क्लृप्ता भवन्ति। 'अहोरात्राः ते कल्पन्ताम्' । Vअहोरात्राः कालावयवविशेषाः। एते परिवत्सरा इति Vकल्पन्ताम् । क्लृप्ताः । 'अर्धमासाः ते कल्पन्ताम्' । ये Vअर्धमासाः । कालावयवविशेषाः Vते इदावत्सर इति Vकल्पन्ताम् । क्लृप्ताः ।'मासास्ते कल्पन्ताम्' । ये Vमासाः कालावयवविशेषरूपाः Vते इद्वत्सर इति Vकल्पन्ताम् । क्लृप्ताः । 'ऋतवस्ते कल्पन्ताम्' । Vते ये Vऋतवः कालावयवविशेषाः ते वत्सर इति परिभाषया स्थानप्रमाणेन Vकल्पन्ताम् । क्लृप्ताः भवन्तु ॥ ४ ॥

~~~~~~~~~~~~~~~~

**अ - 'संवत्सरोऽसि' । अग्निदेवत्यं यजुः । अत्र यजूँषि नवनवत्यक्षराणि एको व्यूहः । ततः शताक्षराभि राकृतिछन्दः। अस्य चित्यग्न्यभिमर्शने विनियोगः । "पञ्चसंवत्सरमयं युगाध्यक्षं प्रजापतिम्" इति ज्योतिषोक्तमिहोच्यते। हे अग्ने, त्वं Vसंवत्सरः Vअसि । Vपरिवत्सरः Vअसि। Vइदावत्सरः Vअसि । Vइद्वत्सरः Vअसि । Vवत्सरः Vअसि । निर्विशेषणः पञ्चसंवत्सरात्मकयुगरूपोऽसीत्यर्थः । "युगं भवेद्वत्सरपञ्चकेन" इति ज्योतिःशास्त्रोक्तेः । एवंविधो यः तस्य Vते तव Vउषसः । प्रातःकालादयः कालविशेषाः । संगवमध्याह्नापराह्णसायाह्नाः Vकल्पन्ताम् । अवयवत्वेन क्लृप्ता भवन्तु । Vअहोरात्राः Vते Vकल्पन्ताम् । Vअर्धमासाः पक्षाः Vते Vकल्पन्ताम् । मासास्ते कल्पन्ताम् । ऋतवस्ते कल्पन्ताम्। संवत्सरः Vते Vकल्पताम् । उपलक्षणात् संवत्सरादिपञ्चकं कल्पताम् । तव अवयवत्वेनेत्यर्थः ॥१॥**

~~~~~~~~~~~~~~~~

2. V2 after **तथा** adds: **इदावत्सरः । अयमपि कालविशेषः ।**
3. M4 om. **इद्वत्सरोऽसि**; V2 om. **अयमपि कालावयवविशेषः**
10. S3 **संवत्सरः** for **वत्सरः**
16. M4 om. °**कालादयः**

चित्यग्न्यभिमर्शनम्]

**प्रेत्या एत्यै सं चाञ्च प्र चं सारय।**
**सुपर्णचिदंसि तयां देवतंयाऽङ्गिरस्वद् ध्रुवः सींद ॥२॥ (६)**

~~~~~~~~~~~~~~~~~~~~

प्रेत्या इति प्रऽ इंत्यै । एत्या इत्याऽइंत्यै । सम् । च । अञ्चे।प्र।च। सारय।
सुपर्णचिदिति सुपर्णऽ चित् । असि । तयां । देवतंया ।
अङ्गिरस्वत्। ध्रुवः । सीद । टूं ॥१॥२॥(६)॥
समास्त्वा दश ॥१०॥ ऊर्ध्वा द्वादश ॥१२॥ पीवो अन्नान् दश ॥१०॥
हिरण्यगर्भश्चतस्रः ॥४॥ अग्न आयूंःषि द्वादश ॥१२॥ संवत्सरोऽसि द्वे ॥२॥
षळानुवाकेषुपञ्चाशत्॥५०॥ इषे देवस्य समाः पञ्चाशत्
इतिशुक्लयजुःकाण्वपदसंहितायामेकोनत्रिंशोध्यायः ॥२९॥

~~~~~~~~~~~~~~~~~~~~

**आ** - 'प्रेत्यै' इति । पिपीलिकामध्याकृतिर्नाम अनुष्टुप्। आग्नेयी । "अभि त्वा शूर नोनुम" (कासं २९.५.४) इत्यादिमन्त्रान् परमेष्ट्यपश्यत् । अतः परमेष्ठिन आर्षम् । $^V$प्र $^V$इत्यै प्रकृष्टागमनाय। $^V$एत्यै आगमनाय। $^V$सं $^V$च संकुचितागमनाय संकोचाय वा। अञ्चू गतिपूजनयोः। $^V$अञ्च गच्छ। $^V$प्र $^V$च $^V$सारय विस्तारय। स्वेच्छया संकोचविकासधर्मा भवेत्यभिप्रायः। $^V$सुपर्णचित् । हे भगवन्नग्ने; सुपर्णचित् परमहंसवत् चित् ज्ञाप्तिरसि । यद्वा- $^V$सुपर्णचित् नयनरूपिणी देवता $^V$असि । अतः $^V$तया सुपर्णचिता $^V$देवतया वाचा चितः $^V$अङ्गिरस्वत् प्राण इव $^V$ध्रुवः शाश्वतिकः सन् $^V$सीद अवस्थानं कुरु । एवमग्निः स्तूयत इति ॥ ५० ॥

~~~~~~~~~~~~~~~~~~~~

इति (श्रीमत्परमहंसपरिव्राजकाचार्य श्रीवासुदेवपुरी श्री कृष्णभक्तिसाम्राज्यस्य श्रीमज्जातवेदोपाध्यस्य सूनुना चतुर्वेदि श्रीमदानन्दबोधभट्टोपाध्यायेन (विरचिते) शुक्लयजुःकाण्वसंहितामन्त्रभाष्यसंग्रहे एकोनत्रिंशोध्यायः ॥२९॥

~~~~~~~~~~~~~~~~~~~~

8. D1 om. **इषे देवस्य समाः पञ्चाशत्**
10. S3 **पाठस्तु - प्रेत्या ... सीदेति प्रेत्या 'इति;** S3 **पिपीलिक °** for **पिपीलिका °**
13-14. S3 om. **स्वेच्छया ... अभिप्रायः;**
15. V2 **वः** for **चितः**
16. V2 om. **ध्रुवः**
18. V2 **काण्ववेदभाष्यसंग्रहे** for **शुक्ल... संग्रहे ।**

[चित्यग्न्यभिमर्शनम्

अ – 'प्रेत्या एत्यै'। हे चित्याग्ने $^{V}$प्र $^{V}$एत्यै प्रकृष्टागमनाय $^{V}$एत्यै आगमनाय च। $^{V}$समञ्च संकुच। प्र सारय च। स्वेच्छया संकोचविकासौ कुर्विति भावः। पक्षिरूपत्वाच्चयनस्योक्तं युक्तमित्याह। $^{V}$सुपर्णचित्। हे अग्ने, सुपर्णाकारेण चितत्वात् त्वं सुपर्णचिद् $^{V}$असि। $^{V}$तया $^{V}$देवतया वाचा सहितः सन्। $^{V}$अङ्गिरस्वत् अङ्गिरस ऋषयस्तद्वत्। यद्वा अङ्गिरसः प्राणाः इवेत्यङ्गिरस्वत्। $^{V}$ध्रुवः स्थिरः $^{V}$सीद तिष्ठ। "सोऽयास्य अङ्गानां हि रसः। प्राणो वा अङ्गानां रसः" (शब्रा १४.४.१.२१) इति श्रुतेः। पिपीलिका मध्याकृतिनामाग्नेय्यनुष्टुप् ॥२॥

इति षष्ठोऽनुवाकः ॥६॥

इति श्रीमन्नागदेवभट्टात्मजेन अनन्ताचार्येण विद्वज्जनकृपापात्रेण विरचितायां वेददीपिकायां काण्वसंहिताभाष्ये एकोनत्रिंशोऽध्यायः ॥२९॥

अमुना वेददीपेन मया नीराजितो हरिः।<br>
मच्छ्रमं सार्थकीकृत्य मद्वशं सर्वदाऽवतु॥१॥

न पाण्डित्याभिमानेन न च वित्तस्य लिप्सया।<br>
मया कृतो वेददीपो विदुषां परितुष्टये ॥२॥

यत्किञ्चिन्मम चाञ्चल्यं क्षम्यन्तां विपश्चितः।<br>
गुणग्राह्यः सदा सन्तो बालस्य पितराविव ॥३॥

# त्रिंशोऽध्यायः

(प्रथमोऽनुवाकः।)

**होता॑ यक्षत् स॒मिधेन्द्र॑मि॒ळस्प॒दे नाभा॑ पृथि॒व्या अधि॑।**
**दि॒वो वर्ष्म॒न्त्समि॑ध्यत॒ ओजि॑ष्ठश्चर्षणी॒सहां॑ वेत्वाज्य॑स्य॒ होत॒र्यज॑ ॥१॥**

स॒मिधेति॑ स॒म् ऽ इधा॑। इन्द्र॑म् ।इ॒ळः। प॒दे। नाभा॑। पृ॒थि॒व्याः। अधि॑ ॥
दि॒वः । वर्ष्म॑न्। सम्। इ॒ध्य॒ते॒। ओजि॑ष्ठः।
च॒र्ष॒णी॒सहा॑म्। च॒र्ष॒णि॒स॒हा॒मिति॑ च॒र्ष॒णि ऽ सहा॑म् । वेतु॑ ॥ इ॒ष्यु॑ ॥१॥

आ - 'होता यक्षत् समिधेन्द्रमिळस्पदे' इति। सौत्रामणिकोऽध्यायः। सौत्रामण्यामैन्द्रस्य पशोरेकादश प्रयाजप्रैषाः। 'अग्निमद्य' इत्यैन्द्रः प्रैषः । 'त्वामद्य' इति प्रतीकमुभयत्रापि। तृतीयानुवाके होता यक्षत् समिधानं महद्वयोधसा प्रिय एकादश प्रयाजप्रैषाः। तथैव चतुर्थानुवाके 'देवं बर्हिः' इत्यादयोऽनुयाजप्रैषाः। 'अग्निमद्य' इति च वयोधसः ऐन्द्राः आप्रीदेवताः। आद्यानुवाके 'देवं बर्हिः' इति द्वितीयानुवाके एकादशानुयाजप्रैषाः। सूक्तवाकप्रैषः।

अथ सौत्रामण्याः प्रजापतेरार्षम् ।अश्विनोः सरस्वत्याश्चेति ऐन्द्री त्रिष्टुप्। समिदादयस्त्विन्द्रस्येव विभूतय इति। यः ^v^होता ^v^समिधा इध्मकाष्ठेन हविर्भूतेन समिधा वा सहितम् ^v^इन्द्रं त्रिषु स्थानेषु यः ^v^समिध्यते तमिन्द्रं होता ^v^यक्षत् यजतु। त्रिस्थानान्याह - 'इळस्पदे' इति। प्रथमं तावत् ^v^इळः ^v^पदे । इळः पृथिव्याः। पृथिव्यां यजमानीयप्रदेशे अग्न्यात्मना । समिध्यते। द्वितीयं - 'नाभा पृथिव्या अधि' । पृथिवीशब्देनान्तरिक्षमभिधीयते। ^v^नाभा ^v^पृथिव्याः। अन्तरिक्षस्य नाभा नाभिभूते मध्ये अन्तरिक्षप्रदेशे विद्युदात्मना समिध्यते। तथा तृतीयं - 'दिवः वर्ष्मन्' ^v^अधि। तत उपरि पदे ^v^दिवः द्युलोकस्य वृष्टिना ^v^वर्ष्मन् वर्षिष्ठप्रदेशे आदित्यात्मना ऐश्वर्ये समिध्यते । एवं त्रिषु स्थानेषु इन्द्रः स्तूयते। यश्च 'ओजिष्ठश्चर्षणीसहाम्'। चर्षणयोः मनुष्यास्तान् सहन्ते अभिभवन्तीति चर्षणीसहाः। छान्दसो दीर्घः। ^v^चर्षणीसहां मध्ये ^v^ओजिष्ठः अतिशयेन बलवान् बलिष्ठः। 'वेत्वाज्यस्य'। ^v^आज्यस्य स्वमंशं ^v^वेतु। वी गतिव्याप्तिप्रजनकान्त्यवसादनखादनेषु। वेतु पिबतु भक्षयतु। आज्यस्येति कर्मणि षष्ठी। आज्यं वेतु। अतः त्वमपि हे ^v^होतः ^v^यज। याज्यमनुब्रूहि इति॥ १॥

6. S3 पाठस्तु होता ... यजेति for 'होता... पदे' इति ।
16. V2 पृथिव्यामन्तरिक्षे for पृथिव्याः

अ - सर्ववेदैकसंवेद्यं विष्णुं देवशिखामणिम्।
देशतः कालतश्चैव गुणतोऽनन्तमाश्रये॥ १॥

अथेदानीं त्रिंशोऽध्यायो व्याक्रियते । 'इन्द्रमिळः' सौत्रामणिकोऽध्याय इति कात्यायनोक्तेरयमध्यायः सौत्रामणीयागसंबन्धी । सौत्रामण्यङ्गभूतयोरैन्द्रवायोधसयोराद्यन्तपश्वोः प्रयाजानुयाजप्रैषरूपस्ततश्च प्रजापत्यश्विसरस्वत्योऽध्यायस्य ऋषयः । आद्येऽनुवाके एकादशैन्द्रपशोः संबन्धिनः आप्रीदेवताः समित्तनूनपादित्यादिदेवताकाश्च प्रयाजानां प्रैषाः कथ्यन्ते ॥

आर्षी त्रिष्टुप्। दैव्याः [v]होता [v]समिधा समिन्धनकाष्ठेन समिधा आप्रीदेवतया सहितं वा [v]इन्द्रं [v]यक्षत् यजतु। लेट्। "सिब्बहुलं लेटि" (पा ३.१.३४)। "लेटोऽडाटौ" (पा ३.४.९४)। "इतश्च लोपः परस्मैपदेषु" (पा ३.४.९७) इति रूपसिद्धिः। य इन्द्रस्त्रिषु स्थानेषु समिध्यते दीप्यते तत्र प्रथमः [v]इळः इडः [v]पृथिव्याः [v]पदे यजमानस्थाने अग्न्यात्मना समिध्यते । द्वितीयं [v]पृथिव्याः [v]नाभा नाभौ [v]अधि उपरि । अत्र पृथिवीशब्देनान्तरिक्षमुच्यते । अन्तरिक्षमध्योपरिदेशे विद्युदात्मना [v]समिध्यते । तृतीयं [v]दिवः [v]वर्ष्मन्। स्वर्गस्य वर्ष्मणि वर्षिष्ठे प्रदेशे आदित्यात्मना समिध्यते । कीदृशः ? 'चर्षणीसहाम् ओजिष्ठः' । चर्षणयो मनुष्यास्तान् सहन्ते अभिभवन्तीति चर्षणीसहः मनुष्याभिभावुकास्तेषां मध्ये ओजस्वितमः । अत्यन्तमोजस्वी [v]ओजिष्ठः । इष्ठन्प्रत्यये परे "विन्मतोर्लुक्" (पा ५.३.६५) इति विनो लुकि टिलोपे सति ओजिष्ठ इति रूपम् । दीर्घश्छान्दसः । एवंविध इन्द्र, [v]आजस्य [v]वेतु । कर्मणि षष्ठी । वी धातुः पानार्थः । आज्यं पिबतु । हे मनुष्य, [v]होतः त्वमपि [v]यज ॥१॥

होता॑ यक्षत् तनू॒नपा॑तमू॒तिभि॒र्जेता॑र॒मप॑राजितम् ।
इन्द्रं॑ दे॒वꣳस्व॒र्विदं॑ प॒थिभि॒र्मधु॑मत्तमै॒र्नरा॒शꣳसे॑न
तेज॑सा॒ वेत्वाज्य॑स्य॒ होत॒र्यज॑ ॥२॥

तनू॒नपा॑त॒मिति॒ तनू॒ऽनपा॑तम् । ऊ॒तिभि॒रित्यू॒तिऽभिः॑ । जेता॑रम् । अप॑राजित॒मित्यप॑राऽजितम् ।
इन्द्र॑म् । दे॒वम् । स्व॒र्वि॒द॒मिति॑ स्वः॒ऽविद॑म् । प॒थिभि॒रिति॑ प॒थिऽभिः॑ ।
मधु॑मत्तमै॒रिति॒ मधु॑मत्ऽतमैः । नरा॒शꣳसे॑न । तेज॑सा ॥ पं ॥ २ ॥

आ - 'होता यक्षत् तनूनपातमूतिभिः' इति। सतोबृहती यजुरन्ता। यश्च [v]होता [v]तनूनपातम् आप्रीदेवताम् इन्द्राख्यां वा [v]ऊतिभिः अवनैः सहितं [v]जेतारं जयस्य कर्तारम्। [v]अपराजितं अपरैर्जेतुमशक्यम् [v]स्वर्विदं स्वर्गस्य वेत्तारम् [v]इन्द्रं [v]देवं [v]यक्षत् यजतु। 'पथिभिः

1. P2 before सर्व° adds: श्री देवदेवाय नमः ॥
23. S3 पाठस्तु - होता... यजेति for 'होता... ऊतिभिः' इति ।
25. V2 यजकैः for यजतु

**प्रयाजप्रैषाः ]**

मधुमत्तमैः' पथिशब्देनात्र हवींष्युच्यन्ते। तैर्हि यजमानाः स्वर्गं भोक्तुमुत्पतन्तीति पन्थानो हवींषि। तैः $^{v}$मधुमत्तमैः अत्यतिशयेन मधुररसोपेतैः। $^{v}$नराशंसेन यज्ञेन संमितं $^{v}$तेजसा च सहितं इन्द्रं होता यक्षत्। 'वेतु आज्यस्य' । स्वमंशं $^{v}$वेतु पिबतु। अतस्त्वमपि $^{v}$होतः $^{v}$यज ॥ २॥

~~~~~~~~~~~~~~~~~~~~

**अ - 'होता यक्षत् तनूनपातम्'। अतिजगती। $^{v}$नराशंसेन देवेन युतं $^{v}$तनूनपातम् $^{v}$इन्द्रं च $^{v}$देवं $^{v}$होता $^{v}$यक्षत् यजतु । कैः ? $^{v}$पथिभिः। पथन्ति गच्छन्ति स्वर्गं यजमाना यैस्ते पन्थानो हवींषि, तैः। कीदृशैः? $^{v}$ऊतिभिः। अवन्ति तर्पयन्तीत्यूतयस्तैः। "ऊति यूति°" (पा ३.३.९७) इत्यादिना कर्तरि निपातः। तथा $^{v}$मधुमत्तमैः। मधुर्मधुरः स्वादोऽस्ति येषु ते मधुमन्तः। अत्यन्तं मधुमन्तो मधुमत्तमास्तैः। कीदृशमिन्द्रम्? $^{v}$तेजसा $^{v}$जेतारम्। शत्रूणाम् $^{v}$अपराजितम्। केनापि न पराभूतम्। $^{v}$स्वर्विदम्। स्वः स्वर्गं वेत्ति स्वीयं जानातीति स्वर्वित्, तम्। यद्वा - स्वः स्वर्गो विद्यते इति स्वर्वित्, तम्। विद सत्तायाम्। एवं देवद्वययुत इन्द्रः आज्यं $^{v}$वेतु। शेषं पूर्ववत्। अत्र तनूनपान्नराशंसावेकत्र प्रयाजे पठितावित्युभयवानयं प्रयाजः ॥२॥**

~~~~~~~~~~~~~~~~~~~~

**होता॑ यक्षदिळा॑भिरिन्द्र॑मीळितमाजुह्वा॑नमम॑र्त्यम्।**
**देवो देवैः सवी॑र्यो वज्र॑हस्तः पुरन्दरो वेत्वाज्य॑स्य होतर्यज॑ ॥३॥**

~~~~~~~~~~~~~~~~~~~~

इळा॑भिः। इन्द्र॑म्। ईळितम्। आजुह्वा॑नमित्याऽजुह्वा॑नम्। अम॑र्त्यम्।
देवः। देवैः। सवी॑र्य इति सऽवी॑र्यः। वज्र॑हस्त इति वज्र॑ऽहस्तः।
पुरन्दर इति॑ पुरम्ऽदरः ॥ त्रं॥ ३॥

~~~~~~~~~~~~~~~~~~~~

**आ** - 'होता यक्षदिळाभिरिन्द्रमीळितम्'। इन्द्रदेवत्या सतो बृहती यजुरन्ता। यश्च दैव्या $^{v}$होता $^{v}$इळाभिः प्रयाजदेवता सहितम् $^{v}$ईळितं स्तुतम् $^{v}$इन्द्रं $^{v}$यक्षत् यजतु। कथंभूतमिन्द्रम्? $^{v}$आजुह्वानम् यजमानेन आहूयमानम् । $^{v}$अमर्त्यं मरणधर्मशून्यम् $^{v}$इन्द्रं होता यक्षदिति संबन्धः। 'देवो देवैः सवीर्यो वज्रहस्तः' । $^{v}$देवैः वस्वादिभिः सहितः $^{v}$देवः $^{v}$सवीर्यः वीर्येण सहितः। $^{v}$वज्रहस्तः वज्रपाणिः । $^{v}$पुरंदरः। असुरपुराणां दारयिता पुरंदरः। $^{v}$वेतु $^{v}$आज्यस्य । स्वभागं वेतु पिबतु। अतस्त्वमपीन्द्रं $^{v}$होतः $^{v}$यज ॥ ३ ॥

~~~~~~~~~~~~~~~~~~~~

1. V2 हेतुभिः for तैर्हि
10. M4 वेद for देव°
17. S3 पाठस्तु-होता... यजेति for 'होता... ईळितम्'।
~~~~~~~~~~~~~~~~~~~~

अ – 'होता यक्षदिळाभिरिन्द्रम्' । ब्राह्मी उष्णिक् । $^{V}$होता $^{V}$इळाभिः प्रयाजदेवताभिः सह $^{V}$इन्द्रं यक्षत् । कीदृशमिन्द्रम् ? इळितम् । ऋत्विग्भिः स्तुतम् । $^{V}$आजुह्वानम् । देवानाह्वयन्तम् $^{V}$अमर्त्यम् अमरणधर्माणम् । ईदृशः देवः $^{V}$इन्द्रम् आज्यं $^{V}$वेतु । कीदृशः ? $^{V}$देवैः $^{V}$सवीर्यः । समानं वीर्यं यस्य सः। सर्वदेवेषु यादृशं वीर्यं तदेकस्मिन्निन्द्रे अस्तीत्यर्थः $^{V}$वज्रहस्तः । $^{V}$पुरंदरः । पुरं शत्रूणां नगरं दारयतीति तथा। नुमागमः । उक्तमन्यत् ॥३॥

---

होता॑ यक्षद्ब॒र्हिषीन्द्रं॒ निषद्व॒रं वृ॑ष॒भं नर्या॑पसम्।
वसु॑भी रु॒द्रैरा॑दि॒त्यैः स॒युग्भि॑र्ब॒र्हिरास॑दद्वे॒त्वाज्य॑स्य॒ होत॒र्यज॑॥४॥

---

ब॒र्हिषि॑ । इन्द्र॑म् । नि॒षद्व॑रम् । नि॒स॒द्व॒रमिति॑ नि॒सत्ऽव॒रम् ।
वृ॒ष॒भम् । नर्या॑पस॒मिति॒ नर्य॑ऽअपसम् ।
वसु॑भि॒रिति॒ वसु॑ -भिः । रु॒द्रैः । आ॒दि॒त्यैः ।
स॒युग्भि॒रिति॑ स॒युक्ऽभिः॑ । ब॒र्हिः । आ । अ॒स॒द॒त् ॥ निं ॥ ४ ॥

---

आ - होता यक्षद्बर्हिषीन्द्रं निषद्वरम्' इति । इन्द्रदेवत्या सतो बृहती यजुरन्ता । 'बर्हिषि इन्द्रम्' । प्रयाजदेवतायां $^{V}$बर्हिषि स्थितम् $^{V}$इन्द्रं यज्ञसाधनमिति प्रयाजदेवता प्रतीयते । कथंभूतमिन्द्रम्? $^{V}$निषद्वरम् । नितरां सीदन्तीति निषदः । निषदां वरं निषद्वरम् । $^{V}$वृषभं वर्षितारम् । $^{V}$नर्यापसम् । नृभ्यो हितं नर्यम् । अप इति कर्मनाम । नर्यम् अपः कर्म अस्येति नर्यापाः । तं नर्यापसम् । नराणां हितकारिणम् । इह $^{V}$होता $^{V}$यक्षत् इति संबन्धः । किं च । $^{V}$वसुभिः अष्टाभिः । $^{V}$रुद्रैः एकादशभिः । $^{V}$आदित्यैः द्वादशभिः । $^{V}$सयुग्भिः समानयोगैः । एतैः देवैः सह स्थितम् इन्द्रं $^{V}$बर्हिः $^{V}$आ $^{V}$सदत् । व्यत्ययः । आसीदतु । आगत्य च $^{V}$वेतु $^{V}$आज्यस्य स्वभागं वेतु पिबतु । अतस्त्वमपि $^{V}$होतः $^{V}$यज ॥ ४ ॥

---

12. S3 पाठस्तु – होता... यजेति for 'होता ... निषद्वरम्' इति।
14. V2 निषिदं, S3 निषदं for निषदः
15. V2 अपसम् for अपः; V2 नर्या अपः कर्माणि; S3 नर्या आपः कर्माणि for नर्यमपः कर्म

अ - 'होता यक्षद्बर्हिषीन्द्रम्' । Vआर्षी त्रिष्टुप् । Vबर्हिषि प्रयाजदेवतायां स्थितम् Vइन्द्रं Vहोता Vयक्षत् । कीदृशम्? Vनिषद्वरम् । निषीदन्तीति निषदः उपवेष्टारः, तेषां वरं श्रेष्ठम्। अचलासनमित्यर्थः। Vवृषभं Vवर्षितारम् । Vनर्यापसम् । नर्यं नरहितम् अपः कर्म यस्य तम् यजमानहितकारिणम् । स इन्द्रः Vवसुभिः Vआदित्यैः सवनत्रयदेवैः सहितः सन् Vबर्हिः यज्ञम् Vआसदत् आसीदतु आज्यं Vवेतु च । कीदृशैर्वस्वादिभिः। Vसयुग्भिः । सह युञ्जतीति सयुजस्तैः समानयोगैः ॥४॥

~~~~~~~~~~~~~~~~~~~~~~~~~~~

होता॑ यक्षदोजो न वीर्यं॒ सहो॒ द्वार॒ इन्द्र॑मवर्धयन्।
सुप्रायणा अस्मिन् यज्ञे वि श्र॑यन्तामृतावृधो
द्वार॒ इन्द्रा॑य मीढुषे व्यन्त्वाज्य॑स्य होतर्यजं ॥५॥

~~~~~~~~~~~~~~~~~~~~~~~~~~~

ओजः॑ । न । वीर्य॑म् । सहः॑ । द्वारः॑ । इन्द्र॑म् । अवर्धयन् ।
सुप्रायणाः । सुप्रायना इति॑ सुऽ प्रायनाः । अस्मिन् । यज्ञे । वि । श्रयन्ताम् ।
ऋतावृधः॑ । ऋतवृध इत्यृ॒तऽ वृधः॑ । द्वारः॑ ।
इन्द्रा॑य । मीळहुषे॑ । व्यन्तु॑ ॥ च्चैं ॥५॥

~~~~~~~~~~~~~~~~~~~~~~~~~~~

आ - 'होता यक्षदोजो न वीर्य॑म्'इति। इन्द्रदेवत्या सतोबृहती यजुरन्ता। 'होता यक्षत्'। दैव्यः 'होता ओजः न' । नकारः समुच्चयार्थे निपातः। Vओजः च Vवीर्यं च Vसहः च Vद्वारः चेत्येतानि Vहोता Vयक्षत् यजतु। (एवम्) एतानि इन्द्रियशरीरमनोबलानि समुच्चितानि। कस्माद्धेतोः यजतु। यतः एतानि होता Vइन्द्रम् Vअवर्धयन् वर्धयन्ति। इदानीं द्वार एवावयुत्य स्तौति। एवमनेन कर्मणा कृतकृत्या द्वारः। Vसुप्रायणाः। अय पय गतौ। सुप्रगमनाः। Vऋतावृधः। सत्यवृधः यज्ञवृधो वा। एवंगुणा यज्ञे गृहद्वारः। Vअस्मिन् Vयज्ञे Vविश्रयन्ताम् आस्थिता भवन्तु। ताश्च Vइन्द्राय Vमीळ्हुषे सेक्त्रे इन्द्राय इन्द्रार्थम्। 'व्यन्त्वाज्यस्य' । स्वभागं Vव्यन्तु पिवन्तु। हे मानुष, Vहोतः त्वमपि यज्ञं यजमानार्थे याज्यामनुब्रूहि॥५॥

~~~~~~~~~~~~~~~~~~~~~~~~~~~

13. S3 पाठस्तु - होता... यजेति for 'होता... वीर्यम्' इति
14. S3 trans होता यक्षत् after दैव्यो होता
15. S3 om. इन्द्रियशरीरमनोबलानि, V2, S3 समुच्चयानि for समुच्चितानि
16-17. S3 om. एवमनेन... द्वारः;
17. V2 सुप्रापणाः for सुप्रायणाः;
18. V2 trans एवमनेन... द्वारः after यज्ञवृधो वा ।

अ - 'होता यक्षदोजो न'। अतिजगती। नकारश्चकारार्थः। याः Vद्वारः प्रयाजदेवताः Vइन्द्रम् इन्द्रे Vओजः Vवीर्यं Vसहः च Vअवर्धयन्। ओज इन्द्रियबलम्। Vवीर्यं शरीरबलम्। Vसहः मनोबलम्। ता द्वारः Vहोता Vयक्षत्। ताश्च Vद्वारः Vइन्द्राय इन्द्रार्थं Vविश्रयन्ताम् विवृता भवन्तु। Vअस्मिन् Vयज्ञे Vआज्यस्य। आज्यं Vव्यन्तु पिबन्तु च। कीदृश्यो द्वारः? Vसुप्रायणाः। सुखेन प्रकृष्टम् अयनं गमनं यासु तास्तथा। विवृतत्वादित्यर्थः। Vऋतावृधः। ऋतं यज्ञं वर्धयन्ति ताः Vऋतावृधः। दीर्घश्छान्दसः। कीदृशे इन्द्राय? Vमीळ्हुषे मी ढुषे। मेहति सिञ्चतीति मीढ्वान्, तस्मै। क्वसन्तो निपातः। उदकस्य मनोरथस्य च सेक्त्रे ॥५॥

होता॑ यक्षदु॒षे इन्द्र॑स्य धे॒नू सु॒दु॒घे॑ मा॒तरा॑ म॒ही।
स॒वा॒त॒रौ॒ न तेज॑सा व॒त्समिन्द्र॑मवर्धतां॒ वी॒तामाज्य॑स्य॒ हो॒त॒र्यज॑ ॥६॥

उ॒षे इत्यु॒षे। इन्द्र॑स्य। धे॒नू इति॑ धे॒नू। सु॒दु॒घे इति॑ सु॒ऽदु॒घे॑। मा॒तरा॑। म॒ही इति॑ म॒ही।
स॒वा॒त॒रा इति॑ स॒ऽवा॒त॒रौ॑। न। तेज॑सा। व॒त्सम्।
इन्द्र॑म्। अ॒व॒र्ध॒ता॒म्॥ वी॒ता॒म् ॥ क्षीं ॥६॥

आ - 'होता यक्षदुषे इन्द्रस्य धेनू' इति। ऐन्द्री महाबृहती। 'होता यक्षदुषे'। नक्तोषसौ (? नक्तोषे) इति प्राप्ते पूर्वपदलोपः छान्दसः। नक्तोषसे Vइन्द्रस्य संबन्धिन्यौ Vधेनू। कथंभूते धेनू? Vसुदुघे सुदोहने। Vमातरा मातरौ। Vमही महत्यौ। Vसवातरौ। समानो वाता वत्सो ययोस्ते सवातरौ, एकशिशुके गावौ। वातृशब्दः वत्सवचनः। सवत्से समानवत्से। नकार उपमार्थीयः। समानवत्से इव स्थिते। Vइन्द्रस्य धेन्वौ दैव्या Vहोता Vयक्षत्। तां च धेनुं Vतेजसा Vवत्सम्। लुप्तोपममेतत्। कथमिव (वत्समिव)। स्थितम् Vइन्द्रम् Vअवर्धताम्। तव धेनू Vवीताम् Vआज्यस्य स्वभागं वीताम् पिबताम्। हे Vहोतः त्वमपि Vयज॥ ६॥

अ - 'होता यक्षदुषे इन्द्रस्य'। आर्षी त्रिष्टुप्। Vउषे। अत्र पूर्वपदलोपः। Vहोता Vउषे नक्तोषे यजतु। कीदृश्यौ ते? समानो वातरो (? वाता) वत्सो ययोस्ते Vसवातरौ। एकशिशुके गावौ। Vवत्सम्। लुप्तोपमा। वत्सं यथा वर्धयेते तथा Vइन्द्रं Vतेजसा Vअवर्धयताम्। अवर्धताम्। ते आज्यं Vवीताम् पिबताम्। कीदृश्यौ? Vइन्द्रस्य Vधेनू। धिनुतस्त Vधेनू। प्रीणयित्र्यौ। Vसुदुघे। सुष्ठु दुग्धस्ते सुदुघे। दुहः कप्। घादेशश्च। Vमातरा मातरौ। मातृवत् पालिके Vमही मह्यौ। महत्यौ ॥६॥

12. S3 पाठस्तु - होता ... यजेति for 'होता... धेनू' इति।
16. V2 स्थितौ for स्थिते
20. P2 M4 before समानो adds: ये ; P2 M4 तौ for ते; P2 M4 एकशिशुकौ नरौ for एकशिशुके गावौ; P2 M4 ययोस्तौ for ययोस्ते

होता॑ यक्षद्दैव्या होता॑रा भिषजा सखा॑या हविषेन्द्र॑ भिषज्यतः।
कवी देवौ प्रचे॑तसा इन्द्रा॑य धत्त इन्द्रियँ वीतामाज्यं॑स्य होतर्यजं ॥७॥

भिषजा॑। सखा॑या। हविषा॑। इन्द्र॑म्। भिषज्यतः।
कवी इति॑ कवी। देवौ। प्रचे॑तसा इति प्रऽचे॑तसौ। इन्द्रा॑य। धत्तः। इन्द्रियम्॥ छां॥। ७॥

आ - 'होता यक्षद्दैव्या होतारा' इति। ऐन्द्री जगती । $^{v}$दैव्या देवसंबन्धिनौ $^{v}$होतारा होतारौ। $^{v}$भिषजा भिषजौ। $^{v}$सखाया सखायौ। समानस्थानवन्तौ होतारौ भिषजौ दैवतवैद्यौ $^{v}$हविषा $^{v}$इन्द्रं $^{v}$भिषज्यतः इन्द्रस्य भेषजं कुरुतः । तौ होता यक्षदिति संबन्धः । यौ च $^{v}$कवी क्रान्तदर्शनौ देवनादिगुणयुक्तौ $^{v}$प्रचेतसा $^{v}$प्रचेतसौ प्रकृष्टप्रज्ञानौ । $^{v}$इन्द्राय इन्द्रियं वीर्यं $^{v}$धत्तः। तौ दैव्यौ होतारौ $^{v}$वीताम् $^{v}$आज्यस्य भागं वीतां पिबताम्। तस्मात् हे $^{v}$होतः $^{v}$यज ॥७॥

अ - 'होता यक्षद्दैव्या होतारा'। अतिजगती। $^{v}$दैव्या $^{v}$होतारा दैव्यौ होतारौ। अयमग्निरसौ च मध्यमो वायुस्तौ $^{v}$होता $^{v}$यक्षत्। यौ च $^{v}$हविषा $^{v}$इन्द्रं $^{v}$भिषज्यतः चिकित्सतः। भिषज् रुगजये। "कण्ड्वादिभ्यो यक्" (पा ३.१.२७) इति यक्। $^{v}$इन्द्राय इन्द्रियं वीर्यं $^{v}$धत्तः च तौ आज्यं $^{v}$वीताम्। कीदृशौ तौ? $^{v}$भिषजा भिषजौ चिकित्साकुशलौ। $^{v}$सखाया सखायौ अन्योन्यं स्नेहवन्तौ। $^{v}$कवी क्रान्तदर्शिनौ। $^{v}$देवौ दीप्यमानौ। $^{v}$प्रचेतसौ अत्युदारौ। पूर्वसवर्णदीर्घ आकारश्च यथायथं ज्ञेयौ ॥७॥

होता॑ यक्षत्तिस्रो देवीर्न भे॑षजं
त्रय॑स्त्रिधात॑वोऽपस इळा सर॑स्वती भार॑ती महीः ।
इन्द्र॑पत्नीर्हविष्म॑तीर्व्यन्त्वाज्यं॑स्य होतर्यजं ॥८॥

इळा॑। सर॑स्वती। भार॑ती। महीः॥
इन्द्र॑पत्नीरितीन्द्र॑ऽपत्नीः। हविष्म॑तीः॥ गे॥ ८॥

5. S3 पाठस्तु - होता... यजेति for 'होता - - होतारा' इति।
8. V2 °दर्शिनौ for °दर्शनौ

आ - 'होता यक्षत् तिस्रो देवीर्न भेषजम्' इति। ऐन्द्री जगती। Vहोता Vयक्षत् Vतिस्र Vदेवीः Vन। नकारः समुच्चयार्थः। Vभेषजं च·वीर्यं च औषधं च Vत्रयः Vत्रिधातवः। ये त्रयः त्रिधातवः त्रिषु धातवः त्रयाणां वा। अग्निवायुसूर्याणां धातवः। तेषां संबन्धिनः पदार्थविशेषाः। ते च । Vअपसः इति कर्मनाम । मत्वर्थलोपश्छान्दसः । अपस्विनः कर्मवन्तः । ते च त्रयः शीतोष्णवातवर्षाख्याः। तांश्च होता यक्षत् यजतु। तिस्रो देवीः। कतमा इति। Vइळा Vसरस्वती Vभारती Vमहीः महतीः Vइन्द्रपत्नीः इन्द्रस्य पालयित्रीः। Vहविष्मतीः च हविषासंयुक्ताश्च होता यक्षत्। एता देवताः Vव्यन्तु Vआज्यस्य स्वं स्वं भागं व्यन्तु पिबन्तु। अत एव Vहोतः त्वमपि ताः Vयज ॥८॥

अ - 'होता यक्षत् तिस्रो देवीः' । ब्राह्मी अनुष्टुप् भेषजं भेषजरूपाः । ये त्रयो लोकास्तान् Vइळा Vसरस्वती Vभारती इति Vतिसः Vदेवीः च Vहोता यजतु । ते चाज्यं Vव्यन्तु । नकारश्चार्थे । कीदृशास्त्रयः ? Vत्रिधातवः त्रयोऽग्निवायुसूर्या धातः । धर्तारो येषां ते । Vअपसः । पूर्वपदलोपः । स्वपसः शोभनकर्माणः। शीतोष्णवातवर्षादीनि लोकस्य कुर्वन्त इत्यर्थः । कीदृश्यस्तिस्रः । Vमहीः महत्यः । Vइन्द्रपत्नीः इन्द्रस्य पालयित्र्यः । Vहविष्मतीः । हविर्विद्यते यासां ताः हविष्मत्यः । विभक्तिव्यत्ययः ॥८॥

**होता यक्षत् त्वष्टारमिन्द्रं देवं भिषजंꣳसुयजं घृतश्रियम्।**
**पुरुरूपꣳ सुरेतसं मघोनमिन्द्राय त्वष्टा दधदिन्द्रियाणि वेत्वाज्यस्य होतर्यज ॥९॥**

त्वष्टारम्। इन्द्रम् । देवम् । भिषजम्।
सुयजमिति सुऽयजम् । घृतश्रियमिति घृतऽश्रियम्।
पुरुरूपमिति पुरुऽरूपम् । सुरेतसमिति सुऽरेतसम्। मघोनम्॥ वौ ॥ ९ ॥

आ - 'होता यक्षत् त्वष्टारमिन्द्रम्' इति। ऐन्द्री जगती। प्रयाजदेवता। Vदेवं Vभिषजम् भेषजस्य कर्तारम्। Vसुयजम् सुष्ठु यागस्य कर्तारम्। Vघृतश्रियम्। घृतेन श्रीर्यस्य सः। Vपुरुरूपम्। स्वसामर्थ्यान्नानारूपेण वर्तमानम्। Vसुरेतसम् शोभनवीर्यवन्तम्। Vमघोनम् मघं धनं

1. S3 पाठस्तु - होता ... यजेति for 'होता...भेषजम्' इति ।
19. S3 पाठस्तु - होता... यजेति for 'होता... इन्द्रम्' इति ।
20. V2 घृतश्रीः for घृतेन श्रीः

प्रयाजप्रैषाः]

अस्य विद्यत इति मघवा तं मघवानम् । मघोनमिति छान्दसम्। Vइन्द्रं परमैश्वर्ययुक्तं Vहोता Vयक्षत् इति संबन्धः। 'इन्द्राय त्वष्टा दधदिन्द्रियाणि'। अत्रेज्यमानो यः Vत्वष्टा सः Vइन्द्राय Vइन्द्रियाणि अनेकसामर्थ्यानि Vदधत् आज्यभागं Vवेतु पिबतु । अतः Vहोतः त्वं Vयज॥ ९॥

~~~~~~~~~~~~~~~~~~~~~

**अ - 'होता यक्षत् त्वष्टारमिन्द्रम्'। अतिजगती। Vहोता Vत्वष्टारं प्रयाजदेवं यजतु। कीदृशं Vत्वष्टारम्? Vइन्द्रम् परमैश्वर्यवन्तम्। Vदेवं दीव्यन्तम्। Vभिषजम्। रोगनिवर्तकम्। Vसुयुजम्। सुष्ठु इज्यते स सुयुजस्तम्। Vघृतश्रियम्। घृतेन श्रीः शोभा यस्य तम्। आज्यहविष्का हि प्रयाजाः। Vपुरुरूपम्। पुरूणि बहूनि रूपाणि यस्य तम्। Vसुरेतसम्। शोभनं रेतो यस्य तम्। Vमघोनं धनवन्तम्। सः Vत्वष्टा Vइन्द्राय Vइन्द्रियाणि वीर्याणि Vदधत् सन् आज्यं Vवेतु॥९॥**

~~~~~~~~~~~~~~~~~~~~~

**होता॑ य॒क्ष॒द्व॒न॒स्पतिं॑ँ श॒मि॒तारं॑ँ श॒तक्र॑तुं धि॒यो जो॒ष्टार॑मि॒न्द्रि॒यम्।**
**मध्वा॑ स॒म॒ञ्जन् प॒थि॒भिः॑ सु॒गेभि॒ः स्वदा॑ति य॒ज्ञं मधु॑ना घृ॒तेन॒**
**वेत्वाज्य॑स्य॒ होत॒र्यज॑ ॥१०॥**

~~~~~~~~~~~~~~~~~~~~~

धि॒यः। जो॒ष्टार॑म्। इ॒न्द्रि॒यम्।
मध्वा॑। स॒म॒ञ्जन्निति॑ स॒म्ऽ अ॒ञ्जन्। प॒थि॒भि॒रिति॑ प॒थिऽभिः॑।
सु॒गेभि॒रिति॑ सु॒ऽगेभिः॑। स्वदा॑ति। य॒ज्ञम्। मधु॑ना। घृ॒तेन॑ ॥ ङ्यां ॥१०॥

~~~~~~~~~~~~~~~~~~~~~

आ - 'होता यक्षद्वनस्पतिम्' इति। इन्द्रदेवत्या शक्वरी। Vवनस्पतिम् प्रयाजदेवताम्। •Vशमितारम् हविषां संस्कर्तारम्। Vशतक्रतुम् बहुकर्माणम्। Vधियाः जोष्टारम्। जुषी प्रीति सेवनयोः। बुद्धेः कर्मणश्च Vजोष्टारं सेवितारम्। Vइन्द्रियं वीर्यात्मकम्। इन्द्रं दैव्यः Vहोता Vयक्षत् यजतु। 'मध्वा समञ्जन् पथिभिः सुगेभिः'। Vमध्वा स्वादुभूतेन रसेन Vसमञ्जन् Vयज्ञं संरक्षयन्। इन्द्रः। Vपथिभिः Vसुगेभिः सुगमैर्मार्गैः Vस्वदाति। Vयज्ञं Vमधुना Vघृतेन मधुरसोपेतेन। यज्ञं स्वदाति स्वदातु, आस्वादनं करोतु। Vआज्यस्य भागं Vवेतु पिबतु। अतः Vहोतस्त्वमपि Vयज ॥१०॥

~~~~~~~~~~~~~~~~~~~~~

**अ - 'होता यक्षद्वनस्पतिम्'। शक्वरी। Vहोता Vवनस्पतिं प्रयाजदेवं यजतु। कीदृश्यम्? Vशमितारम्। उलूखलादिरूपेण हविषां संस्कर्तारम्। शतं क्रतवः कर्माणि यस्य तं Vशतक्रतुम्। Vधियः Vजोष्टारम् बुद्धेः सेवितारम्। Vइन्द्रियम् इन्द्रस्य हितम्। स त्वष्टा Vमध्वा Vमधुना मधुरेण Vघृतेन Vयज्ञं Vसमञ्जन् भक्षयन् सन् Vसुगेभिः सुगैः। भिस ऐसभावश्छान्दसः। सुगमैः। Vपथिभिः मार्गैः। Vयज्ञं Vस्वदाति स्वादयति देवान् प्रापयति। अन्तर्णीतण्यर्थः। स वनस्पतिराज्यं Vवेतु। सुखेन गम्यते येषु ते सुगाः। "सुदुरोरधिकरणे" (पा ३.२.४८ वा ३) इति गमेर्डप्रत्ययः॥१०॥**

~~~~~~~~~~~~~~~~~~~~~

2. V2 इन्द्रियं for इन्द्राय
24. M4 om. सन्

**होता यक्षदिन्द्रꣳ स्वाहाऽऽज्यस्य स्वाहा मेदसः स्वाहा स्तोकानाꣳ**
**स्वाहा स्वाहाकृतीनाꣳस्वाहा हव्यसूक्तीनाम् ।**
**स्वाहा देवा आज्यपा जुषाणा इन्द्र**
**आज्यस्य व्यन्तु होतर्यज ॥ ११॥ (१) ॥**

---

इन्द्रम्। स्वाहा। आज्यस्य। मेदसः। स्तोकानाम्। स्वाहाकृतीनामिति स्वाहाऽकृतीनाम्। हव्यसूक्तीनामिति हव्यऽ सूक्तीनाम्। देवाः। आज्यपा इत्याज्यऽपाः। जुषाणाः। इन्द्रः। आज्यस्य॥ णिम्॥ ११॥(१)॥

---

आ - 'होता यक्षदिन्द्र स्वाहा'इति। इन्द्रदेवत्या शक्वरी। यजूंषि वा । दैव्यः vहोता vइन्द्रं vयक्षत् यजतु। vस्वाहा इति होमार्थः। स्वाहाकारेण। vआज्यस्य आज्यदेवानां स्वाहाकारं करोतु। vमेदसः स्वाहाकारेण मेदसो देवतानां स्वाहा करोतु। vस्तोकानाम्। स्तोकाः बिन्दवः। तेषां vस्वाहा। स्वाहाकारेण च स्तोकदेवतानां च संस्थां करोतु। vस्वाहा vहव्यसूक्तीनाम्। धनवचनानां देवतानां स्वाहाकारेण संस्थां करोतु । 'स्वाहा देवाः आज्यपाः जुषाणाः इन्द्रः आज्यस्य' इति। आज्यं पिबतीति vआज्यपाः। प्रयाजदेवताः स्वाहाकारेण vजुषाणाः प्रीयमाणाः सेवमानाः वा vइन्द्रः चेत्येता देवता दैव्यो होता यक्षदिति संबन्धः। vआज्यस्य स्वं स्वं भागं vव्यन्तु पिबन्तु। अत एव हे vहोतः त्वमपि vयज। प्रयाजदेवतायाज्यामनुब्रूहि ॥ ११॥ (१)॥

---

**अ - 'होता यक्षदिन्द्रं स्वाहा'। शक्वरी। vहोता vइन्द्रं यजतु। स्वाहाकारेण देवान् vआज्यस्य यजतु । स्वाहाकारेण vमेदसः देवान् यजतु । स्वाहाकारेण vस्तोकानां सोमबिन्दूनां देवान् यजतु । स्वाहाकारेण vस्वाहाकृतीनां देवानाम्। षष्ठी द्वितीयार्थे। स्वाहाकृतीः। प्रयाजदेवताः यजतु। स्वाहाकारेण। vहव्यसूक्तींना हव्यसंबन्धिसुवचनान् देवान् यजतु। स्वाहाकारेण vआज्यपाः vदेवाः प्रयाजदेवाः vजुषाणाः प्रीयमाणाः सन्तो भवन्तः vइन्द्रः च आज्यं vव्यन्तु पिबन्तु ॥११॥**

**इति त्रिंशे प्रथमोऽनुवाकः॥१॥**

---

8. S3 पाठस्तु-होता... यजेति for 'होता - - स्वाहा' इति ।
10. V2.3 देवदेवतानां for देवतानां

(द्वितीयोऽनुवाकः।)

**देवं बर्हिरिन्द्रꣳ सुदेवं देवैर्वीरवत् स्तीर्णं वेद्यामवर्धयत्।**
**वस्तोर्वृतं प्राक्तोर्भृतꣳ राया बर्हिष्मतोऽत्यगाद्वसुवने वसुधेयस्य वेतु यज॥१॥**

देवम्। बर्हिः। इन्द्रम्। सुदेवमिति सुऽदेवम्। देवैः।
वीरवदिति वीरऽवत्। स्तीर्णम्। वेद्याम्। अवर्धयत्।
वस्तोः। वृतम्। प्र। अक्तोः। भृतम्।
राया। बर्हिष्मतः। अति। अगात्। ज्ञों। ॥१॥

आ - 'देवं बर्हिरिन्द्रꣳ सुदेवम्' इति। एकादशानुयाजप्रैषाः। ऐन्द्राः मैत्रावरुणोऽब्रवीत्। ऐन्द्री महासतो बृहती यजुरन्ता। 'देवं बर्हिः इन्द्रम्'। कथं भूतम् $^{V}$इन्द्रम्? $^{V}$सुदेवम्। शोभना मरुदादयो देवताः अस्येति सुदेवस्तं सुदेवम्। $^{V}$देवैः वस्वादिभिः सहितम् $^{V}$इन्द्रं $^{V}$बर्हिः प्रथमानुयाजदेवताः। यत् यज्ञसाधनं बर्हिः कथं भूतमिति। $^{V}$वीरवत्। हविषो दातृभिः वीरैः वीरवत् $^{V}$स्तीर्णं $^{V}$वेद्याम् आस्तीर्णम्। इदं बर्हिः इन्द्रम् $^{V}$अवर्धयत्। $^{V}$बर्हिः $^{V}$वस्तोः $^{V}$वृतम्। वस्तुरित्यहर्नाम। अहःसंबन्धि यत् वृतं वेद्यामावृतं यत् $^{V}$प्राक्तोः। अक्तुरिति रात्रिनाम। रात्रेः संबन्धि। यत् बर्हिः वेद्यां वृतम्। राधनेन हविर्लक्षणेन $^{V}$प्र $^{V}$भृतम्। प्रधारितं बर्हिः इन्द्रम्$^{V}$अवर्धयत् इति संबन्धः। किं च तद्बर्हिः $^{V}$बर्हिष्मतः ऋत्विग्यजमानात् बर्हिषा संयुक्तान् $^{V}$अत्यगात् अतिक्रान्तं भवति। अतिक्रम्य च संस्कारोत्कर्षात् बर्हिः $^{V}$वसुवने। वन षण संभक्तौ। व्यत्ययः। वसुवने वसुवननाय धनस्य संभजनार्थम्। $^{V}$वसुधेयस्य। व्यत्ययः। वसुनिधानाय धननिखननाय। एतदर्थं तद्बर्हिर्देवता $^{V}$वेतु स्वभागं पिबतु। हे $^{V}$होतः त्वमपि $^{V}$यज। अनुयाज्यामनुब्रूहीति संबन्धः॥१२॥

**अ - 'देवं बर्हिरिन्द्रम्'। इत आरभ्य एकादश ऐन्द्र-पशोः संबन्धिन एवानुयाजप्रैषाः। देवता बर्हिरादयः। मैत्रावरुणो वदति। $^{V}$बर्हिः ? $^{V}$देवम्। बर्हिः संज्ञानुयाजदेवता। $^{V}$इन्द्रम् $^{V}$अवर्धयत्। लकारव्यत्ययः। वर्धयति पुष्णाति। किं भूतं बर्हिः? $^{V}$सुदेवम्। शोभना देवा मरुदादयो यत्र तत्। तथा $^{V}$देवैः दीप्यमानैर्दातृभिः ऋत्विग्भिः $^{V}$वीरवत् वीरयुक्तम्। $^{V}$वेद्यां $^{V}$स्तीर्णम् आच्छादितम्। $^{V}$वस्तोः इत्यहर्नाम। वस्तोरहनि $^{V}$वृतं लूनम्। धातूनामनेकार्थत्वात्। $^{V}$अक्तोः इति रात्रिनाम। अक्तोः रात्रौ $^{V}$प्रभृतम्।**

8. S3 पाठस्तु-देवं... यजेति for 'देवं... सुदेवम्' इति।
17. V2 °निधनाय for °निधानाय; S3 om. धननिखननाय।
20. M4 om. बर्हिः देवम्।
22. M4 दृश्यमानैः for दीप्यमानैः

प्रकर्षेण धृतम्। यत् बर्हिः $^{V}$राया हविर्लक्षणेन धनेन $^{V}$बर्हिष्मतः बर्हियुक्तान् अन्यान् यागान् $^{V}$अत्यगात्। अतिक्रम्य स्थितम्। संस्कारोत्कर्षात्। तद्बर्हिः। $^{V}$वसुवने। वसुवनाय धनदानाय। $^{V}$वसुधेयस्य वसुधेयाय। वसुनो निधानाय। यजमानगृहे निखननाय च $^{V}$वेतु। आज्यं पिबतु। वसुधने वसुधेयस्येति सप्तमीषष्ठ्यौ चतुर्थ्यर्थे। हे मनुष्यहोतः, त्वमपि $^{V}$यज। एवमग्रेऽपि कण्डिकाशेषो व्याख्येयः ॥१॥

~~~~~~~~~~~~~~~~~~~~~~

देवीर्द्वार इन्द्रं᳡ संघाते वीड्वीर्यामन्नवर्धयन्।
आ वत्सेन तरुणेन कुमारेण च मीवतापार्वाण᳡
रेणुककाटं नुदन्तां वसुवने वसुधेयस्य व्यन्तु यज॥२॥

~~~~~~~~~~~~~~~~~~~~~~

इन्द्रम्। संघात इति सम्ऽघाते। वीड्वीः। यामन्। अवर्धयन्।
आ। वत्सेन। तरुणेन। कुमारेण। च। मीवता। अप। अर्वाणम्।
रेणुककाटमिति रेणुऽककाटम्। नुदन्ताम्॥ च्चुं॥२॥

~~~~~~~~~~~~~~~~~~~~~~

**आ** - 'देवीर्द्वार इन्द्रम्' इति। अनुष्टुप्-गायत्र्यौ मीलिते चेत् आनुष्टुभः प्रगाथः। इन्द्रदेवत्या। द्वार इति। यज्ञगृहद्वार उच्यन्ते। याः $^{V}$देवीः देव्यः $^{V}$द्वारः $^{V}$वीड्वीः वीड्व्यः अतिबलवत्यः दृढाः $^{V}$संघाते। देहलीकपाटपुटार्गलासंघाते सति द्वारः वीड्यो भवन्ति। न हि संघातमन्तरेण तासां दृढत्वमुपपद्यते। $^{V}$यामन्। व्यत्ययः। यामनि। कर्मप्राप्तौ सत्याम् $^{V}$इन्द्रम् $^{V}$अवर्धयन्। ताः इदानीम् आभिमुख्येन स्थित्वा $^{V}$वत्सेन पुत्रेण $^{V}$तरुणेन यूना $^{V}$कुमारेण किशोरेण च $^{V}$मीवता। मीङ् हिंसायाम्। मीवता हिंसावता च अप $^{V}$अर्वाणम्। अर्यते गम्यते अस्मिन्निति अर्वा। तं अर्वाणम्। $^{V}$रेणुककाटम्। काट इति कूपनाम। क शब्दः कुत्सार्थे। रेणुभिः पूर्णः कुत्सितः काटः कूपः रेणुककाटः। तं रेणुककाटम् $^{V}$अप $^{V}$नुदन्ताम्। इन्द्रस्य अश्वं रेणुककाटं कूपम् अपनुदन्ताम् प्रेरयन्तु। ताः द्वारः $^{V}$वसुवने वसुवननाय। $^{V}$वसुधेयस्य वसुनिधानाय $^{V}$व्यन्तु पिबन्तु। हे होतस्त्वमपि $^{V}$यज॥१३॥

~~~~~~~~~~~~~~~~~~~~~~

11. S3 पाठस्तु- देवीर्दारः.... यजेति for 'देवीर्द्वार इन्द्रम्' इति ; V2 मीलितौ for मीलिते
13. V2 संघातौ for संघाते
15. V2 युवा for यूना
19. V2 °निधनाय for °निधानाय

अनुयाजप्रैषाः]

अ - 'देवीर्द्वारः'। एकाधिका शक्वरी। यज्ञगृहद्वारोऽत्र देवताः। यच्छन्ति नियता भवन्ति ऋत्विजो यत्रेति याम। कर्म। तस्मिन् vयामन्। सप्तम्या लुक्। यमेरनिणप्रत्ययो वृद्धिश्च। यामनि कर्मणि याः vद्वारः देव्यः vइन्द्रम् vअवर्धयन्। कीदृश्यो द्वारः। vसंघाते देहलीकपाटद्वारशाखार्गलादिसमूहे संपन्ने सति vवीड्वीः वीड्व्यः दृढाः। संघातं विना द्वारदृढत्वाभावात्। ताः द्वारः vरेणुककाटम् vअप vनुदन्ताम्। काटः कूपः। कुत्सितः काटः ककाटः। रेणुभिः कृत्वा ककाटो रेणुककाटस्तम् अपनुदन्ताम् निवर्तयन्तु। किमित्यतो विशेषणमाह। vवत्सेन गोपुत्रेण। vतरुणेन vकुमारेण च बालेन वा। vआ आभिमुख्येन। vअर्वाणम्। अर्यते गम्यते यत्रेत्यर्वा, तम्। द्वाराभावे गोवत्सतरुणकुमारादीनां कूपपातः स्यादिति हेतोर्यज्ञद्वारस्य (स)त्त्वे सति तत्पूरणं युक्तमिति भावः। ऋ गतावित्यस्मात् "अन्येभ्योऽपि दृश्यन्ते" (पा. ३.२.७५) इति वनिप्प्रत्ययः। कीदृशेन वत्सादीना। vमीवता। मीञ् हिंसायाम्। मयनं मीः। क्विबन्तोऽयम्। मीर्विद्यते यस्येति मीवान्। तेन मीवता हिंसावता। हिंसाशीलाश्चञ्चला उच्चलन्तः vवत्साः कुमाराः। मत्तत्वात् तरुणाश्च। यत्र ते पतेयुस्तं कूपमपनुदन्ताम् इत्यर्थः। उपलक्षणमेतत्। यज्ञप्रजापशूनामनिष्टकराणि कूपादीनि मार्गादपनयन्त्वित्याशयः। ताः vव्यन्तु आज्यं पिबन्तु ॥२॥

**देवी उ॒षासा॒नक्तेन्द्रं॑ य॒ज्ञे प्र॑य॒त्य॑ह्वेताम्।**
**दैवी॒र्विश॒ः प्राया॑सिष्टा॒ᳪं सु॒प्री॑ते॒ सुधि॑ते वसु॒वनै॑ वसु॒धेय॑स्य वीता॒ँ यजं ॥३॥**

उ॒षासा॒नक्ता॑। उ॒षसा॒नक्तेत्यु॒षसा॒नक्ता॑। इन्द्र॑म्। य॒ज्ञे। प्र॒यती॒ति॑ प्र॒ऽय॒ति। अ॒ह्वे॒ता॒म्। दैवीः॑। विशः॑। प्र। अ॒या॒सि॒ष्टा॒म्। सु॒प्री॑ते॒ इ॒ति॒ सु-प्रीते। सु॒धि॑ते॒ इ॒ति॒ सु-धिते ॥ थिं ॥ ३ ॥

आ - 'देवी उषासानक्तेन्द्रम्'। पङ्क्त्युत्तरा त्रिष्टुभः आदावष्टिनस्त्रयः द्वौ दशकौ चेत्। इन्द्रदेवत्या। vदेवी vउषासानक्ता। देव्यौ उषाश्च नक्तं च रात्रिश्च। ते उभे उषसानक्ते इति प्राप्ते छान्दसं पदम् उषासानक्ता इति। vयज्ञे vप्रयति गच्छति सति प्रवर्तमाने vइन्द्रम् उषासानक्ते vअह्वेताम् आह्वयताम् आह्वानं कुरुताम्। ह्वेञ् स्पर्धायां शब्दे च। 'दैवीः विशः प्रायासिष्टाम्'। vदैवीः देव्यः vविशः च प्रजाः वसवो रुद्राः आदित्या विश्वेदेवा मरुत इत्याद्याः या देव्यः ताः प्रति vअयासिष्टाम्। अय पय गतौ। गतवत्यौ। स्वेन संभोगेन दैवीर्विशः प्रजाः प्रति एते देवते प्रकर्षेण गतवत्यौ। यद्वा दैवीर्विशः यज्ञाङ्गभूताः पशवः तान् प्रति उषासानक्ते अयासिष्टाम्। एवमिन्द्राह्वानेन vसुप्रीते सुष्ठु प्रीतिमापन्ने। vसुधिते सुधीते सुधियम् इते प्राप्ते। यद्वा सुधिते सुष्ठु इते उषासानक्ते।

17. S3 पाठस्तु-देवी... यजेति for 'देवी उषासानक्तेन्द्रम्'।
18-19. V2 उषासानक्ते इति प्राप्ते... उषासानक्ते इति for उषसानक्ते इति... उषासानक्ता इति।
19. V2 अति for सति

[V]वसुवने वसुवननाय। [V]वसुधेयस्य वसुनिधानाय [V]वीताम् पिबताम्। हे मानुषहोतः त्वमपि इन्द्रं [V]यज॥ १४॥

अ - 'देवी उषासानक्ता'। ब्राह्मी उष्णिक्। उषाश्च नक्ता च। उषासानक्ते ते एव [V]उषासानक्ता। विभक्तेराकारः। समासे उषःशब्दस्य उषसादेशः। दीर्घश्छान्दसः। अहोरात्राधिष्ठात्र्यौ [V]देवी देव्यौ। [V]यज्ञे [V]प्रयति प्रवर्तमाने सति। [V]इन्द्रम् [V]अह्वेताम् आहूतवत्यौ। प्रैतीति प्रयन्, तस्मिन्। प्रपूर्वादिणः शतृप्रत्ययः। उषासानक्ते [V]दैवीः देवसंबन्धिनीः [V]विशः प्रजाः [V]प्रायासिष्टाम् प्रगतवत्यौ। यातेर्लुङ्। वसवो रुद्रा आदित्या विश्वेदेवा मरुत इत्यादयो देवप्रजाः। ते [V]वीताम् पिबताम्। कीदृश्यौ? [V]सुप्रीते सुतृप्ते। [V]सुधिते सुतरां हिते ॥३॥

**देवी जोष्ट्री वसुंधिती देवमिन्द्रंमवर्धताम्। अयांव्यन्याऽघा द्वेषाꣳस्याऽन्या वंक्षद्वसु वार्याणि यजंमानाय शिक्षिते वंसुवनें वसुधेयंस्य वीताꣳ यजं ॥४॥**

वसुंधिती इति वसुंऽ धिती। देवम्। इन्द्रंम्। अवर्धताम्।
अयांवि। अन्या। अघा। द्वेषांꣳसि। आ। अन्या। वक्षत्।
वसुं। वार्यांणि। यजंमानाय। शिक्षिते इतिं शिक्षिते॥ ॥रूं॥ ॥४॥

**आ** - 'देवी जोष्ट्री वसुधिती' इति। इन्द्रदेवत्या जगती। इदानीं देवताविकल्पाः। [V]देवी देव्यौ। 'जोष्ट्री वसुधिती।' जोष्ट्र्यौ जोषयित्र्यौ द्यावापृथिव्यौ। [V]वसुधिती वसूनां धितिः धानं निधनं ययोस्ते वसुधित्यौ (?ती), वसूनां धारयित्र्यौ। ते देवनादिगुणयुक्तम् [V]इन्द्रम् [V]अवर्धताम्। 'अयाव्य॑व्यन्याऽघा द्वेषाꣳसि'। 'आऽअन्या।' अन्ययोः अनयोः द्यावापृक्षिव्योर्मध्ये [V]अन्या एका [V]अघा अघानि पापानि [V]अयावि। यु पृथग्भावे। पृथक्करोतु। यद्वा - अन्या अन्यया अयावि। पृथक्कृतम्। [V]द्वेषाꣳसि दौर्भाग्यानि च। [V]आ अन्या एका अघानि पृथक्करोतु। [V]अन्या [V]वक्षत् वहति। [V]वसु [V]वार्याणि। वरणीयानि। वसु धनम्। वसूनि [V]यजमानाय एका वक्षत् आवक्षत्,

1. V2 वि भूताम् for पिबताम्
14. S3 पाठस्तु-देवी... यजेति for 'देवी...वसुधिती' इति।
18. V2 after अयावि adds. अयासि, S3 वसु वार्याणि (अया) वि for अयावि
20. S3 om. वसु वार्याणि

आवहतु। एका यजमानाय वार्याणि वरणीयानि वरसंबन्धीनि वक्षत्। वसूनि वार्याणि आवक्षत्। आवदतु आवहतु वा। एवं vशिक्षिते। शिक्ष विद्योपादाने। एवं विद्योपादानकर्त्र्यौ द्यावापृथिव्यौ vवसुवने वसुधेयस्य vवीताम्। हे होतस्त्वमपि vयज॥ १५॥

अ - देवी जोष्ट्री। एकाधिका अतिजगती। vजोष्ट्री vदेवी। जोष्ट्र्यौ देव्यौ। vइन्द्रं vदेवम् अवर्धताम्। कीदृश्यौ? vवसुधिती। वसुनो धनस्य धितिर्धारणं ययोस्ते। तथा द्यावापृथिवीरूपे। तयोर्मध्ये vअन्या एका vअघा। अघानि पापानि vद्वेषांसि दौर्भाग्यानि च vअयावि। पृथग्भावे। दूरीकरोति। यौतेश्चिण्। लकारव्यत्ययः। vअन्या द्वितीया। vवार्याणि वरणीयानि। भोगयोग्यानि। vवसु वसूनि धनानि। vयजमानाय vआ vवक्षत् आवहति। कीदृश्यौ? vशिक्षिते। परमात्मना विदितवेद्ये ते vवीताम्॥४॥

देवी ऊर्जाहुती दुघे सुदुघे पयसेन्द्रमवर्धताम्।
इषमूर्जमन्या वक्षत् सग्धिं सपीतिमन्या नवेन पूर्वं
दयमाने पुराणेन नवमधातामूर्जमूर्जाहुती ऊर्जयमाने वसु वार्याणि
यजमानाय शिक्षिते वसुवने वसुधेयस्य वीतां यज॥५॥

सुदुघे इति सु-दुघे। पयसा। इषम्। ऊर्जम्। अन्या। वक्षत्। सग्धिम्। सपीतिमिति सऽपीतिम्। अन्या। नवेन। पूर्वम्। दयमाने इति दयमाने। पुराणेन। नवम्। अधाताम्। ऊर्जम्। ऊर्जाहुती इत्यूर्जाऽआहुती। ऊर्जयमाने इत्यूर्जयमाने। क्षों॥५॥

आ - 'देवी ऊर्जाहुती' इति। इन्द्रदेवत्या धृतिर्यजुरन्ता अनुयाज प्रैषोक्तदेवता। vदेवी ये देव्यौ। vऊर्जाहुती ऊर्जाहुत्यौ। vदुघे दोहनधर्मवत्यौ। (vसुदुघे साधुदोहने) ऊर्जाहुत्यौ vपयसा vइन्द्रम् vअवर्धताम्। अभिनिकृतवत्यौ। 'इषम् ऊर्जम्'। vइषम् अन्नम्। vऊर्जं तदुपसेचनं दध्यादि। अन्यद्वयोराहुत्योः एका vयजमानाय vवक्षत् आवहति। 'सग्धिं सपीतिमन्या'। vसग्धिं सभक्षणम्। समानभक्षणम्। vसपीतिम् vअन्या एका वक्षत् आ वहति। एवं vदयमाने दीयमाने vपूर्वम् vअन्या vनवेन अतिनवेन ऊर्जा पूर्वं पुराणम् ऊर्जम् अन्नं यजमानाय वक्षत् आवहति।

1. S3 om. वरणीयानि
17. S3 पाठस्तु-देवी... यजेति for 'देवी ऊर्जाहुती' इति; V2 निघृतिः for घृतिः
21. V2 after दीयमाने adds : अतिनवेन
22. S3 om. अतिनवेन

$^{v}$पुराणेन अन्नेन ऊर्जा च $^{v}$नवम्अन्नम् उपसेचनं च अन्या एका आवहति। एवं $^{v}$यजमानाय $^{v}$ऊर्जम्अन्नम् उपसेचनं च $^{v}$ऊर्जाहुती द्वे $^{v}$अधाताम्। यजमानाय अन्नरसदानं कुर्वीताम्। एवम् ऊर्जाहुती $^{v}$ऊर्जयमाने ऊर्जवदाचरमाणे $^{v}$वसु वसूनि धनानि $^{v}$वार्याणि वरसंबन्धीन्यन्नानि उत्कृष्टानि च वरणीयानि च वार्याणि वसूनि यजमानाय $^{v}$शिक्षिते विहिते ऊर्जाहुती अधाताम्। एवमूर्जाहुत्यौ $^{v}$वसुवने वसुवननाय $^{v}$वसुधेयस्य वसुनिधानाय च $^{v}$वीतां पिबताम्। हे होतस्त्वमपि $^{v}$यज ॥ ५ ॥

~~~~~~~~~~~~~~~~~~~~~~

अ - 'देवी ऊर्जाहुती'। विकृतिः अधस्तनमन्त्रोक्तदेवताविकल्पः । ऊर्जाहुत्यौ देव्यौ । ऊर्जा बलरूपा आहुतिराह्वानं ययोस्ते देव्यौ पूर्वप्रैषोक्ते । $^{v}$पयसा दुग्धेन $^{v}$इन्द्रम् $^{v}$अवर्धताम् अवर्धयताम् । "छन्दस्युभयथा" (पा ३.४.११७) इति शप आर्धधातुकत्वं णिचो लोपः । कीदृश्यौ ? $^{v}$दुघे । दुग्धस्ते दुघे। "दुहः कब्घश्च" (पा ३.२.७०) इति कप्। घादेशश्च। दोग्ध्र्यौ। "अनयोरनु सर्वाः प्रजाः संभोगमनु संभुञ्जते" (श ब्रा १.७.२.१६) इति श्रुतेः। $^{v}$सुदुघे साधुदोहने। तयोर्मध्ये $^{v}$अन्या एका $^{v}$देवी $^{v}$इषम् अन्नम् $^{v}$ऊर्जं दध्यादिकं $^{v}$वक्षत् वहति यजमानाय। $^{v}$अन्या द्वितीया तु $^{v}$सग्धिं $^{v}$सपीतिं च $^{v}$वक्षत्। समानाग्धिभोजनं सग्धिः। तां सग्धिम्। समाना पीतिः $^{v}$सपीतिः। तां $^{v}$सपीतिम्। पुत्रपौत्रादिभिः सह पानभोजने वहतीत्यर्थः। किं च। ये देव्यौ $^{v}$नवेन अन्नेन $^{v}$पूर्वं पुराणमन्नम् $^{v}$अधाताम्। $^{v}$पुराणेन अन्नेन $^{v}$नवम् अन्नम् अधाताम्। $^{v}$वार्याणि $^{v}$वसु वसूनि च अधाताम्। अन्नं धनं च अक्षयं कृतवत्यावित्यर्थः। कीदृश्यौ ? $^{v}$दयमाने। रक्षयन्त्यौ कृपयन्त्यौ वा । दयतेरनेकार्थत्वात् । $^{v}$ऊर्जाहुती । ऊर्जा युक्ता आहुतीर्होमो ययोऽस्ते । $^{v}$ऊर्जं दधिक्षीरादिरसम्। $^{v}$ऊर्जयमाने वर्धयन्त्यौ । $^{v}$शिक्षिते तत्त्वज्ञे । ते $^{v}$वीताम् पिबन्ताम् ॥५॥

~~~~~~~~~~~~~~~~~~~~~~

दे॒वा दैव्या॒ होता॑रा दे॒वमिन्द्रं॑मवर्धताम्।
ह॒ताघ॑शꣳसा॒ आऽभा॑र्ष्टां॒ वसु
वार्या॑णि॒ यज॑मानाय शिक्षि॒तौ॑ व॑सु॒वने॑ वसु॒धेय॑स्य वीता॒ँ यज॑ ॥६॥

~~~~~~~~~~~~~~~~~~~~~~

ह॒ताघ॑शꣳसा॒ इति॑ ह॒तऽअ॑घशꣳसौ। आ। अ॒भा॒र्ष्टा॒म्। शि॒क्षि॒तौ ॥ यु ॥ ६ ॥

~~~~~~~~~~~~~~~~~~~~~~

3. V2 संबन्धान्नानि for °संबन्धीन्यन्नानि
4. S3 om. वरणीयानि च, V2 वीर्याणि for वार्याणि
5. V2 °निधनाय for °निधानाय
11. M4 संभुञ्जतः ... for संभुञ्जन्ते
16. M4 after युक्ता ins. अत्र.

अनुयाजप्रैषाः ]

आ - 'देवा दैव्या होतारा'। ऐन्द्री जगती। Vदेवा Vदैव्या Vहोतारा। देवौ दैव्यौ होतारौ। Vदेवम् Vइन्द्रम् Vअवर्धताम्। Vहताघशꣳसा। अघं पापं शंसन्तीति अघशंसाः। हताः अघशंसाः याभ्यां तौ हताघशंसौ होतारौ Vयजमानाय Vवसु वसूनि। Vवार्याणि Vआभार्ष्टाम्। "हृग्रहोर्भश्छन्दसि" (पा ३.१.८४ वा १) इति हकारस्य भकारः। आ अभार्ष्टाम्। आहृतवन्तौ। Vशिक्षितौ। एवम् अवगतार्थौ। Vवसुवने Vवसुधेयस्य Vवीतां पिबताम्। Vयज। हे होतस्त्वमपि अनुयाज्यां ब्रूहि ॥ १७॥

अ - 'देवा दैव्या होतारा' । अतिजगती। एकः पार्थिवोऽग्निः अन्यो मध्यमो वायुः। इमौ देवौ दैव्यौ होतारौ Vइन्द्रं Vदेवम् Vअवर्धताम् । कीदृशौ Vहताघशंसौ । अघं पापं दुःखम् इच्छतीत्यघशंसः हतोऽघशंसो याभ्यां तौ, पापनिवारकौ । Vशिक्षितौ । किं च । Vयजमानाय । Vवार्याणि Vवसु वसूनि Vआऽभार्ष्टाम् आहार्ष्टाम् । आहृतवन्तौ । आङ्पूर्वाद्धरतेर्लृङ्, हस्य भः ॥६॥

**देवीस्तिस्रस्तिस्रो देवीः पतिमिन्द्रमवर्धयन्।**
**अस्पृक्षद्भारती दिवꣳ रुद्रैर्यज्ञꣳ सरस्वतीळा वसुमती गृहान्**
**वसुवने वसुधेयस्य व्यन्तु यज ॥७॥**

पतिम्। इन्द्रम्। अवर्धयन्।
अस्पृक्षत्। भारती। दिवम्। रुद्रैः। यज्ञम्। सरस्वती। इळा।
वसुमतीति वसुऽमती। गृहान्॥ क्लिं ॥७॥

आ - 'देवीस्तिस्रः' इति। इन्द्रदेवत्यानुष्टुभः। प्रगाथः। Vदेवीः Vतिस्रः Vतिस्रः Vदेवीः इत्यादरार्थो ऽयमभ्यासः। तिस्रो देव्यः Vपतिं देवतानां तिसृणां मध्ये भारती Vअस्पृक्षत् Vदिवम्। भरतः आदित्यः तद्वती भारती। आदित्यैः सहिता भारती दिवं स्पृशति। 'रुद्रैः यज्ञं सरस्वती'। Vरुद्रैः नाम देवैः सह Vसरस्वती Vयज्ञं शरीरम् अस्पृक्षत् स्पृशति। Vइळा Vवसुमती Vगृहान् अष्टौ वसवः अस्यां विद्यन्त इति वसुमती इळा अत्र वसुभिः सहिता गृहान् अस्पृक्षत् स्पृशति। Vवसुवने Vवसुधेयस्य Vव्यन्तु Vयज॥ १८॥

1. पाठस्तु - देवा... यजेति for 'देवा दैव्या होतारा' ।
6. V2 अनुपातं for अनुयाज्यां
8. M4 om. अघशंसौ
17. S3 पाठस्तु देवीः... यजेति for 'देवीस्तिस्रः' इति
19. V2 भारतः for भरतः
20. V2 आस्था, S3 आख्या for अस्यां

अ - 'देवीस्तिस्रस्तिस्रः'। अतिजगती। [v]तिस्रः देवीः देव्यः [v]पतिं पालकम् [v]इन्द्रम् [v]अवर्धयत्। तिस्रः [v]देवीः इति पुनर्वचनमादरार्थे। ता एवाह। [v]भारती [v]दिवं स्वर्गम् [v]अस्पृक्षत् स्पृशति। भरतो रविः, तदीया कान्तिर्भारतीत्यर्थः। [v]रुद्रैः सहिता [v]सरस्वती [v]यज्ञं स्पृशति। [v]वसुमती धनवती [v]इळा [v]गृहान् स्पृशति। गृहशब्देन भूलोकः। ताः [v]व्यन्तु ॥७॥

देव इन्द्रो नराशꣳसस्त्रिवरूथस्त्रिवन्धुरो देवमिन्द्रमवर्धयत्।
शतेन शितिपृष्ठानामाहितः सहस्रेण प्र वर्तते मित्रावरुणेदस्य होत्रमर्हतो
बृहस्पतिः स्तोत्रमश्विनाध्वर्यवँ वसुवने वसुधेयस्य वेतु यज ॥८॥

त्रिवरूथ इति त्रि ऽवरूथः। त्रिवन्धुर इति त्रिऽवन्धुरः।
शतेन। शितिपृष्ठानामिति शितिऽपृष्ठानाम्। आहितइत्याऽहितः।
सहस्रेण। प्र। वर्तते। मित्रावरुणा। इत्। अस्य। होत्रम्। अर्हतः। बृहस्पतिः।
स्तोत्रम्। अश्विना। आध्वर्यवम्॥ नैं ॥८॥

आ - 'देव इन्द्रो नराशꣳसः', इति। गायत्रीशक्वर्यात्मकः कश्चित् ऐन्द्रः प्रगाथः। [v]देवः [v]इन्द्रः यज्ञदेवता। [v]नराशꣳसः नराः। अस्मिन्नासीनाः शंसन्ति। परमैश्वर्ययुक्तः इन्द्रः [v]त्रिवरूथः। वरूथशब्दो गृहवचनः। त्रीणि वरूथानि अग्निवायुसूर्यलक्षणानि यस्य सः त्रिवरूथः। वन्धुरशब्दः सारथिनिवासस्थानवचनः। त्रयो वन्धुराः ऋग्यजुःसामलक्षणाः यस्य स त्रिवन्धुरः। एवगुणो य इन्द्रः परमेश्वरः [v]देवम् [v]इन्द्रम् [v]अवर्धयत्। सः [v]शतेन [v]शितिपृष्ठानां पशूनां शतेन पूर्वम् [v]आहितः ऐन्द्रे पदेऽपि स्थापितः [v]सहस्रेण [v]प्र वर्तते। पश्चात् यष्टव्यपशुसहस्रेण प्रवर्तते। [v]अस्य च यस्मिंश्चित् कर्मणि [v]मित्रावरुणा मित्रावरुणौ [v]इत् एव [v]होत्रं कर्म [v]अर्हतः। अस्य कर्मणि [v]बृहस्पतिः [v]स्तोत्रम् अर्हति [v]अश्विना अश्विनौ। [v]आध्वर्यवम् अध्वर्योः कर्म। अश्विनौ अर्हतः। एवंगुणः स इन्द्रः यजमानस्य [v]वसुवने [v]वसुधेयस्य [v]वेतु पिबतु। हे होतस्त्वमपि [v]यज ॥१९॥

अ - 'देव इन्द्रः'। कृतिः। नरा अस्मिन्नासीनाः शंसन्तीति [v]नराशंसः [v]यज्ञः देवः। [v]इन्द्रं [v]देवम् अवर्धयत्। कीदृश्यो नराशंसः? [v]इन्द्रः इन्दतीतीन्द्रः। ऐश्वर्यवान्। [v]त्रिवरूथः। वरूथं गृहम्। त्रीणि वरूथानि सदोहविर्धानाग्नीध्राणि यस्य सः। ([v]त्रिवन्धुरः) त्रीणि बन्धुराणि ऋग्यजुःसामलक्षणानि बन्धनानि यस्य सः।

12. S3 पाठस्तु - देवः ... यजेति for 'देव इन्द्रो नराशꣳसः' इति
18. V2 एतत् for इत्

अनुयाजप्रैषाः]

**स नराशंसः Vशितिपृष्ठानां Vशतेन Vआहितः सन् Vसहस्रेण गोसहस्रेण Vप्रवर्तते। शिति श्यामं पृष्ठं यासां ताः शितिपृष्ठाः गावः। तासां शतेन आहितः स्वर्गे स्थापितः। पश्चात् सहस्रेण यष्टव्यपशुसहस्रेण प्रवर्तते। Vमित्रावरुणा Vइत् । मित्रावरुणावेव Vअस्य नराशंसस्य Vहोत्रम् Vअर्हतः। होतृकर्मणि योग्यौ भवतः। Vबृहस्पतिः Vस्तोत्रम् औद्गात्रम् अर्हति। अश्विनौ अस्य Vआध्वर्यवम् अर्हतः। सः Vवेतु ॥८॥**

~~~~~~~~~~~~~~~~

**देवो देवैर्वनस्पतिर्हिरण्यपर्णो मधुशाखः सुपिप्पलो देवमिन्द्रमवर्धयत् ।**
**दिवमग्रेणास्पृक्षदाऽन्तरिक्षं पृथिवीमदृꣳहीद्वसुवने वसुधेयस्य वेतु यज ॥९॥**

~~~~~~~~~~~~~~~~

मधुशाख इति मधुऽशाखः। सुपिप्पल इति सुऽपिप्पलः॥
दिवम्। अग्रेण। अस्पृक्षत्। आ। अन्तरिक्षम्। पृथिवीम्। अदृꣳहीत्॥ छौं ॥९॥

~~~~~~~~~~~~~~~~

^

**आ** - 'देवो दैवैर्वनस्पतिर्हिरण्यपर्णः' इति। उष्णिगनुष्टुभात्मकस्त्विन्द्रदेवत्यः प्रगाथः। 'देवो देवः' इति यूप उच्यते। Vवनस्पतिः यः Vदेवः। वनस्पतिर्यूपः अनुयाजदेवतात्मकः। Vदेवैः Vहिरण्यपर्णः कृतः। वानस्पत्योर्यूपः Vदिवम् Vअग्रेण दिवम् Vअस्पृक्षत् स्पृशति। अन्तरिक्षं मध्येनेति शेषः। मध्यप्रदेशेन Vअन्तरिक्षम् अन्तरिक्षस्थानम् अस्पृक्षत् स्पृशति। Vपृथिवीम् मूलेनेति शेषः। स यूपः मूलप्रदेशेन पृथिवीं भूमिम् Vअदृꣳहीत् दृढीकुर्यात्। स च वनस्पतिः वसुवनाय वसुनिधानाय च आज्यभागं Vवेतु पिबतु। हे होतस्त्वमपि Vयज॥ २०॥

~~~~~~~~~~~~~~~~

^

**अ - 'देवो देवैः'। अतिशक्वरी। यूप उच्यते। Vवनस्पतिः Vदेवः Vदेवैः सह इन्द्रम् Vअवर्धयत्। कीदृशः? हिरण्यपर्णः। हिरण्मयानि पर्णानि यस्य। Vमधुशाखः। मधुर्मधुरा रसवती शाखा यस्य। Vसुपिप्पलः। शोभनानि पिप्पलानि फलानि यस्य। यो वनस्पतिः। Vअग्रेण Vदिवं स्वर्गम् Vअस्पृक्षत् स्पृशति। स्पृश स्पर्शने। अस्माल्लुङि "शल इगुपधादनिटः क्सः" (पा ३.१.४५) इति क्सप्रत्यय। Vअन्तरिक्षम् मध्येनेति शेषः। Vआः स्पृशति। Vपृथिवीम् Vअदृंहीत् दृढामकरोत्। उपरेणेति शेषः। "आऽन्तरिक्षं मध्येनाप्राः पृथिवीमुपरेणादृंहीः" (कासं ६.१.२) इति समानश्रुतेः। सः Vवेतु ॥९॥**

~~~~~~~~~~~~~~~~

4. M4 om. **औद्गात्रम्**
9. S3 **पाठस्तु-देवो...यजेति** for **'देवो... हिरण्यपर्णः' इति।**
13. V2 **°निधनाय** for **°निधानाय**
19. M4 **मध्येनाप्ताः** for **मध्येनाप्राः**
20. M4 om. **स वेतु**
~~~~~~~~~~~~~~~~

**देवं बर्हिर्वारितीनां देवमिन्द्रमवर्धयत्।**
**स्वासस्थमिन्द्रेणासन्नमन्या बर्हीꣳष्यभ्यभूद्वसुवने वसुधेयस्य वेतु यज ॥१०॥**

स्वासस्थमिति सुऽआसस्थम्। इन्द्रेण। आसन्नमित्याऽसन्नम्।
अन्या। बर्हीꣳषि। अभि। अभूत्॥ रैं ॥१०॥

**आ** - 'देवं बर्हिवारितीनाम्' इति। इन्द्रदेवत्या त्रिष्टुप। 'देवं बर्हिः' इति अनुयाजदेवता। यद् [V]बर्हिः [V]वारितीनां संबन्धि वाः वारि उदकम्। इण् गतौ। इतिर्गमनम्। (वारि) उदके इतिर्गमनं येषां दर्भाणां ते दर्भाः वारितयः। तेषां वारितीनां दर्भाणां संबन्धि यद्वारि। वारिणो दर्भा उद्गता इति श्रुतिप्रसिद्धाः इति। अनुयाजदेवता च बर्हिः। [V]देवम् [V]इन्द्रम् [V]अवर्धयत्। यच्च बर्हिः स्वासस्थाने अवस्थितं बर्हिः [V]स्वासस्थम्। [V]इन्द्रेण [V]आसन्नम् समीपस्थानमास्थितम्। समीपं तं प्राप्तं बर्हिः। [V]अन्या अन्यानि [V]हवींषि [V]अभ्यभूत् अभिभवति। तद्बर्हिः [V]वसुवने वसुवननाय .[V]वसुधेयस्य वसुनिधानाय च [V]वेतु पिबतु। हे होतस्त्वमपि [V]यज ॥२१॥

**अ** - 'देवं बर्हिः'। आर्षी त्रिष्टुप्। [V]बर्हिः [V]देवम्। बर्हिः संज्ञम् अनुयाजदैवतं कर्तृ। [V]इन्द्रं [V]देवम् [V]अवर्धयत्। [V]अन्या अन्यानि [V]बर्हीषि [V]अभ्यभूत् अभिभवति च। यतः [V]वारितीनाम् ओषधीनां मध्ये देवं दीप्यमानं श्रेष्ठम्। "ओषधीनां कुशाः श्रेष्ठाः" इति स्मृतेः। वारि जले इति गतिर्यासां ता वारितयः। जलाश्रया ओषधयः इति भावः। [V]स्वासस्थम्। सुखेन आसेन आसनेन स्थीयते यत्र तत् स्वासथ्यम्। [V]इन्द्रेण [V]आसन्नम् आश्रितम् ॥१०॥

**देवो अग्निः स्विष्टकृद्देवमिन्द्रमवर्धयत्।**
**स्विष्टं कुर्वन् स्विष्टकृत् स्विष्टमद्य करोतु नो वसुवने वसुधेयस्य वेतु यज ॥११॥**

स्विष्टमिति सुऽइष्टम्। कुर्वन्। स्विष्टकृदिति स्विष्टऽकृत्।
स्विष्टमिति सुऽइष्टम्। अद्य। करोतु। नः॥ द्यै ॥११॥

5. S3 पाठस्तु - देवं... यजेति for 'देवं बर्हिर्वारितीनाम्' इति।
8. V2 °प्रसिद्धः for °प्रसिद्धाः
11. V °निधनाय for °निधानाय

अनुयाजप्रैषाः ]

**आ** - 'देवो अग्निः स्विष्टकृत्'। अग्निदेवत्या त्रिष्टुप्। यो Vदेवः Vअग्निः Vस्विष्टकृत्। सुष्टु इष्टं यागं करोतीति स्विष्टकृत्। अनुयाजदेवता। V देवम् इVन्द्रम् अवर्धयत्। यश्च Vइष्टं स्वयं स्विष्टकृत्। स्विष्टं कुर्वन्। Vअद्य अस्मिन् कर्मणि Vस्विष्टं Vकरोतु। स च Vनः अस्माकं वसुवनाय वसुनिधनाय Vवेतु पिबतु। हे होतस्त्वमपि Vयज ॥ २२॥

**अ - 'देवो अग्निः'। आर्षी त्रिष्टुप्। Vस्विष्टकृत् Vअग्निः Vदेवः Vइन्द्रं Vदेवम् Vअवर्धयत्। सः Vनः अस्माकम् Vअद्य Vस्विष्टम् साधु इष्टं करोतु। कीदृशः? स्विष्टं कुर्वन्। स्विष्टकृत्। नाम्ना शोभनमिष्टं कर्तव्यमिति। तस्य अधिकारोऽस्ति ॥११॥**

**अग्निमद्य होतारमवृणीतायं यजमानः पचन् पक्तीः**
**पचन् पुरोळाशं बध्नन्निन्द्राय च्छागम् ।**
**सूपस्था अद्य देवो वनस्पतिरभवदिन्द्राय च्छागेन ।**
**अघत् तं मेदस्तः प्रति पचताग्रभीदवीवृधत् पुरोळाशेन । त्वामद्य ऋषे ॥१२॥(२)॥**

इन्द्राय। छागम्। इन्द्राय। छागेन। अघत्। तम्। मेदस्तः। प्रति। पचत। अगृभीत्। अवीवृधत। पुरोळाशेन ॥ शिं ॥ १२ ॥ (२)॥

**आ** - 'अग्निमद्य' इति। अत्रानुष्टुप्-जगत्योः प्रगाथ ऐन्द्रः। अग्निम् अद्य इत्यैन्द्रः प्रैषः। त्वाम् अद्येति प्रतीकः उभयत्रापि। अग्निम् अद्य इति। Vअयं Vयजमानः Vअद्य अस्मिन् अहनि Vअग्निं Vहोतारम् Vअवृणीत होतृवरणं कृतवान्। किं कुर्वन्? 'पचन् पक्तीः'। पचनीयविशेषानिति भावः। Vपचन् पाकं कुर्वन्। Vपचन् पुरोळाशं च पचन्। Vबध्नन् Vइन्द्राय Vछागं बध्नन् होतारम् अवृणीत। Vसूपस्थाः शोभनोपस्थानः Vदेवः वनस्पतिः Vअभवत्। Vइन्द्राय इन्द्रार्थं Vछागेन कारणभूतेन सूपस्थानो भव। 'अघत् तं मेदस्तः प्रति पचत'। Vतं पुरोळाशम् Vअघत् अभक्षयत्। Vमेदस्तः मेदसां मांसविशेषेण Vप्रतिपचत प्रतिपाकं कुरुत। Vअग्रभीत् तं अगृहीत्। किं च। Vअवीवृधत Vपुरोळाशेन पुरोडाशेन अभिवृद्धिं गमयत। Vत्वाम् Vअद्य Vऋषे मन्त्राणां द्रष्टः। त्वाम् अग्निं त्वां वृणे इति शेषः ॥ २३ ॥

^

1. S3 **पाठस्तु-देवो... यजेति** for **'देवो अग्निः स्विष्टकृत्'**
3. V2 **अथ** for **अद्य**
7. M4 **अस्तु** for **अस्ति**
14. S3 **पाठस्तु - अग्निम्... ऋषे इति** for **'अग्निमद्य' इति**
16. V2 after **कुर्वन्** adds: **इति;**
19. V2 before **अघत् तं** adds : **अद्य**

अ - 'अग्निमद्य'। एकाधिका जगती। सूपस्था ब्राह्मी उष्णिक्। त्वाम् अद्य एकाधिका विकृतिः। 'त्वाम् अद्य' इत्ययं प्रतीकः उभयत्राप्यैन्द्रपशुसंबन्धी सूक्तवाकप्रैषः। अनुवाकद्वयेऽपि सकलः पठनीयः। अयं Vयजमानः Vअद्य अस्मिन्नहनि Vअग्निं Vहोतारम् Vअवृणीत वृतवान्। वृणीतेर्लङ्। किं कुर्वन्? Vपक्तीः पाकान्। हविषां पाकान् Vपचन्। Vपुरोळाशं Vपचन्। Vइन्द्राय देवाय Vछागं Vबध्नन्। किं च। Vअद्य Vवनस्पतिः Vदेवः यूपः Vछागेन कृत्वा Vइन्द्राय Vसूपस्थाः। सुष्ठु उपस्थातव्यः अभवत्। अपि च इन्द्रः Vमेदस्तः। सार्वविभक्तिकस्तसिः। मेदो वपा। तामारभ्य Vतं छागम् Vअघत् अभक्षयत्। घस्लृ अदने। Vपचत पचतानि। पचतेरतच् प्रत्ययः औणादिकः। पक्वान्यवदानानि Vप्रति Vअग्रभीत् प्रतिजग्राह। Vपुरोळाशेन Vअवीवृधत। त्वाम् अद्येति व्याख्याता त्रयोविंशे ॥१२॥

इति त्रिंशे द्वितीयोऽनुवाकः ॥

(तृतीयोऽनुवाकः।)

होता यक्षत् समिधानं महद्यशः सुसमिद्धं वरेण्यमग्निमिन्द्रं वयोधसम्।
गायत्रीं छन्द इन्द्रियं त्र्यविं गां वयो दधद्वेत्वाज्यस्य होतर्यज ॥१॥

समिधानमिति सम्ऽइधानम्। महत्। यशः।
सुसमिद्धमिति सुऽसमिद्धम्। वरेण्यम्। अग्निम्। इन्द्रम्। वयोधसमिति वयःऽधसम्।
गायत्रीम्। छन्दः। इन्द्रियम्। त्र्यविमिति त्रिऽअविम्।
गाम्। वयः। दधत्॥ धूं॥ १॥

आ - 'होता यक्षत् समिधानं महद्यशः सुसमिद्धं वरेण्यमग्निमिन्द्रम्' इति। उष्णिग्गायत्र्यौ प्रग्रथनात् उष्णिहः प्रगाथः ऐन्द्रः। अत्रेन्द्राय वयोधसः पशुः संस्कार्यः। तत्रैते प्रयाजप्रैषाः। Vहोता Vयक्षत् दैव्यो होता Vसमिधानं संदीप्यमानं Vमहत् महान्तं Vयशः। यशसा युक्तं कीर्तिमन्तम्। Vसुसमिद्धं सुदीप्तम्। Vवरेण्यं वरणीयम्। Vअग्निम् अग्रे गन्तारं सर्वज्ञं परमैश्वर्ययुक्तम् Vइन्द्रं Vवयोधसम्। अतिदीर्घायुष्यसंपन्नमिन्द्रम् होता यक्षत् इति संबन्धः। किं कुर्वन् होता यक्षत्? Vगायत्रीम्। चतुर्विंशत्यक्षरात्मिकां गायत्रीम्। Vछन्दः Vइन्द्रियं सामर्थ्यं Vत्र्यविम्। मेषं त्रैवार्षिकं त्र्यविम्। Vगां पशुम्। Vवयः आयुश्च इन्द्रे इत्यध्याहारः। प्रकरणवशात्। Vदधत् धारयतु। स च प्रयाजदेवता इन्द्रः Vवेतु पिबतु। अन्यस्य स्वभागम् आज्यं वा हे Vहोतः त्वमपि Vयज ॥२४॥

8. M4 पुरोडाशेन for पुरोळाशेन
17. S3 पाठस्तु - होता ...यजेति for 'होता... इन्द्रम्' इति।

**अ - एकादश वयोधसे पशौ प्रयाजप्रैषाः । समित्तनूनपाताद्याऽऽप्रीदेवताः । 'होता यक्षत् समिधानम्'। अतिजगती । दैव्या vहोता vअग्निं vवयोधसम् vइन्द्रं च vयक्षत् यजतु । वयः आयुर्दधातीति वयोधास्तम् । आयुषो दातारं धारयितारं वा । कीदृशमग्निम् ? vसमिधानम् दीप्यमानम् । vमहत् vयशः। विभक्तिव्यत्ययः । महता vयशसा vसुसमिद्धम् दीप्तम् । vवरेण्यम् वरणीयम् । किं कुर्वन् यजतु । गायत्रीं छन्दः vइन्द्रियं वीर्यं vत्र्यविं vगां वयः आयुश्च दधत् स्थापयत् । इन्द्रे इति शेषः । षण्मासात्मकः कालोऽविरित्युच्यते । त्रयोऽवयो यस्यासा त्र्यविः । सार्धवत्सरा गौस्ताम् । सा प्रयाजदेवतेन्द्रयुता सती आज्यं vवेतु । हे मनुष्यहोतः त्वमपि vयज । एवमग्रेऽपि योज्यम् ॥१॥**

---

**होता॑ यक्षत् तनू॒नपा॑तमु॒द्भिदं॒ यं गर्भ॒मदि॑ति॒र्द॒धे शुचि॒मिन्द्र॑ वयो॒धस॑म्।**
**उ॒ष्णिह॒ छन्द॑ इन्द्रि॒यं दि॑त्य॒वाह॒ गां वयो॒ दध॒द्वेत्वाज्य॑स्य होत॒र्यज॑ ॥२॥**

---

तनू॒नपा॑त॒मिति॒ तनू॑ऽनपा॑तम्। उ॒द्भिद॒मित्यु॒त्ऽभिद॑म्।
यम्। गर्भ॑म्। अदि॑तिः। द॒धे। शुचि॑म्।
उ॒ष्णिह॑म्। दि॒त्य॒वाह॒मिति॑ दि॒त्य॒ऽवाह॑म्॥ टौ ॥२॥

---

**आ** - 'होता यक्षत् तनूनपातम्' इति। उष्णिग्गायत्र्यात्मिकः प्रगाथः इन्द्रदेवत्यः। vतनूनपातं प्रयाजदेवत्यम् vउद्भिदम् उद्भेत्तारम्। यज्ञफलानां चोद्भावकम्। कथंभूतमिति। vअदितिः देवमाता vयं vगर्भं vदधे स्वजठरे दधार धृतवती तं vशुचिं पवित्रं वयः आयुः धातव्यमस्मिन्निति वयोधाः। तं vवयोधसम्। तम् vइन्द्रं दैव्यो vहोता vयक्षत्। किं कुर्वन् होता यक्षत्। vउष्णिहम् अष्टाविंशत्यक्षरात्मिकां उष्णिहं vछन्द vइन्द्रियं वीर्यं vदित्यवाहम्। खण्डनार्हस्य वाहकं vगां vवयः च इन्द्रे vदधत् धारयतु। स च प्रयाजदेवता vवेतु। आज्यश्यांशं पिबतु। हे vहोतः त्वमपि vयज। वयोधस इन्द्रस्य प्रयाजदेवतायाः याज्यामनुब्रूहि ॥ २५॥

---

**अ - होता यक्षत् तनूनपातम् । एकाधिका जगती । vहोता vतनूनपातं प्रयाजदेवम् । vवयोधसम् vइन्द्रं च यजतु । vअदितिः vयं vगर्भं vदधे तमिन्द्रमित्यर्थः । vशुचिं पवित्रम् । कीदृशं vतनूनपातम्। vउद्भिदम् । उद्भिनत्ति प्रकटयति फलमिति उद्भित्, तम यज्ञफलानामुद्गातारम् । किं कुर्वन्? vउष्णिहं vछन्द vइन्द्रियं vदित्यवाहं vगां vवयः च इन्द्रे vदधत् । द्विवर्षो गौ दित्यवाट् । सेन्द्रो वेतु ॥२॥**

---

13. S3 पाठस्तु - होता... यजेति for 'होता यक्षत् तनूनपातम्' इति ।

[प्रयाजप्रैषाः

**होता॑ यक्षदी॒ळेन्यं॑मीळि॒तं वृ॒त्र॒हन्त॑ममि॒ळाभि॒रीड्यं॒ सह॒: सोम॒मिन्द्रं॑ वयो॒धस॑म्।**
**अ॒नु॒ष्टुभं॒ छन्द॑ इन्द्रि॒यं प॒ञ्चावि॒ं गां वयो॒ दध॒द्वेत्वाज्य॑स्य॒ होत॒र्यज॑ ॥३॥**

ई॒ळेन्य॑म्। ई॒ळि॒तम्। वृ॒त्र॒हन्त॑म॒मिति॑ वृ॒त्र॒हन्ऽत॑मम्। इ॒ळाभि॑:। ई॒ड्य॑म्। सह॑:। सोम॑म्॥
अ॒नु॒ष्टुभ॑म्। अ॒नु॒स्तु॒भ॒मित्य॑नु॒ऽस्तु॒भ॑म्। प॒ञ्चावि॒मिति॒ प॒ञ्च॑ऽअविम् ॥ ठौ ॥ ३ ॥

आ - 'होता यक्षदीळेन्यमीळितम्' इति। अनुष्टुप्गायत्र्यावत्र मीलितौ (ते)। तेन त्वानुष्टुभः प्रगाथः इन्द्रदेवत्यः। Vईळेन्यम् ईळनीयं स्तुत्यम्। Vईळितम् ऋषिभिः स्तुतम्। Vवृत्रहन्तमम् अतिशयेन वृत्रस्य हन्तारम्। Vइळाभिः। प्रयाजदेवताभिरिळाभिः Vईड्यम् स्तुत्यम्। सहः सहस्वन्तम्। Vसोमं सोमगुणयुक्तम्। Vवयोधसम् Vइन्द्रं दैव्यः Vहोता Vयक्षत् यक्षतु यजतु । किं कुर्वन्? होता यक्षत्। Vअनुष्टुभं द्वात्रिंशदक्षरात्मकं Vछन्दः Vइन्द्रियं वीर्यं Vपञ्चाविं पञ्चवार्षिकम् अविं मेषं Vगां Vवयः च Vदधत् धारयतु। होता यक्षत्। सा च प्रयाजदेवता। 'वेत्वाज्यस्य'। Vआज्यस्य Vवेतु पिबतु। हे Vहोतः त्वमपि Vयज ॥ २६ ॥

**अ - 'होता यक्षदीळेन्यम्'। व्यूहेन शक्वरी। Vहोता Vइळाभिः प्रयाजदेवताभिः सह Vवयोधसम् Vइन्द्रं यजतु। कीदृशमिन्द्रम्। Vईळेन्यम्। ईळितुं योग्य ईळेन्यस्तम्। ईड स्तुतौ। अस्मादर्हार्थे एन्यप्रत्ययः। Vईळितम् । ऋषिभिः स्तुतम् । Vवृत्रहन्तमम् । अत्यन्तं वृत्रं हतवान् वृत्रहन्तमस्तम्। "नाद्घस्य" (पा ८.२.१७) इति नुडागमः। ईड्यं सर्वैः स्तुत्यम् । Vसहः सहसा बलेन । Vसोमं यज्वानम् । सोमवदाह्लादकम्। किं Vअनुष्टुभं Vछन्दः Vइन्द्रियं Vपञ्चाविं Vगां Vवयः च इन्द्रे Vदधत्। पञ्चवयो यस्याः सा। सार्धद्विवर्षा गौः। सः Vवेतु ॥३॥**

**होता॑ यक्षत् सु॒ब॒र्हिषं॑ पू॒ष॒ण्वन्त॒मम॑र्त्य॒ꣳ सीद॑न्तं ब॒र्हिषि॑ प्रि॒येऽमृ॒तेन्द्रं॑ वयो॒धस॑म्।**
**बृ॒ह॒तीं छन्द॑ इन्द्रि॒यं त्रि॒व॒त्सं गां वयो॒ दध॒द्वेत्वाज्य॑स्य॒ होत॒र्यज॑ ॥४॥**

सु॒ब॒र्हि॒ष॒मिति॑ सु॒ऽब॒र्हिष॑म्। पू॒ष॒ण्वन्त॒मिति॑ पू॒ष॒ण्ऽवन्त॑म्। अम॑र्त्यम्।
सीद॑न्तम्। ब॒र्हिषि॑। प्रि॒ये। अ॒मृता॑॥
बृ॒ह॒तीम्। त्रि॒व॒त्समिति॑ त्रि॒ऽव॒त्सम्॥ लौ ॥ ४ ॥

5. S3 पाठस्तु-होता... यजेति for 'होता... ईळितम्' इति, V2 मिलितौ for मीलितौ
6. V2 स्तुतम् for स्तुत्यम्
9. V2 before अविं adds इन्द्रं

प्रयाजप्रैषाः]

**आ** - 'होता यक्षत् सुबर्हिषम्' इति। अनुष्टुप्-गायत्र्यात्मकम्। त्वानुष्टुभः प्रगाथश्चैन्द्रः। Vसुबर्हिषं Vपूषण्वन्तम्। पूष्णा संयुक्तम्। Vअमर्त्यम् अमरणधर्माणम्। Vप्रिये Vबर्हिषि Vसीदन्तम् Vअमृता प्रयाजदेवता। तं Vवयोधसम् Vइन्द्रं दैव्यः Vहोता Vयक्षत् यजतु। किं कुर्वन्? Vबृहतीं षट्त्रिंशदक्षरात्मिकाम्। Vछन्दः Vइन्द्रियं वीर्यम्। Vत्रिवत्सं त्रिवार्षिकं Vगाम्। त्रयो वत्सा यस्य स त्रिवत्सः तम् इति वा। Vवयः च Vदधत् इन्द्रे स्थापयतु। होता यक्षदिति संबन्धः। सा च प्रयाजदेवता Vवेतु आज्यस्य स्वं भागं वेतु। हे Vहोतस्त्वमपि Vयज ॥ २७॥

**अ** - 'होता यक्षत् सुबर्हिषम्'। शक्वरी। Vहोता Vवयोधसम् Vइन्द्रं यजतु। कीदृशम्? Vसुबर्हिषम्। शोभनं बर्हिः प्रयाजदेवता यस्य सः तम्। Vपूषण्वन्तम्। पूषा अस्यास्तीति पूषण्वांस्तम्। पूष्णा युक्तम्। Vअमर्त्यम् अमरणधर्माणम्। Vप्रिये रुचिते। Vअमृता। अमृते अनश्वरे Vबर्हिषि Vसीदन्तं तिष्ठन्तम्। सप्तम्या आकारः। किं कुर्वन्। Vबृहतीं Vछन्दः Vइन्द्रियं Vत्रिवत्सं Vगां Vवयः च इन्द्रे Vदधत्। वत्सो वत्सरः। त्रयो वत्साः यस्य सः। त्रिवर्षो वृष इत्यर्थः ॥४॥

**होता यक्षद्व्यचस्वतीः सुप्रायणा ऋतावृधो**
**द्वारो देवीर्हिरण्ययीर्ब्रह्माणमिन्द्रं वयोधसम्।**
**पङ्क्तिं छन्द इहेन्द्रियं तुर्यवाहं गां वयो दधद्व्यन्त्वाज्यस्य होतर्यज ॥५॥**

व्यचस्वतीः। सुप्रायणाः। सुप्रायना इति सुऽप्रायनाः। ऋतावृधः। ऋतवृध इत्यृतऽवृधः।
द्वारः। देवीः। हिरण्ययीः। ब्रह्माणम्।
पङ्क्तिम्। इह। तुर्यवाहमिति तुर्यऽवाहम्॥ द्वां॥ ५॥

**आ** - 'होता यक्षद्व्यचस्वतीः सुप्रायणाः' इति। अनुष्टुभ प्रगाथो यमैन्द्रदेवत्यः। व्यचस्वतीः। बहुविधाञ्चनवतीः। अञ्चु गतिपूजनयोः। बहुविधगमनवतीः। सुप्रायणाः शोभनप्रगमनाः। Vऋतावृधः सत्यवृधः यज्ञवृधौ वा। Vहिरण्ययीः हिरणमयीः Vद्वारः Vदेवीः। यज्ञगृहद्वारदेवताः यज्ञफलस्य दात्रीः प्रयाजदेवताः। Vब्रह्माणं परिवृढम्। Vवयोधसम् Vइन्द्रं दैव्यः Vहोता Vयक्षत्। किं कुर्वन्? Vपङ्क्तिं। चत्वारिंशदक्षरात्मिका पङ्क्तिः। Vछन्दः Vइह द्वाःसु द्वारेषु। Vइन्द्रियं Vतुर्यवाहं चतुर्थं भागम्। Vगां च Vवयः च Vदधत् स्थापयतु। होता यक्षदिति संबन्धः। ताश्च द्वारो देवीः देव्यः Vआज्यस्य स्वं भागं Vव्यन्तु पिबन्तु। हे Vहोतः त्वमपि Vयज ॥ २८॥

1. S3 होता...यजेति for 'होता यक्षत् सुबर्हिषम्' इति, V2 त्वानुष्टुभं for त्वानुष्टुभः
3. V2 after कुर्वन् ins. इति
18. S3 पाठस्तु - होता... यजेति for 'होता...सुप्रायणाः' इति
19. S3 om. अञ्चु गतिपूजनयोः
22. V2 after कुर्वन् adds. इति

अ - 'होता यक्षत् व्यचस्वतीः सुप्रायणाः' । अतिशक्वरी । Vहोता Vद्वारः Vदेवीः । Vब्रह्माणं परिबृंहणम् । Vवयोधसम् Vइन्द्रं च यजतु । कीदृशीर्द्वारः ? Vव्यचस्वतीः। व्यचो व्यञ्चनं गमनावकाशो विद्यते यासु ताः । अत एव Vसुप्रायणाः । शोभनं प्रकर्षेण अयनं गमनं यासु ताः । Vऋतावृधः सत्यस्य वर्धयित्रीः। Vहिरण्ययीः हिरणमयीः हिरण्यवदुज्ज्वलाः । किं कुर्वन्? Vपङ्क्तिः Vछन्दः Vइन्द्रियं Vतुर्यवाहं Vगां Vवयः च Vइह इन्द्रे Vदधत् । सार्धत्रिवर्षो गौस्तुर्यवाट्। तुर्यं चतुर्थं वर्षं वहतीति व्युत्पत्तेः। ताः Vव्यन्तु ॥५॥

होता॑ यक्षत् सु॒पेश॑सा सु॒शि॒ल्पे बृ॒ह॒ती
उ॒भे नक्तो॒षासा॒ न द॑र्श॒ते विश्व॒मिन्द्रँ॑ वयो॒धस॑म्।
त्रि॒ष्टु॒भं छन्द॑ इ॒हेन्द्रि॒यं प॑ष्ठ॒वाहं॒ गां वयो॒
दध॑द्वी॒तामाज्य॑स्य॒ होत॒र्यज॑ ॥६॥

सु॒पेश॒सेति॑ सु॒ऽपेश॑सा। सु॒शि॒ल्पे इति॑ सु॒ऽशि॒ल्पे। बृ॒ह॒ती इति॑ बृ॒ह॒ती।
उ॒भे इत्यु॒भे। नक्तो॒षसा॑। नक्तो॒षसेति॒ नक्तो॒षसा॑। न। द॒र्श॒ते इति॑ द॒र्श॒ते। विश्व॑म्।
त्रि॒ष्टुभ॑म्। त्रि॒स्तु॒भमिति॑ त्रि॒ऽस्तुभ॑म्। प॒ष्ठ॒वाह॒मिति॑ प॒ष्ठ॒ऽवाह॑म्। लँ ॥६॥

आ - 'होता यक्षत् सुपेशसा' इति। आनुष्टुभः प्रगाथोऽयमिन्द्रदेवत्यः। दैव्यः Vहोता Vयक्षत् Vसुपेशसा । पेश इति रूपनाम। सुपेशसे सुरूपिण्यौ Vसुशिल्पे यद्वै प्रतिरूपं तत् सुशिल्पम् इति शोभनप्रतिरूपवत्यौ। Vबृहती बृहत्यौ। Vनक्तोषासा नक्तोषसे रात्र्यहनी ते देवते Vउभे च द्वे। Vन। नकारश्चार्थः। (Vदर्शते) दर्शनीये Vविश्वं सर्वात्मकं Vवयोधसम् Vइन्द्रं च होता यक्षत् यजतु। किं कुर्वन्? Vत्रिष्टुभम्। त्रिष्टुप् Vछन्दः चतुश्चत्वारिंशदक्षरात्मिका। त्रिष्टुभं छन्दः Vइन्द्रियं Vपष्ठवाहं युगपार्श्वकं Vगां Vवयः च Vदधत् स्थापयतु। होता यक्षदिति संबन्धः। ते च प्रयाजदेवतोषासानक्ते Vआज्यस्य स्वं भागं Vवीताम् पिबताम्। हे Vहोतःत्वमपि Vयज ॥२९॥

अ - 'होता यक्षत् सुपेशसा सुशिल्पे' । अतिशक्वरी । Vहोता Vउभे नक्तोषासा नक्तोषसौ देव्यौ Vविश्वं सर्वात्मकं Vवयोधसम् Vइन्द्रं च यजतु । नक्ता रात्रिः । उषाः रात्रेरपरभागः । नकारश्चार्थः । कीदृश्यौ ? Vसुपेशसा सुपेशसौ । पेश इति रूपनाम । सुरूपे Vसुशिल्पे । "यद्वै प्रतिरूपं तच्छिल्पम्" (शब्रा ३.२.१.५) इति श्रुतेः । सुष्ठु शिल्पं प्रतिरूपं ययोस्ते । Vबृहती बृहत्यौ । Vदर्शते दर्शनीये । दृशिर् प्रेक्षणे । अस्मादच्प्रत्ययः। "पुगन्तलघूपधस्य च"(पा ७.३.८६ )इति गुणः। किं कुर्वन् ?त्रिष्टुप् Vछन्दः। Vइन्द्रियं Vपष्ठवाहं Vगां Vवयः च Vइह इन्द्रे Vदधत् । पष्ठं पञ्चमं वर्षं वहतीति पष्ठवाट् । ते Vवीताम् ॥६॥

4. M4 om. हिरणमयीः
13. S3 पाठस्तु - होता... यजेति for 'होता यक्षत् सुपेशसा'इति ।
14. V2 च द्वे प्रतिरूपे for यद्वै प्रतिरूपं

**होता॑ यक्षत् प्रचे॑तसा दे॒वाना॑मुत्त॒मं यशो॒ होता॑रा दैव्या॑ क॒वी स॒युजेन्द्रं॑ वयो॒धसं॑म्। जग॑तीं॒ छन्दं॑ इन्द्रि॒यम॑न॒ड्वाहं॒ गां वयो॒ दध॑द्वी॒तामाज्यं॑स्य॒ होत॒र्यजं॥७॥**

प्रचे॑त॒सेति॒ प्रऽचे॑तसा। दे॒वाना॑म्। उत्त॒ममित्युं॑त्ऽत॒मम्। यशः॑।
होता॑रा। दैव्या॑। क॒वी इति॑ क॒वी। स॒युजेति॑ स॒ऽयुजा॑।
जग॑तीम्। अ॒न॒ड्वाह॑म्॥ तं॥७॥

आ - 'होता यक्षत् प्रचेतसा' इति। वयोधसेन्द्रदेवत्य आनुष्टुभः। प्रगाथः। दैव्यः Vहोता Vप्रचेतसा। प्रचेतसौ प्रकृष्टप्रज्ञौ। अग्निश्च वायुश्चेति। तौ Vदेवानां मध्ये Vउत्तमं Vयशः। छान्दसं पदम्। उत्तमौ यशस्विनौ। Vहोतारा होतारौ Vदैव्या दैव्यौ। Vकवी क्रान्तदर्शिनौ। Vसयुजा सयुजौ। समानयोगवन्तौ। Vवयोधसम् आयुषो धातारम्। Vइन्द्रं च होता Vयक्षत्। किं कुर्वन् Vजगतीम्। अष्टाचत्वारिंशदक्षरा जगती। Vछन्दः Vइन्द्रियम् इन्द्रार्हम्। (Vअनड्वहम्) अनसो वहनदक्षम्। Vगां Vवयः च इन्द्रे Vदधत् स्थापयतु। होता यक्षदिति संबन्धः। तौ च प्रचेतसौ प्रयाजदेवते Vवीताम् Vआज्यस्य स्वभागं Vवीताम्। हे Vहोतस्त्वमपि Vयज॥३०॥

**अ - 'होता यक्षत् प्रचेतसा देवानाम्'। एकाधिका शक्वरी। Vहोता। Vदैव्या Vहोतारा। दैव्यौ होतारौ। अग्निवायू। Vवयोधसम् Vइन्द्रं च यजतु। कीदृश्यौ? Vप्रचेतसा। प्रचेतसौ प्रकृष्टज्ञानौ। Vदेवानाम् Vउत्तमं Vयशः। पुञ्जीकृतदेवयशःस्वरूपौ। Vकवी क्रान्तदर्शिनौ। सयुजौ। सहयुज्येते Vतौ समानयोगौ। किं कुर्वन्? Vजगतीं Vछन्दः इन्द्रियम् Vअनड्वाहं Vगां Vवयः च इन्द्रे Vदधत्। अनः शकटं वहतीति अनड्वान्। शकटवाहक्षमो वृषः। अनसः सकारस्य वहतौ डकारादेशः। तौ Vवीताम्॥७॥**

**होता॑ यक्षत् पेश॑स्वतीस्ति॒स्रो दे॒वीर्हि॑र॒ण्ययी॒र्भार॑तीर्बृह॒तीर्म॒हीः पति॒मिन्द्रं॑ वयो॒धसं॑म्। वि॒राजं॒ छन्दं॑ इ॒हेन्द्रि॒यं धे॒नुं गां न वयो॒ दध॒द्व्यन्त्वाज्यं॑स्य॒ होत॒र्यजं॥८॥**

पेश॑स्वतीः। ति॒स्रः। दे॒वीः। हि॒र॒ण्ययीः॑। भार॑तीः। बृ॒ह॒तीः। म॒हीः। पति॑म्।
वि॒राज॒मिति॑ वि॒ऽराज॑म्। धे॒नुम्। न॥ स्रां॥८॥

6. S3 पाठस्तु - होता ... यजेति for 'होता यक्षत् प्रचेतसा' इति।
8. S3 om. होतारा

**आ** - 'होता यक्षत् पेशस्वतीः' इति। इन्द्रदेवत्यानुष्टुभः प्रगाथः। दैव्यः $^{v}$होता $^{v}$यक्षत् $^{v}$पेशस्वतीः रूपातिशयवतीः $^{v}$तिस्रः $^{v}$देवीः $^{v}$हिरण्ययीः हिरण्मयीः हिरण्यालंकारवतीर्वा $^{v}$भारतीः। इलासरस्वत्योरुपलक्षणं बहुवचनम्। भरतस्त्वादित्यः, तत्संबन्धिनीः भारतीः। $^{v}$बृहतीः ब्रह्मरूपिणीः। $^{v}$महीः महतीः। $^{v}$पतिं पालकम्। $^{v}$वयोधसम् आयुषो धारयितारम् $^{v}$इन्द्रं च होता यक्षदिति। किं कुर्वन्? $^{v}$विराजं चत्वारिंशदक्षरम्। $^{v}$छन्दः $^{v}$इन्द्रियं $^{v}$धेनुं च नवप्रसूतां $^{v}$गां $^{v}$न। नकारः समुच्चयार्थः। $^{v}$वयः च $^{v}$इह इन्द्रे $^{v}$दधत् स्थापयत्। होता यक्षदिति संबन्धः। ता एताः सेन्द्रास्तिस्रो देव्यः $^{v}$आज्यस्य स्वं भागं $^{v}$व्यन्तु। हे $^{v}$होतः त्वमपि यज ॥ ३१ ॥

**अ** - **'होता यक्षत् पेशस्वतीः'। एकाधिका शक्वरी। $^{v}$होता $^{v}$तिस्रः $^{v}$देवीः। पतिं लोकपालकं $^{v}$वयोधसम् $^{v}$इन्द्रं च यजतु। कीदृशीस्तिस्रः? $^{v}$पेशस्वतीः रूपवतीः। $^{v}$हिरण्ययीः हिरण्यालंकृतदेहाः। $^{v}$बृहतीः प्रभावेण। $^{v}$महीः महतीः। $^{v}$तेजसा। आदित्येन्द्राग्निसंबन्धात्। कास्ताः। $^{v}$भारतीः। बहुवचनमाद्यर्थे। भारतीळासरस्वतीः। किं कुर्वन्? $^{v}$विराजं $^{v}$छन्दः $^{v}$इन्द्रियं $^{v}$धेनुं दोग्ध्रीं $^{v}$गां $^{v}$वयः च $^{v}$इह इन्द्रे $^{v}$दधत्। नश्चार्थः। सेन्द्रास्तस्तिस्रो $^{v}$व्यन्तु ॥८॥**

**होता यक्षत् सुरेतसं त्वष्टारं पुष्टिवर्धनं॰**
**रूपाणि बिभ्रतं पृथक्पुष्टिमिन्द्रं॰ वयोधसम्।**
**द्विपदं छन्द इन्द्रियमुक्षाणं गां न वयो दधद्वेत्वाज्यस्य होतर्यज ॥९॥**

सुरेतसमिति सुऽरेतसम्। त्वष्टारम्। पुष्टिवर्धनमिति पुष्टिऽवर्धनम्।
रूपाणि। बिभ्रतम्। पृथक्। पुष्टिम्।
द्विपदमिति द्विऽपदम्। उक्षाणम् ॥ लैं ॥ ९ ॥

**आ** - 'होता यक्षत् सुरेतसं त्वष्टारम्' इति। अनुष्टुभः प्रगाथोऽयमैन्द्रः। दैव्यः $^{v}$होता $^{v}$सुरेतसम् शोभनवीर्यवन्तम्। $^{v}$त्वष्टारं जगद्रक्षाप्रतीपं भूतानां तनूकरणकर्तारम्। $^{v}$पुष्टिवर्धनं पुष्टेर्वर्धयितारम्। $^{v}$रूपाणि। जगद्रक्षणार्थं श्रीवराहादिरूपाणि $^{v}$पृथक् पृथक्कार्यरूपाणि $^{v}$बिभ्रतं धारयन्तम्। एवं परमैश्वर्ययुक्तं $^{v}$वयोधसम् $^{v}$इन्द्रम् होता $^{v}$यक्षत्। किं कुर्वन्? $^{v}$द्विपदं $^{v}$छन्दः $^{v}$इन्द्रियम् $^{v}$उक्षाणं सेचनसमर्थं $^{v}$गां च $^{v}$वयः च इन्द्रे $^{v}$दधत् स्थापयत्। होता यक्षदिति संबन्धः। स च होता $^{v}$वेतु। $^{v}$आज्यस्य स्वमंशं पिबतु। हे $^{v}$होतः त्वमपि $^{v}$यज ॥ ३२ ॥

1. S3 होता ... यजेति for 'होता यक्षत् पेशस्वतीः' इति।
4. S3 om. इति
9. M4 om. च, M4 om. रूपवतीः
19. S3 पाठस्तु - होता ... यजेति for 'होता ... त्वष्टारम्' इति।
22. V2 after कुर्वन् ins इति

**अ - 'होता यक्षत्सुरेतसं त्वष्टारम्' । एकाधिकाशक्वरी । Vहोता Vत्वष्टारं Vवयोधसम् Vइन्द्रं च यजतु । कीदृशम्? Vसुरेतसं शोभनरेतस्कम् । जगदुत्पादकत्वात् तस्य रेतः शोभनम् । पुष्टिवर्धनम् । पुत्रादिषु पुष्टेर्वर्धयितारम् । Vपृथक् । नानाजातिरूपाणि । Vबिभ्रतम् । किं कुर्वन् । Vद्विपदं Vछन्दः Vइन्द्रियम् । Vउक्षाणं रेतः सेक्तारं Vगां वृषं Vवयः च इन्द्रे Vदधत् । नष्टार्थः । सेन्द्रस्त्वष्टा Vवेतु । अत्र त्वष्टृशब्देन सर्वस्य स्वातिरिक्तस्य जगतस्तनूकरणान्नियमनात् परमात्माऽभिधीयते । तस्य जगदुत्पादकत्वेन सुरेतस्त्वम् । जगद्रक्षणार्थं पृथक् पृथक् कूर्मादिनानारूपधारणादनेकरूपधरत्वादिकं युज्यते ॥९॥**

~~~~~~~~~~~~~~~~~~~~~~~~

**होता॑ यक्षद्वन॒स्पति॑ꣳश॒मि॒तार॑ꣳ श॒तक्र॑तुꣳ हिर॑ण्यपर्णमु॒क्थिन॑ꣳ**
**र॒श॒नां बिभ्र॑तँ व॒शिं भग॒मिन्द्र॑ँ वयो॒धर्स॒म्।**
**क॒कु॒भं छन्द॑ इ॒हेन्द्रि॒यं व॒शाँ वे॒ह॒तं गां वयो॒ दध॒द्वेत्वाज्य॑स्य॒ होत॒र्यज॑ ॥१०॥**

~~~~~~~~~~~~~~~~~~~~~~~~

हिर॑ण्यपर्णमि॒ति हिर॑ण्यऽपर्णम्। उ॒क्थिन॑म्। र॒श॒नाम्। बिभ्र॑तम्। व॒शिम्। भग॑म्। क॒कु॒भम्। व॒शाम्। वे॒हत॑म् ॥ यौ ॥१०॥

~~~~~~~~~~~~~~~~~~~~~~~~

^

**आ** - 'होता यक्षद्वनस्पतिꣳ शमितारम्' इति। त्रिष्टुप् गायत्र्यौ च मीलितौ (? ते) चेत् त्रैष्टुभः प्रगाथश्चैन्द्रः। दैव्यः Vहोता Vवनस्पतिं प्रयाजदेवतां Vशमितारं हविषां संस्कर्तारम्। Vशतक्रतुं बहुकर्माणम्। Vहिरण्यपर्णं सुवर्णपत्रम्। Vउक्थिनम्। वच परिभाषणे। यज्ञविधायकम्। वचनम् उक् ततो यज्ञ उत्तीष्ठतीति उक्थः यज्ञः। सोऽस्यास्तीति उक्थी। तम् उक्थिनं यज्ञवन्तम्। Vरशनां बन्धनरज्जुं Vबिभ्रतम्। वनस्पतिर्हि यूपस्तम्। Vवशिम्। वश कान्तौ। कान्तम्। Vभगं भजनीयम्। Vवयोधसम् आयुषो धारयितारम्। दैव्यः होता यक्षदिति संबन्धः। स च वनस्पतिः प्रयाजदेवता Vवेतु। Vआज्यस्य स्वमंशं पिबतु। हे Vहोतः त्वमपि Vयज ॥ ३३ ॥

~~~~~~~~~~~~~~~~~~~~~~~~

**अ - होता यक्षद्वनस्पतिं शमितारम् । अत्यष्टिः । Vहोता Vवनस्पतिं Vवयोधसम् Vइन्द्रं च यजतु। कीदृशं वनस्पतिम् ? Vशमितारं संस्कर्तारं हविषां काष्ठरूपेण । Vशतक्रतुं बहुकर्माणम् । Vहिरण्यपर्णम् । हिरण्मयानि पर्णानि यस्य तम् । Vउक्थिनम् उक्थानि शस्त्राणि सन्ति यस्य तम्, यज्ञवन्तं वा । Vरशनां रज्जुं Vबिभ्रतम् । स्वभावानुवादः । Vवशिम् । बन्धनेन पशुवशीकरणवन्तम् । कान्तं वा । वश कान्तौ । अस्मादिप्प्रत्ययः । Vभगम् भजनीयम् । किं कुर्वन् ? Vककुभं Vछन्दः Vइन्द्रियं Vवशां वन्ध्याम् । Vवेहतं गर्भोपघातिनीं च Vगां Vवयः च Vइह इन्द्रे Vदधत् । सेन्द्रो वनस्पतिः Vवेतु ॥१०॥**

~~~~~~~~~~~~~~~~~~~~~~~~

3. M4 पुष्टि ° for पुष्टेः
5 - 6. M4 om. तस्य ... युज्यते ।
12. S3 पाठस्तु - होता ... यजेति for 'होता ... शमितारम्' इति ।
17. S3 यक्षतु for यक्षदिति संबन्धः
~~~~~~~~~~~~~~~~~~~~~~~~

**होता॑ य॒क्ष॒त् स्वाहा॑कृती॒र॒ग्निं गृ॒हप॑ति॒ं पृ॒थ॒ग्वरु॑णं भे॒ष॒जं क॒विं क्ष॒त्रमिन्द्रँ॑ वयो॒धस॑म्। अति॑च्छन्द॒सं छन्द॑ इन्द्रि॒यं बृ॒हदृ॑ष॒भं गाँ वयो॒ दध॒द्व्यन्त्वाज्य॑स्य॒ होत॒र्यज॑॥११॥(३)॥**

स्वाहा॑कृती॒रिति॒ स्वाहा॑ऽकृतीः। अ॒ग्निम्। गृ॒हप॑ति॒मिति॑ गृ॒हऽप॑तिम्।
पृथ॑क्। वरु॑णम्। भे॒ष॒जम्। क॒विम्। क्ष॒त्रम्।
अति॑च्छन्दस॒मित्यति॑ऽछन्दसम्। बृ॒हत्। ऋ॒ष॒भम्॥ टां॥ ११॥ (३)॥

आ - 'होता यक्षत् स्वाहाकृतीरग्निम्' इति। अनुष्टुबुष्णिहौ। मीलितौ यत्र स आनुष्टुभः प्रगाथो वयोधसैन्द्रदैवत्यः। दैव्यः [V]होता [V]स्वाहाकृतीः प्रयाजदेवताः [V]अग्निं सर्वदेवानामग्रेसरम्। [V]गृहपतिम्। गृहोपलक्षितसर्वकर्मणां पतिम्। [V]पृथक् [V]वरुणं वरुणधर्मयुक्तम् [V]भेषजम् औषधात्मकं। [V]कविं क्रान्तदर्शिनम्। क्षत्रं क्षतात् त्रातारं [V]वयोधसम् [V]इन्द्रं दैव्यो होता [V]यक्षत्। किं कुर्वन्निति। [V]अतिच्छन्दसम्। छन्दोवृत्तिमतिक्रम्य वर्तमानम्। [V]छन्दः [V]इन्द्रियं [V]बृहत् ब्रह्म। [V]ऋषभं श्रेष्ठम्। सेचनदक्षम्। [V]गां च [V]वयः च इन्द्रे [V]दधत् स्थापयत्। दैव्यो होता यक्षदिति संबन्धः। सा च प्रयाजदेवता [V]वेतु। [V]आज्यस्य स्वमंशं पिबतु। हे [V]होतः त्वमपि [V]यज ॥ ३४॥ (३)॥

अ - 'होता यक्षत् स्वाहाकृतीरग्निम्'। अतिशक्वरी। होता स्वाहाकृतीः। प्रयाजदेवताः। [V]इन्द्रं च यजतु। कीदृशमिन्द्रम्? [V]अग्निम्। अङ्गतीत्यग्निस्तम्। अग्रे गन्तारम्। [V]पृथक् प्रत्येकं यज्ञेषु। [V]गृहपतिम् गृहस्य पालयितारम्। [V]वरुणम् व्रियते ऋत्विग्भिरिति वरुणः तम्। [V]भेषजम् रोगनाशकम्। [V]कविं क्रान्तदर्शनम्। [V]क्षत्रम्। क्षतात् प्रहारात् त्रातारम्। [V]वयोधसम् आयुषो दातारम्। किं कुर्वन्? अतिच्छन्दसं [V]छन्दः [V]इन्द्रियं वीर्यम्। [V]बृहत् महत्। [V]ऋषभं पुष्टं [V]गां [V]वयः च इन्द्रे [V]दधत्। सेन्द्राः स्वाहाकृतयो देवाः आज्यं पिबन्तु। हे मनुष्यहोतः त्वमपि [V]यज ॥११॥

इति त्रिंशे तृतीयोऽनुवाकः ॥

6. S3 पाठस्तु - होता ... यजेति for 'होता ... '° कृती रग्निम्' इति

(चतुर्थोऽनुवाकः।)

**दे॒वं ब॒र्हिर्व॑यो॒धसं॑ दे॒वमिन्द्र॑मवर्धयत्।**
**गा॒य॒त्र्या छन्द॑सेन्द्रि॒यं चक्षु॒रिन्द्रे॒ वयो॒ दध॑द्वसु॒वने॑ वसु॒धेय॑स्य वे॒तु यज॑ ॥१॥**

दे॒वम्। ब॒र्हिः। व॒यो॒ध॒स॒मिति॑ व॒यः॒ऽध॒स॑म्। दे॒वम्। इन्द्र॑म्। अ॒व॒र्ध॒य॒त्।
गा॒य॒त्र्या। छन्द॑सा। इ॒न्द्रि॒यम्। चक्षुः॑। इन्द्रे॑। वयः॑। दध॑त्। ग्रीं॥ १ ॥

आ - 'देवं बर्हिर्वयोधसम्' इति। चत्वारोऽष्टका जागतश्च महाबृहती एकादशवयोधसदेवताः अनुयाजप्रैषाः। Vदेवं Vबर्हिः अनुयाजदेवताः Vवयोधसम्। आयुषो धारयितारम् Vदेवं देवनादिगुणयुक्तम्। Vइन्द्रम् Vअवर्धयत्। किं कुर्वन्? इन्द्रमवर्धयदिति तदाह-Vगायत्र्या चतुर्विंशत्यक्षरात्मिकया Vछन्दसा सह Vइन्द्रियं सामर्थ्यं Vचक्षुः दृष्टिं च Vवयः च Vइन्द्रे Vदधत् स्थापयत् बर्हिः इन्द्रमवर्धयदिति संबन्धः। बर्हिर्देवता। Vवसुवने वसुवननाय। Vवसुधेयस्य वसुनिधनाय च आज्यस्य स्वं भागमित्यनुषङ्गः। Vवेतु पिबतु। हे मनुष्यहोतः त्वमपि Vयज॥ ३५॥

**अ - 'देवं बर्हिर्वयोधसम्'। वयोधसे पशौ इम एकादश अनुयाजानां प्रैषाः बर्हिरादिदेवताः। एकाधिके आर्च्यौ त्रिष्टुभौ द्वे। Vबर्हिः Vदेवं Vवयोधसम् Vइन्द्रं Vदेवम् Vअवर्धयत्। कीदृशं बर्हिः? Vगायत्र्या Vछन्दसा कृत्वा सहितं वा। Vचक्षुः Vइन्द्रियं Vवयः च Vइन्द्रे Vदधत्। तद्वसुवननाय वसुधनाय च आज्यं Vवेतु। षष्ठीसप्तम्यौ चतुर्थ्यर्थे। हे मनुष्यहोतः, त्वमपि Vयज। एवमग्रेऽपि व्याख्येयम् ॥१॥**

**दे॒वीर्द्वारो॑ व॒यो॒ध॒सꣳ॒ शु॒चि॒मिन्द्र॑मवर्धयन्।**
**उ॒ष्णिहा॒ छन्द॑सेन्द्रि॒यं प्रा॒णमिन्द्रे॒ वयो॒ दध॑द्वसु॒वने॑ वसु॒धेय॑स्य व्यन्तु॒ यज॑ ॥२॥**

दे॒वीर्द्वारो॑ व॒यो॒ध॑सम्॥ रं॥ २॥

6. S3 पाठस्तु - देवं ... यजेति for **'देवं बर्हिर्वयोधसम्' इति।**
8. S3 om. **किं कुर्वन्°**
9. V2 **दृष्टिश्च** for **दृष्टिं च**
12. M4 **वयोधसो** for **वयोधसे**

**आ** - 'देवीर्द्वारः' इति। ऐन्द्री महाबृहती। याः Vदेवीः Vद्वारः। दैव्यः द्वारदेवताः। Vवयोधसम् आयुषो वर्धयितारं Vशुचिम् Vइन्द्रम् Vअवर्धयन्। ताश्च देवताः Vइन्द्रियम् Vउष्णिहा। अष्टाविंशदक्षरात्मिकया उष्णिहा छन्दसा सहितं प्राणं वयः च Vदधत् स्थापयत्। व्यत्ययः। अधारयन्। ताश्च देवताः वसुवननाय वसुनिधनाय च आज्यस्य स्वं भागं Vव्यन्तु पिबन्तु। हे होतस्त्वमपि Vयज॥ ३६॥

~~~~~~~~~~~~

**अ - 'देवीर्द्वारः'। Vद्वारः देव्यः Vवयोधसं Vशुचिं पवित्रम् Vइन्द्रम् Vअवर्धयन्। कीदृश्यो द्वारः? Vउष्णिहा Vछन्दसा कृत्वा सह वा Vप्राणम् Vइन्द्रियं घ्राणेन्द्रियं Vवयः च Vइन्द्रे Vदधत् दधत्यः। लिङ्गवचनव्यत्ययः। ताः Vव्यन्तु ॥२॥**

~~~~~~~~~~~~

**देवी उषासानक्ता देवमिन्द्रं वयोधसं देवी देवमवर्धताम्।**
**अनुष्टुभा छन्दसेन्द्रियं बलमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वीतां यज॥३॥**

~~~~~~~~~~~~

देवी उषासानक्ता देवमिन्द्रं वयोधसम् ॥आ॥ ३ ॥

~~~~~~~~~~~~

**आ** - 'देवी उषासानक्ता'। गायत्र्यनुष्टुबात्मकोऽपरः प्रगाथश्चैन्द्रः। Vदेवी देव्यौ Vउषासानक्ता। उषाश्च नक्तं च उषासानक्ता। "उषासोषसः" (पा ६.३.३१) इति उषःशद्बस्य देवताद्वन्द्वे उषासा आदेशः विभक्तेराकारश्च । उषासानक्ते देवते। Vदेवं Vवयोधसम् Vइन्द्रम्। 'देवी देवम्' इत्यादरार्थोऽयमभ्यागः। Vअवर्धताम्। Vअनुष्टुभा Vछन्दसा सह Vइन्द्रियं Vबलं च Vवयः च Vइन्द्रे उषासानक्ते देव्यौ दधाताम्। धत्त इति व्यत्ययः। ते च देवते Vवसुवने Vवसुधेयस्य आज्यस्य स्वं भागं Vवीताम् पिबताम्। हे होतस्त्वमपि Vयज ॥ ३७॥

~~~~~~~~~~~~

**अ - 'देवी उषासानक्ता'। द्वे ब्राह्म्यौ बृहत्यौ। Vउषासानक्ता Vदेवी देव्यौ Vवयोधसम् Vइन्द्रं Vदेवम् Vअवर्धताम्। उषाश्च नक्ता च Vउषासानक्ता। "उषासोषसः" (पा ६.३.३१) इति उषःशब्दस्य देवताद्वन्द्वे उषास-आदेशः। विभक्तेराकारश्च। कीदृश्यौ ते। Vदेवी दीप्यमाने। कीदृशमिन्द्रम्? Vदेवम् दीप्यमानम्। एकौ देवीदेवशब्दौ दीप्तिवाचकौ।अन्यौ सुरवाचकौ। Vअनुष्टुभा Vछन्दसा Vबलम् Vइन्द्रियम् Vवयः च Vइन्द्रे Vदधत् दधत्यौ। दधदित्यव्ययम्। लिङ्गवचनव्यत्ययौ वा। ते Vवीताम् ॥३॥**

~~~~~~~~~~~~

1. S3 पाठस्तु - देवीर् ... यजेति for 'देवीर्द्वारः' इति।
2. V2 इन्द्रम् for इन्द्रियम्।
4. V2 अधारयत् for अधारयन्
12. S3 पाठस्तु - देवी ... यजेति for देवी उषासानक्ता
13. V2 उषसश्च for उषाश्च

**दे॒वी जोष्ट्री॒ वसु॑धिती दे॒वमिन्द्रँ॑ व॒यो॒धसं॑ दे॒वी दे॒वम॑वर्धताम्।**
**बृ॒ह॒त्या छन्द॑सेन्द्रि॒यꣳ श्रोत्र॒मिन्द्रे॒**
**व॒यो॒ दध॑द्वसु॒वने॑ वसु॒धेय॑स्य वीता॒ं यज॑ ॥४॥**

---

दे॒वी जोष्ट्री॒ वसु॑धिती दे॒वमिन्द्रँ॑ वयो॒धस॑म् ॥ ज ॥ ४ ॥

---

**आ** - 'देवी जोष्ट्री' इति। गायत्र्यनुष्टुबात्मको गायत्रः प्रगाथश्चैन्द्रः। [v]देवी [v]जोष्ट्री देव्यौ जोष्ट्र्यौ जोषयित्र्यौ द्यावापृथिव्यौ। [v]वसुधिती। वसूनां धारयित्र्यौ। [v]देवं [v]वयोधसम् [v]इन्द्रम् [v]अवर्धताम्। [v]बृहत्या [v]छन्दसा सहित [v]श्रोत्रं [v]वयः च [v]इन्द्रे देव्यौ [v]दधत् दधतस्ते च देवते [v]वसुवने वसुवननाय वसुनिधनाय च आज्यस्य स्वं भागं [v]वीताम्। हे होतस्त्वमपि [v]यज ॥ ३८ ॥

---

**अ - 'देवी जोष्ट्री' । [v]देवी देव्यौ दीप्यमाने । देव्यौ अनुयाजदेवते । [v]देवं दीप्तम् । [v]वयोधसम् [v]इन्द्रं [v]देवम् अवर्धताम् । देवीदेवशब्दौ पूर्ववत् । कीदृश्यौ ? [v]जोष्ट्री जोष्ट्र्यौ । जुषेते इति जोष्ट्र्यौ । मिथः प्रीतियुक्ते । जुषेस्तृच्।"ऋन्नेभ्यो ङीप्" (पा ४.१.५) । [v]वसुधिती द्रव्यस्य धारयित्र्यौ । धाञस्तिन्। "स्थाघ्वोरिच्च' (पा१.२.१७) इतीकारः । [v]बृहत्या [v]छन्दसा [v]श्रोत्रम् [v]इन्द्रियं [v]वयः च [v]इन्द्रे [v]दधत् । दधत्यौ । ते [v]वीताम्॥४॥**

---

**दे॒वी ऊ॒र्जाहु॑ती दु॒घे॑ सु॒दु॒घे॒ प॒य॒सेन्द्रँ॑ व॒यो॒धसं॑ दे॒वी दे॒वम॑वर्धताम्।**
**प॒ङ्क्त्या छन्द॑सेन्द्रि॒यꣳ शु॒क्रमिन्द्रे॒ व॒यो॒ दध॑द्वसु॒वने॑ वसु॒धेय॑स्य वीता॒ं यज॑॥५॥**

---

दे॒वी ऊ॒र्जाहु॑ती दु॒घे॑ सु॒दु॒घे॒ प॒य॒सेन्द्रꣳ॑ वयो॒धस॑म् ॥ आ ॥ ॥ ५ ॥

---

**आ** - 'देवी ऊर्जाहुती' इति। इन्द्रदेवत्योऽयं ककुभः प्रगाथः। [v]देवी देव्यौ। [v]ऊर्जाहुती ऊर्जाहुत्यौ। [v]दुघे दोहनवत्यौ। [v]सुदुघे। सुष्ठु दाग्ध्यौ। [v]पयसा सधनेन [v]वयोधसम् [v]इन्द्रम् [v]अवर्धताम्। ते [v]देवी देव्यौ अनुयाजदेवते [v]पङ्क्त्या चत्वारिंशदक्षरात्मिकया [v]छन्दसा सह युक्ते। [v]वयः च [v]इन्द्रे [v]दधत्। धत्ताम्। ते च देव्यौ [v]वसुवने [v]वसुधेयस्य [v]वीताम्। [v]यज ॥ ३६ ॥

---

5. S3 पाठस्तु - देवी ... यजेति for 'देवी जोष्ट्री' इति ।
10. M4 after इन्द्रं om. देवम्
17. S3 पाठस्तु - देवी ... यजेति for 'देवी ऊर्जाहुती' इति।
18. V2 दुहे for दुघे

अ - 'देवी ऊर्जाहुती'। शक्वरी। Vदेवी दात्र्यौ। दी दानगत्योः। Vऊर्जाहुतीः ऊर्जाऽऽह्वानवत्यौ। देवी देव्यौ। Vपयसा Vवयोधसम् Vइन्द्रम् Vअवर्धताम्। कीदृश्यौ? Vदुघे। Vसुदुघे। सुखेन दोग्धुं शक्ये। Vपङ्क्त्या Vछन्दसा। Vशुक्रं वीर्यम्। Vइन्द्रियम् Vवयः च Vइन्द्रे Vदधत्। दधत्यौ। ते Vवीताम् ॥५॥

देवा दैव्या होता॑रा देवमिन्द्रं॑ वयोधसं॑ देवौ देवमं॑वर्धताम्।
त्रिष्टुभा छन्दं॑सेन्द्रियं त्विषिमिन्द्रे वयो दधं॑द्वसुवने॑ वसुधेयं॑स्य वीतां यजं॑ ॥६॥

देवा दैव्या होता॑रा देवमिन्द्रं॑ वयोधसं॑म् ॥ द ॥ ६ ॥

आ - 'देवा दैव्या होतारा' इति। गायत्र्यनुष्टुबात्मकः प्रगाथश्चैन्द्रः। Vदेवाः दैव्यौ होतारौ। Vदेवम् Vइन्द्रं Vवयोधसम्। वयोधसमिन्द्रम् Vअवर्धताम्। अभिवर्धनं कुरुतः। तौ च Vदेवौ। किं कुर्वाणाविति। Vत्रिष्टुभा चतुश्चत्वारिंशदक्षरात्मिकया। Vछन्दसा सह Vत्विषिं कान्तिं गुणम्। Vवयः च Vइन्द्रे Vदधत् धत्तः। तौ च दैव्यौ वसुवननाय वसुनिधनाय च आज्यस्य स्वभागं Vवीताम्। हे होतस्त्वमपि Vयज ॥ ४० ॥।

अ - 'देवा दैव्या होतारा'। अतिजगती। देवसंबन्धिनौ होतारौ देवौ। विभक्तेरादेशः। Vवयोधसं Vदेवं दीप्यमानम् Vइन्द्रं Vदेवम् Vअवर्धताम्। कीदृशौ? Vदेवौ दीप्तौ। Vत्रिष्टुभा Vछन्दसा Vत्विषिम् कान्तिम्। Vइन्द्रियं त्वगिन्द्रियम्। Vवयः च Vइन्द्रे Vदधत् दधतौ। तौ Vवीताम् ॥६॥

देवीस्तिस्रस्तिस्रो देवीर्व॑योधसं पतिमिन्द्रं॑मवर्धयन्।
जगं॑त्या छन्दं॑सेन्द्रियꣳशूषमिन्द्रे वयो दधं॑द्वसुवने॑ वसुधेयं॑स्य व्यन्तु यजं॑ ॥७॥

देवीस्तिस्रस्तिस्रो देवीर्व॑योधसं॑म् ॥ त ॥ ७ ॥

7. S3 पाठस्तु - देवा ... यजेति for 'देवा दैव्या होतारा' इति
9. S3 om. इति
10.. V2 ते च देव्यौ for तौ च दैव्यौ

आ - 'देवीस्तिस्रस्तिस्रो देवी' इति। गायत्रः प्रगाथोऽयमैन्द्रः। Vदेवीः Vतिस्रः Vतिस्रः Vदेवीः इत्यभ्यासस्त्वादरार्थः। तिस्रो देव्यः सरस्वतीळाभारत्यः अनुयाजदेवताः। Vवयोधसम् आयुषो धारयितारम्। Vपतिं पालकम् Vइन्द्रम् Vअवर्धयन्। किं कुर्वन्त्यः Vजगत्या। अष्टाचत्वारिंशदक्षरात्मिकया। Vछन्दसा Vइन्द्रियं Vशूषम्। शूषमिति बलनाम। Vवयः आयुश्च दधत्। स्थापयन्त्यः पतिम् इन्द्रम् अवर्धयन्निति संबन्धः। ताश्च तिस्रो देव्यः Vवसुवने Vवसुधेयस्य आज्यस्य स्वं भागं Vव्यन्तु। हे होतस्त्वमपि Vयज॥ ४१॥

---

अ - 'देवीस्तिस्रः'। एकाधिका ब्राह्मी अनुष्टुप्। तिस्रो देव्यः भारतीळासरस्वत्यः Vपतिं पालकं Vवयोधसम् Vइन्द्रम् Vअवर्धयन्। अभ्यास आदरार्थः। कीदृश्यः? Vजगत्या Vछन्दसा Vशूषं बलम्। Vइन्द्रियं Vवयः च Vइन्द्रे Vदधत् दधत्यः। ताः Vव्यन्तु ॥७॥

---

**देवो नराशꣳसो देवमिन्द्रँ वयोधसं देवो देवमवर्धयत्।**
**विराजाछन्दसेन्द्रियꣳरूपमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु यज ॥८॥**

---

देवो नराशंसो देवमिन्द्रं वयोधसम् ॥ न ॥ ८ ॥

---

आ - 'देवो नराशꣳसः' इति। गायत्र्यनुष्टुबात्मकः प्रगाथः। प्रशाख(?)स्त्विन्द्रदेवत्यः। Vदेवः Vनराशंसः अनुयाजदेवता। Vदेवं Vवयोधसम् Vइन्द्रं देवम्। आदरार्थोऽभ्यासः। Vअवर्धयत्। किं कुर्वन्? Vविराजा चत्वारिंशदक्षरात्मिकया। Vछन्दसा सहितम्। Vरूपं च Vवयः च Vइन्द्रे Vदधत्। इन्द्रमवर्धयदिति संबन्धः। स च नराशंसः वसुवननाय वसुनिधनाय च आज्यस्य स्वं भागं Vवेतु पिबतु। हे होतस्त्वमपि Vयज॥ ४३॥

---

अ - 'देवो नराशꣳसः,'। अतिजगती। Vदेवः दाता Vनराशंसः नाम Vदेवः Vदेवं दीप्तं Vवयोधसम् Vइन्द्रम् Vअवर्धयत्। कीदृशः? Vविराजा Vछन्दसा Vरूपम् Vइन्द्रियं Vवयः च Vइन्द्रे Vदधत् ॥८॥

---

1. S3 पाठस्तु - देवी ... यजेति for 'देवीस्तिस्रस्तिस्रो देवीः' इति
3. S3 कुर्वत्यः for कुर्वन्त्यः ; V2 after कुर्वन्त्यः ins. इति
13. S3 पाठस्तु - देवो... यजेति for 'देवो नराशꣳसः' इति;

देवो वनस्पतिर्देवमिन्द्रं वयोधसं देवो देवमवर्धयत् ।
द्विपदा च्छन्दसेन्द्रियं भगमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु यज ॥९॥

देवो वनस्पतिर्देवमिन्द्रं वयोधसम् ॥ ब ॥ ९ ॥

आ - 'देवो वनस्पतिः'। गायत्र्यनुष्टुबात्मकः प्रगाथश्चैन्द्रः। Vदेवः Vवनस्पतिः। अनुयाजदेवता। Vदेवं Vवयोधसम् Vइन्द्रं Vदेवम् Vअवर्धयत्। किं कुर्वन्निति। Vद्विपदा Vछन्दसा युक्तः Vइन्द्रियं वीर्यं Vभगं च ऐश्वर्यादिषट्कम्। Vइन्द्रे Vदधत् स्थापयत्। स च देवो वनस्पतिः Vवसुवने वसुवननाय वसुनिधनाय च आज्यस्य स्वं भागं Vवेतु पिबतु। हे होतस्त्वमपि Vयज ॥ ४२ ॥

अ - 'देवो वनस्पतिः' । अतिजगती । Vदेवः दाता Vवनस्पतिः यूपः Vदेवः Vदेवं द्योतमानं Vवयोधसम् Vइन्द्रं देवम् Vअवर्धयत् । कीदृशः ? Vद्विपदा Vछन्दसा Vभगं सौभाग्यरूपम् Vइन्द्रियं Vवयः च Vइन्द्रे Vदधत् ॥९॥

देवं बर्हिर्वारितीनां देवमिन्द्रँ वयोधसं देवं देवमवर्धयत्।
ककुभा छन्दसेन्द्रियँ यश इन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु यज ॥१०॥

देवं बर्हिर्वारितीनां देवमिन्द्रं वयोधसम् ॥ ब ॥ १० ॥

आ - 'देवं बर्हिः' इति। गायत्रः प्रगाथस्त्वैन्द्रः। Vदेवं Vबर्हिः अनुयाजदेवता Vवारितीनाम्। इण् गतौ। वारिभ्य इताः उद्गताः दर्भाः यज्ञसाधनभूताः वारितयः। तेषां वारितीनाम्। यज्ञसंबन्धिबर्हिः तत् Vदेवं देवता। Vवयोधसम् Vइन्द्रं Vदेवम् Vअवर्धयत् इति। किं कुर्वन्?। Vककुभा अष्टाविंशत्यक्षरात्मिकया Vछन्दसा सहितं Vयशः कीर्तिं Vवयः च Vइन्द्रे Vदधत्। अवर्धयदिति संबन्धः। सा च बर्हिर्देवता Vवसुवने वसुवननाय वसुनिधनाय च आज्यस्य स्वं भागं Vवेतु पिबतु। हे होतः त्वमपि Vयज ॥ ४४ ॥

4. S3 पाठस्तु - देवो ... यजेति for 'देवो वनस्पतिः' ।
15. S3 पाठस्तु - देवं ... यजेति for 'देवं बर्हिः' इति ।
17. S3 तत् देवतं for तद्देवं ; V2 तद्देवं for देवता
18. V2 after कुर्वन् ins. इति ।
20. V2 om. पिबतु

अनुयाजप्रैषाः]

अ - 'देवं बर्हिः' । ब्राह्मी बृहती । Vबर्हिःसंज्ञं Vदेवं दैवतम् Vइन्द्रं Vदेवम् Vअवर्धयत् । कीदृशमिन्द्रम्? Vदेवं दीप्तम् । Vवयोधसं Vदेवम् वयोधसो दातारम् । कीदृशं बर्हिः? Vवारितीनाम् । वार्भ्य उत्पन्नानामोषधीनां मध्ये देवं श्रेष्ठम् । Vककुभा Vछन्दसा यशोरूपम् Vइन्द्रियं Vवयः च Vइन्द्रे Vदधत् ॥१०॥

\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~

**दे॒वो अ॒ग्निः स्वि॑ष्ट॒कृद्दे॒वमिन्द्रँ॑ वयो॒धसं॑ दे॒वो दे॒वमं॑वर्धयत्।**
**अति॑च्छन्दसा॒ छन्द॑सेन्द्रि॒यं क्ष॒त्रमिन्द्रे॒ वयो॒ दध॑द्वसु॒वनें॑ वसु॒धेय॑स्य वे॒तु यज॑ ॥११॥**

\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~

दे॒वो अ॒ग्निस्वि॑ष्ट॒कृद्दे॒वमिन्द्रँ॑ वयो॒धस॑म् ॥आ॥११॥

\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~

**आ** - 'देवो अग्निः', इति। गायत्रः प्रगाथः ऐन्द्रः। यः Vदेवः Vअग्निःअनुयाजदेवता। Vस्विष्टकृत्। सु इष्टं यागं करोतीति स्विष्टकृत्। Vदेवं देवनादिगुणयुक्तम्। Vवयोधसम्। आयुषो वर्धयितारम्। Vइन्द्रं Vदेवम् Vअवर्धयत्। किं कुर्वन्। Vअतिच्छन्दसा नानाच्छन्दसा आहितम् Vइन्द्रियं वीर्यम्। Vक्षत्रम्। क्षतात् त्रायत इति क्षत्रम्। Vवयः च। Vइन्द्रे Vदधत् स्थापयत्। इन्द्रम् अवर्धयदिति संबन्धः। किं च । Vवसुवने वसुवननाय Vवसुधेयस्य वसुनिधनाय च आज्यस्य स्वं भागं Vवेतु पिबतु। हे होत, त्वमपि Vयज॥४५॥

\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~

अ - 'देवो अग्निः'। ब्राह्मी बृहती। Vदेवः दाता Vस्विष्टकृत् नाम्ना Vअग्निः। Vदेवः Vवयोधसं Vदेवं दीप्तम्। Vइन्द्रम् Vअवर्धयत्। किं कुर्वन्? Vअतिच्छन्दसा नाम्ना Vछन्दसा Vक्षत्रम्। क्षतात् त्राणरूपम् Vइन्द्रियं Vवयः च Vइन्द्रे Vदधत्। स चेन्द्रः Vवसुवने वसुनो वननाय Vवसुधेयस्य वसुधानाय च Vवेतु। आज्यं पिबतु। हे मनुष्यहोतः त्वमपि यज ॥११॥

\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~\~

3. M4 औषधीनां for ओषधीनां
7. S3 पाठस्तु - देवो… यजेति for 'देवो … अग्निः' इति
10. S3 om. वीर्यं ।

अग्निमद्य होतारमवृणीतायँ यजमानः पचन्पक्तीः पचन्
पुरोळाशं बध्नन्निन्द्राय वयोधसे छागम्।
सूपस्था अद्य देवो वनस्पतिरभवदिन्द्राय वयोधसे छागेन।
अघत्तं मेदस्तः प्रति पचताग्रभीदवीवृधत् पुरोळाशेन त्वामद्य ऋषे॥१२॥(४)॥

~~~~~~~~~~~~~~~~~~~~~~~~

अग्निमद्य होतारमवृणीता यं यजमानः पचन्पक्तीः पचन् पुरोळाशम् ॥ अ ॥ १२ ॥ (४) ॥

होता यक्षदेकादश ॥ ११ ॥ देवं बर्हिर्द्वादश ॥ १२ ॥ होता यक्षदेकादश ॥ ११ ॥
देवं बर्हिर्द्वादश ॥ १२ ॥ चतुरनुवाकेषु षट्चत्वारिंशत् ॥ ४६ ॥
इति शुक्लयजुर्वेदकाण्वसंहितायां त्रिंशोऽध्यायः ॥ ३० ॥

~~~~~~~~~~~~~~~~~~~~~~~~

**आ** - 'अग्निमद्य' इति। ऐन्द्रः प्रैषः। Vवयोधसे च ।आयुषो धारयित्रे। Vइन्द्राय। व्याख्यातो मन्त्रः ॥ ४६ ॥

इति (श्रीमत्परमहंसपरिव्राजकाचार्यश्रीवासुदेवपुरीश्रीकृष्णभक्तिसाम्राज्यस्य श्रीमज्ज्ञातवेदोपाध्यायस्य चतुर्वेदिश्रीमदानन्दबोधभट्टोपाध्यायेन विरचिते) शुक्लयजुः काण्वसंहितामन्त्र- भाष्यसंग्रहे त्रिंशोऽध्यायः ॥ ३० ॥

~~~~~~~~~~~~~~~~~~~~~~~~

7. A after षट्चत्वारिंशत् ॥४६॥ adds :
कारिकां तु प्रवक्ष्यामि जनानां हितकाम्यया । आदावेतां च स्मृत्वाऽथ ब्रूयादेनं क्रमाद्बुधः ॥१॥
होता यक्षत् समीहैव तनूनपातमूतिभिः । इळाभिर्बर्हिषीन्द्रं चतुर्णां वेतु विद्यते ॥२॥
ओजो व्यन्तु ह्युषे देव्यानयोर्वीतां वदेत् सदा । तिस्रो व्यन्तु च त्वष्टारं वनस्पतिं वेतु कथ्यते ॥३॥
इन्द्र व्यन्त्विति च ब्रूयादनुवाके प्रथमे तथा । अर्धर्चां द्वितीये तु वक्ष्यते प्रथमं पदम् ॥४॥
देवं बर्हिर्वस्तोर्वेतु देवीर्द्वारावत्सयोस्तथा । व्यन्त्वाथ देवी उषासानक्ता देवीर्विशस्ततः ॥५॥
देवी जोष्ट्र्यथ चायावी देवी ऊर्जाहुती तथा । इषमूर्जं चापि देवा दैव्या हताघशं सदा ॥६॥
चतुर्वीतामिति ज्ञेयं देवीस्तिस्रोऽस्पृक्षदिह । देव इन्द्रः शतेनाथ देवोदेवैर्दिवं तथा ॥७॥
देवं बर्हिश्च स्वासस्थं देवोऽग्निः स्विष्टकृत्तथा । स्विष्टं कुर्वश्च पञ्चानामेतासां वेतु सर्वदा॥८॥
अग्निमद्य सूपस्थाश्चाघ त्वामद्य यथाक्रमम्। तृतीये तु प्रवक्ष्यामि पुनरर्द्धर्चशः क्रमात् ॥९॥
होता यक्षत समीहैव गायत्रीं स त्र्यवीं ततः। तनूनपातमुष्णीहं दित्यवाहं यथाक्रमम् ॥१०॥
ईळेन्यं चानुष्टुभं तु सुपश्चावीं सुबर्हिषम् । बृहतीं त्रिवत्सां मध्ये तु उकवा वेतु चतसृषु ॥११॥
व्यचस्वतीं पङ्क्तिं चाथ तुर्यवाहं च व्यन्तु हि । सुपेशसा त्रिष्टुभं च पष्ठवाहसमं तथा ॥१२॥
प्रचेतसा च जगतीमन डाहूं तदुत्तरम् । द्वयोर्वीतां चाधिगम्य पेशस्वतीश्च सर्वदा ॥१३॥
*(Continued)*

9. $S^3$ before अग्निः adds पाठस्तु; $S^3$ $V^2$ धारयित्री for धारयित्रे; $S^2$ before इन्द्राय adds: चेन्द्रं
12. $V^2$ काण्ववेद' for शुक्लयजुःसंहिता°; $S^3$ om. °मन्त्र°
~~~~~~~~~~~~~~~~~~~~~~~~

अनुयाजप्रैषाः]

अ - 'अग्निमद्य'। एकाधिका ब्राह्मी गायत्री। सूपस्था अद्या। ब्राह्म्यानुष्टुप्। एते व्याख्याते। वयोधसे इति अत्राधिकमिन्द्रविशेषणम्। त्वाम् अद्य इति प्रतीकोक्तः सर्वोऽपि पठनीयः। एकाधिकाविकृतिश्छन्दस्कः। अयमपि व्याख्यातः ॥१२॥

इति त्रिंशेऽध्याये चतुर्थोऽनुवाकः॥

इतिश्रीमन्नागदेवभट्टात्मजेन श्रीमदनन्ताचार्येण विरचितायां वेदभावार्थदीपिकायां काण्वीयसंहिताभाष्ये त्रिंशोऽध्यायः समाप्तः॥

अमुना वेददीपेन मया नीराजितो हरिः।
मच्छ्रमं सार्थकीकृत्य मद्वंशं सर्वदाऽवतु ॥१॥

~~~~~~~~~~~~~~~~~~~~~~

विराजव्यन्तु श्वेनुं हि सुरेतसमथापि च। द्विपदं बोध्यमुक्षाणं वनस्पतिं ककुभं वशम् ॥१४॥
तयोस्तु वेत्विह ब्रूयात्स्वाहा कृतीर्यथाक्रमम्। व्यन्त्वातिच्छन्दसं पूर्वमेवं ज्ञेयं तृतीयके ॥१५॥
पुनरन्यं प्रवक्ष्यामि ह्यनुवाकं चतुर्थकम्। देवं बर्हिश्च गायत्र्या चक्षुर्वेतु सदा बुधः ॥१६॥
देवीर्द्वारस्तूष्णिहा च प्राणं व्यन्तु वदेत् क्रमम्। देव्युषासाऽनुष्टुभा च बलं वीतां वदेत् सदा॥१७॥
देवी जोष्ट्री बृहत्याथ श्रोत्रं वीतां च कथ्यते। देवी ऊर्जाहुती पङ्क्त्या शुक्रं वीतां क्रमेण तु॥१८॥
देवा देव्याश्च वीतां तु त्रिष्टुभाथ त्विषीह तु। देवीस्तिस्रः पतिं व्यन्तु जगत्या शूषमुत्तरे ॥१६॥
स देवो नराशंवेत्वाथ विराजा रूपमित्यपि। देवो वनस्पतिर्वेतु द्विपदां च भगं स्मृतम् ॥२०॥
देवं बर्हिश्च कुकभा यशो वेति क्रमेण च। देवोऽग्निरतिच्छन्दसा क्षत्रं वेतु नित्यशः ॥२१॥
अग्निमद्य सुपस्थाश्चाद्यत्तात्त्वामृच एव हि। एवं त्रिंशतितमेऽध्यायेऽनुवाकेषु चतुर्ष्वपि ॥२२॥
यः स्मरेत् कारिकां प्रेक्ष्य वारंवारं बुधो यदा। स नरो निश्चलो भूत्वा वक्तुं शक्नोति सर्वदा॥२३॥

5. M[4] om. वेद
8. M[4] after अवतु॥ adds शुभमस्तु ॥

यादृशं पुस्तकं दृष्टं तादृशं लिखितं मया।
अबद्धं वा सुबद्धं वा मम दोषो न विद्यते ॥
आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा॥
बिन्दुसल्लिपिविसर्गवीचिका शृङ्गभङ्ग पदहीनदूषणम्।
हस्तवेगजमबुद्धिपूर्वकं क्षन्तुमर्हति समीक्ष्य सज्जनः॥
करकृतमपराधं क्षन्तुमर्हन्ति सन्तः॥
~~~~~~~~~~~~~~~~~~~~~~

